इति तृतीयः खण्डः ।

## अथ चतुर्थः खण्डः ।

मन्त्रः ।

१ होतुःपृष्ठस्तोत्रयस्तवविधानं ।

२ ततः किमित्याह ।

३ स्तोत्रीयस्तवविधानं ।

४ प्रतिष्ठाहेतुताकथनं ।

५ पृष्ठस्तोत्रनिवर्त्तकं साम ।

६ अन्नाद्यहेतुताकथनं ।

७ प्रकारान्तरेण स्तुतिः ।

८ दिक्सम्बन्धेन ऋतुसम्बन्धेन च प्रशंसा ।

९ स्तुतेः फलकथनं ।

१० दिक्शब्दानुवादेन स्तुतिः ।

११ दिग्धारणलाभः ।

१२ निधनान्तरप्रदर्शनं ।

१३ ततः किं तदाह ।

१४ रूपद्वयकरणप्रयोजनान्तरं ।

१५ निधनान्तरानुवादेन स्तुतिः ।

१६ बहुनिधनप्रयोगे नीरसत्वं ।

१७ संवत्सरे प्रतिष्ठासाधनं ।

१८ अन्नाद्यहेतुत्वकथनं ।

१९ गातव्यसामप्रदर्शनं ।

२० अन्नेनाद्यस्यावरोधः ।

२१ निधनस्य प्रयोजनकथनं ।

२२ आधारभूतानां ऋचां छन्दोद्वारेण स्तुतिः ।

इति चतुर्थः खण्डः ।

---

## अथ पञ्चमः खण्डः ।

मन्त्रः ।

१७ ब्राह्मणातिदेशः ।

१८ सामान्तरविधानं ।

१९ कामप्राप्तिहेतुताकथनं ।

२० ततः किमित्याह ।

२१ उत्कृष्टजन्महेतुताकथनं ।

२२ गातव्यसामविधानं ।

२३ अरिष्टसंज्ञाकथनं ।

२४ धृतिहेतुताकथनं ।

२५ सन्तानहेतुताकथनं ।

इति पञ्चमः खण्डः ।

---

अथ षष्ठः खण्डः ॥

मन्त्रः ।

१ प्रथमोक्थस्तोत्रस्य स्तोत्रीयातृचः ।

२ तस्य प्रशंसा ।

३ तृतीयसवनयोग्यताकथनं ।

४ तृतीयोक्थस्य स्तोत्रीयतृचः ।

५ गेयसामप्रदर्शनं ।

६ तस्य स्तुतिः ।

७ गातव्यसामप्रदर्शनं ।

८ शापापहतिहेतुताकथनं ।

९ केनापहतवानिति तदाह ।

१० फलकथनं ।

११ गेयसामप्रदर्शनं ।

१२ पापापहतिहेतुताकथनं ।

१३ विशिष्टफलहेतुताकथनं ।

इति षष्ठः खण्डः ।

---

## अथ सप्तमः खण्डः ।

मन्त्रः ।

१ आद्यस्तोत्रीयप्रदर्शनं ।

२ तस्य सङ्गतिकथनं ।

३ किमनेन फलतोऽत्याह ।

४ व्यतिरेकेन तस्य दृढ़ीकरणं ।

५ द्वितीयस्तोत्रीयप्रदर्शनं ।

६ तस्य चतुर्थेऽहनि सङ्गतिकथनं ।

७ अनुरूपसंज्ञानिर्व्वचनं ।

८ अग्निमौ संयुज्य स्तुतिः ।

९ षड़्चद्वयविधानं ।

१० अन्यतृचविधानं ।

इति सप्तमः खण्डः ।

---

## अथ अष्टमः खण्डः ।

मन्त्रः ।

१ प्रथमाज्यस्तोत्रीयविधानं ।

२ विशिष्टफलहेतुताकथनं ।

३ द्वितीयाज्यस्तोत्रकथनं ।

४ तस्य सङ्गतिकथनं ।

५ तृतीयाज्यस्तोत्रकथनं ।

६ साध्यफलकथनं ।

७ चतुर्थाज्यस्तोत्रप्रदर्शनं ।

८ अन्नाद्यफलत्वेन स्तुतिः ।

इति अष्टमः खण्डः ।

---

## अथ नवमः खण्डः ।

मन्त्रः ।

१ माध्यन्दिनपवमानस्य प्रथमतृचः ।

२ तस्य सङ्गतिकथनं ।

३ अन्यतृचविधानं ।

४ प्रयोजनान्तरकथनं ।

५ तृचान्तरविधानं ।

६ गातत्तृचसङ्गतिकथनं ।

७ इतिकर्त्तव्यतावोधकब्राह्मणातिदेशः ।

८ सामान्तरविधानं ।

९ चतुर्थेऽहनि सङ्गतिमाह ।

१० ऋषिद्वारा प्रशंसनं ।

११ सामान्तरविधानं ।

१२ सर्व्वकामावाप्तिहेतुत्वेन स्तुतिः ।

१३ गातव्यसामप्रदर्शनं ।

१४ ब्राह्मणातिदेशः ।

१५ सामान्तरविधानं ।

१६ लोकप्रदर्शनेनोपपादनं ।

१७ तत्सङ्गतिप्रदर्शनं ।

१८ सृष्टाख्यसामविधानं ।

इति नवमः खण्डः ।

---

## अथ दशमः खण्डः ।

१६ संशये कर्त्तव्यपक्षमाह ।

१७ वेदितुः फलकथनं ।

१८ आज्यहोमविधानं ।

१९ मन्त्रस्य विशिष्टफलहेतुताकथनं ।

२० गातव्यसामविधानं ।

२१ छन्दोद्वारेणास्य स्तुतिः ।

२२ पापक्षयहेतुत्वेन स्तुतिः ।

२३ चतुर्थपृष्ठस्तोत्रसामविधानं ।

२४ तस्य स्तुतिः ।

२५ अहःसङ्गतिकथनं ।

इति दशमः खण्डः ।

---

## अथ एकादशः खण्डः ।

मन्त्रः ।

१ आर्भवपवमानस्य प्रथमतृचः ।

२ द्वितीयतृचस्थाने अह्ना सङ्गतिः ।

३ तृचान्तरविधानं ।

४ तस्य स्तुतिः ।

५ अन्यतृचविधानं ।

६ तृचान्तरं विदधाति ।

७ तस्य सङ्गतिकथनं ।

८ ब्राह्मणातिदेशः ।

९ सामान्तरविधानं ।

१० स्वर्गप्राप्तिसाधनताप्रतिपादनं ।

११ गन्धर्व्वेणोक्तः किं कृतवान् तदाह ।

१२ स्वर्गसाधनत्वेनोपसंहारः ।

१३ गातव्यसामविधानं ।

१४ तस्य स्तुतिः ।

१५ गातव्यसामविधानं ।

१६ तस्य स्तुतिः ।

१७ निधनस्यावर्त्तनीयत्वं ।

१८ गातव्यसामविधानं ।

१९ अहःसन्ततिहेतुताकथनं ।

२० तस्य स्तुतिः ।

२१ सामान्तरविधानं ।

२२ अन्नाद्यहेतुत्वेन स्तुतिः ।

२३ गेयसामप्रदर्शनं ।

२४ तस्य स्तुतिः ।

२५ श्रद्धाहेतुत्वेन स्तुतिः ।

२६ सङ्गतिप्रदर्शनेन प्रशंसा ।

इति एकादशः खण्डः ।

---

## अथ द्वादशः खण्डः ।

मन्त्रः ।

१ प्रथमस्तोत्रीयतृचप्रदर्शनं ।

२ वृधिधातुसूचितार्थकथनं ।

३ द्वितीयस्तोत्रीयतृचप्रदर्शनं ।

४ तृतीयस्तोत्रीयतृचप्रदर्शनं ।

५ गेयसामप्रदर्शनं ।

६ विशिष्टफलहेतुत्वेन स्तुतिः ।

७ गेयसामप्रदर्शनं ।

८ तस्य स्तुतिः ।

९ गेयं साम दर्शयति ।

१० स्तुवतः फलकथनं ।

इति द्वादशः खण्डः ।

---

## अथ त्रयोदशः खण्डः ।

मन्त्रः

१ बृहत्साम्ना द्विपदासु स्तोतव्यता ।

२ बृहत्साम षोड़शितया कार्य्यं ।

३ द्विपदानां स्वरूपकथनं ।

४ सामान्तरस्योत्पत्तिकथनं ।

५ आधारभूतसामकथनं ।

६ वेदितुः फलकथनं ।

७ ततः किमित्याह ।

८ षोड़शिस्तोत्रप्रदर्शनं ।

९ स्वाभिमतपक्षान्तरप्रदर्शनं ।

१० उत्पत्तिप्रदर्शनेन स्तुतिः ।

११ देशभेदेन साम्नोव्यवस्था ।

१२ कोटसावभिदध्यादिति तत्राह ।

१३ कामनाभेदेनैकं पक्षमाह ।

१४ तस्योपपादनं ।

१५ फलान्तराय स्तोत्रीयाविधानं ।

१६ तस्योपपादनं ।

१७ अनुष्टुप्स्वरूपप्रदर्शनं ।

१८ अन्नाद्यकामस्य षोड़शिस्तोत्रीया ।

१९ विराट्स्वरूपकथनं ।

२० अक्षरविभागेन स्तुतिः ।

२१ तद्वेदनफलकथनं ।

२२ उपसर्गविधानं ।

२३ शीघ्रफलत्वकथनं ।

२४ संयोगेन स्तुतिः ।

२५ हिरण्यधारणविधानं ।

२६ अश्वस्थापनविधानं ।

२७ अनुष्टुप्स्तोत्रविधानं ।

२८ तद्वेदितुः प्रशंसा ।

२९ आसुरच्छन्दोऽपहरणं ।

३० एतद्वेदनफलकथनं ।

३१ प्रकारान्तरेण वेदितुः फलं ।

३२ मन्त्रविशिष्टमवेक्षणविधानं ।

३३ तद्वेदनप्रशंसा ।

३४ स्तोमक्लृप्तिविधानेन स्तुतिः ।

इति त्रयोदशः खण्डः ।

इति द्वादशाध्याय सूची समाप्ता ।

———

श्रीगणेशाय नमः ।

# ताण्ड्यमहाब्राह्मणं ।

## प्रथमोऽध्यायः ।

—०()०—

अथ प्रथमः खण्डः ।

वागीशाद्याः सुमनसः सर्व्वार्थानामुपक्रमे ।
यन्नत्वा कृतकृत्याः स्युस्तन्नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योखिलञ्जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥ २ ॥
तत्कटाक्षेण तद्रूपं दधद्बुक्कमहीपतिः ।
आदिशत्सायनाचार्य्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्व्वोत्तरमीमांसे ते व्याख्यायातिसंग्रहात् ।
कृपालु र्माधवाचार्य्यो वेदार्थं वक्तुमुद्यतः ॥ ४ ॥
व्याख्यातावृग्यजुर्वेदौ सामवेदेपि संहिता ।
व्याख्याता ब्राह्मणव्याख्याङ्करोम्यौद्गातवुद्धये ॥ ५ ॥
पञ्चविंशतिरध्याया महति ब्राह्मणे स्थिताः ।
आद्येध्याये श्रुता मन्त्रा उद्गातुर्य्यजुरात्मकाः ॥ ६ ॥

ये तु मन्त्राः स्तोत्ररूपा उत्तरासु तृचेषु ते ।
योनिवद्गानमूहित्वा पठ्यन्ते तद्विधेर्वशात् ॥ ७ ॥
यद्योन्यां गानमाम्नातं तदेवोत्तरयोर्ऋचोः ।
गायेदिति स्तोत्रक्लृप्त्यै साम्नामूहोविधीयते ॥ ८ ॥
आवृत्तियुक्तं तत्साम स्तोम इत्यभिधीयते ।
द्वयो रध्याययोः स्तोमप्रकारा बहुधा श्रुताः ॥ ९ ॥
चतुर्थाध्यायमारभ्य गवामयनिकादयः ।
क्रतूनां विधयः प्रोक्ता एषोऽस्मिन् ब्राह्मणे क्रमः ॥ १० ॥
प्रथमाध्यायगामन्त्रा विनियोगपुरःसरं ।
व्याख्यायन्ते सर्वसोमयागेष्वेतेङ्गताङ्गताः ॥ ११ ॥

ननु प्रथमाध्याये समाम्नातानाम्महन्मेवोच इत्यादीना मन्त्राणाङ्क्रत्वङ्गत्वमयुक्तम्, क्रतुप्रकरणमध्ये पाठाभावात् । चतुर्थाध्यायप्रभृतीनि हि क्रतुप्रकरणानि भविष्यन्ति । चतुर्थपञ्चमाध्यायौ गवामयननामकस्य सम्वत्सरसतस्य प्रकरणम् । गावो वा एतत्सत्रमासतेत्यारभ्य तयोरध्याययोराम्नातत्वात् । षष्ठाध्यायेऽग्निष्टोमप्रकरणं प्रजापतिरकामयत बहु स्यां प्रजायेयेति स एतमग्निष्टोममपश्यदित्यारभ्य तस्याध्यायस्याम्नातत्वात् । एवमुत्तराण्यपि क्रतुप्रकरणान्यवगन्तव्यानि ।

नन्वेवम्प्रथमाध्यायगता मन्त्रा द्वितीयतृतीयाध्यायगता विष्टुतयश्च न कञ्चित् क्रतुमारभ्याम्नाताः, अतो नैतेषां क्रत्वङ्गत्वं युज्यत इति चेत् । मैवं, अनारभ्याधीतानां प्रकृतिगामित्वमिति न्यायेन क्रत्वङ्गत्वावगमात् । स च न्यायस्तृतीया-

ध्याये षष्ठपादस्य प्रथमाधिकरणे पर्णवाक्यमुदाहृत्याभिहितः । प्रकृतौ विकृतौ वा स्याद्यस्य पर्णत्यसौ विधिः । प्रकृतावेव वा तुल्याद्वचनादुभयोरसौ । जुहूमाश्रित्य पर्णत्वविधिः प्रकृतिमात्रगः । चोदकेनोभयप्राप्ते विकृतौ विधिनात्र किं । अनारभ्य श्रूयते यस्य पर्णमयी जुहूर्भवति न स पापश्लोकं शृणोतीति । तत्राव्यभिचरितक्रतुसम्बन्धवतीं जुहूमाश्रित्य तद्धेतुः पर्णत्वो वाक्येन विधीयते । या जुहूः सा पर्णमयीति वाक्यञ्च प्रकृतिविकृत्योस्तुल्यमेव प्रवर्त्तते । उभयत्राश्रयभूताया जुह्वाः सत्वात् । तस्मात्प्रकृतिविकृत्योरुभयोरप्ययं विधिरिति प्राप्ते ब्रूमः ।

किमयं विधिर्विकृतौ चोदकात्पूर्व्वन्निविशते, पश्चाद्वा । नाद्यः, आश्रयभूताया जुह्वाः चोदकमन्तरेणासम्भवात् । द्वितीये तु पर्णत्वमपि जुह्वा सहैव चोदकेनातिदिश्यते, तत्र पुनर्विधिवैयर्थ्यादयं विधिः प्रकृतिमात्रगः । एवं यस्य खादिरः स्रुवो भवतीत्युदाहरणीयं । ननु का प्रकृतिः का विकृतिरिति चेत्, उच्यते, यत्र कर्त्तव्यं सर्व्वं प्रकर्षेण कर्म्मान्तरनैरपेक्ष्येणोपदिश्यते सा प्रकृतिः, यत्र विशेषरूपमेव कर्त्तव्यं श्रुत्योपदिश्यते, इतरत्सर्व्वं कर्म्मान्तरादतिदिश्यते, सा विकृतिः, सचातिदेशः प्रत्यक्षश्रुतिवचनाद्वा साम्याद्वा लिङ्गाद्वावगन्तव्यः । तत्सर्व्वं सप्तमाष्टमाध्यायाभ्यां बहुधाविचारितं ।

प्रकृतिश्च द्विविधा मूलप्रकृतिरवान्तरप्रकृतिश्चेति । सर्व्वात्मना कर्म्मान्तरनिरपेक्षा मूलप्रकृतिः, कतिपयेष्वङ्गेषु कर्म्मान्तरं चापेक्षते, स्वयञ्च कैश्चित् कर्म्मभिरपेक्षणीया भवति

ऽयमवान्तरप्रकृतिः। तत्र तिस्रोमूलप्रकृतयः, ताश्चाष्टमाध्यायस्य प्रथमपादे तृतीयाधिकरणस्य द्वितीयवर्णके विचारिताः। इष्ट्यग्निहोत्रसोमानां मूलप्रकृतिता न हि। अस्ति वा नालौकिकत्वादियत्तानवधारणात्। लोकवत् सन्निपात्यारादुपकारिद्वयश्रुतेः। इयत्ताया निश्चितत्वान्मूलप्रकृतिता त्रिषु। अलौकिकत्वेनैतावद्भिरङ्गैः सम्पूर्ण उपकार इति निश्चेतुमशक्यत्वात् इष्ट्यादीनां नास्ति मूलप्रकृतित्वमिति चेत्, मैवं, लौकिकसदृशत्वात्। यथालोके भुजिक्रियायामोदनः करणं तस्य सन्निपत्त्योपकारिणः शाकसूपादय आरादुपकारिणः पीठप्रदीपादयः। तथाभावनायां यागः करणं, अवघातादयः सन्निपातिनः, प्रयाजादय आरादुपकारिणः, अतो नात्यन्तिकमलौकिकत्वं। इयत्ता तु लौकिके यथा प्रत्यक्षेण निश्चीयते तथा श्रौते श्रुत्या निश्चीयतां, तस्मादिष्ट्यग्निहोत्र सोमानां मूलप्रकृतित्वमस्ति। तासु प्रकृतिष्वेव महन्मे वोच इत्यादि मन्त्राणामङ्गत्वेन प्रवेशोऽवगन्तव्यः। प्रकृतित्वस्य तत्रैवमुख्यत्वात्। तास्वप्येते मन्त्राः सोमयागे नेतुं योग्याः सोमं गमेयमित्यादि लिङ्गसम्भवात् नानाविधब्राह्मणगतानामेतदीयविनियोगानामृषिभिः सूचितत्वाच्च। ते च विनियोगा अस्माभिस्तन्मात्रव्याख्यानावसरे प्रदर्शयिष्यन्ते। यस्य तु मतं सोमयागप्रकरणमिदं तस्य न कोपि सन्देहः।

सोमयागे चार्षर्त्विजोवरणीयाः, तथाच्चापस्तम्बेनोक्तं सोमेन यक्ष्यमाणो ब्राह्मणानार्षेयादृत्विजो वृणीत इति। आश्वलाय-

नोपि दर्शपूर्णमासेष्टिपूर्व्वकत्वं सोमयागस्योक्त्वा पक्षान्तरोपन्यासपूर्व्वकमेवमाह । प्रागपि सोमेनैके, तस्यर्त्विजः, चत्वारस्त्रिपुरुषाः, तस्य तस्योत्तरे त्रयः, होता मैत्रावरुणोच्छावाकोग्रावस्तुदध्वर्युः प्रतिप्रस्थातानेष्टोन्नेता ब्रह्मा ब्राह्मणाच्छंस्याग्नीध्रः पोतोद्गाता प्रस्तोता प्रतिहर्त्ता सुब्रह्मण्य इति, एतेऽहीनैकाहैर्याजयन्ति, एत एवाहिताग्नय इष्टप्रथमयज्ञा गृहपतिसप्तदशा दीक्षित्वा समोप्याग्नींस्तन्मुखाः सत्राण्यासते इति । अस्यायमर्थः, दर्शपूर्णमासाभ्यामिष्ट्वा पश्चाद्वा तद्यजमानः पुरस्ताद्वा सोमेन यजेत तस्य सोमयागस्य होताध्वर्य्युर्ब्रह्मोद्गातेति चत्वारः ऋत्विजोमुख्याः ते च प्रत्येकं त्रिभिः पुरुषैरुपेता अतस्तस्य तस्य एकैकस्योत्तरे त्रयः पुरुषा भवन्ति, तएते होतादिनामकाः षोड़शर्त्विजोद्विरात्रादिभिरहीनसंज्ञकैरग्निष्टोमादिभिरेकाहसंज्ञकैर्याजयन्ति । एतएव होतादयः षोड़शर्त्विजः स्वयमप्याहिताग्नयः प्रथमयज्ञेनाग्निष्टोमेनेष्ट्वा गृहपतिसंज्ञकेन सप्तदशसंख्यापूरकेण सहिता द्वादशाहादिसत्रार्थं दीक्षित्वा स्वस्वसम्बन्धिनोऽग्नीनेकत्र स्थापयित्वा तत्प्रधानाः सत्राण्युत्तिष्ठेयुरित्येकाहाहीनसत्रात्मकाय एते सोमयागास्तदीयस्यर्त्विजोहोत्रादिरूपस्य सामान्यलक्षणं द्राह्यायणाभिधो महर्षिश्छन्दोगसूत्रकार आह, ऋत्विगार्षेयोऽनूचानः साधुचरणो वाग्म्यन्यूनाङ्गोनतिरिक्ताङ्ग इति ।

तादृशमृत्विजं वरीतुं यजमानः सोमप्रवाकं प्रेषयेत् । सोम यागवृत्तान्तमृत्विजे प्रकर्षेण वक्तीति सोमप्रवाकः । स च वरी-

ष्यमाणस्य समीपं गत्वा प्रब्रूयात् अस्मदीयो यजमानः सोमेन यजते स त्वां प्रत्यार्त्विज्यमर्थयत इति, एवमुक्ते इतरो यद्यार्त्विज्यं कर्त्तुन्नेच्छेत् तदानीं सोमन्नमस्कृत्यार्त्विज्यं परिहरेत् तत्परिहारनिमित्तं प्रत्यवायमपनेतुन्नमस्कारः, प्रत्यवायश्चैवं श्रूयते, यशसा वा एषोऽभ्येति यमार्त्विज्येन चरति तद्यः प्रतिरुन्धे यशसा प्रतिरुन्ध इति । अथासावार्त्विज्यं कर्त्तुमिच्छेत्तदा सोमप्रवाकं प्रति सोमयागविषयं कुशलं सर्व्वं पृष्ट्वा स्वकीयं हर्षं द्योतयन्महन्मेवोचइति मन्त्रं जपेत् । तदेतद्द्राह्यायणः सूत्रयामास अकरिष्यन्नमः सोमाय राज्ञ इत्युक्त्वा प्रत्याचक्षीत महन्मे वोच इति करिष्यन् प्रतिमन्त्रयेतेति । आपस्तम्बोऽपि सूत्रितवान्, ऋत्विजो वृणीते यूनः स्थविरान्वाऽनूचानानूर्द्ध्वं वाचो नङ्गहीनांस्तेभ्यः सोमं सोमं पृच्छन्ति क ऋत्विजः के याजयन्ति कच्चिन्नाहीनः कच्चिन्नन्यस्तमामार्त्विज्यं कच्चित् कल्याण्यो दक्षिणा इति छन्दोगब्राह्मणं भवत्यथ जपति महन्मेवोच इति यद्यप्यापस्तम्ब एतन्मन्त्रजपं सर्व्वेषामृत्विजां साधारणमवोचत् तथाप्यत्र द्राह्यायणः स्वकीय परिभाषानुसारेणोद्गातारमभिलक्ष्य तस्य सोमप्रवाकविषयं प्रतिमन्त्रणं विधत्ते । परिभाषा चैवमुक्ता एकश्रुतिविधानान्मन्त्रान् कर्माणि चोद्गातैव कुर्यादनादेश इति । अस्यायमर्थः, महन्मे वोचइत्यादिमन्त्रानथ कर्माणि च सामवेदोक्तान्युद्गातैवानादेशे कुर्य्यात् कुतः एकश्रुतिविधानात् एकस्य कर्त्तुः श्रवणेन निर्द्देशेन विधानात् । प्रतिमन्त्रयेतेत्येकवचनविधानमुद्गातृलिङ्गत्वेनात्र परिभाष्यत इति ।

ननूद्गातृपुरुषाः प्रस्तोतृप्रतिहर्तृसुब्रह्मण्या अपि सामवेदोक्तकर्म्माधिकारिणो ननु केवल उद्गातैव। बाढं, तथापि न तेषां वरणन्नियतं किं तु होतध्वर्य्युब्रह्मोऽद्गातृणां चतुर्णामेव नियतं, तदाहापस्तम्बः, तान्वृणीते चतुरः सर्व्वान्वैकैकश इति तथा सति प्रस्तोत्रादीनां वरणाभावमाश्रित्य द्राह्यायण उद्गातुरेवेदं प्रतिमन्त्रणम्मन्यते। यदि तेषामपि वरणमङ्गीकुर्य्यात् तदा स्वकीयपरिभाषानुसारेण प्रस्तोता प्रतिमन्त्रयेतेत्येवमादिशेत्, तदादेशाभावादुद्गातुरेव वरणं प्रतिमन्त्रणं च तन्मतमित्यवगम्यते। ननु तस्य मन्त्रस्य महन्म इत्येष आदिरिति प्रतीकग्रहणादेवावगम्यते अन्तन्तु कथमवगम्यत इति चेत्, उत्तरमन्त्रस्यादिग्रहणादिति ब्रूमः। उत्तरादिः पूर्व्वान्तलक्षणमिति सूत्रकारेण परिभाषितत्वात्। अत सूत्रकारो देवोदेवमेत्वित्युत्तरमन्त्रादि ग्रहीष्यति, तस्माद्भक्षिषीयेत्यसौ पूर्व्वमन्त्रस्यान्त इति द्रष्टव्यं। मन्त्रपाठस्तु,

**ॐ महन्मे वोचो भर्गो मे वोचो यशो मे वोचः स्तोमं मे वोचो भुक्तिं मे वोचः सर्व्वं मे वोचस्तन्मावतु तन्माविशतु तेन भक्षिषीय ॥१॥**

हे सोमप्रवाक 'मे' मह्यमुद्गात्रे यजमानस्त्वामार्त्विज्यायार्थयत इति यद्वचनं प्रायौक्षस्तत् 'महत्' पूज्यं सर्व्वोत्कृष्टमेव 'अवोचः'

उक्तवानसि, न खल्वेतस्मात्पूज्यतमवचनं लोकेऽस्ति। तैत्तिरीयेपि वाजपेयफलत्वेनार्त्विज्यप्रशंसा कृता, तस्माद्वाजपेय याज्यः सर्वाह्यस्य वाचोवरुद्धा इति। महाभाष्यकृत्विगधीनः सर्वाह्यस्य वाचोवरुद्धा इति। महाभाष्यकारेणापि व्याकरणाध्ययनफलतयार्त्विज्यं प्रशंसितुमिदं वाक्यमुदाहृतं, यो वा इमां पदशः स्वरशोवर्णशोऽक्षरशो वा वाचं विदधाति स आर्त्विजीनो भवतीति, तस्मान्महदुक्तवानसि। तथा त्वं 'भर्गः' भर्ज्जनं पापस्य विदारकं दीप्तं वा वचनं 'मे' मह्यं 'अवोचः'। तथा 'यशः' यशस्करं वचनं 'मे' मह्यं 'अवोचः'। सोमार्त्विज्यस्य यशस्करत्वं प्रसिद्धं श्रूयते च सोमो वै यशः स एवं विद्वान् सोममागच्छति यश एवैनमृच्छति इति। तथा 'स्तोमं' स्तुतिसाधनं त्रिवृदादिकं 'मे' मह्यं 'अवोचः' उद्गातृवरणस्य त्रिवृदादिप्रयोगार्थत्वादेवमुक्तं। तथा 'भुक्तिं' भोगसाधनमेव वचनं 'मे' मह्यं 'अवोचः' आर्त्विज्यकरणेन हि भोगसाधनं गवादिद्रव्यं लभ्यते, अतएवोद्गातादिवरणसमये कश्चित्कल्याणो दक्षिणा इति पृच्छते। तथा 'सर्व्वम्मेवोचः' किमनया महद्भर्ग इत्यादि परिगणनया यद्यदस्मदभीप्सितं तत्सर्व्वमपि मह्यमवोचः। त्वयोक्तम्महत्वभर्गत्वादिगुणविशिष्टं यदार्त्विज्यमस्ति 'तन्मावतु' मां रक्षतु, रक्षार्थं 'तत्' आर्त्विज्यं 'मा' मां 'विशतु'। 'तेन' अनुष्ठितेनार्त्विज्येन 'भुक्षिषीय' भुक्षीय भोगान् भुञ्जीय। भुजिधातोराशीर्लिङि बहुलमिति सिप् इडागमः, उकारादेशश्छान्दसः॥१॥

अथ द्राह्यायणो द्वितीयमन्त्रस्य विनियोगमित्यमाह

स्वयं व्रजेत् अथ उपवसथ्येवोदङेव तु गृहेभ्यः प्रथमन्देवो देवमेत्विति। यः सोमक्रयस्य दिवसो यश्चोपवसथ्याख्यः सुत्या-दिवसात्पूर्व्वोदिवसस्तयोरन्यतरस्मिन्दिवसे उद्गाता स्वयमेव देव-यजनदेशं गच्छेत्, नत्वन्यं प्रहिणुयात्, गमने त्वस्ति कश्चित् विशेषः, यद्यपि स्वगृहाद्दक्षिणतो देवयजनं स्यात्तथापि देवो देवमेत्विति मन्त्रेण स्वगृहेभ्यो निर्गच्छन् प्रथमं कतिचित् पदान्यदृष्टार्थमुदङ्मुखएव गत्वा पश्चाद्देवयजनाभिमुखो भवेत्। ऋत्विग्वरणसोमक्रययोर्म्मध्यवर्त्तिनमाध्वर्य्यवं प्रयोगं क्रतुसंग्रह-कारः सूचयामास स ग्रन्थोत बुद्धिसमाधानायोदाह्रियते। अथाग्निष्टोमसंस्थेन ज्योतिष्टोमेन याजयेत्। स पूर्व्वमृत्विजो वृत्वा देवभूमिविनिश्चये। दीक्षणीयां निर्वपेत्सोपि पत्नी संयाज-संस्थितिः। कृते प्राचीनवंशेऽथ संस्कारावपनादयः। कृत्वा दीक्षाहुतीः कार्य्या दीक्षा कृष्णाजिनादिभिः। दीक्षितो नियमैर्य्युक्तो भवेत् क्षीरव्रतादिभिः। द्वादशाहं दीक्षितोथ भिक्षित्वा द्रव्यमानयेत्। सोमचर्म्मण्यवस्थाप्य विवशेत्सोमवि-क्रयी। शंय्वन्ता प्रायणीया स्याद्गृह्णीयात्क्रयणीपदं। क्रीत्वा सोमं रथे क्षिप्त्वा प्राग्वंशाग्रे समानयेदिति। मन्त्रपाठस्तु,

**देवो देवमेतु सोमः सोममेत्वृतस्य पथा॥ २॥**

'देवः' द्योतमानः सोमः 'देवं' दानादिगुणयुक्तं इन्द्रादिकं 'ऋतस्य' यज्ञस्य 'पथा' मार्गेणादावाहुतिप्राणाद्याख्या 'एतु' प्राप्नोतु। यद्वा दीव्यतिस्तुतिकर्म्मकादेव स्तोतोद्गाता।

अथवा पर्ज्जन्यो मउद्गातेति वरुणमन्त्रे श्रवणात् पर्ज्ज-न्याख्यदेवतारूप उद्गाता देवं दीप्यमानं फलप्रकाशकं वात-यज्ञस्तस्य सम्बन्धिना पथा देवयजनमार्गेणैतु गच्छतु। 'सोम:' अभिषवादिसंस्कृतो रसात्मक: 'सोमं' देवतारूपममृतं द्युस्थानं स्वमूर्त्यन्तरं 'एतु' प्राप्नोतु रसात्मक: सोम एवामृत-मयोद्युस्थान: सोमो भवत्वित्यर्थ:। तमेव खलु देवा उप-जीवन्ति यमक्षितिम: क्षितय: पिबन्तीति श्रुते: ॥२॥

द्राह्यायण:, दूरं व्रजित्वा विहाय दौष्कृत्यमितीति। यदि दूरमध्वानं व्रजेत् तदानीमप्रयतदेशातिक्रमणादिकमवर्ज्ज-नीयं स्यात् ततो यत्किञ्चिद्दुष्कृतमवश्यं भवेत्, तच्छान्तये विहाय दौष्कृत्यमित्येवं मन्त्रं जपेत्।

**विहाय दौष्कृत्यं ॥३॥**

दुष्कृतस्य भाव: 'दौष्कृत्यं' तत् 'विहाय' मनसा परिहृत्य देवयजनं गच्छामीति मन्त्रार्थ: ॥ ३ ॥

द्राह्यायण:, बद्दानामासीति पन्थानमापद्येति। देव-यजनस्य समीपवर्त्तिनं पन्थानमासाद्य बद्देति मन्त्रं जपेत्। मन्त्रपाठस्तु,

**बद्दानामासि सृतिः सोमसरणी सोमं गमेयं ॥४॥**

हे देवयजनमार्ग त्वं 'बद्दानामासि' नामा शब्द: प्रसिद्ध: प्रसिद्धार्थ:, बदस्थैर्य्ये इति धातोरन्येभ्योपि दृश्यन्ते इति

वनिप्। बद्वा स्थिर इतरस्माल्लौकिकान्मार्गाद्दृढतर इति प्रसिद्धो भवति, स्थिरफलप्राप्तिहेतोर्यज्ञस्य साधनत्वात्। यद्वा बद्वेत्येषा देवयजनमार्गस्य वैदिकी संज्ञा एतत्संज्ञो भवसीत्यर्थः। अथवा बवर्णस्य व्यत्ययेन यकारस्य स्थाने वकारः। यद्वानासेत्येव सूत्रं, तदाहापस्तम्बः, यद्वा देव-यजनं प्रति गन्ता एतत्संज्ञस्त्वमसि। 'सोमसरणी' सोमस्य प्राप्तिसाधनभूता 'सृतिः' मार्गो भवसि। तया सृत्वा 'सोमं' सोमयागं 'गमेयं' प्राप्नुयां, गमिधातो र्लिङ्याशिष्यङित्यङ्।४।

द्राह्यायणः, उत्तरवेद्यन्तमाक्रम्य दक्षिणमीक्षमाणः पितरोभूरितीति। देवयजनं प्रविश्यमाणः महावेदिपार्श्व-माक्रम्य पितरोभूरिति मन्त्रेण पितॄनुपतिष्ठेत। तथा चाप-स्तम्बः, पितरोभूरिति दक्षिणाहत्तः पितॄनुपतिष्ठेत इति। मन्त्रपाठस्तु,

पितरो भूः पितरो भूः पितरो भूः ॥५॥

हे 'पितरः' इयं 'भूः' दक्षिणवेद्यंतलक्षणा भूमिर्युष्माकन्नि-वासायेति शेषः, कर्म्मसमाप्तिपर्य्यन्तमत्र निवसतेति भावः। त्रिरुक्तिरादरातिशयद्योतनार्था, पितृपितामहप्रपितामहानां त्रित्वापेक्षया वा। ५।

द्राह्यायणः, यूपमुच्छ्रीयमाणमनुमन्त्रयेरन्नमणऊर्द्ध्वभ-रसं त्वेतीति। अध्वर्य्युर्य्यूपं यदोच्छ्रयेत् तदानीमुद्गातारो-न्नमण इत्यनुमन्त्रयेरन्। अत्रापि पूर्ववत्क्रतुसंग्रहः। क्रीत्वा

सोमं रथे क्षिप्त्वा प्राग्वंशाग्रे समानयेत्। आतिथ्यां निर्वपेत्सोममासंद्यामुपसारयेत्। आतिथ्येष्टि रिडान्तास्यात्तानूनप्त्रमवद्यति। दीक्षामवांतरामेति प्रवर्ग्योपसदोः कृतिः। दिनत्रये तत्कृतं स्याद्वेदिर्मध्यंदिने भवेत्। षट्त्रिंशत्पदर्दीर्घ्यैषा प्राग्वंशात्पूर्वतः स्थिता। प्रातः प्रवर्ग्यमुद्वास्य पश्चादुत्तरवेदितः। प्राकटे द्वे हविर्द्धाने हविर्द्धानञ्च मण्डपं। पश्चात्सदस्तस्य मध्ये निखातौडुम्बरीमिता। दक्षिणस्यानसोधस्तात् गर्त्तानुपरवान् खनेत्। विधाय फलकास्यान्तानग्रे कुर्य्यात् महाखरं। निर्व्वपेद्धिष्ण्यगानग्नीषोमीयं पशुमाचरेत्। प्रयुज्योचितपात्राणि दर्शवत्सर्वमाचरेत्। आज्यमासादिते वेद्या अन्ते यूपं समुच्छ्रयेदिति। पाठस्तु,

## नृमणा ऊर्द्ध्वभरसं त्वोर्द्ध्वभरा दृशेयं ॥६॥

हे 'नृमणा' नृषु यज्ञस्य नेतृषु यजमानेषु मनोनुग्रहबुद्धिर्यस्य विष्ण्वात्मनो यूपस्य सोयं नृमणाः एतादृश विष्णुरूप यूप 'ऊर्द्ध्वभरसं त्वा' ऊर्द्ध्वमुपरिभागेध्वर्य्युभिर्म्भ्रियमाणं त्वामहं 'ऊर्द्ध्वभराः' सन् 'दृशेयं' अनुग्राहकेण त्वया ऊर्द्ध्वमुन्नतगुणोयमिति धार्य्यमाण ऊर्द्ध्वभराः, दृशि धातोर्लिङ्याशिषि अङिप्राप्ते तदपवादत्वेन दृशेरग्वक्तव्य इत्यक्। अङितुसतिऋदृशोङि गुणः इति गुणः स्यात्। ६।

द्राह्यायणः, होता प्रातरनुवाकमनूच्याभूदुषा इति यदा ब्रूयादथ वेदिमाक्रामेयुः महाभिषियिरेतीति। उपवसथ-

दिवसस्य मध्यरात्रादूर्ध्वं होता प्रातरनुवाकं ब्रूते, तदाहाश्वलायनः। अथैतस्या रात्रेर्विवासकाले प्राग्वयसां प्रवादात् प्रातरनुवाकायामन्त्रितो वाग्यतस्तीर्थेन प्रपद्येत्यादि। अध्वर्युणामन्त्रितो होता प्रातरनुवाकमनूच्य तस्यावसानगतामभूदुषा इत्येतामृचं यदा ब्रूयात्तदानीमुद्गातृप्रस्तोतृप्रतिहर्त्तारो मृदेति मन्त्रेण वेदिमाक्रामेयुः। क्रतुसंग्रहस्तु, यूपस्योच्छ्रयणादूर्ध्वं समापय्य पशुं ततः। वैसर्ज्जनानि हुत्वाग्निं सोमं ग्रावादि चानयेत्। हविर्द्धाने स्थापयित्वा गृह्णीयाद्वसतीवरीः। प्रयुञ्ज्यात्सोमपात्राणि महारात्रे खरादिषु। ग्रावस्तुत् स्थापिते सोमे पश्चिमां ध्वनितः पुरा। स्यात्प्रातरनुवाकार्थमुपाकरणमादरादिति। वेद्याक्रमणमन्त्रपाठस्तु,

मृदा शिथिरा देवानां तीर्थं वेदिरसि मा मा हिꣳसीः॥ ७॥

हे वेद्यात्मिके भूमि 'मृदा' यज्ञायुधेन खाता या मृत्तन्मया 'शिथिरा' प्रशिथिलावयवा त्वं 'देवानां' उद्गात्रादीनामृत्विजां देवानामेव वा 'तीर्थं' एव तरणस्थानं असि तथा 'वेदिरसि' असुरैरपहृतानां धनानां लम्भयित्र्यसि। यत्तद्वित्तं वेद्यमसुराणां वेद्यमविन्दन्त तद्वेदं वेद्यैवेदित्वमिति श्रुत्यन्तरात्। उक्तलक्षणां त्वां अधितिष्ठन्तं 'मा' 'माहिꣳसीः' मा बाधस्व॥ ७॥

द्राह्यायण:, हविर्द्धानं प्रवेक्ष्यमाना वसतीवरीरनुप्रविशेयु-स्तस्य रराट्यामालभ्य विष्णो: शिरइतीति । अध्वर्युणा प्रात-रनुवाक उपाकृते प्रतिप्रस्थाता सवनीयपुरोडाशेषु निरुप्तेषूप-पन्ने जनानामिकास्वपसु पत्नीसहितासु वसतीवरीनामिका अपोध्वर्युर्हविर्द्धानमण्डपं प्रवेशयति । तदानीमुद्गातादय-स्त्रयो विष्णो: शिर इति मन्त्रेण रराट्यां हस्तस्पर्शं कृत्वा हवि-र्द्धानमण्डपं पूर्व्वया द्वारा प्रविशेयु: । रराटीनाम हविर्द्धान-स्योपरि स्थिता काचित् काष्ठमयी यष्टिरिति सत्याषाढ़ आह । पाठस्तु,

विष्णो: शिरोसि यशोधा यशोमयि धेहि ॥ ८ ॥

हविर्द्धानमण्डपो विष्णुदेवताकत्वात् विष्णुदेवता विष्णुत्वे-नोपचर्य्यते, वैष्णवं हि देवताया हविर्द्धानमिति श्रुते: । विष्णुदेहत्वेनोपचरितस्य हविर्द्धानस्य पूर्व्वस्मिन् द्वारे तिर्य्यग-वस्थिता यष्टिर्ललाटवद्वर्त्तते, अतएव तदवस्थानकरणभूतो मन्त्रोध्वर्य्युशाखायामेवमाम्नायते विष्णोररराठमसीति ललाटस्य शिरोभागवर्त्तित्वं प्रसिद्धं अतो रराटीं प्रति 'विष्णो: शिरोसि' इत्युच्यते । हे रराटि त्वमचेतनापि सती 'यशोधा' असि विष्णु-शिर इत्येवम्भूतस्य यशसो धारयित्री भवसि तस्मात्त्वदीयस्पर्शं कुर्व्वति 'मयि' 'यश:' उद्गातृ कुशल इति तादृशन्धेहि धारय सम्पादय ॥ ८ ॥

द्राह्यायण:, इषऊर्ज्ज इति प्रविशन्त इति उद्गातारोह-

विर्द्धानं प्रविशन्त इषऊर्ज्ज इति मन्त्रं जपेयुः । पाठस्तु,

इषऊर्ज्जे आयुषे वर्च्चसे च ॥ ९ ॥ १ ॥१॥

इडन्नं, ऊर्गीसः चीराज्यादिः, आयुः प्रसिद्धं, वर्च्चो वेदशास्त्राणि विज्ञतत्त्वं रूपं ब्रह्मवर्च्चसं चकारात् पुत्रपौत्रादयः, सर्व्वसम्पत्त्यर्थं हविर्द्धानं प्रविशामीति शेषः ।९।१।१।

इति ताण्ड्यमहाब्राह्मणे प्रथमाध्यायस्य

प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

द्राह्यायणः, अन्तरेणेषे बाहूनवहृत्य पार्ष्णीरनुद्यच्छन्तो युनज्मीति राजानमभिमृशेयुर्यः प्रातःसवनीयाविभक्तस्चेत् सर्व्वन्न चेत्प्राप्नुयुर्दर्शनेनेति । हविर्द्धानमण्डपे दक्षिणशकटस्याधस्तात् पश्चिमभागेऽभिषवार्थं सोमोवस्थापितो वर्त्तते । तं सोमं हस्तैःस्पृष्टमुद्गात्रादयो मण्डपं प्राविशन् प्रविश्य शकटस्य ये द्वे ईषे दीर्घकाष्ठे विद्येते तयोर्म्मध्य उद्गात्रादयः स्वकीयदक्षिणबाहून-धःप्रसार्य्य सोमं स्पृशेयुः, तदर्थोऽयं युनज्मीति मन्त्रः । यदा शकटस्योन्नतत्वेनाधःप्रसारितानां बाहूनां दैर्घ्येन्न पर्य्याप्तं स्यात्

तदानीं स्वपादानां पार्ष्णिभागानुद्यम्य पादाग्रैर्भूमाववस्थानं प्रसज्यते, तन्माभूदिति पार्ष्णीरुद्यच्छन्त इत्युक्तं। ससोमः प्रातः-सवनाय विभक्तश्चेत्तदा तावन्तमेव स्पृशेयुः, अविभागे तु सर्व्वस्यापि सोमस्य स्पर्शः। स्पृशन्नप्राप्नुयुश्चेत्तदा देशप्राप्तिमात्रेणैवालम्भः स्पर्शो विवक्षितः। पाठस्तु,

युनज्मि ते पृथिवीमग्निना सह युनज्मि वाचꣳ सह सूर्य्येण युक्तोवातोन्तरिक्षेण ते सह युक्तास्तिस्रोविभृजः सूर्य्यस्य ॥ १ ॥

हे सोम आहवनीयादिरूपेण 'अग्निना सह' वेदिरूपामिमां 'पृथिवीं' 'ते' त्वदर्थं 'जुनज्मि' यकारश्छान्दसार्थः, युनज्मीत्येवं शाखान्तरपाठः, त्वया संयुक्तां करोमि। अग्निवेद्योस्त्वसंयोगे सति तद्विषयो यागो न निष्पद्यते। तथा 'सूर्य्येण सह' 'वाचं' मन्त्ररूपां 'युनज्मि' योजयामीति अन्तर्भावितण्यर्थो युजिधातुर्द्रष्टव्यः। सूर्य्यसंयोगकालसापेक्षे प्रातःसवनादावुपयुज्यते वाक्यग्रोगेन स्तोत्रशस्त्रादिसिद्धिः। तथा 'अन्तरिक्षेण सह' 'वातः' वायुः 'ते' त्वदर्थं 'युक्तः' योजितः, वायुसङ्गेन वह्निः प्रज्वाल्यते अन्तरिक्षसंयोगेन प्रवर्ग्यज्वालादेरवकाशः सम्पद्यते। यथा 'सूर्य्यस्य' सम्बन्धिन्यः 'विभृजः' विशेषेणान्धकारस्य भर्जने विनाशने समर्था-

'त्रिस्रः' लोकत्रयप्रकाशिकाः, यद्वा त्रीणि वा आदित्यस्य तेजांसि वसन्ते प्रातः ग्रीष्मे मध्यन्दिने शरदपराह्णे इति श्रुत्यन्तरोक्ता-स्त्रिस्रोदीप्तयो 'युक्ताः' योजिताः। यद्यप्येतत्सर्व्वं लोके स्वतएव सिद्धं तथाप्युद्गातॄणां मन्त्रपूर्व्वकानुस्मरणेन सोमः संस्कृतो भवति ॥ १ ॥

द्राह्यायणः, दक्षिणस्य हविर्द्धानस्य पश्चात् सव्यावृत उपविशेयुर्ऋतस्य सदन इति। सव्यावृतः सव्येन पार्श्वेनावर्त्त-मानाः। पाठस्तु,

## ऋतस्य सदने सीदामि ॥ २ ॥

'ऋतस्य' सोमस्य अवश्यं फलसाधनत्वात्सोमः सत्यः, सत्यसम्बन्धिनि 'सदने' समीपवर्त्तिस्थाने 'सीदामि' उपवि-शामि ॥ २ ॥

द्राह्यायणः, अभिषुते राजन्यृतपात्रमसीति द्रोणकलश-मालभ्येति। राजनि सोमे ग्रावभिरभिषुते सत्युद्गात्रादयः ऋतपात्रमसीत्यनेन मन्त्रेण द्रोणकलशमुपस्पृश्य प्रोहेयुरिति वक्ष्यमाणेनान्वयः।

## ऋतपात्रमसि ॥ ३ ॥

हे द्रोणकलश त्वं 'ऋतपात्रं सोमपात्रम् 'असि' इति मन्त्रार्थः ॥ ३ ॥

द्राह्यायणः, वानस्पत्य इति प्रोहेयुरिति। शकटगता-द्यस्य पश्चादवस्थितं द्रोणकलशं तत्र उद्गात्रादयः स्वहस्तैर-धोदेशे तस्मादचात् प्राञ्चं प्रोहेयुः, प्राग्देशे यथावस्थितो भवति तथा कुर्य्युः। पाठस्तु,

**वानस्पत्योसि वार्हस्पत्योसि प्राजापत्योसि प्रजा-पतेर्मूर्द्धास्यत्यायु पात्रमसीदमहं मां प्राञ्चं प्रोहामि तेजसे ब्रह्मवर्च्चसाय॥ ४॥**

हे द्रोणकलश त्वं 'वानस्पत्योसि' त्वं वृक्षसम्बन्धी भवसि काष्ठविशेषनिर्म्मितत्वात्। तथा 'बार्हस्पत्योसि' वृहस्पतेः सम्बन्धी भवसि चतुर्विंशतिरात्रकन्नाम सोमयागरूपं सत्र-मनुतिष्ठता वृहस्पतिना सम्पादितत्वात् सम्बन्धो द्रष्टव्यः। तदनुष्ठानं चाध्वर्य्युशाखायामाम्नातं। वृहस्पतिरकामयत सम्मोद वादधीर गच्छेयुः पुरोधामिति स एवं चतुर्विंशति-रात्रमपश्यत्तमाहरत्तेनायतेति, यद्वा देवानां यज्ञे वृहस्पते-रुद्गातृत्वात्तत्सम्बन्धः, वृहस्पतिर्दैवानामुद्गाता तदेव तद्युन-क्तीति। 'प्राजापत्योसि' प्रजापतेः सम्बन्धी भवसि, तत्सम्बन्धस्वा-ध्वर्य्योर्द्रोणकलशाभिमर्शनमन्त्रेवगम्यते, तथा चाध्वर्य्युशा-खायामाम्नायते। उपयामगृहीतोसि प्रजापतये वेति द्रोण-कलशमभिमृशेदिति। प्राजापत्योह्येष देवतया यत् द्रोण-कलश इति ब्राह्मणं। 'प्रजापतेर्मूर्द्धाऽसि' अस्य तन्मूर्द्धत्वं ब्राह्मणे

समाम्नातं । प्रजापतिरकामयत बहु स्यां प्रजायेयेति सोऽशोचत्तस्य शोचत आदित्यो मूर्द्धोऽसृज्यत सोऽस्य मूर्द्धानमुदहरन् स द्रोणकलशोऽभवत् इति, अन्योऽर्थबाहुल्येनागच्छति सोमोऽस्मिन्द्रोणकलशपात्रे ततस्त्वं 'अत्यायु' नाम्नाऽभिधेयं 'पात्रमसि' 'इदं' सर्व्वेषां प्रत्यक्षं यथा 'अहं' उद्गाता इमं द्रोणकलसं 'प्राञ्चं' पूर्व्वदिग्गामिनं त्वा 'प्रोहामि'। तच्च प्रोहणं मम 'तेजसे' शारीरकान्तये 'ब्रह्मवर्चसाय' श्रुताध्ययनसम्पत्तये च भवतु ॥ ४ ॥

द्राह्यायणः, तानभिमृश्य जपेयु र्मरुत इतीति। अभिषवसाधनभूता ग्रावाण उद्गात्रादिभि रेकत्र योजितत्वेन प्राक्तनत्वात्तच्छब्देन परामृश्यन्ते। तान् ग्रावाणो हस्तैरभिमृश्योद्गात्रादयो मरुत इत्यादिकं मन्त्रं जपेयुः। पाठस्तु,

**मरुतो नपातोऽपाङ्क्षयाः पर्व्वतानाङ्ककुभः श्येना-अजिरा एन्द्रं वग्नुना वहत घोषेणामीवां चातयध्वं युक्तास्थ वहत ॥ ५ ॥**

हे ग्रावाणः यूयं मरुद्बलात् 'नपातः' नपततीति नपात् तस्य बहुवचनं नपात इति। यथा वृक्षगतपर्णादीनि वायुबलेन पात्यन्ते न तथा ग्रावाणः। यद्वा मरुतो मितराविणः नपातो यज्ञस्य नपातयितारो रक्षकाः। 'अपां' जलानां 'क्षयाः' निवासस्थानभूताः नदीमध्ये घर्म्मकालेपि तत्र

पाषाणानां सन्धिषु जलन्निवसति । तथा 'पर्व्वतानाङ्ककुभः' शृङ्गभूताः, ककुभं शृङ्गे विदुः प्रधानेपि च निघण्टे । 'श्येनाः' एतन्नामकपक्षिसदृशाः शंसनीयगमनाद्वा । 'अजिराः' क्षिप्रनामैतत् क्षिप्रगमनाः 'एन्द्रं' 'वहत' उक्तलक्षणा यूयं सोमयागार्थमिन्द्रमाह्वयत, केन साधनेन 'वग्नुना' वचनेन वाक्यसदृशेन ध्वनिनेत्यर्थः, ग्रावाणां सोमाभिषवध्वनिं श्रुत्वा इन्द्र आहूत इव शीघ्रमागच्छति । 'घोषेण' भवदीयेनोग्रध्वनिना 'अमीवान्' रोगवदुपद्रवकारिणोऽसुरान् 'चातयध्वं' पराभूतान् कुरुध्वं, अतएव तैत्तिरीया आमनन्ति, श्रद्धा देवस्य यजमानस्यासुरम्नीवाक्रतुः यज्ञायुधेषु प्रविष्टासीत्, तेसुरायादन्तो यज्ञायुधानामुद्दहतामुपाश्टण्वन् ते परा भवन्निति । 'युक्तास्थ वहत' इन्द्रमाहूयासुरांश्च पराभाव्य ततो द्रोणकलशं वोढुम्परस्परं संयुक्ता भवत संयुज्य च कलशं वहत ॥ ५ ॥

द्राह्यायणः, पश्चाद्दक्षिणतो वा द्रोणकलशमध्यूहेयुरिदमहममुमितीति । युक्तानां ग्रावाणामुपरिष्टाद्द्रोणकलशं पश्चादारभ्य प्राञ्चं दक्षिणत आरभ्योदञ्चं वा स्थापयेयुः । पाठस्तु,

**इदमहममुं यजमानं पशुष्वध्यूहामि पशुषु च मां ब्रह्मवर्चसे च ॥ ६ ॥**

'इदं' प्रत्यक्षं यथा भवति तथा 'अहं' उद्गाता 'अमुं' परतो

दृश्यमानं, दूममिति केषाञ्चित्पाठः । 'यजमानं' 'पशुषु' गोषु 'अध्यूहामि' उपरि स्थापयामि । कलशाध्यूहनप्रसादात् मया यजमानेन च पशवो लभ्यंतामित्यर्थः, न केवलं पशुलाभः किन्तु ब्रह्मवर्चसनिमित्तमप्येतदध्यूहनं भवतु ॥६॥

द्राह्यायणः, पवित्रेण द्रोणकलशꣳसंसृज्याद्वसवस्त्वेति बुध्नꣳ रुद्रास्त्वेति मध्यमादित्यास्त्वेति बिलमितीति । दशापवित्रनामको यो वस्त्रखण्डस्तेनोद्गाता द्रोणकलशमूलमध्यबिलभागान् मन्त्रगतैस्त्रिभिः भागैः शोधयेत् । पाठस्तु,

**वसवस्त्वा गायत्रेण छन्दसा संसृजन्तु रुद्रास्त्वा त्रैष्टुभेन छन्दसा सम्मृजन्त्वादित्यास्त्वा जागतेन छन्दसा संसृजन्तु ॥ ७ ॥**

स्पष्टार्थः ॥ ७ ॥

द्राह्यायणः, अवधूय पवित्रमुदग्दशमवाङ्नाभिर्वितनुयुः पवित्रन्त इतीति । दशापवित्रस्य मध्ये शुक्ला पूर्णा स्रुवं सोमधारास्रावणार्थं यजमान अवबध्नाति, सा नाभिरित्युच्यते । उदीचीनदशमवाचीननाभि च दशापवित्रं कृत्वा द्रोणकलशस्योपरिष्टादुद्गातादय स्त्रयो वितनुयुः, वितत्य च दशापवित्रस्य कोणान् धारयेयुः । तथाच ब्राह्मणं पवित्रं विमृजतीति । पाठस्तु,

**पवित्रन्ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्य्येषि**

**विश्वतोतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तः सन्तदाशत ॥ ८ ॥**

हे 'ब्रह्मणस्पते' मन्त्रस्य स्वामिन् सोम 'ते पवित्रं' शोधक-मन्त्रं 'विततं' सर्वत्र विस्तृतं सः 'प्रभुः' प्रभविता त्वं 'गात्राणि' गातुरङ्गानि 'पर्य्येषि' परिगच्छसि 'विश्वतः' सर्व्वतस्तव 'तत्' पवित्रं 'अतप्ततनूः' पयोव्रतादिना असन्तप्तगात्रः। 'आमः' अपरिपक्वः 'न अश्नुते' न व्याप्नोति। 'शृतास इत्' शृता एव परिपक्वा एव 'वहन्तः' 'तत्' पवित्रं 'आशत' व्याप्नुवन्ति ॥८॥

द्राह्यायणः, सन्ततायां धारायामुद्गाता जपेत् प्रशुक्रै-त्विति। दशापवित्रस्योपरि सोमरसस्य धारा तन्तता स्राव्यते तदानीमुद्गाता प्रशुक्रैत्विति मन्त्रं जपेत्। पाठस्तु,

**प्र शुक्रैतु देवी मनीषास्मद्रथः सुतष्टो न वाज्यायुषे मे पवस्व वर्चसे मे पवस्व विदुः पृथिव्या दिवो जनित्राच्छृण्वन्त्वापोऽधः क्षरन्तीः सोमेहोद्गाय ममायुषे मम ब्रह्मवर्चसाय यजमानस्यर्द्ध्या अमुष्य राज्याय ॥९।१।२॥**

'शुक्रा' शुद्धा निर्म्मला 'देवी' द्योतनात्मिका 'मनीषा' स्तुतिः 'अस्मत्' अस्मत्तः 'प्रैतु' प्रगच्छतु सोमं। तत्र दृष्टान्तः, 'रथोन' रथइव कीदृशः 'सुतष्टः' सुष्ठु तक्षणक्रियया निष्पादितः। 'वाजी' वेगवान् उग्रबुद्धिं परित्यज्य 'मे' ममोद्गातुः 'आयुषे'

आयुर्वृद्ध्यर्थं 'पवस्व' पूतो भव तथा 'मे वर्चसे' ब्रह्मवर्चस-निमित्तं पूतो भव। 'पृथिव्या दिवः' च 'जनित्रात्' याग-द्वारेण उत्पादकाद्दशापवित्रात् 'अधः चरन्तीः' चरन्त्यः 'आपः' सोमरसात्मिकाः 'विदुः' अस्मदीयां मनीषां जानन्तु तदर्थं 'शृखन्तु' हे 'सोम' त्वं 'इह' अस्मिन्कर्म्मणि 'उद्गाय' उद्गानं कृत्वा उरुधारया पूयमानस्य सोमस्य शब्द उद्गीय-त्वेन स्तूयते। श्रूयते हि एष वै सोमस्योद्गीथो यत्पवन इति। यदुद्गातृत्वं त्वया कृतं तत 'मम' उद्गातुरायुर्वृद्ध्यर्थं सम्पद्यते। तथा 'मम' ब्रह्मवर्चसार्थं सम्पद्यते। तथा यज-मानस्य धनधान्यादि समृद्धौ सम्पद्यते। 'अमुष्य राज्याय' अमुष्य राज्ञो राज्याय अमुष्येत्यस्य स्थाने तस्य राज्ञो नाम निर्द्दैष्टव्यं। तत्र बुद्धन्यतरस्यां सोमस्य राज्ञो राज्यायेति इत्येव निर्द्दैष्टव्यमिति सिद्धान्तितत्वात् सूत्रकार आह, अमुष्य राज्या-येति, प्रियꣳराजानमादिशेद्राज्ञो राज्यायेति वा यजमानस्य राज्ञो राज्यायेति वा सोमस्य राज्ञो राज्यायेति वा सोमस्येत्येवं ब्रूयात्सोमराजानो हि ब्राह्मणा इति। क्षत्रियवैश्ययोरपि दीक्षया ब्राह्मणत्वात् सोमस्येत्येव तयोरपि निर्द्देशः। ब्रह्मणो वा एष जायेत यो दीक्षित इति श्रुतेर्ब्राह्मणत्वमवसीयते, अतएव सूत्रान्तरं तस्माद्राजन्यवैश्यावपि ब्राह्मण इत्येवावेद-यतीति ॥८।१।२॥

इति ताण्ड्यमहाब्राह्मणे प्रथमाध्यायस्य

द्वितीयः खण्डः।

अथ तृतीयः खण्डः ।

द्राह्यायणः, अध्वर्य्युणा कृते प्रवृत्तहोमौ जुहुयुर्गत्वानु-पूर्व्वेण बेकुराणामासि सूर्य्योमेतीति। अध्वर्य्युणा वै पशुहोमेषु कृतेषूद्गातारस्त्रयोपि प्रवृत्तहोमौ जुहुयुः। प्रस्तोता प्रथमं ततः उद्गाता ततः प्रतिहर्त्तेति एवं प्रसर्पणक्रमेण जुहुयुः प्रथम-मन्त्रो वाग्देवत्यः। तत्पाठस्तु,

**बेकुरा नामासि जुष्टा देवेभ्यो नमोवाचे नमोवा-चस्पतये देवि वाग्यत्ते वाचो मधुमत्तस्मिन्माधाः सरस्वत्यै स्वाहा ॥ १ ॥**

हे सरस्वति त्वं 'बेकुरा' विकिर्व्योव्विकर्म्मा नामशब्दः प्रसिद्धौ सर्व्वत्र व्यापनात् बेकुरेति प्रसिद्धा भवसि। 'देवेभ्यः' तेषामर्थाय 'जुष्टा' स्तोतृभिः स्तुता 'असि' तस्यै 'वाचे' वाग्देव-तायै 'नमः' अस्तु 'वाचस्पतये' ब्रह्मणे 'नमः' अस्तु। हे 'देवि' द्योतमाने हे वाग्देवते 'ते' तव 'वाचः' शब्दराशेः 'यत्' 'मधु-मत्' अतिशयेन माधुर्य्योपेतं वस्त्विति तत् 'तस्मिन् माधाः' निधेहि स्थापय तस्यै 'सरस्वत्यै' स्वाहा इदं हविस्त्यजामि। स्वाहेति हविस्त्यागार्थो निपातः ॥ १ ॥

द्वितीयमन्त्रपाठस्तु,

**सूर्य्यो मा दिव्याभ्यो नाष्ट्राभ्यः पातु वायुरन्तरि-क्षाभ्योग्निः पार्थिवाभ्यः स्वाहा ॥ २ ॥**

'सूर्य्यः' सर्व्वस्य प्रेरको द्युस्थानो देवः 'मा' मां 'दिव्याभ्यः' दिवि भवाभ्यः 'नाष्ट्राभ्यः' नाशकारिभ्यो रक्षोजातिभ्यः 'पातु' 'वायुः' अन्तरिक्षस्थानः 'अन्तरिक्षाभ्यः' ततोत्पन्नाभ्यः नाष्ट्राभ्यः 'पातु'। तथा 'अग्निः' भूस्थानः 'पार्थिवाभ्यः' नाष्ट्राभ्यः 'पातु स्वाहा'। तेभ्यः सूर्य्यादिभ्यो हविस्त्यजामीति ॥ २ ॥

द्राह्यायणः, सव्यैः पाणिभिः पृथग्दक्षिणा तृणानि निर-स्येयुर्य्योद्य सौम्य इतीति। बहिष्पवमानस्तोत्रार्थं अध्वर्य्युमनु-चात्वालसमीपे प्रसर्पन्तस्त्रयोपि स्वकीयैर्वामहस्तैर्म्मार्गस्थि-तानि तृणानि दक्षिणस्यां दिशि निरस्येयुः। दक्षिणैस्तृणै-रन्नारंभविधानात् सव्यैरित्युक्तं। पाठस्तु,

**योद्य सौम्यो वधोघायूनामुदीरते विषूकुहस्य धन्वनाप तान् वरुणो धमत्॥ ३ ॥**

'अद्य' अस्मिन्नहनि 'अघायूनां' अघं हिंसामाय तस्य 'धन्वना' मार्गेण अन्यैरविज्ञायमानेन नोद्गच्छतीत्यर्थः। 'तान्' वचनव्यत्ययः इच्छतां सम्बन्धी 'सौम्यः' सोमविषयः 'वधः' हिंसा तत्साधनं वा दूषणात्मकः 'उदीरते' उद्गच्छति ईरगतौ अदा-दिकः बहुलं छन्दसीति शपोलुगभावः। वधप्राप्तिसाधनमाह

'विषूकुहस्य' विषू विष्वक् सर्व्वतः कुहना वञ्चना यस्य स तथोक्तः तादृशस्य 'वरुणः' दुष्कृतात्तारको देवः 'अपधमत्' धमतिर्व्वधकर्म्मा अपहन्त्वित्यर्थः ॥ ३ ॥

द्राह्यायणः, चात्वालदेशं प्राप्याध्वर्य्यावुपविष्टे तस्मात् प्रत्य-गुपविशेद्युर्य्योस आत्मेति स्पष्टार्थः । पाठस्तु,

**योमआत्मा या मे प्रजा ये मे पशवस्तैरहं मनो-वाचं प्रसीदामि ॥ ४ ॥**

'मे' ममोद्गातुः सम्बन्धी 'यः आत्मा' शरीरस्थितो जीवोऽस्ति, 'या' च मदीया 'प्रजा' पुत्रभृत्यादिरूपा 'ये' च मदीयाः 'पशवः' गोमहिष्यादयः 'तैः' सर्व्वैः सहितः 'अहं' 'मनोवाचौ' समाधाय 'प्रसीदामि' प्रसन्नोभूत्वोपविशामि ॥ ४ ॥

द्राह्यायणः, प्रस्तरं प्रतिगृह्य प्रस्तोता ब्रह्मन् स्तोष्यामः प्रशास्तरित्युद्गात्रे प्रयच्छेत्तेन दक्षिणाञ्जङ्घामुपहृत्य युंज्यात् स्तोममग्नेस्तेजसेतीति । उपवेशनानन्तरमध्वर्य्युणा दत्तं प्रस्तरं प्रतिगृह्योद्गात्रे प्रस्तोता प्रयच्छेत् तेन प्रस्तरेण स्वकीयां जङ्घां उपस्पृश्य उद्गाता स्तोमं युञ्ज्यात् । मन्त्रोच्चारणमेव स्तोम-योगः । तत्पाठस्तु,

**अग्नेस्तेजसेन्द्रस्येन्द्रियेण सूर्य्यस्य वर्च्चसा वृह-स्पतिस्त्वा युनक्तु देवेभ्यः प्राणायाग्निर्य्युनक्तु तपसा**

**स्तोमं यज्ञाय वोढवे दधात्विन्द्र इन्द्रियꣳसत्याः कामा यजमानस्य सन्तु ॥ ५ ॥**

हे स्तोम त्रिवृदादिलक्षणं त्वां 'बृहस्पतिः' देवः 'देवेभ्यः' तेषामर्थायाग्नीन्द्रसूर्य्याणां सम्बन्धिभिस्तेजइन्द्रियवर्च्चोभिः 'युनक्तु' योजयतु। तेज आदिशब्दैरग्न्यादिदेवतानां सामर्थ्यानि विवक्षितानि। तथा 'प्राणाय' ऋत्विग्यजमानप्राणरक्षणार्थं 'अग्निस्तपसा' प्राणघातिवैरिसन्तापसामर्थ्येन 'स्तोमं' योजयतु किमर्थं 'यज्ञाय वोढवे' यज्ञं वोढुं तथा 'इन्द्रोऽपि इन्द्रियं' सामर्थ्यं दधतु स्तोमं स्थापयतु उक्तद्वयं सूर्य्यवर्च्चसा युनक्ति-त्यस्याप्युपलक्षणं। 'यजमानस्य कामाः' काम्यमानाः आशिषः 'सत्याः सन्तु' यथार्था भवन्तु ॥ ५ ॥

द्राह्यायणः, अन्नङ्करिष्यामीति जपेदिति स्तोमयोगादूर्द्ध्व-मेतस्य मन्त्रस्य जपः। पाठस्तु,

**अन्नङ्करिष्याम्यन्नं प्रविष्याम्यन्नञ्जनयिष्यामि ॥ ६ ॥**

अनेन स्तोतॄणामहमनुज्ञाता बहुप्राण्युपकाराय प्रभूतं 'अन्न-ङ्करिष्यामि' तच्च 'अन्नम्प्रविष्यामि' भूतिः समृद्धिः समृद्धं करि-ष्यामि। तत् 'अन्नञ्जनयिष्यामि' जनने व्रीह्यादिरूपेण पुनः पुनः प्ररोहणे हेतुत्वेन करिष्यामि ॥ ६ ॥

द्राह्यायणः, अन्नमकरमिति स्तुत्वा जपेत्। बहिष्पवमान-स्तोत्रादूर्द्ध्वं अयं जपः। पाठस्तु,

अन्नमकरमन्नमभूदन्नमजीजनं॥ ७॥

स्तोत्रसामर्थ्यमन्नसमृद्धेर्निश्चितत्वाद्भूतार्थप्रयोगः ॥ ७॥

द्राह्यायणः, श्येनोसीति प्रस्तरे यजमानं वाचयेदिति। प्रस्तरे प्रस्तरे स्पर्शं कारयित्वेति शेषः। पाठस्तु,

श्येनोसि गायत्रछन्दा अनु त्वारभे स्वस्ति मा संपारयामा स्तोत्रस्य स्तोत्रं गम्यादिन्द्रवन्तो वनेमहि भक्षीमहि प्रजामिषं॥ ८॥

हे बहिष्पवमान त्वं गायत्राख्यं छन्दोविशिष्टः सन् 'श्येनः' श्येनाख्यपक्षिसदृशः 'असि' तथा प्रबलासीत्यर्थः। 'त्वा' तथाविधं त्वां 'अन्वारभे' आनुकूल्येन स्पृशामि 'स्वस्ति' क्षेमो विघ्नाभावरूपो यथा भवति तथा 'मा' मां 'सम्पारय' सम्यग्यज्ञस्य पारन्नय। 'स्तोत्रस्य' बहिष्पवमानरूपस्य यतः स्तोत्रमात्रमाज्यपृष्ठादिकमनन्तरभावित्वेन संबन्धमस्ति, यद्वा 'स्तोत्रस्य स्तोत्रं' प्रशस्तं स्तोत्रं बहिष्पवमानादिकं तन्मा 'मागम्यात्' आगच्छतु 'इन्द्रवन्तः' बहिष्पवमान देवतारूपेणेन्द्रेण तद्वन्तो वयं 'वनेमहि' सर्व्वाः स्तोत्र देवताः संभजेमहि। तत्प्रसादात् 'प्रजां' पुत्रादिरूपां 'इषं' इष्यमाणमन्नं च 'भक्षीमहि', ननु भजेमहि॥ ८॥

द्राह्यायणः, संवर्चसेतीक्षकान् सहकारिणश्च प्रेक्षमाणो जपेदिति। स्तोत्रप्रयोगं द्रष्टुमागता ईक्षकाः प्रस्तोत्रादयः

उपगातारः सहकारिण स्तान् सर्व्वान् प्रेक्ष्यमाण उद्गाता संवर्चसेति मन्त्रं जपेत् । पाठस्तु,

**संवर्चसा पयसा सन्तपोभिरगन्महि मनसा सꣳशिवेन संविज्ञानेन मनसश्च सत्यैर्यथावोहं चारुतमं वदानीन्द्रो वो दृशे भूयासꣳ सूर्य्यश्चक्षुषे वातः प्राणाय सोमो गन्धाय ब्रह्म क्षत्राय ॥ ९ ॥**

हे ईक्षकाः प्रस्तोतादय उपगातारश्च 'वर्चसा' ब्रह्मवर्चसेन 'समगन्महि' वयं सङ्गता अभूम तथा 'पयसा' दक्षिणारूपाणां गवां हि क्षीरेण समगन्महि तथा कर्म्मानुष्ठानरूपैः 'स्तपोभिः' समगन्महि तथा 'शिवेन' मङ्गलेन आस्तिक्ययुक्तेन समगन्महि । तथा 'मनसा' सम्बन्धिभिः 'सत्यैः' यथार्थभूतैः संकल्पैश्च । किञ्च यथा 'वः' युष्माकं 'चारुतमं' अतिशयेन रमणीयं 'वदानि' तथा वचसो विहत्या युज्ये । 'वः' युष्माकं 'दृशे' दर्शनाय । 'इन्द्रः' इति लुप्तोपमं इन्द्रं इन्द्र इवाहं दर्शनीयो 'भूयासं' 'सूर्य्यः' इव 'चक्षुषे' तेजसे 'वातः' वायुरिव 'प्राणाय' प्राणनाय जीवनाय 'सोमो गन्धाय' सोम इव गन्धाय सोमो रसात्मको गन्धाय भवति शुष्काणां गन्धानुपलब्धेः 'ब्रह्म' इव ब्राह्मणइव पुरोहितः 'क्षत्राय' बलाय क्षत्रियाय वा भूयासमिति सर्व्वशेषः ॥९॥

द्राह्यायणः, नमो गन्धर्व्वायेत्यादित्यमिति प्रेक्षमाणो जपेदिति तत्रानुपज्यते । पाठस्तु,

**नमो गन्धर्वाय विश्वग्वादिने वर्चोधा असि वर्चो मयि धेहि ॥१०॥**

'गन्धर्व्वाय' गावो रश्म्युदकानि रश्मयो वा तान् धारयतीति गन्धर्व्वः आदित्य स्तस्मै 'नमः' अस्तु । गविर्वाङ्श्रिष्वेव इति गोशब्द उपपदेऽश्रिञो धातो र्घप्रत्यये उपपदस्य च गम्भावे गन्धर्व्वशब्दोव्युत्पन्नः । कथं भूताय च 'विश्वग्वादिने' वा तिर्गतिकर्म्मा विश्वक् सर्व्वान्वा वादिते ईदृशस्त्वं 'वर्च्चोधाः' च वर्च्चस स्तेजसो धारयिता 'असि' अतो 'मयि' उद्गातरि 'वर्च्चः' तेजः 'धेहि' निधेहि ॥१०।१।२॥

इति ताण्ड्यमहाब्राह्मणे प्रथमाध्यायस्य

तृतीयः खण्डः ।

——०()०——

अथ चतुर्थः खण्डः ।

सवनीयपशो र्वपायाᳲ हुतायां सदः प्रविशन्तो धिष्णानुपतिष्ठेरन् । अध्वनामिति सूत्रकारेण रौरुकिशाखोक्तानि यजूᳲषि यदा प्रयुञ्जीरन् तदाऽनेन मन्त्रेण आदित्योपस्थान-

मिति विकल्पेनोक्तं । अन्ये तु ताण्डिशाखाधीतानां यजुषां प्रयोगेपि आम्नान सामर्थ्यात् जैमिनिना तथैव विनियुक्तत्वाच्च अनेनादित्यमुपस्थाय इत्याहुः । पाठस्तु,

**अध्वनामध्वपते स्वस्ति मेद्यास्मिन् देवयाने पथि भूयात् ॥ १ ॥**

हे 'अध्वनामध्वपते' हे मार्गाणां मध्यमः प्रशस्तोन्तरिक्षमार्गः तस्य स्वामिन्, यद्वा एकोध्वशब्दोनुवादः अध्वनां पातरित्यर्थः । वसूयवो वसुपते वसूनामिति वत् 'मे' मम 'अस्मिन् देवयाने' देवान् येन यज्ञाख्येन मार्गेण यान्ति प्राप्नुवन्ति तस्मिन् यज्ञाख्ये 'पथि' मार्गे अथेदानीं 'स्वस्ति' क्षेमः 'भूयात्' ॥ १ ॥

द्राह्यायणः, सम्राडसीत्याहवनीयमुपस्थायेति उत्तरवेदेः पश्चादवस्थायोत्तरवेदिक्रमादाहवनीयमुपस्थायेति । उत्तरवेदेः पश्चादवस्थायोत्तरवेदिक्रमादाहवनीयमुपतिष्ठेरन् । पाठस्तु,

**सम्राडसि कृशानुः ॥ २ ॥**

हे आहवनीय त्वं 'सम्राट्' सम्यग्राजमानो दीप्यमानः सन् 'कृशानुः' सर्व्वस्य कर्शयिता तनूकर्त्ता दाहको भवसि कृश तनूकरणे अस्मात् उणादिको अनुक् प्रत्ययः ॥ २ ॥

द्राह्यायणः, उदञ्चोगत्वाऽस्ताव चात्वाल शामितान् उदङ्मुखस्तुथो नभोऽसंमृष्ट इति । उदङ्मुखाः तिष्ठन्तः ततः

आस्तावदेशं चात्वालं शामित्रं स्तुत्यादिभिर्मन्त्रैर्यथाक्रम-मुपतिष्ठेरन् । पाठस्तु,

तुथोसि जनधायो नभोसि प्रतक्वाऽसंमृष्टोसि हव्यसूदनः ॥ ३ ॥

हे आस्तावदेश त्वं 'जनधायः' जनानां धारकः 'तुथः' तुथतेर्वधकर्म्मणस्तुथः रक्षःप्रभृतीनां हन्ता यद्वा तु क्षिप्रं थर्वति गच्छति देवानिति तुथः थर्व्वतिर्गतिकर्म्मा एतत् संज्ञोसि । हे चात्वाल त्वं, 'नभः' चात्वालादुत्तरवेद्यादिकान् धिष्ण्यानुपयान्ति तेन गतमृत्तिकत्वादवकाशरूपत्वेनान्तरिक्षमसि, 'प्रतक्वा' प्रकर्षेण तक्वा स्वावयवैः पांशुभिः सर्व्वान् धिष्ण्यान् प्रविशन्नसि तकतिर्गतिकर्मा । हे शामित्र देश त्वं 'हव्यसूदनः' हव्यानां हविषां हृदयाद्यंगानां सूदकः अतएव 'असंमृष्टः' हविःसंस्कारत्वेन स्वत एव शुद्धत्वात् सम्मार्ज्जनसंस्कार-निरपेक्षोऽसि ॥ ३ ॥

द्राह्यायणः, विभुरसीत्याग्नीध्रीयमुपतिष्ठेरन् । पाठस्तु,

विभुरसि प्रवाहणः ॥ ४ ॥

हे आग्नीध्रीय त्वं 'विभुः' विभविता होत्रीयादिधिष्ण्यप्राप्त्या विभुतिमानसि । आग्नीध्रीयादिधिष्ण्येष्वग्नयो विह्रियन्ते आग्नीध्रीयाद्धिष्णियान्विहरतीति श्रुत्यन्तरं ॥ ४ ॥

अतएव प्रवाहणः, प्रकर्षेण वोढ़ा तैर्यज्ञस्य वा धारकोसि ।

अत्र सूत्रं, पूर्व्वस्याᳬ सदसोद्वारि प्रत्यङ्मुखास्तिष्ठन्तो वह्नि-रिति होतुर्धिष्ण्यमिति उपतिष्ठेरन्निति शेषः ।

**वह्निरसि हव्यवाहनः ॥ ५ ॥**

इति पाठः ।

हे होत्रीय वह्निर्वोढ़ासि एतदेव विवृणोति, हव्यवाहनो हविषां चरुपुरोडाशसोमानां वोढ़ाऽसि होत्रीयसमीपेऽवस्थि-तस्य होतुर्वषट्कारेण हि सर्व्वाणि हवीᳬषि हूयन्ते ॥ ५ ॥

अत्र सूत्रं, श्वात्र इति मैत्रावरुणस्येति ।

**श्वात्रोसि प्रचेताः ॥ ६ ॥**

इति पाठः ।

हे मैत्रावरुणधिष्ण्य त्वं प्रचेताः प्रकृष्टज्ञानासि मित्रा-वरुणोहि तत्कर्म्म स्वप्रजानन् सर्वानृत्विजः स्वे स्वे कर्मणि प्रशास्ति ॥ ६ ॥

अत्र सूत्रं, तुथ उशिगङ्गारिरवसुरिति ब्राह्मणाछᳬसि प्रभृतीनामुदञ्च इति उदङ्मुखाः सन्तः तुथोसि विश्ववेदा इति ब्राह्मणाछᳬसिधिष्ण्यं, उसिगसि कविः पोतुरिति होतु-र्धिष्ण्यं, अङ्गारिरसि बंभारिरिति नेष्टुः, अवस्युरसि दुवस्वानि-त्यच्छावाकस्य ।

**तुथोसि विश्ववेदा उशिगसि कविरङ्गारिरसि बम्भारिरवस्युरसि दुवस्वान् ॥ ७ ॥**

अक्षरार्थस्तु, हे ब्राह्मणाच्छंसि धिष्ण्य त्वं विश्ववेदाः सर्व्व-ज्ञस्सुयनामकोसि, हे पोतृधिष्ण्य त्वं उशिक् कमनीयः कविः क्रांतदर्शी प्राज्ञोसि, हे नेष्टृ धिष्ण्य त्वं अङ्घारिः आङ् अधिरूप-सृष्टस्य ह्वरणदीप्त्योरिति अस्य रूपमेतत् आसमन्ताद्दीप्तसंज्ञः सोमपालोसि । बंभारिरिति विभक्तेः रूपं बम्भारि सर्व्वस्याति-शयेन भर्त्ता एतत् संज्ञः सोमपालोसि । हे अच्छावाकधिष्ण्य त्वमवस्युः अवो रक्षणं यजमानानामिच्छतीति अवस्युस्ताद-शोसि । दुवस्वान् दुवः परिचरणं तद्वांश्चासि ॥ ७ ॥

अत सूत्रं, शुन्ध्युरसि मार्जालीय तत्रैव तिष्ठन्त इति । सदसो द्वार्य्येव तिष्ठन्तो दक्षिणाभिमुखा मार्जालीयमुपतिष्ठेरन् ।

## शुन्ध्युरसि मार्जालीय ॥ ८ ॥

इति पाठः ।

हे 'मार्जालीय' त्वं 'शुन्ध्युः' शोधयिता एतन्नामकोसि अतएव मार्ज्जालीयभक्षितानां ग्रहचमसादीनां मार्ज्जालत्वेन प्रक्षालितत्वाधिकरणत्वेन शोधकोसि ॥ ८ ॥

अत सूत्रं, ऋतधामेत्यौडुम्बरीमिति । सदसो द्वार्य्येव तिष्ठन्तः प्रत्यङ्मुखा औडुम्बरीमुपतिष्ठेरन् ।

## ऋतधामासि स्वर्ज्योतिः ॥ ९ ॥

इति पाठः ।

हे 'औडुम्बरि' त्वं 'ऋतधामा' ऋतं सत्यं यज्ञो वा धामा-

वस्थानं यस्याः सा ऋतधामा ईदृश्यसि। स्वर्ज्योतिः उन्नतत्वेन स्वर्गस्य प्रकाशिका भवसि ॥ ६ ॥

अत्र सूत्रम्, समुद्र इति ब्रह्मसदनद्वार्य्येव तिष्ठन्तः। पाठस्तु,

## समुद्रोसि विश्वव्यचाः ॥ १० ॥

हे ब्रह्मसदन त्वं 'समुद्रः' समुद्रवत् पूर्णोसि वेदत्रयोक्तैर्मन्त्रैः 'विश्वव्यचाः' सर्व्वत्र व्याप्नोसि ॥ १० ॥

सूत्रं, उत्तरेण सदो गत्वान्तर्व्वेदि प्रत्यङ्मुखास्तिष्ठन्तोहिरिति प्रजहितमिति। प्रजहितशब्देन पुराणो गार्हपत्योभिधीयते, तमुपतिष्ठेरन्।

## अहिरसि बुध्न्यः ॥ ११ ॥

इति पाठः।

'अहिरसि' हन्ता रक्षःप्रभृतीनां बुध्न्यो बुध्ने मूले आदौ आधानकाले प्रथमञ्जातोसि हे प्रजहित इति ॥ ११ ॥

सूत्रं, अज इति गार्हपत्यमिति। यः पुरातन आहवनीयः स इदानीमौत्तरवेदिकप्रणयनादूर्द्ध्वं गार्हपत्यसम्पन्नस्तमुपतिष्ठेरन्।

## अजोस्येकपात् ॥ १२ ॥

हे नूतनगार्हपत्य त्वं 'अजः' गमनशीलः सन्नस्य ह्यग्निः

उत्तरवेदिं प्रति गच्छति । नतु प्रजहितेन सह तस्मादेकपादसि ॥ १२ ॥

तत्र सूत्रं, सगरा इति दक्षिणाग्नेरायतनमिति उपतिष्ठेरन् इति शेषः । पाठस्तु,

**सगरा असि बुध्नः ॥ १३ ॥**

'सगरा' गरसा गरणेन हविर्भक्षणेन सहितः 'बुध्नः' मूले भवस्थासि । हे दक्षिणाग्न्याश्रयेति ॥ १३ ॥

सूत्रं, कव्य इति दक्षिणवेद्यंतमिति महावेदेर्दक्षिणं पार्श्वं दक्षिणमुखा उपतिष्ठेरन् । पाठस्तु,

**कव्योसि कव्यवाहनः ॥ १४ ॥**

हे वेदिदक्षिणपार्श्व त्वं 'कव्योसि' स्तुत्योसि तथा 'कव्यवाहनः' कव्यं पितृभ्यो देयं हविः तस्य वोढा चासि दक्षिणाभिमुखेन पितृत्र हविः प्रयुज्यते ॥१४॥

अत्र सूत्रं, तत्रैव तिष्ठन्तः सर्व्वान् समन्वीक्ष्यमाणाः पातमेतीति । उपस्थितः सर्व्वानेव धिष्णियान् पुनः पुनः समीक्ष्यमाणाः पातमेति संहत्योपतिष्ठेरन् । पाठस्तु,

**पात माग्नयो रौद्रेणानीकेन पिपृत मा नमो वोस्तु मा माहिꣳसिष्ट ॥ १५ ॥**

उपस्थिताः हे अग्नयो धिषणेष्ववस्थिता युष्मदीयेन रौद्रेण

अस्मद्विरोधिविनाशकेन क्रूरेण अनीकेन तेजसा मा मां पात रक्षत। तथा मा पिपृत ममापेक्षितैर्भोगैः पूरयत पृपालन-पूरणयोः वो युष्मभ्यं नमोऽस्तु मां यूयं माहिंसिष्ट। अथापरं विधानं आहवनीयादीन् धिष्ण्यान् स्वैः स्वैरुपस्थानमन्त्रैरुप-स्थाय तदानीमेव तं तं धिष्ण्यं समन्वीक्ष्यमाणाः पातमेति मन्त्रं ऊहेन एकवचनोपेतं कृत्वा ब्रूयुः। ततोच्यते हि एकैकमुप-स्थायैतद्ब्रूयुरिति शाण्डिल्यो बहुशब्दादेकवत्कुर्व्वन्त इति तद्यथा। सूच्यते हि एकैकमुपस्थाय याद्रिमाग्ने रौद्रेणानीकेन पिपृतमा नमस्तेऽस्तु मामाहिंसीरिति ॥१५।१।४॥

इति ताण्ड्यमहाब्राह्मणे प्रथमाध्यायस्य
चतुर्थः खण्डः।

---

अथ पञ्चमः खण्डः।

अत सूत्रं, ऋतस्य द्वारौस्थ इत्यपरौ द्वारबाहू संमृज्य मा मा सन्ताप्तमिति प्रविशेयुरिति।

## ऋतस्य द्वारौस्थो मा मा सन्ताप्तं ॥ १ ॥

हे सदसः पश्चाद्ये द्वारशाखे ऋतस्य यज्ञस्यैव द्वारबाहू भवथ युवामतिक्रम्य प्रविशन्तं मा मां मासन्ताप्तं सन्तापयुक्तं मा कुरुत ॥ १ ॥

अत्र सूत्रं, दक्षिणेनौडुम्बरीं गत्वा तस्या उत्तरत उपविशेयुः नमः सखिभ्यः इतीति। पाठस्तु,

**नमः सखिभ्यः पूर्व्वसद्भ्यो नमोपरसद्भ्यः ॥ २ ॥**

ये सखाय ऋत्विजः पूर्व्वदेशे सीदन्ति उपविशन्ति ये वा परदेशे सीदन्ति। यद्वा उद्गातृसर्पणात्पूर्व्वं ये सदस्या उपविशन्ति ये चोत्तरकालं तेभ्यो द्विविधेभ्यः प्रत्येकं नमोस्तु ॥ २ ॥

अत्र सूत्रं, दक्षिणमनुबाहुं दण्डं कृत्वा श्येन इत्यवेक्ष्येतेति। उपवेशानन्तरं भक्षणार्थं सोमचमसम्प्रति गत्वा आत्मनो दक्षिणं बाहुं अनु चमसस्य दण्डं कृत्वा तच्चमसन्तिर्य्यञ्चं धारयित्वा श्येन इति मन्त्रेण तं चमसमवेक्ष्य भक्षयेदिति वक्ष्यमाणपदेनान्वयः। पाठस्तु,

**श्येनो नृचक्षा अग्नेष्ट्वा चक्षुषावपाश्यामि ॥ ३ ॥**

चमसस्थित हे सोम त्वा त्वामहमुद्गाता श्येनः एतन्नामकपक्षिवत् प्रबलः सूक्ष्मदर्शी वा भूत्वा नृचक्षा नृणां द्रष्टा सन् अग्नेः सम्बधिना चक्षुषा प्रतिहतिवर्ज्जितेनाऽवाङ्मुखः पश्यामि ॥ ३ ॥

सूत्रमत्र, इन्दविति द्विरल्प भक्षयेदिति। सकृन्मन्त्रेण सकृत् तूष्णीमिति द्विर्भक्षणं स्पष्टमन्यत्।

**इन्दविन्द्रपीतस्य त इन्द्रियावतो गायत्रछन्दसः सर्व्वगणस्य सर्व्वगण उपहूत उपहूतस्य भक्षयामि ॥४**

तव सम्बन्धिनमहमनुज्ञातो अल्पं भागं भक्षयामि। कीदृशस्य तव इन्द्रपीतस्य इन्द्रेण पीत्वाऽवशेषितस्य इन्द्रियावतः चक्षुरादीन्द्रियपाटवहेतुत्वेन तद्वतः गायत्रछन्दसः प्रातःसवने तद्योग्यछन्दोविशेषोपेतस्य सर्वगणस्याध्वर्य्युप्रभृतिचतुर्भिर्ऋत्विजां गणैरुपेतस्य उपहूतस्य मदीयपानार्थं अन्यैर्ऋत्विग्भिः सह भक्षैरनुजातस्य। कीदृशोऽहं सर्वगणः सर्वैः पुत्रभृत्यादिगणैः ऋत्विग्गणैर्वोपेतः उपहूतः अन्यैर्ऋत्विग्भिरनुज्ञातः ॥ ४ ॥

अत्र सूत्रं, ऊर्द्ध्व इति मुख्यान् प्राणानभिमृशेतेति। भक्षणानन्तरं ऊर्द्ध्वः सप्तऋषीनिति सप्तमुख्यान् प्राणान् चक्षुषी नासिके श्रोत्रे मुखं चाभिमृशेत। पाठस्तु,

**ऊर्द्ध्वस्सप्त ऋषीनुपतिष्ठस्वेन्द्रपीतो वाचस्पते सप्तर्त्विजोऽभ्युच्छ्रयस्व जुषस्व लोकन्मा वाङ्वगाः ॥ ५ ॥**

हे भक्षितसोम त्वं ऊर्द्ध्वः शिरोभागं प्राप्तः सन् सप्त ऋषीन् सप्तसंख्येयैर्तच्छिद्रवर्त्तिनः चक्षुरादीन्द्रियरूपान् उपतिष्ठस्व प्राप्नुहि। तानाप्याययितुं दर्शनसाधनत्वादेषामृषित्वं ऋषिर्दर्शनादिति हि निरुक्तं। यद्वा गौतमादि ऋषिरूपेण मुखावस्थितच्छिद्राणां मुखस्थत्वादृषित्वं। एतच्च बृहदारण्यके तस्याः सप्त ऋषयः सप्ततीरे इति मन्त्रेणेमावेव गोतमभरद्वाजाविति ब्राह्मणेन स्पष्टीकृता। हे वाचस्पते मदीयस्तोत्ररूपाया वाचः पालकसोम त्वं इन्द्रदेवतया पीतः सन् सप्तर्त्विजो होतृप्रभृतीनभिलक्ष्य उच्छ्रयस्व तानाप्याययितुम-

ष्छ्रितो भव । ततो लोकं स्थानं स्वकीयजठरलक्षणं जुषस्व सेवस्व अवाक् अर्वाचीनः सन् मा वां अवगाः नाभेरधोन-गच्छेः । शिवो मे सप्त ऋषीनुपतिष्ठस्व मामेवावाङ्भिमातिगा इति हि निगमान्तरं ॥ ५ ॥

अत्र सूक्तं, सोम रारंधीति हृदयमिति अभिमृशेदित्य-नुषङ्गः ।

**सोम रारंधिनो हृदि पिता नोसि मम तन्मा माहिꣳसीः ॥ ६ ॥**

हे सोम नो अस्माकं हृदि हृदये रारन्धि रमस्व हे भग-वन् ऐश्वर्य्यादिगुणविशिष्ट त्वं नो अस्माकं पिता पालयितासि मां उद्गातारं मा हिꣳसीः । वमनरेचनरूपं हिंसां मा कार्षीरित्यर्थः ॥ ६ ॥

अत्र सूक्तं, सोम गीर्भिरिति नाभिमिति अभिमृशेदित्य-नुषङ्गः । पाठस्तु,

**सोम गीर्भिष्ट्वा वयं वर्द्धयामो वचोविदः सुमृडी-को न आविश ॥ ७ ॥**

हे सोम वाचोविदः मन्त्राभिज्ञा वयमुद्गातारः गीर्भिः स्तुतिभिः त्वा त्वां वर्द्धयामः अभिवृद्धं कुर्म्मः । त्वञ्च सुमृडीकः सुखकरो भूत्वा नो अस्मान् आविश ॥ ७ ॥

तं समाप्याययेदभिमृश्याप्यायस्वेत्येतया गायत्र्येति। यः प्रतिहर्त्ता पश्चाद्भक्षयत सः तच्चमसमभिमृश्याप्याययेत् द्रोण-कलशात् सोमरसमादाय तेन वर्द्धनमाप्यायनं मन्त्रेणाभिमर्षन-मात्रं वा। पाठस्तु,

आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्भवा वाजस्य सङ्गथे ॥ ८ ॥

हे सोम त्वं आप्यायस्व वर्द्धस्व ते तव वृष्ण्यं सेचन-समर्थं बलं विश्वतः सर्व्वतः सर्व्वाभ्यो दिग्भ्यः समेतु सम्यक् प्राप्नोतु। त्वं च अस्माकं वाजस्य अन्नस्य बलस्य वा सङ्गथे सङ्गमे हेतुर्भव ॥ ८ ॥

अत्र सूत्रं, तेषामनवेक्ष्य भक्षणमवमैरिति प्रातःसवन-ऊर्वैरिति माध्यन्दिने काव्यैरिति तृतीयसवनेपि तृभिरिति सर्व्व-त्रानुसंहरेदिति। नाराशंसाभिधचमसान् प्रकृत्य तच्छब्दः प्रयुज्यते। यथेतरचमसभक्षणं श्येनो नृचक्षा इत्यनेन मन्त्रेणा-वेक्ष्य पश्चात्क्रियते, न तथा तेषान्नाराशंसचमसानां किन्त्वनवे-क्ष्यैव भक्षणं अवमैरित्यादिभिस्त्रिभिर्मन्त्रैस्त्रिषु सवनेषु नारा-शंसभक्षणं, न पुनः इन्द्रविन्द्रपीतस्येति त्रिष्वपि मन्त्रेषु पितृ-भिरित्यादिवाक्यशेषोनुषज्यते। पाठस्तु,

अवमैस्त ऊर्वैस्ते काव्यैस्ते पितृभिर्भक्षितस्य मधु-

**मतो नाराशꣳसस्य सर्व्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि ॥ ९ ॥**

त्रिविधाः पितरः अवमा ऊर्व्वाः काव्याश्चेति, एते अनुसवनं नाराशंसदेवताः। हे सोम अवमैः अवतेरौणादिकोऽयमच् प्रत्ययः रक्षकैः एतत्संज्ञकैः पितृभिः प्रातः सवने भक्षितस्य ते तव मधुमतो माधुमता माधुर्य्योपेतस्य नाराशंसस्य नरैः सन्तानभूतैः शस्यन्त इति नाराशंसाः पितरः तत् सम्बन्धाच्चमसो नाराशंसः तस्य किञ्चिद्भागं भक्षयामि, सर्वगणस्येत्यादि पूर्ववत् एवं ऊर्व्वैस्ते काव्यैस्त इति मन्त्रयोर्योजना। उर्व्वी पृथ्वी तस्यां सञ्चरन्तः ऊर्व्वाः काव्यास्तुत्यर्थाः एतत्संज्ञैः पितृभिः भक्षितस्येत्येतावान् विशेषः ॥ ९ ॥

अत्र सूत्रं, तथैव जङ्घामुपहृत्य युंज्यात् स्तोमं दीक्षायै तपसो मनसो वाच इतीति। यथा पुरा प्रस्तरेण स्वकीयां जङ्घामुपस्पृश्य स्तोमो युक्तः तथैवेदानीमपि स्तोमयोगमुपक्रमणदर्भाभ्यां जङ्घाम्पर्शोत्र विशेषः। पाठस्तु,

**दीक्षायै वर्णेन तपसो रूपेण मनसो महिम्ना वाचो विभूत्या प्रजापतिस्त्वा युनक्तु प्रजाभ्यो पानाय ॥ १० ॥**

आदितः पदद्वयात्मकाश्चत्वारो मन्त्राः एतदेवाभिप्रेत्य दीक्षातपो मनोवाक् शब्दैश्चतुर्भिः प्रतीकग्रहणं कृतं। प्रजा-

पतिस्त्वेत्ययं भागः चतुर्ष्वपि मन्त्रेष्वनुषज्यते। तदाह सूत्रकृत्, अन्तः सर्व्वेषां प्रजापतिस्त्वेतीति। एतैश्चतुर्भि रपि मन्त्रैरेकस्मिन्नेव स्तोत्रे स्तोमयोग इत्येकः पक्षः। यत्र नैरन्तर्य्येण आवृतस्तोत्राणि चत्वारि लभ्यन्ते तेषु चतुरो मन्त्रान् क्रमेण पृथग्विभज्य स्तोमयोगः नत्वेकस्मिन्नेव स्तोत्र इत्यपरः पक्षः। द्वावपि पक्षौ सूत्रकारो दर्शयति, नानाधानञ्जप्यो यत्रानन्तराणि चत्वारीति। मन्त्रार्थस्तु, हे स्तोम प्रजापतिः प्रजापालको देवः प्रजाभ्यः प्रजोपकारार्थं दीक्षायै वर्णेन यजमानानुष्ठितनियमरूपायाः सामर्थ्येन त्वा युनक्तु त्वां योजयतु। तथा अपानाय अपाननाय बहिर्गतायाः प्राणवृत्तेरन्तःप्रवेशनमपाननं तेन हि प्राणवायुः शरीरे धीयते। अपानेन ह्ययं यतः प्राणो न परां भवतीति श्रुत्यन्तरं। तदर्थमपि प्रजापति स्त्वां युनक्तु। एवमुत्तरेष्वपि त्रिषु मन्त्रेषु योज्यं। हे स्तोम तपसो यजमानानुष्ठितस्य पयोव्रतादि लक्षणरूपेण प्रजापति स्त्वां युनक्तु इति द्वितीयस्य विशेषः। मनसो मनस्तत्वस्य महिम्ना सर्व्वविषयावगाहनशक्त्या प्रजापति र्युनक्तीति तृतीयस्य विशेषः। तथा वाचो विभूत्या विभवनेन सर्व्वपदार्थप्रकाशनसामर्थ्येन प्रजापति र्युनक्तीति चतुर्थस्य। एतस्य जप एव स्तोमयोगः। त्रिवृत् पञ्चदशसप्तदशैकविंशादयोद्वितीयतृतीयाध्यायोक्तलक्षणा स्तोमाः। तेषु बहिष्पवमानस्तोत्रे त्रिवृत्स्तोमो विहितः। तस्मात् पूर्व्वत्र बहिष्पवमानांगत्वेनाग्ने-

स्तेजसेति मन्त्रः त्रिवृत्स्तोमयोगेऽभिहितः। तथा चतुर्ष्वाज्येषु स्तोत्रेषु पञ्चदशस्तोमो विहितः पञ्चदशान्याज्यानीति श्रुतेः। अतोत्राज्यास्तोत्रांगत्वेन पञ्चदशस्तोमयोगे दीव्याये वर्णेत्यादि-मन्त्रोऽभिहितः। आज्यस्तोत्रेभ्य ऊर्द्धं प्रातःसवनं समाप्यते। अत्र क्रतुसंग्रहः, वसतीवर्य्यपां प्राप्तौ प्रचारस्थाद्दधिग्रहे। उपांशु यदाभ्यौ कृत्वा महाभिषवमाचरेत्। उपांशु मन्त्वर्य्या-मञ्च कृत्वा रिक्तन्तु सादयेत्। अथेन्द्रवायवं पात्रे गृहीत्वा सादयेत् खरे। योमैत्रावरुणं तत्र श्रीणाति पयसाग्रहं। शुक्रः शृतो हिरण्येन शृतो मन्थी तु सक्तुभिः। गृहीत्वा ग्रयणं गृह्णात्यतिग्राह्याभिधग्रहान्। गृहीत्वोर्ध्वं ध्रुवो ग्राह्यः पवमानग्रहास्त्रयः। पूतभृद्द्रोणकलशोपरस्थाधवनीयकः। ते बहिष्पवमानाय प्रस्रुयन्त्यत्र पञ्च ते। गृहीत्वाश्विनमाग्नेयपशोः कुर्य्यादुपाकृतिं। सवनीयपुरोडाशैश्चरित्वा ह्यैन्द्रवायवं। कृत्वा ग्रहं द्वयो र्मैत्रावरुणाश्विनयोर्हुतिः। शुक्रमन्थ्यादिकान् कृत्वा चमसानपि जुहृति। संरच्यर्तुग्रहेन्द्राग्नसोमप्रतिगरस्ततः। आज्यस्तोत्रेभ्य ऊर्द्धं हि प्रातःसवनसंस्थितिरिति। अथ माध्यंदि-नसवने पवमानस्तोत्रार्थं स्तोमयोगो बहिष्पवमानवत् अग्नेस्तेज-सेति मन्त्रेण कार्य्यः। अतएव द्राह्यायणो माध्यंदिनार्भवपवमा-नयोः पूर्व्वोक्तमतिदिशति, एतत्सर्व्वं कुर्य्यादुत्तरयोः पवमानयो-रिति अग्ने स्तेजसेति मन्त्रेण पूर्व्वभागं तथैवोद्गानस्योत्तरभागे किञ्चिद्विशेषं द्राह्यायण आह, स्तोमयोगेऽग्निर्य्युनक्त्विति एतस्य स्थाने वायुर्य्युनक्तु सूर्य्योयुनक्त्विति, प्रक्षिपेदिति शेषः॥ १०॥

तयोर्मध्ये माध्यन्दिनसवने स्तोमयोगमन्त्रस्योत्तरभाग एव माम्नाते,

**वायुर्युनक्तु मनसा स्तोमं यज्ञाय वोढवे दधात्विन्द्र इन्द्रियं सत्याः कामा यजमानस्य सन्तु ॥ ११ ॥**

वायुर्देवोऽनुग्राहकेण मनसा स्तोमं पञ्चदशाख्यमाध्यन्दिनपवमानस्तोत्रार्थं युनक्तु योजयतु। यज्ञाय इत्यादि पूर्ववद्व्याख्येयं ॥ ११ ॥

यजमानेन वाचनीयस्य श्येनोसीत्येतस्य मन्त्रस्य स्थाने द्राह्यायणो मन्त्रद्वयमुत्तरयोः सवनयोर्दर्शयति। वृषकोसि स्वरोसीति यजमानवाचन इति। तत्र प्रथम मन्त्रएव साम्नायते,

**वृषकोसि त्रिष्टुप् छन्दा अनुत्वारभे स्वस्ति मासं पारयामास्तोत्रस्य स्तोत्रं गम्यादिन्द्रवन्तो वनेमहि भक्षीमहि प्रजामिषं ॥ १२ ॥**

हे मध्यन्दिन पवमान त्वं त्रिष्टुबाख्य छन्दोविशिष्टः सन् वृषकः कामाभिवर्षणसमर्थ इन्द्रोसि। अन्यत् सर्वं श्येनमन्त्रवद्व्याख्येयं ॥ १२ ॥

इन्दविन्द्रपीतस्येत्यादिचमसभक्षणमन्त्रः, तं मन्त्रं द्राह्यायणः प्रातःसवनसम्बन्धविनियोगावसरएव तद्विशेषकथनेनार्थादित्थं विनियुक्तवान्, इन्दव इति द्विरल्पं भक्षयेद्यथासवनं

छन्दाऽस्यादिशन्निति । प्रातः सवने गायत्रछन्दस इति पाठः, माध्यन्दिने त्रिष्टुप् छन्दस इति, तृतीयसवने जगतीछन्दस इत्येतावानेव विशेषः । पाठस्तु,

इन्दविन्द्रपीतस्य त इन्द्रियावतस्त्रिष्टुप् छन्दसः सर्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि ॥१३

पूर्ववद्व्याख्येयं । अथ क्रतुसंग्रहः, माध्यन्दिने तु सवने पुरोडाशः पशोर्भवेत् । ग्रहो मरुत्वतीयः स्यात् पवमानेन संस्तुतिः । दधिघर्म्मे कृते दद्याद्दक्षिणास्ते यथायथं । मरुत्वतीयां स्यान् कृत्वा माहेन्द्रेण समाप्यत इति ॥ १३ ॥

अथ तृतीयसवने, यदिदमार्भवपवमानाख्यं स्तोत्रं तदर्थमग्ने स्तोजसेति मन्त्रेण स्तोमयोगः कर्त्तव्यः, तस्य मन्त्रस्योत्तरत भागे यः पाठशेषः स एवमाम्नायते,

सूर्य्यो युनक्तु वाचा स्तोमं यज्ञाय वोढवे दधात्विन्द्र इन्द्रियऽ सत्याः कामा यजमानस्य सन्तु ॥१४॥

सूर्य्यो देवो वाचा मन्त्ररूपया स्तोमं सप्तदशाख्य युनक्तु योजयतु अन्यत् पूर्ववत् ॥ १४ ॥

श्येनोसीत्यस्य स्थाने तृतीयसवने यजमानेन वाचनीयो मन्त्र एवं आम्नायते,

स्वरोसि गयोसि जगच्छन्दा अनु त्वारभे स्वस्ति मासं पारयामास्तोत्रस्य स्तोत्रं गम्यादिन्द्रवन्तो वने-महि भक्षीमहि प्रजामिषं ॥ १५ ॥

हे आर्भवपवमानाभिमानिन् सूर्य्य त्वं जगच्छन्दाः जग-त्याख्येन छन्दसा युक्तः सन् स्वरः स्वरणीयः स्तुत्योसि। तथा गयः फलार्थिभिर्गन्तव्योसि अन्यत् पूर्ववत् ॥ १५ ॥

तृतीयसवने चमसभक्षणमन्त्र एवमाम्नायते,

इन्दविन्द्रपीतस्य त इन्द्रियावतो जगच्छन्दसः सर्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि ॥१६

पूर्ववद्याख्येयं ॥ १६ ॥

द्राह्यायणः, सौम्यमाहृतमुद्गाता वेक्षेतायुर्मे प्राण इति पुनरस्मासु दध्मसीत्यन्त इति। सौम्यं चरुं अध्वर्य्युभिराहृतं उद्गाता आयुर्म्म इति मन्त्रेण यजुषा यन्मे मन इत्यनुवादना-र्वागादावेक्षेत तस्य मन्त्रस्य दध्मसीत्यवसानं स्यात्। यन्मे मन इत्येतद्वक्ष्यमाणं वैकल्पिकं मन्त्रान्तरं नत्वेतेन सह तस्यैक-मन्त्रत्वमस्ति तयोरुभयोस्तुल्यार्थेन विकल्पितत्वात्। तदेतद्वि-शदीकर्त्तुं मन्त्रावसानमुक्तं। पाठस्तु,

आयुर्मे प्राणे मनसि मे प्राण आयुपतत्राम्चि

**यन्मे मनोयमं गतं यद्वा मे अपरागतं राज्ञा सोमेन तद्वयं पुनरस्मासु दध्मसि ॥ १७ ॥**

मे मदीयमायुर्ज्जीवनं प्राणसमाश्रितं, यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुरिति कौषीतकिश्रुतेः। तथा मे मनसि अन्तःकरणे सप्राणो पञ्चवृत्तिर्वायुः समाश्रितः, सप्राणो मदीयं मन उद्गाने शक्तं कुर्य्यादित्यर्थः। अतएव आयुपतरां आयवो मनुष्याः तेषां पालयित्र्यामृचि साम्न आधारभूतायां सप्राणो वर्त्ततां ऋचां तदाश्रयाणां साम्नां चाहं धारयिता भूयासमित्यर्थः। किञ्च मे मदीयं यदुक्तप्राणविशिष्टम्मनो मानसं यमं गतं मृत्युं प्राप्तं यद्वा यदि वा मे मनः अपरागतं पुनरावर्त्तयितुमशक्यं गतं नैरन्तर्य्येण लौकिकएव विषये आसक्तं तदुभयविधं मनः राज्ञा राजमानेन ईश्वरेण वा सोमेन अवश्यं वो वयं अस्मास्वेव पुनर्द्दध्मसि धारयामः ॥ १७ ॥

यस्तु वैकल्पिक उत्तरो मन्त्रः स एवमाम्नायते,

**यन्मे यमं वैवस्वतं मनो जगाम दूरगास्तन्म-आवर्त्तया पुन र्जीवातवेन मर्त्तवेयो अरिष्टता-तय ॥ १८ ॥**

अविवाक्ये दशमेऽहनि या पूर्व्वा यन्मे मन इत्येषा ऋक् अनुष्टुप्त्वात्सा तस्मिन्नहनि निषिद्धा, दशमेऽहनि परोक्षमनु-

ष्टुभमुपयन्ति यत्प्रत्यञ्चमुपेयुः प्रजापतिमृच्छेयुरिति ब्राह्मणात्। ततः अस्या अनुष्टुभस्थाने एषा पङ्क्तिः प्रयोक्तव्येति केचिदिति, सूच्यते हि यन्मे मनः स्थाने यन्मे यमिति एक इति, सूत्रकारस्तु दशमेऽहन्यपि पूर्वस्या ऋचश्चतुर्थं पादमभ्यस्य सैवात्र प्रयोक्तव्या एषा चेति विकल्पिते चोक्तत्वात् यथैव सूत्रान्तरं दशमेऽहन्यभ्यस्येदिति। मन्त्रार्थस्तु, मे मम मनो मानसं वैवस्वतं विवस्वतः सूर्य्यस्य पुत्रं यमं जगाम शरीरान्निष्क्रम्य प्राप्नोत् हे सोम त्वं दूरगाः दूरगामी यमसदनं प्राप्तः सन् मे मदीयं तन्मनः आवर्त्तय मदीयदेहं प्रत्यावृत्तं कुरु किमर्थं पुनर्ज्जीवातवे जीवनायतयेपि जीवितुं न मर्त्तवे मरणाभावार्थं अथोपि च अरिष्टतातये रिष्टं हिंसा तद्विरुद्धं सुखेनावस्थानं अरिष्टं तस्य तातये विस्ताराय॥ १८॥

द्राह्यायणः तस्मिन्नङ्गुष्ठानामिके अवधायाक्षिणी विमार्जीत येनाह्वाजिमितीति। तस्मिन्नंगुली अवधायांगुष्ठानामिके इत्येकेऽक्षिणी विमृजीत येनाह्वाजिमितीति, तस्मिन् सौम्यचरोर्यै केचित् द्वे अङ्गुली अङ्गुष्ठानामिके वा अवधाय ताभ्यामक्षिणी विमार्जीत। पाठस्तु,

**येनाह्वाजिमजयद्विचच्य येन श्येनꣳ शकुनꣳ सुपर्णं यदाङ्‌ चक्षुरदितावनन्तꣳ सोमो नृचक्षा मयि तद्दधातु॥ १९॥**

येन आशीति पदच्छेदः, हि शब्दो वाक्यालङ्कारे, उपसर्गस्तु व्यवहिताश्चेति व्यवहितेन विडन्तेन सम्बध्यते। येन हि चक्षुषा चक्षुरिन्द्रियेण दूरदर्शिना कश्चिद्धातुश्च आजिं वेधनीयां मर्य्यादां विचक्ष्य विशेषेण वालाग्र आसंजयेत् अभिजयेत् छन्दसि लुङ् लङ् लिट्, तथा येन चक्षुषा सुपर्णं शोभनपतनं एतत् संज्ञं अभिजयेत् श्येनोपि सूक्ष्मदर्शीति प्रसिद्धः तमपि सूक्ष्मदर्शित्वेनाभिजयेदित्यर्थः। अदितौ पृथिव्यां अन्यदीयं तच्चक्षुरनन्तं अन्तरहितं वेश्म दिवि प्रकृष्टदर्शनसमर्थमाहुरभिज्ञाः कथयन्ति, यद्वा षष्ठ्यर्थे सप्तमी तथैवाश्वलायनः दीर्घं यच्चक्षुरदितेरनन्तमिति। अदिते देवमातुः सम्बन्धि यच्चक्षुरनन्तमवस्थानरहितमाहुः वेदाभिज्ञाः। तदुक्तगुणविशिष्टं चक्षुः तथां दृष्टा सोमः मयि दधातु स्थापयतु ॥१८॥

इति ताण्ड्यमहाब्राह्मणे प्रथमाध्यायस्य
पञ्चमः खण्डः ।

—०()०—

अथ षष्ठः खण्डः ।

अत सूक्तं, सत्र एव ग्रहस्य भक्षयेयुरैन्द्र७ सह इतीति द्विविधो हि दशरात्रः सत्रमहीनश्चेति तयोर्मध्ये सत्ररूप एव दशरात्रे यः षोडशिग्रहोऽस्ति तमनेन मन्त्रेण भक्षयेयुः। पाठस्तु,

**ऐन्द्रं सहोऽसर्ज्जि तस्य त इन्दविन्द्रपीतस्येन्द्रियावतोऽनुष्टुप् छन्दसो हरिवतः सर्व्वगणस्य सर्व्वगण उपहूत उपहूतस्य भक्षयामि ॥ १ ॥**

हे इन्दो सोम ऐन्द्रं इन्द्रसम्बन्धि सहो बलं असर्ज्जि त्वया सृष्टं तस्य तादृशस्य नवांशं भक्षयामीति सम्बन्धः, शिष्टं पूर्व्ववत् । अनुष्टुप्छन्दस इति अनुष्टुप् छन्दस्यास्वृक्षु षोडशिसाम्ना स्तुवते होता चानुष्टुभ एव शंसति अतोऽनुष्टुप् छन्दो यस्मिन् षोडशग्रहे स तथोक्तः तस्य हरिवत इति षोडशिसाम्न आधारभूतास्वृक्षु हरिशब्दसद्भावादेवमुक्तं यदि हरि शब्द हरितासु स्तुवीरन् तदा हरिवत इत्यस्य पदस्योद्धारः ॥ १ ॥

तथैव सूत्रं उद्धस्य हरिवद्धरिकासु चेत् स्तुवीरन्निति त्रिष्टुप् छन्दसां वाजपेयसाम्नि भक्षयेदिति गौतमोनुष्टुप् छन्दसेति धानंजप्यशांडिल्यावविति सूत्रं । पाठस्तु,

**इन्दविन्द्रपीतस्य त इन्द्रियावतोनुष्टुप् छन्दसः सर्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि ॥२॥**

उक्तोर्थः ॥ २ ॥

आहृतस्तोत्रेषु परिसमाप्तेषु सुतस्य सुतमसीति यजमानं वाचयेत् । पाठस्तु,

स्तुतस्य स्तुतमस्यूर्जस्वत्पयस्वदामास्तोत्रस्य स्तोत्रं गम्यादिन्द्रवन्तोवनेमहि भक्षीमहि प्रजामिषं ॥ ३ ॥

हे आज्य आदिस्तोम स्तुतस्य स्तोत्रस्य स्तोत्राणामपि स्तुतं प्रकृष्टं स्तोत्रमसि, तथा ऊर्ज्जस्वत् बलवत् स्तुत्यानां देवानां बलकरमसि, पयस्वत् पयआदिकस्य रसस्य हेतुत्वेन तद्ददसि, गतमन्यत् ॥३॥

अत्र सूत्रं, दृष्टयजुष इति पूर्वस्मिन् वाक्ये पृथक् तचेभ्यः सन्धौ हिं कुर्य्युरिति उक्तत्वात्सन्धिस्तोत्रं तत्र प्रकृतं तस्मिन् सन्धिस्तोत्रे दृष्टयजुष इति मन्त्रेण चमसभक्षः कार्य्यः । पाठस्तु,

दृष्टयजुषस्ते देव सोम स्तुतस्तोमस्य शस्तोक्थस्य तिरोह्नस्य योश्वसनिर्गोसनि र्भक्ष स्तस्योपहूत उपहूतस्य भक्षयामि ॥ ४ ॥

हे सोम देव ते तव सम्बन्धी यो भक्षो भक्षणीयो हुतशेषो रसोऽस्ति तस्य भक्षस्याल्पं भागं भक्षयामि कीदृशस्य तव दृष्टयजुषः दृष्टं प्रयुक्तं यजुर्यस्मिन् स तथोक्तः तस्य यजुर्मन्त्रेण हि सोमो गृह्यते तस्य स्तुतस्तोमस्य प्रयुक्तस्तोत्रस्य शस्तोक्थस्य उच्चारितशस्त्रस्य तिरोह्नस्य रात्र्या तिरोहितोऽहन्यभिषुतस्य पूर्व्वेद्युरभिषुतस्येत्यर्थः, उपहूतस्य सभक्षैरन्यै र्ऋत्विग्भिरनु-

ज्ञातस्य कीदृशो भक्षः अश्वसनिः अश्वानां सनिहोता गोसनि-र्गवां दाता वा कीदृशोऽहं उपहूतोऽन्यैरनुज्ञातः ॥ ४ ॥

सूत्रं, तृतीयसवने सर्वेषु स्तोत्रेषु समाप्तेषु भक्षयित्वा स्तोमं विमुञ्चेयु र्ऋतस्य त्वेतीति । पाठस्तु,

## ऋतस्य त्वा देव स्तोम पदे विष्णोर्द्धामनि विमु-ञ्चाम्येतत्त्वं देव स्तोमानवकरमगन्नशीमहि वयं प्रतिष्ठां ॥ ५ ॥

हे स्तोम त्रिवृदादिनामक त्वा त्वां ऋतस्य यज्ञस्य पदे स्थाने विष्णो र्देवस्य धामनि तेजसि विमुञ्चामि विसृजामि हे स्तोम देव त्वं अनवकरं अवकर उपहतिः तद्रहितमेतत् स्थानम-गन् प्राप्नोसि गमेर्लुङि मन्त्रे घसेति से र्लुक् हल्ङ्याब्भ्यइति सि-लोपः मोनोधातोरिति नत्वं वयं च प्रतिष्ठां नैश्चित्यभावं स्थितिं अशीमहि व्याप्नुयामः एतस्य मन्त्रस्य जपएव स्तोमविमोकः ॥ ५

द्राह्यायणः, वषट् कृते हारियोजनस्य यथेतपरया द्वारा निष्क्रामंतोजपेयुः सोमेहीति ।

## सोमे ह्यनुमेहि सोम सहसद स इन्द्रियेण ॥ ६ ॥

हे सोम त्वमिह सदसो देशात् हे सोम त्वमिन्द्रियेण वलेन सहानुमेहि मामनुगच्छ ॥ ६ ॥

सूत्रं, सुभूरसीत्यादित्यमुपतिष्ठेरन्निति अस्तमितश्चेन्नाहै-पत्यं चन्द्रमसं नक्षत्राणि वेति ।

सुभूरसि श्रेष्ठो रश्मिनां देवाना॑ संसद्देवानां यातुर्य्यया तन्वा ब्रह्म जिन्वसि तया मा जिन्व तया मा जनय प्रकाशं मा कुरु ॥ ७ ॥

हे आदित्य त्वं सुष्टु भावयिता वृष्ट्यादिद्वारेण सर्वंजगत उत्पादयितासि श्रेष्ठः सर्वेभ्यो देवेभ्यः प्रशस्यतमः रश्मिः बहुरश्मिकानां देवानां संसत् संसदनस्थानं तथा देवानां यातुः यातयिता प्रवर्त्तयिता ईदृशः त्वं यया अनुगृहीतया तन्वा ब्रह्म ब्राह्मणजातिं जिन्वसि प्रीणयसि मा मान्तया तन्वा जिन्व प्रीणय जिन्विप्रीणनार्थः तथा मां जनय प्रादुर्भावय प्रकाशं प्रकाशवन्तं मा मां कुरु कुशलोसावीड्जाते कर्म्मणीत्येवं प्रसिद्धं कुरु ॥ ७ ॥

सूत्रं, आग्नीध्रीये द्वे आहुती जुहुयुरपां पुष्पमिति पूर्वा॑ स्वाहाकारेणोत्तरामिति ।

अपां पुष्पमस्योषधीना॑ रस इन्द्रस्य प्रियतम॑ हविः स्वाहा ॥ ८ ॥

हे सोम त्वं अपां पुष्पं सारभूतोसि प्रशस्तरसोपेतत्वात् ओषधीना॑ रसः सारस्थासि सोमो वा ओषधीना॑ राजेति श्रुतेः, तथा इन्द्रस्य प्रियतममतिशयेन प्रियं हविश्चासि तस्मै तुभ्यं स्वाहा इदमाज्यं हविस्त्यजामि ॥ ८ ॥

उन्नेतर्य्युपहवमिष्ट्वा हारियोजनस्य त इति द्विरुपघ्राय पश्चा-द्दाहवनीयस्यान्तः परिधिं निवपेयुरिति उन्नेत उद्गयस्वेत्यनु-ज्ञाय मन्त्रेण धानाः द्विरुपघ्राय पश्चादौत्तरवेदिकस्याग्नेरन्तं परिधिधानाः निवपेयुः ।

हारियोजनस्य ते देव सोमेष्टयजुषः स्तुतस्तोमस्य शस्तोक्थस्य योऽश्वसनिर्गोसनिर्भक्ष स्तस्योपहूत उप-हूतस्य भक्षयामि ॥ ६ ॥

हे देव द्योतमान सोम अवस्थेयाणां धनानामेव सोमसम्ब-न्धात् सोमेत्यामन्त्रणं, हारियोजनस्य हरी इन्द्रस्य वाहौ येन सोमेन रथे युज्येते सहार्य्योजनस्तत्सम्बन्धी हारियोजनः तस्य धानाख्यद्रव्यस्य ते तव एकदेशं भक्षयामीति सम्बन्धः । अन्यत् पूर्ववद्व्याख्येयं ॥ ६ ॥

सूत्रं, अपउपस्पृश्याष्टावष्टौ शकलान्याहवनीये प्रहरेयुर्देव-कृतस्येत्येतत्प्रभृतिभिरिकारान्तैरिति अवयजनमसीत्येवमन्तैः न तत्र स्वाहाकार इत्यर्थः ।

देवकृतस्यैनसोऽवयजनमसि पितृकृतस्यैनसोऽवय-जनमसि मनुष्यकृतस्यैनसोवयजनमस्यस्मत्कृतस्यैन-सोवयजनमसि यद्दिवा च नक्तं चैनश्चकृम तस्यावयजन-मसि यत् स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि

**यद्दिवा च नक्तं चैनश्चकृम तस्यावयजनमस्येनस एनसोऽवयजनमसि ॥ १० ॥**

हे अग्नौ प्रक्षिप्यमाण शकल त्वं देवकृतस्य देवैः कृतस्यैनसः पापस्य कृतापराधेष्वस्मासु देवैः यत् कृतं पापं तस्य अवयजनं अपगमनसाधनमसि एवमुत्तरत्रापि योज्यं अस्मत्कृतस्य अस्माभिरेव कृतस्य यद्दिवाचेत्याद्योस्त्रयोमन्त्राः स्पष्टार्थाः एनस एनस इति वीप्सया सर्व्वोपराधो निर्द्दिश्यते सर्व्वस्याप्येनसो विनाशकमिति ॥ १० ॥

द्राह्यायणः, अप्सुधौमानाम चमसाचात्वालदेशेऽद्भिः पूर्णेषु हरितानि तृणानि प्रास्तानि भवन्ति ते स्वं चमसं पर्य्युपविश्याप्सुधौतेत्यवमृश्य जपेयुरिति । अप्सु धौमसंज्ञकेषु जलपूर्णेषु चमसेषु उद्गातृणा यत् चमसोऽस्ति तस्य परितः उपविष्टास्त्विजः उद्गातारो मन्त्रेण चमसं स्पृष्ट्वा तम्मन्त्रञ्जयेयुः । पाठस्तु,

**अप्सु धौतस्य ते देव सोम नृभिः सुतस्य ॥ ११ ॥**

हे सोम देव नृभिः ऋत्विग्भिः सुतस्याभिषुतस्याप्सु चमसेषूदकेषु धौतस्य शोधितस्य ते तव भक्षं करोमीत्युत्तरत्र सम्बन्धः यद्वा स्पर्शङ्करोमीत्यत्रैवाध्याहारः ॥ ११ ॥

द्राह्यायणः, मधुमन्तमिति पाणीनुपजिघ्रेरन्निति, स्पष्टोर्थः । पाठस्तु,

**मधुमन्तं भक्षं करोमि ॥ १२ ॥**

मधुमन्तं रसवन्तं भक्षस्य सोमस्य रसं भक्षं भक्षितं करोमि ॥ १२ ॥

द्राह्यायणः, शमद्भ्य इत्युदञ्चं चमसन्निनयेयुरिति, परासिञ्चेयुरित्यर्थः । पाठस्तु,

शमद्भ्य ओषधीभ्यः ॥ १३ ॥

अद्भ्य ओषधीभ्यश्च शं शान्तिरस्तु ॥ १३ ॥

द्राह्यायणः, कामेत्यध्यात्ममावर्त्तयेयुरिति, स्वात्माऽभिमुख्येन चमसानावर्त्तयेत् । पाठस्तु,

काम कामं म आवर्त्तय ॥ १४ ॥

हे कामसंज्ञकदेव मे मदीयं कामं काम्यं जलजातं आवर्त्तय ॥ १४ ॥

द्राह्यायणः, ऊर्गित्युरः सु पाणीन्निदधीरन्निति । पाठस्तु,

ऊर्गस्यूर्जम्मयि धेहि ॥ १५ ॥

हे सोमपीथ त्वं ऊर्क बलकरमन्नमसि अत ऊर्ज्जं बलकरमन्नम्मयि धेहि स्थापय ॥ १५ ॥

द्राह्यायणः, प्राण सोमेति मुख्यान् प्राणानभिमृशेरन्निति । पाठस्तु,

प्राण सोमपीथे मे जागृहि ॥ १६ ॥

हे प्राण मे मम सोमपानार्थं जागृहि प्रबुध्यस्व ॥ १६ ॥

द्राह्यायणः, आग्नीध्रीयं गत्वा दधिभक्षं भक्षयेयुरसमुपह्वय दधिक्राव्ण इति, अत यद्यप्यस्मिन् मन्त्रे दधिक्राव्णेति अश्वरूपोऽग्निविशेष एव देवतात्वेनाभिधीयते, तथापि दधिशब्दयोगात्सामान्येन दधिभक्षणे विनियोग इति द्रष्टव्यं । पाठस्तु,

**दधिक्राव्णो अकारिषञ्जिष्णोरश्वस्य वाजिनः सुरभि नो मुखा करत्प्रन आयूंषि तारिषत् ॥ १७ ॥**

दधि दधत्धारयन् क्रामतीति दधिक्रावा क्रमेर्वनिपि विड्वनोरनुनासिकः स्यादिति मकारस्याकारः, तस्य दधिक्राव्ण एतत् संज्ञकस्याश्वरूपस्य देवस्य अकारिषं परिरक्षणं कृतवानस्मि कीदृशस्य जिष्णोर्जयशीलस्य वाजिनो वेगवतो वाजिनवतो वा अश्वस्य अश्नोतेरश्वः क्षिप्रं सर्व्वं व्याप्नुवतः, स च दधिक्रावा देवः सुरभि सुपांसुलुगिति शेर्लुक् सुरभीणि सुगन्धीनि नोऽस्माकं मुखा मुखानि करत् करोतु नोऽस्माकमायूंषि च प्रतारिषत् ।

अथ क्रतुसंग्रहः ।

तृतीयसवनारम्भमादित्यग्रहमाचरेत् ।<br>आर्भवेण स्तुवीताथ पश्वङ्गैः प्रचरत्ययं ॥<br>सावित्र वैश्वदेवाख्यौ ग्रहौ सौम्यचरुस्तथा ।<br>पात्नीवतग्रहादूर्द्ध्वं यज्ञा यज्ञाय संस्तवः ॥<br>आग्निमारुतशस्त्रं स्यात् गृह्णीयाद्धारि योजनं ।<br>समाप्ते सवने पश्चात् कुर्य्यादवभृथं ततः ॥

कुर्य्यादुदयनीयेष्टिं मनूबन्ध्यां यजेत गां ।
देविका निर्वपेद्देवसुवासापि यजूंष्यथ ॥
उपोष्य वेदिमाग्नेयमिष्ट्वाग्निष्टोमसंस्थितिः ॥ १७ ॥

इति ताण्ड्यमहाब्राह्मणे प्रथमाध्यायस्य
षष्ठः खण्डः ।

---

अथ सप्तमः खण्डः ।

अथ दक्षिणानां प्रतिग्रहाय तदङ्गभूतामन्त्रास्सूच्यन्ते, सर्व्वेषु प्रतिग्रहमन्त्रेषु देवस्य त्वा सवितुः प्रसव इत्यारभ्य वरुणस्त्वा नयतु देवि दक्षिणे इत्यन्तमुक्त्वा वरुणायाश्वं रुद्राय गां इति तत्तत्प्रतिग्राह्यद्रव्यानुसारेणातिदिश्य तेनामृतत्वमशीय तैरमृतत्वमशीयेति यथार्थमुक्त्वा वयोदात्र इत्यादि मन्त्रं प्रति ग्रहीत्रे इत्यन्तं ततः क इदं कस्मा अदादिति कामैतत्ते इत्यन्तं जपेत् एतत्सर्व्वमुत्तरत्र वक्ष्यते ।

द्राह्यायणः, अश्वरथं चेद्दद्यात् पूर्व्वेणाग्नीध्रीयमवस्थाप्य पुरस्ताज्जपं जपित्वा दर्भमुष्टिनाऽश्वमुखानि सम्मृज्य द्वाभ्यां द्वाभ्यामश्वनामभ्यामेकैकस्याश्वोसीत्येतत् प्रभृतिभिरुदक् संस्थमिति । पुरस्ताज्जपो देवस्य त्वेत्यादिः तं जपित्वा प्रतिगृहीता रथसम्बन्धिनश्चतुरोऽश्वान् चतुर्भिर्नामयुग्मैर्दक्षिणमश्वमारभ्य उदगपवर्गं मुखेषु सम्मृज्यात् । पाठस्तु,

अश्वोस्यत्योसि मयोसि हयोसि वाज्यसि सप्तिर-
स्यर्व्वासि वृषासि ॥ १ ॥

एतान्यष्टावश्वनामानि तेषान्निर्वचनं प्रदर्श्यते, अश्नोतेर्व्या-
प्तिकर्म्मणोश्वः हे अश्व त्वं शीघ्रं व्यापनशीलोसि, अत्यः सतत-
गाम्यसि अत सातत्यगमन इति धातुः, मयतिः शब्दकर्म्मा
हेषाशब्दकार्य्यसि, हयो गन्तासि हि गताविति धातुः, वाजी-
वेगवान् तादृशस्त्वमसि, सप्तिः सर्पणशीलः अर्व्वाग्गमनशीलः
तादृशोसि ऋगताविति धातुः अन्येभ्योपि दृश्यन्त इति वनिप्,
वृषा वर्षणकारी सेचनसमर्थोसि ॥ १ ॥

अत सूत्रं, आदित्यानामिति रथशिर आलभ्य जपेदिति,
आलम्भ उपस्पर्शः। पाठस्तु,

आदित्यानां पत्मान्विहि नमस्तेस्तु मा मा हिं-
सीः ॥ २ ॥

एत्मान्विहीति शाखान्तरपाठः। हे रथ आदित्यानां
द्वादशसंख्यानां प्रतिमासं दिवि सञ्चरतां अरुणसूर्य्यादीनां यत्
पत्म पदं सङ्गमनमस्ति तदन्विहि अनुगच्छ अप्रतिहतगतिर्भवे-
त्यर्थः, स्पष्टमन्यत् ॥ २ ॥

द्राह्यायणः, यद्रथ्यं स्याद्वायोरिति चर्म्मण्यं प्रतिगृह्णी-
यान्नचलाणामित्यस्मिमयं सूर्य्यस्येत्ययोलोहे हिरण्यश्चेति, तत्र
च यद्रथ्यं रथं चर्म्मलोहहिरण्यादिनिर्म्मितं स्यात्तं तत्र वायो-

रिति चर्मविकारं प्रतिगृह्णीयात् अस्थिमयं गजदन्तादिनिर्मितम् अयोलोहे हिरण्यञ्चेति आयसं ताम्रं सौवर्णञ्चेत्यर्थः । पाठश्च,

**वायोष्ट्वा तेजसा प्रतिगृह्णामि नक्षत्राणां त्वां रूपेण प्रतिगृह्णामि सूर्य्यस्य त्वा वर्चसा प्रतिगृह्णामि ॥ ३ ॥**

चर्म्मगतदौर्गन्ध्याऽपनयनक्षमं वायोर्य्यदसाधारणं तेजः तेन चर्म्मण्यं त्वां प्रतिगृह्णामि अस्थिमयस्य धवलत्वेन नक्षत्राणां रूपेणेत्युक्तं अयोमयादीनां तैजसत्वात् सूर्य्यस्य वर्च्चसेत्युक्तं, स्पष्टमन्यत् ॥ ३ ॥

द्राह्यायणः, दक्षिणेन रथं गत्वा रथन्तरमसीति, दक्षिणञ्चक्रमालभेत वामदेव्यमसीत्यधिष्ठानं वृहदसीत्युत्तरं चक्रमिति अधिष्ठानं रथोपवेशनस्थानं ।

**रथन्तरमसि वामदेव्यमसि वृहदसि ॥ ४ ॥**

हे दक्षिणचक्र त्वं रथन्तरमसि रथन्तरसामवत् स्वकार्य्यकुशलमिति, हे अधिष्ठान त्वं वामदेव्यमसि यथा वामदेव्यं साम शान्तिकरत्वेन रक्षकं तथा त्वमपि उपरिष्टानामधःपतनाद्रक्षकमसि, वृहदसीति रथन्तरवत् योज्यं ॥ ४ ॥

अत्र सूत्रं, अङ्कान्यङ्कू इति रथचक्रे एव सम्मृज्यादिति, ये पूर्व्ववाताग्रचक्रे तएव नत्वधिष्ठानं। पाठस्तु,

अङ्कान्यङ्कू अभितो रथ यौ ध्वान्तं वाताग्रमभिसञ्चरन्तौ दूरे हेतिरिन्द्रियवान् पतत्री ते नोऽग्नयः पप्रयः पारयन्तु ॥ ५ ॥

अङ्कान्यङ्कौ गन्तारौ अङ्कोचातरिति यास्कः। न्यङ्कू नितरामञ्चन्तौ गच्छन्तौ न्युदञ्चेरिति निपूर्व्वोदञ्चतेः कुप्रत्ययः न्यङ्कादीनां चेति कुत्वं। यौ वक्ररूपौ पदार्थयुक्तौ रथमभितः रथस्य पार्श्वयोर्वर्त्तेते ध्वान्तमन्धकारं वाताग्रं वायोः पुरोभागं चाभितः संचरन्तौ प्रकाशमपेच्यान्धकारेपि गच्छतः शीघ्रगामिनौ वा वायोरपि शीघ्रं गच्छत इत्यर्थः यस्य दूरे हेतिः हननसाधनमायुधं हेतिः तद्दूरे विप्रकृष्टप्रदेशे यस्य रथमध्यभागस्य सतयोक्तः परैः प्रयुक्तान्यायुधानि दूरतएव प्रतिहन्यन्त इत्यर्थः, इन्द्रियवान् वीर्य्यवान् पतत्री पतत्रे पक्षसी तद्वान् ईदृश उपदेशनार्थौ यो रथमध्यभागः अग्नयोग्रं नयन्तः यद्वाऽग्निवद्दीर्य्योपेतास्ते पप्रयः पालयितारः पूरयितारो वा सन्तो नोऽस्मान् पारयन्तु गन्तव्यं प्रापयन्तु प्रापूरण इत्यस्मात् तृपालनपूरणयोरित्यस्माद्वा आदृगमहनजनः किप्रत्यये पप्रीतिरूपं ॥ ५ ॥

अत्र सूत्रं, वैश्वानर इति दक्षिणेन पादेनारोहेदिति, रथमिति शेषः। पाठस्तु,

**वैश्वानरः प्रत्नथा नाकमारुह दिवः पृष्ठे मन्दमानः सुमन्मभिः सपूर्व्ववज्जनयञ्जन्तवे धनꣳ समानमश्मन् पर्य्येति जागृविः ॥ ६ ॥**

रथप्रतिग्रहीता आत्मानं वैश्वानरात्मना ध्यायन्नारोहेत् दक्षिणां प्रतिग्रहीष्यन् न सप्तदशशक्त्वो व्यावृत्य प्रतिगृह्णीयादिति श्रुत्यन्तरात् व्यावृत्यात्मानं देवतारूपेणात्मानं ध्यात्वेति हि तस्य व्याख्यानं, वैश्वानरः विश्वेषान्नराणां हितः एतदात्मक उद्गाता प्रत्नथा प्रत्नइव पुराण इव अतीतेषु युगेष्विव अस्मिन्नपि युगे नाकं दुःखराहित्येन सुखकरं रथं आरुह आरोहेति छन्दसि लुङ्लङ्लिट इति वर्त्तमाने लुङ् कृमृदृरुहिभ्य इति च्लेः परटादेशः दिवोद्योतमानस्य पृष्ठे उपरि भागे सुमन्मभिः शोभनस्तुतिकैः स्तोत्रैर्मन्दमानः स्तूयमानः मदिस्तुतौ कर्म्मणि यकि प्राप्ते व्यत्ययेन शप् क्रिच्च स वैश्वानरात्मोद्गाता पूर्व्ववत् पूर्व्वेषां यजमानानामिव तत्र तस्येवेति षष्ठ्यर्थे वतिः जन्तवे जनाय अस्मा अपि यजमानाय समानं सदृशं यावदन्येभ्यः पूर्व्वं प्रादात् तत्परिमाणं धनं स्तोत्रेण जनयन् उत्पादयन् अनित्यमागमशासनमिति नुमभावः अश्मन् अश्मनि गमनसाधने रथे उपविष्टो जागृविः जागरूकः सन् पर्य्येति तेन रथेन परितो गच्छति ॥ ६ ॥

अत्र सूत्रं, आरुह्य जपेत्गिदैषत इति । पाठस्तु,

## गिद्वैष ते रथ एष वामश्विना रथोऽरिष्टो विश्व-भेषजः ॥ ७ ॥

गिदो नाम रथपालकः कश्चिद्देवः हे गिद ते त्वदीयस्तस्मा-द्देनं पालयेत्यभिप्रायः हे अश्विना अश्विनौ एष रथः वां युवयोः सम्बन्धी अतोऽयं अरिष्टो अहिंसितः अभग्नः विश्वभेषजः विश्वैः सर्व्वैर्भवदीयैर्युक्तश्च भवतु ॥ ७ ॥

अत्र सूत्रं, कृशेति सव्यानभीशूनायच्छेदिति, अभीशवो अश्वबन्धनरज्जवः ।

## कृशानो सव्यानायच्छ ॥ ८ ॥

कृशानुर्नाम सव्यपार्श्वस्थानां रश्मीनां धारयिता हे कृशानो सव्यान् वामभागस्थितान् अश्वबन्धकान् पाशानायच्छ आकर्षेण नियच्छ ॥ ८ ॥

अत्र सूत्रं, दासेति दक्षिणानवगृह्णीयादिति ।

## दासनो दक्षिणानवगृहाण ॥ ९ ॥

दासनुर्देवविशेषो दक्षिणभागस्थितानां रश्मीनान्नियमिता पूर्व्ववत् योजना ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे प्रथमाध्यायस्य
सप्तमः खण्डः ।

---

अथ अष्टमः खण्डः ।

अत्र सूत्रं, सर्व्वासां देवस्य त्वेति पुरस्ताज्जप इति, सर्व्वासां दक्षिणानां प्रतिग्रहे प्रथमतो देवस्य त्वेति मन्त्रं जपेत्। पाठस्तु,

**देवस्य त्वा सवितुः प्रसवेऽश्विनोर्ब्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि ॥ १ ॥**

सवितुः प्रेरकस्य देवस्य प्रसवे प्रेरणे अनुज्ञायां सत्यां त्वा त्वां दक्षिणां प्रतिगृह्णामि तत्र बाहू च हस्तौ च साधनं अंसमणिबन्धनयोर्मध्यवर्त्ती दीर्घो भागो बाहुः मणिबन्धस्याग्रेऽवस्थितः सांगुलिर्भागो हस्तः, अश्विनोर्बाह्वोरभिमानिदेवौ हस्तयोस्तु पूषा, ततस्तयोस्तत्सम्बन्धोऽभिधीयते ॥ १ ॥

अत्र सूत्रम्, वरुणस्त्वेति यथादैवतं प्रतिगृह्णीयादिति, यस्य द्रव्यस्य या देवता प्रतिग्रहमन्त्रे पठिता तामादिश्य तत् द्रव्यं प्रतिगृह्णीयात् वरुणायाश्वं अग्नये हिरण्यं वायवे मृगमित्यादि । पाठस्तु,

**वरुणस्त्वा नयतु देवि दक्षिणे वरुणायाश्वम् तेनामृतत्वमश्यीय वयोदात्रे मयोमह्यं प्रतिग्रहीत्रे ॥ २ ॥**

हे दक्षिणे एतत्संज्ञे देवि त्वा त्वां वरुणो देवो गृहं

नयतु वरुणप्रीत्यर्थमश्वमहं प्रतिगृह्णामि तेनानुगृहीतेनाश्वेन अमृतत्वं देवत्वमहमशीय प्राप्तवान् दात्रे यजमानाय वयोऽन्नं भूयात् मह्यं प्रतिगृहीत्रे मयः सुखं भूयात्, यद्वै शिवं तन्मय इति श्रुत्यन्तरं ॥ २ ॥

अश्वप्रतिग्रहे मन्त्र उक्तः गोप्रतिग्रहे मन्त्रमाह ।

**वरुणस्त्वा नयतु देवि दक्षिणे रुद्राय गां तयाऽमृतत्वमशीय वयो दात्रे भूयात् मयो मह्यं प्रतिगृहीत्रे ॥ ३ ॥**

रुद्रप्रीत्यर्थं गां प्रतिगृह्णामि तया रुद्रानुगृहीतया गवा रुद्रस्य पशुपतित्वात् गोस्तत्सम्बन्धः, अन्यत्पूर्व्ववत् ॥ ३ ॥

अथ अजप्रतिग्रहे मन्त्रमाह ।

**वरुणस्त्वा नयतु देवि दक्षिणे अग्नयेऽजं ॥ ४ ॥**

अस्मिन् मन्त्रे तेनामृतत्वमित्यादेरुत्तरभागस्यानुषङ्गो द्रष्टव्यः, प्रजापतिमुखादग्नेरजस्य च सहोत्पत्तेः तत्सम्बन्धः, अन्यत् पूर्व्ववत् ॥ ४ ॥

अथ हिरण्यस्य प्रतिग्रहे मन्त्रमाह ।

**अग्नये हिरण्यम् ॥ ५ ॥**

अस्मिन् मन्त्रे वरुणस्त्वेत्यादेः पूर्व्वभागस्य तेनेत्यादेरुत्तरभागस्यानुषङ्गः कार्य्यः, हिरण्यस्य अग्निरेतोरूपत्वात् सम्बन्धः ॥ ५ ॥

अजायाः प्रतिग्रहे मन्त्रमाह ।

**अग्नीषोमाभ्यामजान्तयाभूतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिगृहीत्रे ॥ ६ ॥**

अस्मिन् मन्त्रे वरुणास्त्वेत्यादेः पूर्व्वभागस्यैवानुषङ्गः, आग्नेयी वा एषा यदजेति श्रुत्यन्तरादजायाः अग्नेः सम्बन्धः, लताभूतस्य सोमस्य ओषधिषु सारभूतत्वेन अजया उपजीव्यत्वात्तत्सम्बन्धः, तथा चोक्तम् श्यामलास्ता तु निष्पन्ना सोमाख्य च्छागभोजनमिति ॥ ६ ॥

अन्नस्येति मन्त्रो लिङ्गादन्नप्रतिग्रहे विनियोज्यः, सूत्रकारस्तु अवेः प्रतिग्रहे अयम्मन्त्रोऽधिक इति दर्शयति, अन्नस्येति प्राग्वारुणादवेः प्रतिग्रहे अयम्मन्त्रोऽधिक इति दर्शयति, अन्नस्येति प्राग्वारुणादवेः प्रतिग्रहे वरुणास्त्वेत्यतः पूर्व्वं वा अयं मन्त्रो जप्यः । तत्पाठस्तु,

**अन्नस्यान्नपतिः प्रादादनमीवस्य शुष्मिणो नमो विश्वजनस्य क्षामाय भुञ्जति मा मा हिंसीः ॥ ७ ॥**

अन्नस्येति कर्म्मणि शेषविवक्षायां षष्ठी, अन्नस्य पतिः अन्नानां पालयिता अन्नस्यान्नं मह्यं प्रादात् दत्तवानन्नं विशेष्यते अनमीवस्य अमीवा रोग स्तद्रहितस्यारोग्यकरस्य शुष्मिणो बलवतो बलहेतुभूतस्य इमे अपि कर्म्मणि षष्ठ्यौ तस्मा अन्नपतये अग्नये नमोस्तु कथंभूताय विश्वजनस्य सर्व्वप्राणिजातस्य क्षामाय क्षमकारिणे प्रैजैच्चैचये तस्मात् क्रोधिकरणे

चेति कर्त्तरि निष्ठा चायोमः इति तकारस्य मकारः ईदृशाग्नये इत्यर्थः, हे भुञ्जति उपभोग्यत्वेन पालयिति तदुपभोक्तारं मां मा हिंसीः ॥ ७ ॥

अवेः पश्वन्तरोपभोगसाधनत्वेन अन्नत्वेन संस्तावकत्त्वात् प्रतिग्रहमन्त्रैकदेशमुक्त्वा तच्छेषमन्त्रमाह ।

**वरुणस्त्वा नयतु देवि दक्षिणे त्वष्ट्रेऽविं तयामृतत्व-मशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ ८ ॥**

त्वष्टा हि रूपाणां कर्त्ता त्वष्टा वै पशूनां मिथुनानां रूप-कृदिति श्रुत्यन्तरात्, नानारूपा अवयो भवन्तीति त्वष्टुरवेश्च सम्बन्धः, शिष्टं पूर्ववत् ॥ ८ ॥

अत्र सूत्रं, ग्नास्त्वा कृन्तन्निति वसनस्येति, वस्त्रप्रतिग्रहे ग्नास्त्वा कृन्तन्निति प्राग्वारुणात्पुरस्ताज्जपाद्वा जपेत् यदि तत् वस्त्रमतन्तुनिर्म्मितं वल्कलादिजं स्यात्तदायं मन्त्रो न प्रयोज्यः। तत्र सूत्रं, तदुदस्येदतान्तव इति। पाठस्तु,

**ग्नास्त्वाकृन्तन्नपसोतन्वत वयित्रीवयन् ॥ ९ ॥**

गच्छन्ति पुमांस एनामिति ग्नास्त्रियः हे वस्त्र त्वा त्वां अकृन्तन् निष्पादनानन्तरं कर्त्तनेन छेदनेन सम्पादितवन्तः अपसः अपः कर्म्म तद्वन्तो वा तन्तुग्रथनकुशलाः पुरुषाः अत-न्वत तन्तवः पटस्य दीर्घाणि सूत्राणि तान्यकुर्व्वन्नित्यर्थः ता

वयित्र्यः वेञ् तन्तुसन्ताने वयनकर्त्र्यो योषितः अवयन् तिरश्ची-
नानि सूत्राणि समयोजयन् ॥ ९ ॥

अथ वस्त्रप्रतिग्रहमन्त्रविशेषः ।

वरुणस्त्वा नयतु देवि दक्षिणे बृहस्पतये वासस्ते-
नामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्र-
हीत्रे ॥ १० ॥

स्पष्टोऽर्थः ॥ १० ॥

आसनशय्यादेरचेतनवस्तुनः प्रतिग्रहे मन्त्रमाह ।

वरुणस्त्वा नयतु देवि दक्षिण उत्तानायाङ्गिर-
सायाग्राणत् तेनामृतत्वमशीय वयोदात्रे भूयान्मयो
मह्यं प्रतिग्रहीत्रे ॥ ११ ॥

इयं वा उत्तान आङ्गिरस इति श्रुत्यन्तरात्, उत्तान
आङ्गिरस इति शब्दाभ्यामुच्यते, ऊर्द्ध्वमुखत्वादुत्तानः अङ्गिर-
सस्तपसा लब्धत्वादाङ्गिरसः लोकाभिप्रायेण पुंलिङ्गता, अप्रा-
णतो भूमेश्च निष्क्रियत्वसाम्यात्सम्बन्धः, अन्यत्पूर्ववत् ॥ ११ ॥

उष्ट्रप्रतिग्रहमन्त्रमाह ।

वरुणस्त्वा नयतु देवि दक्षिणे पूष्ण उष्ट्रं ॥ १२ ॥

तेनेत्यादेर्वाक्यशेषस्यानुषङ्गः ॥ १२ ॥

मृगप्रतिग्रहमाह ।

वायवे मृगं तेनामृतत्वमशीय वयोदात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ १३ ॥

वरुणस्त्वेति पूर्व्वभागस्यानुषङ्गः, मृगस्य शीघ्रगामित्वात् तद्वाहनत्वाद्वायुसम्बन्धः, उष्ट्रादीन्यपि सर्व्वदक्षिणे देयानि ॥१३॥

पुरुषहस्तिवराहव्रीहीणां प्रतिग्रहे चतुरो मन्त्रानाह ।

वरुणस्त्वा नयतु देवि दक्षिणे प्रजापतये पुरुषं, प्रजापतये हस्तिनं, प्रजापतये वराहं, प्रजापतये व्रीहियवा,स्तैरमृतत्वमशीय वयोदात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ १४ ॥

अत्र पुरुषमन्त्रे तेनेत्याद्युत्तरभागानुषङ्गः, हस्तिमन्त्रे पूर्व्वोत्तरयोर्द्वयोरप्यनुषङ्गः, तथा वराहमन्त्रे व्रीहियवमन्त्रे तु पूर्व्वभागस्यैवानुषङ्गः; यत्र पुनर्व्रीहियवयोरेकएव दीयते तत्र मन्त्रो विभज्य प्रयोक्तव्यः, प्रजापतये व्रीहीन् प्रजापतये यवानिति, प्रजापतिना सृष्टत्वात् पुरुषादीनां तत्सम्बन्धः ॥ १४ ॥

तिलमाषप्रतिग्रहे मन्त्रमाह ।

वरुणस्त्वा नयतु देवि दक्षिणे क्षेत्रपतये तिलमाषा,स्तैरमृतत्वमशीय वयोदात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ १५ ॥

तिलमाषादीनां चैत्रजन्यत्वात्तत्स्वामिना सम्बन्धः ॥ १५ ॥

अश्वगर्द्दभसङ्करजस्य प्रतिग्रहे मन्त्रमाह।

**वरुणस्त्वा नयतु देवि दक्षिणे सवितेऽश्वतरं वाऽश्वतरीं वा तयामृतत्वमशीय वयोदात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ १६ ॥**

प्रेरकस्य सवितुः प्रेरणाद्विलक्षणमातापितृभ्यां विजातीयस्याश्वतरस्योत्पत्तिः ॥ १६ ॥

अत्र सूत्रं, तेन क इदमित्युपरिष्टाज्जप इति, यस्मिन् मन्त्रे तेनामृतत्वमित्यादि प्रतिग्रहीत्र इत्यन्त उत्तरभागो नाम्नातः तस्मिन् मन्त्रे तं भागमनुषज्य जपेत्। पाठस्तु,

**क इदं कस्मा अदात्कामः कामायादात्कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविशत्कामेन त्वा प्रतिगृह्णामि कामैतत्ते ॥ १७ ॥**

क शब्दाभिधेयः प्रजापतिरिदं दक्षिणाद्रव्यं कस्मै प्रजापतये अदात् दत्तवान् प्रजापतिरेव सर्व्वात्मा दानप्रतिग्रहयोः कर्त्तेति भावः एवमनेन मन्त्रेण स्तुते सति दातृप्रतिग्रहीत्रोः फलं पापराहित्यञ्च भवति। तथा कामः कामाय दातृस्वर्गादिफलकामनया यजमानो दातृऋत्विजश्च धनकामनया प्रतिगृह्णन्ति अत उभयत्र कामस्यैव प्रयोजकत्वं, प्रतिग्रहीतृत्वं

च कामस्यैवेत्येतल्लोके प्रसिद्धमिति, कामो दाता कामः प्रतिग्रहीता इत्युच्यते न हि निष्कामे परिव्राजकादौ तदस्ति स च कामः समुद्रमाविशत् मां परित्यज्य यत्र क्वापि गच्छत्वित्यर्थः, कस्यावस्थितौ तेन कामेन हेतुना त्वां प्रतिगृह्णामि ततो हे काम एतद्धनं ते तवैव तिष्ठतु नात्मानं मे स्पृशत्वित्यर्थः। सोयं मन्त्रोध्वर्युशाखायामाम्नातः तदीयब्राह्मणान् नीत्वा व्याख्यातस्य क इदं कस्मादित्याह प्रजापते वैंकः स प्रजापतये ददाति कामः कामायेत्याह कामेन हि ददाति कामेन प्रतिगृह्णाति कामो दाता कामः प्रतिग्रहीतेत्याह कामोऽहि दाता कामः प्रतिग्रहीता कामः समुद्रमाविशेत्याह समुद्र इव कामयते न हि कामस्यान्तोस्ति न समुद्रस्य कामेन त्वा प्रतिगृह्णामीत्याह येन कामः प्रतिगृह्णाति स एवैनममुष्मिंल्लोके दक्षिणामिच्छति न प्रतिग्रहीतुरिच्छति ॥ १७ ॥

इति ताण्ड्यमहाब्राह्मणे प्रथमाध्यायस्य

अष्टमः खण्डः।



अथ नवमः खण्डः।

अत्र सूत्रं, रश्मिरसीत्येतावनुवाकौ स्तोमभागास्तैः पृथगनुपूर्व्वं स्तोत्रान्यनुमन्त्रयेत ब्रह्मन् स्तोष्यामः प्रशास्तेरित्युक्त इति रश्मिरसीत्येकोनुवाकः तन्तुरसीत्यपरः तयोरनुवाकयोराम्ना-

ता ये मन्त्रास्तेषां स्तोमविभाग इति नामधेयं त्रिवृदादि-स्तोमान् भजन्त्येते मन्त्रा इति तच्छब्दव्युत्पत्तिः, उद्गातारो ब्रह्माणं प्रत्येवमनुज्ञां प्रार्थयन्ते ब्रह्मन् स्तोष्यामः प्रशास्तरिति, इदानीं वहिष्पवमानादोन्यतिरिक्तस्तोत्रपर्य्यन्तानि यानि त्रय-स्त्रिंशः स्तोत्राणि सन्ति तानि तैः स्तोमभागैः स्तावत्संख्यैः क्रमेण ब्रह्मा पृथगनुमन्त्रयेत्, आपस्तंबोप्याह ब्रह्मन् स्तोष्याम इत्युच्यमाने देव सवितरेतत्ते प्राहेत्यनुद्रुत्य रश्मिरसि क्षयाय त्वा क्षयञ्जिन्वस्तुतेति स्तौति, सर्व्वस्तोत्राणामेष कल्प उत्तर-मुत्तरं स्तोमभागानां दधाति, द्वादशाग्निष्टोमे पञ्चदशोक्थे षोड़शषोड़शिनि सप्तदशवाजपेये एकोनविंशदतिरात्रे त्रय-स्त्रिंशदप्तोर्य्याम्णि इति। तत्रायं प्रथमस्तोमभागमन्त्रः,

**रश्मिरसि क्षयाय त्वा क्षयं जिन्व सवितृप्रसूता-बृहस्पतये स्तुत ॥ १ ॥**

तैत्तीरीयाणां पञ्चमकाण्डोक्तब्राह्मणे रश्मिरिति मन्त्राणा-मादित्यादिसृष्टिहेतुत्वाभिधानादादित्यादिपरतया रश्म्यादि-शब्दाव्याख्येयाः तत्तु ब्राह्मणमुत्तरत्रोदाहरिष्यते। हे आदित्य त्वं रश्मिरसि रश्मियुक्तोसि देवा यस्मिन् क्षियन्ति निवसन्ति इति स्तोत्रसम्बन्धः क्षयः तस्मै क्षयाय तत्सङ्घाय तत्प्राप्त्यर्थं हे आदित्य त्वां स्मरामीति शेषः ततः क्षयं देवसङ्घञ्जिन्व प्रीणय क्षयशब्दस्य देवविषयत्वं तैत्तिरीयास्तृतीयकाण्डोक्तब्राह्मणे

समामनन्ति रश्मिरसि क्षयाय त्वा क्षयं जिन्वेत्याह देवे क्षय इति यद्वा बहिष्पवमानादिकं स्तोत्रमेव सम्बोध्यं हे स्तोत्र त्वं रश्मिर्वंशबन्धकोसि यज्ञस्य तादृशं त्वां क्षयाय यजमानस्य निवासार्थं प्रयोजयामीति शेषः क्षयन्निवासः यजमानस्य गृहं वा जिन्व प्रीणय हे उद्गातारो यूयं सवितृप्रसूताः सविता प्रेरकेणादित्यरूपेणान्तर्यामिणा प्रेरिताः सन्तो बृहस्पतये बृहत् परिवृढं ब्रह्म तस्य पत्यै स्तोत्रदेवतायै तत्प्रीत्यर्थं स्तुत स्तुतिं कुरुत ॥ १ ॥

अथ द्वितीयस्तोमभागमन्त्रः ।

**प्रेतिरसि धर्म्मणे त्वा धर्म्मं जिन्व सवितृप्रसूता-बृहस्पतये स्तुत ॥ २ ॥**

हे धर्म्माभिमानिन् देव त्वं प्रेतिरसि प्रेतिर्गतिः सा च प्रकृष्टा शास्त्रार्थानुरूपत्वात्प्रकृष्टा गति र्यस्येति विग्रहः धर्म्मणे धर्म्माय तदनुष्ठातृमनुष्यार्थं मनुष्यावै धर्म इति श्रुत्यन्तरे तत्सन्तोषार्थं त्वां स्मरामि त्वमपि धर्मं तदनुष्ठातृमनुष्यम् जिन्व प्रीणय यद्वा अत्रापि पूर्व्ववत् स्तोत्रपरतया योज्यं, अन्यत्पूर्व्ववत् ॥ २ ॥

अथ तृतीयः,

**अन्वितिरसि दिवे त्वा दिवं जिन्व सवितृप्रसूताबृहस्पतये स्तुत ॥ ३ ॥**

हे स्तोम त्वं अन्विति अनुकूलनतियुक्तोसि तं त्वां दिवे द्युलोकार्थं प्रयोजयामि त्वं च दिवं द्युलोकं जिन्व प्रीणय ॥३॥

अथ चतुर्थः ।

सन्धिरस्यन्तरिक्षाय त्वांतरिक्षं जिन्व सवितृ-प्रसूताद्बृहस्पतये स्तुत ॥ ४ ॥

हे स्तोमविशेष त्वं सन्धिरसि उभयतः स्थिताभ्यां स्तोमाभ्यां सन्धिः सन्धीयमानोसि तादृशं त्वां अन्तरिक्षाय अन्तरिक्ष-लोकार्थं प्रयोजयामि त्वं चान्तरिक्षं प्रीणय ॥ ४ ॥

अथ पञ्चमः ।

प्रतिधिरसि पृथिव्यै त्वा पृथिवीञ्जिन्व सवितृ-प्रसूता बृहस्पतये स्तुत ॥ ५ ॥

हे स्तुतिविशेष त्वं प्रतिधिः प्रतिमुखं धीयते प्रातस्सवन-समाप्त्यर्थमिति प्रतिधिः तादृशोसि, अन्यत् पूर्ववद्योज्यं ॥ ५ ॥

अथ षष्ठः ।

विष्टम्भोसि वृष्ट्यै त्वा वृष्टिं जिन्व सवितृप्रसूता-बृहस्पतये स्तुत ॥ ६ ॥

हे माध्यन्दिनसवनपवमान त्वं विष्टंभो यज्ञस्य विश्लेषेण स्तम्भयिता धारकोसि तं त्वां वृष्ट्यै यज्ञमूलभूतायै प्रयोजयामि त्वं च वृष्टिर्यथाभवति तथा तां प्रीणय ॥ ६ ॥

अथ सप्तमः ।

**प्राचोऽस्यह्ने त्वाहर्जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ ७ ॥**

हे स्तोत्रविशेष त्वं प्राचः प्रकर्षेण रचकोसि त्वामह्ने अह-र्थं प्रयोजयामि त्वं चाहर्जिन्व प्रीणय ॥ ७ ॥

अथाऽष्टमः ।

**अन्वासि रात्र्यै त्वा रात्रिञ्जिन्व सवितृप्रसविता बृहस्पतये स्तुत ॥ ८ ॥**

हे स्तोत्रविशेष त्वं अन्वा अनुगन्तासि अनुपूर्व्याद्वातेर्वा एतद्रूपं त्वां रात्र्यै रात्र्यर्थं प्रयोजयामि त्वं च रात्रिं प्रीणय, इत्यमष्टभिः स्तोमभागैरादित्याना सृज्यमानां प्रीतिः प्रतिपा-दिता ॥ ८ ॥

अतः परमग्निष्टोमस्य चत्वारि स्तोत्राणि तदीयैश्चतुर्भिः स्तोमभागैः प्रजापतिना सृज्यमानान् वसून् रुद्रानादित्यान् प्रीणयति ।

अथ नवमः ।

**उशिगसि वसुभ्यस्त्वा वसून् जिन्व सवितृप्र-सूता बृहस्पतये स्तुत ॥ ९ ॥**

हे स्तोत्रविशेष त्वं उशिक् कमनीयोसि त्वं वसुभ्यः वसूनां प्रीत्यर्थं त्वां प्रयोजयामि त्वं च वसून् प्रीणय ॥ ९ ॥

अथ दशमः ।

प्रकेतोसि रुद्रेभ्यस्त्वा रुद्राञ्जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ १० ॥

हे स्तोत्रविशेष त्वं प्रकेतः प्रकृष्टं केतः ज्ञातासि, अन्यत् पूर्ववत् योज्यं ॥ १० ॥

अथैकादशः ।

सुदीतिरस्यादित्येभ्यस्त्वादित्याञ्जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ ११ ॥

हे स्तुतिविशेष त्वं सुदीतिः सुदीप्तिरसि त्वामादित्यानां प्रीत्यर्थं प्रयोजयामि त्वं चादित्यान् प्रीणय ॥ ११ ॥

अथ द्वादशः ।

ओजोसि पितृभ्यस्त्वा पितॄञ्जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ १२ ॥

हे स्तोत्र त्वमोजःसारभूतोसि सारो ह्यग्निष्टोमसाम त्वां पितॄणां प्रीत्यर्थं प्रयोजयामि त्वं च पितॄन् प्रीणयेति ॥ १२ ॥

इति ताण्ड्यमहाब्राह्मणे प्रथमाध्यायस्य

नवमः खण्डः ।

—०()०—

अथ दशमः खण्डः ।

अथ त्रयोदशः ।

तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ १ ॥

हे स्तुतिविशेष त्वं तन्तुः सन्तानहेतुरसि अतस्त्वां प्रजार्थं प्रयोजयामि त्वं च प्रजाः प्रीणय ॥ १ ॥

अथ चतुर्दशः ।

रेवदस्योषधीभ्यस्त्वौषधीर्जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ २ ॥

हे स्तोत्र त्वं रेवत् रयिमत् धनयुक्तं धनप्रदमसि अतः ओषध्यर्थं त्वां प्रयोजयामि ॥ २ ॥

अथ पञ्चदशः ।

पृतनाषाडसि पशुभ्यस्त्वा पशूञ्जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ ३ ॥

हे स्तुतिविशेष त्वं पृतनाषाट् पृतनानां शात्रवीनां सेनानां सोढा अभिभूतासि अतः पशुभ्यः शत्रुसम्बन्धिभ्यः तल्लाभार्थं त्वां प्रयोजयामि त्वं च तान् पशून् मह्यं प्रदाय प्रीणय ॥ ३ ॥

अथ षोड़शः ।

**अभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रञ्जिन्व सवितृ-प्रसूता बृहस्पतये स्तुत ॥ ४ ॥**

हे षोड़शिस्तोत्र त्वमभिजित् अभिजयहेतुरसि तया युक्तया अभिषवार्थं युक्ता ग्रावाणो येन स तथोक्तः तादृशश्चासि सर्व्वदा सोमवक्चासीत्यर्थः, अतस्त्वां इन्द्रायेन्द्रार्थं प्रयोजयामि त्वं चेन्द्रं प्रीणय ॥ ४ ॥

अथ सप्तदशः ।

**अधिपतिरसि प्राणाय त्वा प्राणञ्जिन्व सवितृ-प्रसूता बृहस्पतये स्तुत ॥ ५ ॥**

हे स्तोत्रविशेष त्वं अधिपतिः रात्रिपर्य्यायगतानां स्तोत्राणां मुख्योसि अतस्त्वां प्राणाय मुख्यप्राणवृत्त्यर्थं प्रयोजयामि, गतमन्यत् ॥ ५ ॥

अथाऽष्टादशः ।

**धरुणोस्यपानाय त्वाऽपानञ्जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ ६ ॥**

हे स्तुतिविशेष त्वं धरुणोसि सर्व्वस्य धारकोसि अपानेन, प्राणवायोः शरीरे धारयिता अपानः, तदर्थं त्वां प्रयोजयामि त्वं च तादृशमपानं प्रीणय ॥ ६ ॥

अथैकोनविंशः ।

**संसर्पोसि चक्षुषे त्वा चक्षुर्जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ ७ ॥**

हे स्तुतिविशेष त्वं संसर्पः सम्यक् सर्पणशीलः आदित्योसि अतस्त्वां चक्षुषे चक्षुरर्थं प्रयोजयामि आदित्योहि त्वं चक्षुर्जिन्व प्रीणय ॥ ७ ॥

अथ विंशः ।

**वयोधा असि श्रोत्राय त्वा श्रोत्रं जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ ८ ॥**

हे स्तोत्रविशेष त्वं वयोधाः वयसोन्नस्य आयुषो वा धारयितासि त्वां श्रोत्राय श्रवणेन्द्रियार्थं प्रयोजयामि, गतमन्यत् ॥८॥

अथैकविंशाद्याश्चत्वारो मन्त्राः ।

**त्रिवृदसि त्रिवृते त्वा, सवृदसि सवृते त्वा, प्रवृदसि प्रवृते त्वानुवृदस्यनुवृते त्वा सवितृप्रसूता बृहस्पतये स्तुत ॥ ९ ॥**

मध्यमरात्रिपर्य्यायगतानां चतुर्णां स्तोत्राणामनुमन्त्रणमन्त्रा एते सवितृप्रसूता इत्यादि सर्व्वशेषः । हे स्तुतिविशेष त्वं त्रिभिः पञ्चकैर्निवृत्तत्वेन त्रिवृदसि त्वां त्रिवृते स्तोमाय प्रयो-

जयामि, सवृत् अन्यैः सह वर्त्तत इति सवृत्, प्रवर्त्तते त्वकार्य्यं प्रति प्रवृत्, मध्यमपर्य्यायगतेभ्यस्त्रिभ्यः स्तोत्रेभ्यः अनु पश्चात् वर्त्तत इत्यनुवृत्, शिष्टं स्पष्टार्थं ॥ ६ ॥

अथोत्तमपर्य्यायस्य स्तोत्रचतुष्टयस्य अनुमन्त्रणाश्चत्वारो-मन्त्राः ।

**निरोहोसि निरोहाय त्वा, सꣳरोहोसि सꣳरोहाय त्वा, प्ररोहोसि प्ररोहाय त्वानुरोहोस्यऽनुरोहाय त्वा, सवितृप्रसूता बृहस्पतये स्तुत ॥ १० ॥**

उत्तमपर्य्यायस्य यज्ञारोहणसामत्वात्तस्य स्तोत्राणि रोह-इत्युच्यते हे स्तुतिविशेष त्वं निरोहोसि नितरां रोहहेतुरसि अतो नितरां रोहार्थं त्वां प्रयोजयामि । एवमन्येष्वपि योजना कार्य्या । पदार्थस्तु संरोहः सम्यक् रोहणहेतुः, अनुरोहः अनु पश्चाच्चरमभावी सन् रोहणहेतुरिति ॥ १० ॥

अथ सन्धिस्तोत्रस्य त्रिदेवत्यत्वात् त्रेधाऽनुमन्त्रणं कर्त्तव्यं तन्मन्त्रोऽयं ।

**वसुकोसि वस्यष्टिरसि वेषश्रीरसि सवितृप्रसूता बृहस्पतये स्तुत ॥ ११ ॥**

हे सन्धिस्तोत्र त्वं वसुको वासयिता अग्निस्ताद्दृशोऽसि तथा वस्यष्टिः वसनेन तमसां विवासनेन अश्नुते व्याप्नोति विश्व-

मिति वषट्‌कृतिः उषा स्वाहयोसि वेषश्रीः वेषो रूपं तद्वन्ता-वश्विनौ तावेव वेषश्रीः वेषस्य श्रयितासि ॥ ११ ॥

आक्रमोसीत्याद्याः अप्तोर्य्यामस्य यज्ञस्यातिरिक्तस्तोत्राणाञ्चतुर्णामनुमन्त्रणमन्त्राः । तेषां पाठस्तु,

**आक्रमोस्याक्रमाय त्वा, संक्रमोसि संक्रमाय त्वोत्क्रमोस्युत्क्रमायत्वोत्क्रान्तिरस्युत्क्रान्त्यै त्वा स-वितृप्रसूता वृहस्पतये स्तुत ॥ १२ ॥**

हे स्तोत्रविशेष त्वं आक्रमः यज्ञफलस्याक्रमणाय त्वां योजयामि, स्थानात् स्थानान्तरप्राप्तिः संक्रमस्तद्धेतुरसि, ऊर्द्ध्वं स्वर्गं प्रत्युत्क्रमणमुत्क्रमः तद्धेतुरसि, उत्क्रमणरूपा या क्रिया सा उत्क्रान्तिः तद्रूपोसि, अतउत्क्रान्त्यै स्वर्गं प्रति उत्क्रमणार्थं त्वां योजयामि, गतमन्यत् । १२ । १ । १० ।

अत्र विनियोगसंग्रहः ।

ब्राह्मणप्रथमाध्यायमन्त्राणां विनियोजनं ।
व्रतादौ इत उद्गाता महदित्यादिकं जपेत् ॥ १ ॥
देवो गृहाद्विनिर्गत्य दूरङ्गत्वा विहाय जपेत् ।
यागभूम्यन्तिके वद्धा पितरः पितुपस्थितिं ॥ २ ॥
इम यूपोच्छ्रितो मन्त्रो मृदा वेद्याक्रमं जपेत् ।
रराटीस्पर्शन विष्णोर्हविर्द्धानमिषे विशेत् ॥ ३ ॥
नवात मन्त्राः प्रथमे खण्डे सम्यगुदीरिताः ।
इम वाक्‌श्नयेत्सोमे ऋतस्येत्युपवेशनं ॥ ४ ॥

ऋत स्पृशेद्द्रोणकुम्भं वान प्रोहेदमुं धुरः ।
मरु ग्राव स्पृशेदेषु द्रोणस्य भ्यूहनं त्विदं ॥ ५ ॥
मृज्यादस्त्वाद्दस द्रोणं पवि द्रोणे पटं क्षिपेत् ।
मधु धारां जपेदत्र नव मन्त्रा उदीरिताः ॥ ६ ॥
कुर्य्युः प्रदत्तं होमौ द्वौ वेकु सूर्य्य इति ह्ययात् ।
तयापसरणं योद्य योम स्यादुपवेशनं ॥ ७ ॥
अग्नेरिति स्तोमयोगो ह्यन्नमन्नं जपेद्द्वयं ।
स्वामिनं वाचयेच्छ्येनः सब्रह्मंसा प्रेष्य जपेत् ॥ ८ ॥
उपस्थानं नमः सूर्य्यं दशमन्त्रा इहेरिताः ।
अथादित्ये ह्युपस्थानं सम्राडाहवनीयके ॥ ९ ॥
तुथोस्यास्तावदेशे स्याच्चात्वाले तु नभोसि हि ।
असम्मृष्टोसि शामित्र आग्नीध्रीये विभूरसि ॥ १० ॥
होतुर्द्धिष्ण्ये वह्निरसि श्वा मैत्रावरुणीयके ।
तु ब्राह्मणाच्छंसिके स्यादूशिक्स्यात् पोतृधिष्ण्यके ॥११॥
नेष्टकेङ्गारिरच्छावाककेवस्युरसीत्यथ ।
शुन्ध्युर्म्मार्ज्जालीय औदुम्बर्य्यां स्यादृतधेति हि ॥ १२ ॥
ससुद्रो ब्रह्मणः स्थाने अहिः प्रर्जाहिते भवेत् ।
स्याद्गार्हपत्योजोसीति सगरा दक्षिणाग्निके ॥ १३ ॥
कव्योदक्षिणवेद्यन्ते पातमा सर्व्वसंहतौ ।
चतुर्थखण्डे मन्त्राणां विंशतिः समुदीरिताः ॥ १४ ॥
ऋतमृज्याद्द्वारबाहू मामेत्यन्तः प्रवेशनं ।
नम इत्युपविश्याथ श्येनस्वमसवीक्षणं ॥ १५ ॥

इन्द्रो द्विर्भक्षयेद्दूर्वौ मुखच्छिद्राणि संस्पृशेत् ।
सोमरा हृदयस्पर्शः सोमगीर्नाभिमास्पृशेत् ॥ १६ ॥
चमसं पूरयेदाप्याऽवमैरद्याप्तिमन्त्रतः ।
दीक्षायै स्तोमभागोयं भवेन्मन्त्रचतुष्टयात् ॥ १७ ॥
वायुर्माध्यन्दिने योगो वृषकः स्वामिवाचनं ।
इन्द्रो भक्षस्तोमयोगः सूर्य्योयु सवने भवेत् ॥ १८ ॥
स्वरोसि वाचयेदिन्द्रो कुर्य्याच्चमसभक्षणं ।
आयुः सौम्यं चरुं पश्येदन्ने तत्र विकल्पयते ॥ १९ ॥
येन सौम्यं च संस्पृष्टाङ्गुलिभ्यामक्षिमार्ज्जनं ।
पञ्चविंशति मन्त्रास्युः पञ्चमे खण्डईरिताः ॥ २० ॥
ऐन्द्रमन्त्रे सोमभक्ष स्तुतस्य स्वामिवाचनं ।
इष्ठ सन्धौ सोमभक्षं कृतस्य स्तोममोचनं ॥ २१ ॥
सोमे हि निर्गमः सूर्य्यस्योपस्थानं सुभूरिति ।
अपां द्वाभ्यामाङ्गती द्वे धानाभक्षोहारियोजने ॥ २२ ॥
देवाष्टौ शकले होमा अप्सुधौ चमसं स्पृशेत् ।
मधु पाणीनुपघ्राय चमसोत्क्षेचनं शमत् ॥ २३ ॥
कामाभ्यावर्त्तयेदेतत् ऊर्गस्तत् उरसि क्षिपेत् ।
प्राणेति मुखसंस्पर्शोदधीति दधि भक्षयेत् ॥ २४ ॥
चतुर्विंशति मन्त्रास्तु षष्ठे खण्डे प्रकीर्त्तिताः ।
साश्वं रथं दक्षिणार्थं प्रतिगृह्णाति चेत्तदा ॥ २५ ॥
मृज्यादश्वमुखान्यश्वनामयुग्मचतुष्टयम् ।
रथोर्द्ध्वस्पर्श आदित्या वायोस्तर्म्मप्रतिग्रहे ॥ २६ ॥

अश्वप्रतिग्रहे नच सूर्य्ये लोहप्रतिग्रहे ।
रथेति दक्षिणे चक्रे स्पर्शो वासेत्यधिष्ठितौ ॥ २७ ॥
दृहदित्युत्तरे चक्रे चक्रावंकेति संस्पृशेत् ।
वैश्वा रथं समारोहेज्जिदेत्यत्र स्थितो जपेत् ॥ २८ ॥
क्षमा यच्छेत्यश्वरज्जुं स्पृशेद्वासेति दक्षिणां ।
मन्त्रास्तु सप्तमे खंडे षोडशेत्यवगम्यतां ॥ २९ ॥

पुरस्तात्सर्व्वमन्त्राणां देवस्य त्वेत्यमुञ्जयेत् ।
वरुणेत्यादयो मन्त्रान् क्रमात्तत्तत्प्रतिग्रहे ॥ ३० ॥
अश्वो गौरप्यजः स्वर्णमजाऽविर्व्वसनं गिराः ।
उष्ट्रो मृगस्य पुरुषो हस्तिवराब्रीह्यादयः ॥ ३१ ॥
तिला अश्वतरो मन्त्रं क इत्यन्तं जपेदथ ।
अष्टादशात्र मन्त्राः स्युरष्टमे खण्ड ईरिताः ॥ ३२ ॥

रश्मिरित्यादयस्तोमभागास्तैरनुमन्त्रणं ।
कुर्य्यात्क्रमेण स्तोत्राणां ते त्रयस्त्रिंश ईरिताः ॥ ३३ ॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ३४ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकवुक्क-भूपालसाम्राज्यधुरन्धरेण सायनाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे तांड्यमहाब्राह्मणे प्रथमाध्यायस्य दशमः खण्डः ।

प्रथमाध्यायः समाप्तिमगमत् ।

---

# द्वितीयोऽध्यायः ।

अथ प्रथमः खण्डः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलञ्जगत् ।
निर्म्मिमे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥
प्रथमाध्यायगा मन्त्रा व्याख्याताः क्रतुगामिनः ।
अध्यायान्ते स्तोमभागा उक्ताः स्तोमान् ब्रवीम्यथ ॥

अस्मिन् ब्राह्मणे प्राधान्येन गवामयनं प्रतिपाद्यते प्रायणीयादिभिर्म्महाव्रतान्तैः पञ्चविंशतिसंख्यैरहोभिर्न्निष्पद्यते प्रायेण एतान्येवाहानि अन्येषामपि एकाहाहीनसत्रात्मकानां सोमयागानां प्रकृतीनि द्वादशाहस्याहर्गणानां प्रकृतिः अतः प्राधान्यात्प्रायणीयोदयनीयौ उक्ता मध्ये यानि दशाहानि तेषां विष्टुतयः एवं च सति गवामयनिकानामपि त्रिवृदादयः स्तोमाः प्रदर्शिताः ये स्तोमास्त्रिवृदादयस्तेषां विष्टुतयः क्रमेण द्वितीयतृतीयाभ्यामध्यायाभ्यां प्रदर्श्यन्ते तत्र वहिष्पवमानसाधनस्य त्रिवृत्स्तोमस्य तिस्रोविष्टुतयः उद्यती परिवर्त्तिनी कुलायिनीति, आदितस्त्रिभिरनुवाकैस्ताः प्रदर्श्यन्ते, तत्र तावत् उद्यत्याः स्वरूपमाह ।

**तिसृभ्यो हिङ्करोति स प्रथमया, तिसृभ्यो हिङ्करोति स मध्यमया, तिसृभ्यो हिङ्करोति स उत्तमयोद्यती त्रिवृतो विष्टुतिः ॥ १ ॥**

एकैकस्य साम्नः पञ्च विभक्तयः हिङ्कार प्रस्तावोद्गीथ प्रतिहारोपद्रव निधनाख्याः, तत्र हिङ्कारस्त्रिभिरुद्गातृभिः कर्त्तव्यः अतएव सूत्रकृतोच्यते साम्ने साम्ने हिङ्कुर्य्युरिति तिसृभ्य इति क्रियार्थोपपदस्य च कर्म्मणि स्थानिन इति कर्म्मणि चतुर्थी तिस्र ऋचो गातुं हिङ्कुर्य्यात् एकवचनमन्त्रं उक्तादेव हेतोः अतस्त्रयोप्युद्गातारो हिङ्कुर्य्युरित्यर्थः। एवमुत्तरत्रापि हिङ्कारविधायकेषु वाक्येषु योजना। स हिङ्करोति सहिंकर्त्ता मध्यमया त्रिरुक्तया गायेत् अयं द्वितीयः पर्य्यायः, पुनरपि तिसृभ्यो हिङ्करोति सहिङ्कर्त्ता तृचस्योत्तमया अन्त्या तया त्रिरुक्तया गायेत् एषः तृतीयः पर्य्यायः, अनेन पर्य्यायेण त्रिवृत्स्तोमः सम्पद्यते उक्तप्रकारेण त्रिधा वर्त्तत इति त्रिवृत्स्तोम तस्य विष्टुतिरेषा उद्यती ऊर्द्ध्वं गच्छन्ती उक्तेषु पर्य्यायेषु प्रथममध्यमोत्तमक्रमेण ऊर्द्ध्वगमनादन्वर्थसंज्ञेयमेषा त्रिवृतः प्रथमा विष्टुतिः ॥ १ ॥

एतस्यां विष्टुतौ अधिकारिणमाह।

**ज्येष्ठो ज्यैष्ठिनेयस्तुवीत ॥ २ ॥**

**यो यजमानो भ्रातृणाम्मध्ये स्वयं ज्येष्ठो भवति सपत्नीनां**

मध्ये या ज्येष्ठा तस्याः पुत्रश्च भवति स यजमानः एतया विष्टुत्या स्तुवीत स्तौति तत्रान्तर्णीतण्यर्थः स्तावयेत् तस्य यजमानस्य एतया विष्टुत्या स्तुयुरित्यर्थः ॥ २ ॥

एतां विष्टुतिं अग्रप्राप्त्यादिफलसाधनतया प्रशंसति ।

## अग्रादग्रꣳ रोहत्यभिक्रामन्ती विष्टुतिरभिक्रान्त्या एवाभिक्रान्तेन हि यज्ञस्यर्ध्नोति तस्मादेतया स्तोतव्य मृध्या एव ॥ ३ ॥

अग्रादग्रं उत्कर्षादूर्द्धं पुनरप्युत्कर्षं रोहति प्राप्नोति उत्तरोत्तराभिवृद्धिर्भवति तस्यै तया विष्टुत्या स्तुवते, तथा इयं विष्टुतिभिरभिक्रामन्ती त्रिषु पर्य्यायेषु प्रथममध्यमोत्तमानुपूर्व्येणाभिमुखमाक्रामन्ती उपर्य्युपरि गन्त्री अत एषा प्रयुज्यमाना यज्ञस्याभिक्रमणायैव उपर्य्युपरि प्राप्तये एव भवति ततश्च किमित्यत आह यज्ञस्याभिक्रान्तेन भावे निष्ठा अभिक्रमणेन आरोहणेन परिसमापनेन ऋध्नोति यजमानः समृद्धो भवति हि शब्दो हेतौ यस्मादेवं तस्मादेतया विष्टुत्या स्तोतव्यं ॥ ३ ॥

ऋद्ध्या एव तत् स्तवनं यजमानस्य समृद्ध्या एव भवति पुनरपि नानाविधफलसाधनत्वेन प्रशंसति ।

## पापवसीयसो विष्टुतिर्विपाप्मना वर्त्तते यएतया स्तुते नावगतोपरुध्यते नापरुद्धोवगच्छति न श्रेयाꣳ-

सं पापीयानभ्यारोहति न जनता जनतामभ्येति नान्योन्यस्य प्रजा आददते यथा चेतं कल्पन्तेऽवर्षुकस्तु पर्ज्जन्यो भवतीमे हि लोकास्तृचस्तान् हिंकारेण व्येति ॥ ४ ॥

पापन्निकृष्टं वसीय उत्तमं पापञ्च वसीयश्च पापवसीयसी तयोरुभयोर्विधरणी असांकर्य्यकरणी इयं विष्टुतिः एवं जानन् यएतया विष्टुत्या स्तुते स्तौति सः पाप्मना पापेन निवर्त्तते पाप्मनः पृथग्भवतीत्यर्थः यत्र देशे विधरणी एषा विष्टुतिः प्रयुक्ता तत्र अवगतः कर्त्तरि निष्ठायां अवगन्ता ज्ञाता नापरुध्यते अज्ञानेनापरुद्धः अनाक्रान्तो भवति यस्त्वपरुद्ध अज्ञानेनापहृतः सनावगच्छति न जानाति ज्ञानाज्ञानेन तस्मिन्नधिकरणे सह न तिष्ठत इत्यर्थः, तथा श्रेयाꣳसं प्रशस्यतमं उत्तमजातिं ब्राह्मणादिकं पापीयान्निकृष्टतमः शूद्रादिर्नाभ्यारोहति नाभिक्रामति न श्रेयाꣳसः पापीयाꣳसश्च विभक्ताएव वर्त्तन्त इत्यर्थः तथा जनता जनसमूहो जनतां अन्यजनसमूहं नाभ्येति नाभिगच्छति जनपदो जनपदान्तरं दौर्भिक्षादिकारणेन न प्रविशतीत्यर्थः । प्रजाश्च अन्योन्यस्य धनादिकं नाददते न स्वाकुर्व्वन्ति अपि तु यथा चेतं स्वं स्वं चेतं अनतिक्रम्य स्वचेते कल्पन्ते, इत्थमस्याविष्टुतेर्बहूनि फलानि दर्शितानि, एकस्तु दोषो भवति कोऽसौ दोषः उच्यते

पर्ज्जन्यो वृष्ट्यभिमानी देवः अवर्षुको अवर्षणशीलो भवति तस्मिन् देशे वृष्टिर्नस्यादित्यर्थः यस्मिन् देशे एतया विष्टुत्या स्तुवते कुत इत्यत आह इमे भूरादय स्त्रयो लोकाः तृचस्तिस्रः ऋचो भूरादिलोकस्थानीयास्तान् लोकान् हिङ्कारेण प्रत्यृचं कृतेन व्येति विगमयति वियुक्तान् करोति वयतिरत्रान्तर्नीतण्यर्थः परस्परोपकार्य्योपकारकभावं विश्लेषयतीत्यर्थः । सतिहि तस्मिन्नन्तरिक्षात्पृथिव्या उपकारात्मिका वृष्टिर्भवति नान्यथा । हि यस्मादेवं तस्मादवर्षुकः पर्ज्जन्यो भवति ॥ ४ ॥

अथैतां प्रतिष्ठाफलतया प्रशंसति ।

**एषा वै प्रतिष्ठिता त्रिवृतो विष्टुतिः प्रतितिष्ठति यएतया स्तुत ॥ ५ ॥**

एषा वै एषा खलु उद्यती त्रिवृतो विष्टुतिः प्रतिष्ठिता एकैकस्यामृचि एकैकस्य पर्य्यायस्य परिसमापनात् अस्यां प्रतिष्ठिता भवति । अन्नादिभिः समृद्धो भवतीत्यर्थः ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे द्वितीयाध्यायस्य

प्रथमः खण्डः ।



अथ द्वितीयः खण्डः ।

अथ परिवर्त्तिनीं त्रिवृतिं दर्शयति ।

**तिसृभ्यो हिङ्करोति सपराचीभि स्तिसृभ्यो हिङ्करोति सपराचीभि स्तिसृभ्यो हिङ्करोति सपराचीभिः परिवर्त्तिनो त्रिवृत्तिः ॥ १ ॥**

तिसृभ्यस्तिस्र ऋचो गातुं हिङ्कुर्य्यात् । स हिङ्कर्त्ता पराचीभिरनावृत्ताभिस्तिसृभिर्ऋग्भि र्गायेत् । एवमुत्तरयोरपि पर्य्याययोर्योजना । एषा त्रिवृत् स्तोमस्य त्रिवृतिः परिवर्त्तिनी आवर्त्तिनी । यथा प्रथमे पर्य्याये अनावृत्ताभिर्गानं तथोत्तरयोरपीति अस्या आवृत्तिः ॥ १ ॥

अथैतां बहुविधफलसाधनत्वेन प्रशंसति ।

**अपरीवर्त्तमाप्नोति यएतया स्तुते सन्तता त्रिवृतिः प्राणोऽपानो व्यानस्त ऋच स्तान् हिङ्कारेण सन्तनोति सर्व्वमायुरेति न पुरायुषः प्रमीयते यएतया स्तुते वर्षुकः पर्ज्जन्यो भवतीमे हि लोकास्तृच स्तान् हिङ्कारेण सन्दधाति ॥ २ ॥**

यो यजमान एतया त्रिवृत्या स्तुते स परीवर्त्तं परिवृत्त परि-

इत्य पुनः पुनर्ब्बर्नादिकं प्राप्नोति। परिपूर्व्वाद्वृतेराभीक्ष्ण्ये णमुल्वेतीति णमुल् प्रत्ययः। यद्वा परिवर्त्तन इति परिवर्त्तन् धनं पचाद्यच्। तथा इयं विष्टुतिः सन्तता पूर्व्ववत् च मध्ये हिङ्काराभावेनाविच्छिन्ना मुख्यप्राणस्य मुखप्रदेशवर्त्तिनी या प्राणनरूपा वृत्तिः सप्राणः अपानरूपा अधोगामिनी सोपानः तयोरुभयोर्मध्यवर्त्तिनी विविधं सर्व्वं शरीरं व्याप्य वर्त्तमाना या वृत्तिः सव्यानः। तदेतत् त्रितयं तृचः एतास्तिस्रः ऋचः प्राणादिस्थानीया इत्यर्थः। तथा सति ऋचो हिङ्कारेण सन्तन्वन् तान् प्राणादीनेव आदौ सकृत् प्रयुक्तेन हिङ्कारेण सन्तनोति सन्ततानविच्छिन्नान् करोति व्यवच्छेदकस्य हिङ्कारस्य मध्ये प्रयोगाभावात् अतएव प्राणवृत्तीनामवच्छेदात् सर्व्वं शतवर्षलक्षणमायुरेति प्राप्नोति। एतदेव व्यतिरेकेणाह आयुषः क्रमात् शतवर्षलक्षणादेष पुरा च न प्रमीयते न म्रियते य एतया विष्टुत्या स्तुते स यजमान उक्तविध इत्यर्थः। किञ्चास्य पर्जन्यो वर्षुको वर्षणशीलो भवति य इमे त्रयो लोका स्ते तृचः ऋक्त्रयस्थानीयत्रित्वसाम्यात्, तथा सति आदौ प्रयुक्तेन हिङ्कारेण अविच्छेदेन तिस्र ऋचः सन्तन्वन् इमानेव लोकान् सन्दधातीति उपकार्य्योपकारकभावेन संयुक्तान् करोति ॥ २ ॥

अथास्यामपि विष्टुतौ एको दोषो विद्यत इत्याह।

**स्नक्ष्णेव तु वा ईश्वरा पशून्निर्मृजः सैषा च पराचीत**

**श्रेयान् भवत्युत यादृङेव तादृङ् नेत्तु पापीयान्॥ ३॥**

एषा परिवर्त्तिनी विष्टुतिः। इत्थेणैव तु वै इव शब्दोवधारणे तुशब्दो वैलक्षण्यद्योतकः श्लक्ष्णा मध्ये हिङ्काराभावेन तु श्लिष्टैव खलु ततः किं पशून् यजमानसम्बन्धिनो गवादीन् निर्मृजो निर्मार्ष्टुमपगमयितुं विनाशयितुं ईश्वराः समर्थाः भवन्ति ईश्वरेतोसुन् कसुनाविति मृजेस्तुमर्थे कसुन् प्रत्ययः। अयमेको दोषः। किञ्च सैषा विष्टुतिः प्राच परा चोभिमुखी च भवति कथं यथैकस्मिन् पर्य्याये तथैवोत्तरयोरप्यावर्त्तत इत्यभिमुखीत्युच्यते। तथैकस्मिन् पर्य्याये पराचीभिस्तिसृभिर्ऋग्भिस्तवनात् पराङ्मुखीति च। अस्त्वेवमुभयरूपता किन्तत इत्यत आह, उतेति, उत शब्दो वा शब्दस्यार्थे, ईदृशीं विष्टुतिं प्रयुञ्जानः श्रेयान् यज्ञफलप्राप्त्या वा प्रशस्ततमो वा भवति। उत अथवा। यादृङेव तादृक् एवकारोभिन्नक्रमः यागानुष्ठानात्पूर्व्वं यादृक् रूपो भवति अनुष्ठितेपि यागे तादृगेव तादृश एव भवति प्रयोगकृतोऽतिशयस्तस्मान्न भवतीत्यर्थः। नेत्तु इच्छब्दोवधारणे नैव तु पापीयान् पूर्व्वरूपान्निकृष्टो भवति॥ ३॥

एषा विष्टुतिर्भाल्लविशाखिनां नित्येति दर्शयति।

**तामेताम्भाल्लवय उपासते तस्मात्ते प्रतिगृह्णन्तः परीवर्त्तीन्न च्यवन्ते॥ ४॥**

तामेतां परिवर्त्तिनीं विष्टुतिं भाल्लविशाखिनः उपासते त्रिवृत् स्तोमे प्रयुञ्जते। अतस्ते धनादिकं प्रतिग्टह्णन्तः परीवर्त्तात् परिवर्त्तमानात् तस्मात् धनात् न च्यवन्ते न वियुज्यन्ते ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे द्वितीयाध्यायस्य

द्वितीयः खण्डः ।

---

अथ तृतीयः खण्डः ।

अथ कुलायिनीं विष्टुतिन्दर्शयति ।

तिसृभ्यो हिङ्करोति सपराचीभिस्तिसृभ्यो हिङ्करोति यामध्यमा सा प्रथमा योत्तमा सा मध्यमा या प्रथमा सोत्तमा तिसृभ्यो हिङ्करोति योत्तमा सा प्रथमा या प्रथमा सा मध्यमा या मध्यमा सोत्तमा कुलायिनी त्रिवृतो विष्टुतिः ॥ १ ॥

परिवर्त्तिनी प्रथमः पर्य्यायः द्वितीये पर्य्याये पराचीभिः प्रयुक्तस्य तृचस्य या मध्यमा प्राक् सा प्रथमा कार्य्या। योत्तमा सा मध्यमा कार्य्या। या प्रथमा सोत्तमा कार्य्या। तृतीयः पर्य्यायः निगदसिद्धः। कुलायिनी कुलायो नीडं पक्षिणां

निवासस्थानं तद्यथा व्यस्ततृणादिनिर्म्मितं एवं व्यत्यासयुक्ता ऋचः कुलायास्तैस्तद्वती कुलायिनी एतत् सञ्ज्ञा त्रिवृत्स्तोमस्य विष्टुतिरियं॥ १॥

अस्यां विष्टुतौ कोऽधिकारीत्यत आह।

**प्रजाकामो वा पशुकामो वा स्तुवीत प्रजा वै कुलायम्पशवः कुलायङ्कुलायमेव भवति॥ २॥**

प्रजानाम्पशूनाञ्च कुलायवदवस्थितिहेतुत्वात् कुलायत्वेन स्तुतिः। कुलायिन्या स्तुवानोऽपि प्रजानां पशूनाञ्च कुलायमेव आश्रयभूतो भवत्येव॥ २॥

पुनरप्यधिकारिविशेषं दर्शयति।

**एतामेवानुजावराय कुर्य्यादेतासामेवाग्रं परियतीनां प्रजानामग्रम्पर्य्येति॥ ३॥**

अनु पश्चाज्जायत इत्यनुजः कनीयान् सहि निकृष्टः तस्मादप्यवरो निकृष्ट आनुजावरस्तादृशाय यजमानायेति अग्रं परियतीनां लोके याः प्रजाः अग्रं वयोगुणादिभिः श्रेष्ठपदं परियन्ति परितो गच्छन्ति एतासामेव श्रैष्ठ्यं परिगच्छन्तीनां प्रजानाम्मध्ये सयजमान अग्रं श्रेष्ठं पदं पर्य्येति परिगच्छति सर्वोत्कृष्टो भवतीत्यर्थः॥ ३॥

सर्वेष्वहीनेषु च बहूनां यजमानानां फलसाम्यात् कुलायिनीं विधत्ते।

**एतामेव बहुभ्यो यजमानेभ्यः कुर्य्यात् यत्सर्व्वा अग्रिया भवन्ति सर्व्वा मध्ये सर्व्वा उत्तमाः सर्व्वानेवैनान् समावद्भाजः करोति नान्योन्यमपघ्नते सर्व्वे समावदिन्द्रिया भवन्ति॥ ४॥**

एतामेव कुलायिनीन्त्रिवृतो विष्टुतिं बहुभ्यो यजमानेभ्यः उद्गाता कुर्य्यात् यत् यस्माद्धेतोः तृचगताः सर्व्वा ऋचः अग्रिया मुख्याः प्रथमा भवन्ति सर्व्वासु मध्ये वर्त्तमाना भवन्ति सर्व्वास्वोत्तमा भवन्ति तद्यथा प्रथमे पर्य्याये प्रथमैव प्रथमा भवति। मध्यमे तु मध्यमा प्रथमा भवति। उत्तमे उत्तमा प्रथमा भवति। एवꣳ सर्वासां प्राथम्यं जातं। तथा प्रथमपर्य्याये मध्यमैव मध्यमा द्वितीये पर्य्याये उत्तमैव मध्यमा तृतीये पर्य्याये प्रथमैव मध्यमा। एवं सति तिस्रोपि मध्यमाः सम्पन्नाः। तथा प्रथमे पर्य्याये उत्तमोत्तमा भवति। द्वितीये पर्य्याये प्रथमैवोत्तमा भवति। तृतीये पर्य्याये मध्यमैवोत्तमा भवति। एवं सर्व्वा अप्युत्तमाः सम्पन्नाः। यस्मादेता सर्व्वा ऋचः समानरूपाः ततो हेतोरनया विष्टुत्या सर्व्वानेवैनान् यजमानानुद्गाता समावद्भाजः समावच्छब्दः पर्य्यायः समं फलं भजन्त इति समावद्भाजः साम्येन फलभाजः करोति। अतएव

नान्योन्यमपघ्नते परस्परन्न हिंसन्ति । तथा सर्व्वे यजमानाः समावदिन्द्रियाः समावद्वीर्य्याः समानसामर्थ्या भवन्ति ॥ ४ ॥

फलान्तरमाह ।

**वर्षुकः पर्ज्जन्यो भवतीमे हि लोकास्तृचस्तान् हिङ्कारेण व्यतिषजति ॥ ५ ॥**

लोकस्थानीयानां तिसृणामृचामादौ प्रयुक्तेनैकेनैव हिङ्कारेण व्यतिषञ्जनात् संयोजनात् । त्रयाणां लोकानां परस्परमुपकार्य्योपकारकभावो न बाधित इति पर्ज्जन्यो वर्षणशीलो भवतीत्यर्थः ॥ ५ ॥

अस्यामपि विष्टुतौ बहुदोषाः सम्भवन्तीत्याह ।

**पापवसीयसन्तु भवति ॥ ६ ॥**

तुशब्दः फलवैलक्षण्यद्योतनार्थः । पापं प्रसिद्धं वसीयः पुण्यं तदुभयमेकाश्रयं भवति । इतरत् उद्यतीवाक्यशेषवत् व्याख्येयं । नञः भावोत्र विशेषः । इत्थं विष्टुतयस्तिस्रो विहिताः, तिसृष्वपि तासु फलविशेषश्रवणान्निन्दादर्शनाच्च समानफलत्वात्सर्व्वा नित्याः, यत्र विशेषादेशः क्रियते निमित्तं वा कामो वा श्रूयते ततोन्यत्र नित्यप्रयोगे आद्याभिरेताभिरेव स्तुतिभिः स्तोमसम्पादनं कार्य्यं, तदाह सूत्रकृत् । प्रथमा-

भिर्विष्टुतिभिः स्तोमविधानमनादेशे ताः पञ्चाः सर्व्वाभिप्राया-स्वेति। पुनरपि यथाशिषं वा विदध्यादित्यादिना खण्डशेषेण बहवः पञ्चाः सूत्रकृतोपन्यस्ताः ते तत्रैव बोद्धव्याः। नन्वेतास्वपि प्रत्येकं निन्दादर्शनात् कथमासां नित्यत्वं। नैष दोषः, उद्यत्यान्तावत् यो दोष उक्तः अवर्षुकः पर्ज्जन्यो भवतीति, स कुलायिनीपरिग्रहे परिह्रियते। तत्र हि वर्षुकः पर्ज्जन्यो भवतीत्याम्नातं। यत्तु कुलायिन्यां दोषदर्शनं पापवसीयसन्तु भवत्यधरोत्तरमित्यादि तदुद्यतीप्रयोगेण विहृतं तत्र हि पापवसीयसी विष्टुतिरिति सा श्रूयते स्तुत्यैव तु पापवसीयसन्तु भवति॥ ६॥

अधरोत्तरमपावगतो रुध्यतेवगच्छत्यपरुद्धः पापीयान् च्छ्रेयाꣳसमभ्यारोहति जनता जनतामभ्येत्यन्योन्यस्य प्रजा आददते न यथा चेवं कल्पन्ते॥७॥

प्रथमाया मध्यमायास्त्वान्ते प्रयोग इति यदस्ति तदेतदधरोत्तरमनुष्ठानं यस्मिन् देशे क्रियते तत्र वा ईश्वरा पशून्निर्दृज इति परिवर्त्तिन्यां यद्पशुलक्षणं दोषदर्शनं तदुद्यत्यां परिहृतं भवति। एषा वै प्रतिष्ठिता विष्टुतिरिति, तत्र हि वाक्यशेषः प्रजापशुसमृद्धा हि प्रतिष्ठितो भवतीति॥ ७॥

इति ताण्ड्यमहाब्राह्मणे द्वितीयाध्यायस्य

तृतीयः खण्डः।

---

अथ चतुर्थः खण्डः ।

अथ पञ्चदशस्तोमस्य तिस्रो विष्टुतयः । तत्र प्रथमं पञ्चपञ्चिन्याख्यां विष्टुतिं दर्शयति ।

**पञ्चभ्यो हिङ्करोति स तिसृभिस्स एकया स एकया, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिस्स एकया, पञ्चभ्यो हिङ्करोति स एकया स एकया स तिसृभिः, पञ्चपञ्चिनी पञ्चपञ्चदशस्य विष्टुतिः ॥१॥**

चतुर्ष्वाज्यस्तोत्रेष्वेकैकं तृचात्मकं सूक्तं तस्मिन्तृचे पञ्चदशसंख्या ऋचः सम्पादनीयाः । तच्च सम्पादनं आवृत्तिमन्तरेण न सम्भवतीत्यावृत्तिप्रकार इहोपदिश्यते त्रिभिः पर्य्यायैः स्तोत्रमावर्त्तनीयं । अग्न आयाहीत्येषा सूत्रेण प्रथमा ऋक् तन्त्वा समिद्भिरिति द्वितीया सनः पृथ्विति तृतीया तासु प्रथमामृचं प्रथमे पर्य्याये त्रिरावर्त्तयेत् इतरे द्वे सकृत् सकृत् । द्वितीये पर्य्याये मध्यमां त्रिरभ्यस्येत् तृतीये पर्य्याये अन्तिमां त्रिरभ्यस्येत् । एवं सत्येकैकस्य आवृत्तिः पञ्चधा सम्पद्यते । एषा पञ्चपञ्चिनी एकैकस्मिन् पर्य्याये पञ्चर्चो भवन्तीति । पञ्चपञ्चिन्येतत् संज्ञा पञ्चदशस्तोमस्यैषा विष्टुतिः ॥ १ ॥

अथैतां पुरुषपश्वादिप्राप्तिसाधनत्वेन प्रशंसति ।

पाङ्क्तः पुरुषः पाङ्क्ताः पशवस्तया पुरुषञ्च पशूꣳश्चाप्नोति वज्रो वै पञ्चदशो यत्पञ्चपञ्च व्यूहति वज्रमेव तद्व्यूहति शान्त्या एषा वै प्रतिष्ठिता पञ्चदशस्य विष्टुतिः प्रतितिष्ठति य एतया स्तुते ॥ २ ॥

पङ्क्त्याख्ये छन्दसि पञ्चसंख्या विद्यते तस्य पञ्चभिः पदैरुपेतत्वात्, पुरुषेपि द्वौ हस्तौ द्वौ पादौ शिरश्चेति पञ्चसंख्या विद्यते, पशुष्वपि चत्वारः पादाः पुच्छञ्चेति पञ्चसंख्यास्ति। अतः संख्याद्वारा पुरुषस्य पशूनाञ्च पाङ्क्तत्वं विष्टुतेरपि पञ्चसंख्यायोगात्पाङ्क्तत्वमस्ति तस्मादेतया विष्टुत्या पुरुषञ्च पशूꣳश्चाप्नोति यजमानः, तथा प्रजापतेरुरसः सकाशात् पञ्चदशस्तोम इन्द्रश्च सहोत्पत्तौ वज्रश्चेन्द्रसम्बद्ध इति तद्द्वारा वज्रत्वेनास्य स्तुतिः, योयं पञ्चदशस्तोमोऽसौ वज्रो वै वज्रएव ईदृशं वज्रं यत् यस्मात्कारणात् पञ्च पञ्च पञ्चशः पञ्चशः स्तोमेन व्यूहति विभजति। ततो वज्ररूपस्य पञ्चदशस्य त्रेधा शकलीकरणात् वज्राभावेन यजमानस्य शान्त्यै उपद्रवशमनायैव एषा विष्टुतिः सम्पद्यते। उक्तप्रकारेण प्रजापशुहेतुत्वात् पञ्चसंख्यया विभागाच्च एषैव पञ्चदशस्तोमस्य प्रतिष्ठिता विष्टुतिः य एतया स्तुते सप्रतिष्ठां लभते ॥ २ ॥

इति ताण्ड्यमहाब्राह्मणे द्वितीयाध्यायस्य

चतुर्थः खण्डः।

अथ पञ्चमः खण्डः ।

अथ पञ्चदशस्तोमस्यापरा विष्टुतिः प्रदर्श्यते ।

पञ्चभ्यो हिङ्करोति स तिसृभिस्स एकया स एकया, तिसृभ्यो हिङ्करोति स पराचीभिस्सप्तभ्यो हिङ्करोति स एकया स तिसृभिः स तिसृभिः ॥ १ ॥

स्पष्टोऽर्थः ॥ १ ॥

अस्यामधिकारिणमाह ।

त्रीन् स्तोमान् प्रति विहिता ब्रह्मवर्चसकामः स्तुवीत ॥ २ ॥

एषा विष्टुतिः पञ्चदशत्रिवृत् सप्तदशसंख्यकान् स्तोमान् प्रति विहिता स्तोमत्रयप्रतिनिधित्वेन सम्पादिता तया ब्रह्मवर्चसकामः ब्रह्मवर्चसं श्रुताध्ययनजन्यन्तेजस्तत्कामः स्तुवीत ॥ २ ॥

कथमस्याः स्तोमत्रयप्रतिनिधित्वमित्यत आह ।

पञ्चभिः पञ्चदशं तिसृभिस्त्रिवृतꣳ सप्तभिः सप्तदशं ॥ ३ ॥

प्रथमपर्य्यायगताभिः पञ्चभिर्ऋग्भिः पञ्चदशं स्तोमं प्रति-

विहिता पञ्चदशस्य हि प्रथमे पर्य्याये पञ्चर्चो भवन्ति। द्वितीय-पर्य्यायगताभिस्तिसृभिर्ऋग्भिस्त्रिवृत् स्तोमं प्रति विहिता त्रिवृत्स्तोमस्य ह्येकस्मिन् पर्य्याये तिस्र ऋचो भवन्ति। तथा तृतीय-पर्य्यायगताभिः सप्तभिर्ऋग्भिः सप्तदशं स्तोमं प्रति विहिता। सप्तदशस्य ह्येकैकस्मिन् पर्य्याये सप्तर्चो भवन्ति। एवमस्याः स्तोमत्रयसाम्यं सम्पन्नं॥ ३॥

अतः किं जातमित्यत आह।

वीर्य्यं वै स्तोमा वीर्य्यमेव तदेकधा समूहते ब्रह्मवर्चसस्यावरुध्यै तेजस्वी ब्रह्मवर्चसी भवति य एतया स्तुते॥ ४॥

ये उदाहृतास्त्रयः स्तोमा वीर्य्यात्मकाः पृथक् पृथक् जननहेतुत्वात्तथा सति पर्य्यायत्रयेण स्तोमत्रयसदृशीं एतां प्रयुञ्जानः वीर्य्यमेव एकधा एकप्रकारेण समूहते स्तोमत्रयसामर्थ्यं समूहीकरोतीत्यर्थः। एतच्च वीर्य्यसमूहनं ब्रह्मवर्चसस्यावरुध्यै अवरोधनाय सम्पादनाय भवति। अन्योपि यजमानः एतया स्तुते स्तौति स तेजस्वी ब्रह्मवर्चसी भवति। शारीरं लौकिकं सामर्थ्यं तेजः श्रुताध्ययनादिजन्यं ब्रह्मवर्चसं॥ ४॥

इति ताण्ड्यमहाब्राह्मणे द्वितीयाध्यायस्य

पञ्चमः खण्डः।

---

अथ षष्ठः खण्डः ।

अथ पञ्चदशस्यापरामुद्यत्याख्यां विष्टुतिं दर्शयति ।

तिसृभ्यो हिङ्करोति स पराचीभिः, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिस्स एकया, सप्तभ्यो हिङ्करोति स तिसृभिस्स एकया स तिसृभिरुद्यती पञ्चदशस्य विष्टुतिः ॥ १ ॥

त्रिषु पर्य्यायेषूत्तरोत्तरसंख्योत्कर्षमेतीत्युद्यती पञ्चदशस्य विष्टुतिरिति । त्रिषु पर्य्यायेषूत्तरोत्तरसंख्योत्कर्षमेतीत्युद्यतीत्युच्यते ॥ १ ॥

तस्याः फलमाह ।

एतया वै देवाः स्वर्गं लोकमायन् स्वर्गकामः स्तुवीत स्वर्गस्य लोकस्य समष्ट्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः ॥ २ ॥

यस्मादेतया विष्टुत्या स्तुत्वा देवाः स्वर्गमायन्नगमन् तस्मादन्योपि यः स्वर्गं कामयते स एतया स्तुवीत । स स्तुवन् यजमानः स्वर्गलोकस्य समष्ट्यै* सम्यक् व्यापनायावकल्पते स

* समाप्त्यै इति पाठान्तरं पुस्तकान्तरे ।

च स्वर्गं प्राप्य तस्मात्पुनर्न प्रच्यवते नाधः पतति यतोयन्तुष्टुवानः तिसृभ्यः पञ्चभ्यः सप्तभ्य इत्यानुपूर्व्वात् स्तौति अतोयं न परावर्त्तत इत्यर्थः । लक्षणहेत्वोः क्रियाया इति हेतोः शानच् प्रत्ययः लुङि प्राप्ते व्यत्ययेन स्युः ॥ २ ॥

यद्वा फलान्तरमाह ।

**अभिक्रामन्ती विष्टुतिरभिक्रान्त्या एवाभिक्रान्तेन हि यज्ञस्यर्ध्नोति तस्मादेतया स्तोतव्यमृध्या एव ॥ ३ ॥**

त्रिवृत् उद्यत्यामेतत् सर्व्वं व्याख्यातं । तद्वदत्रापि व्याख्येयं ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे द्वितीयाध्ययस्य

षष्ठः खण्डः ।

---

अथ सप्तमः खण्डः ।

अथ सप्तदशस्तोमस्य दशसप्ताख्या विष्टुतिः । सा द्विःप्रकारा । सप्तास्थितेत्यपरा सा च द्विःप्रकारा । ततः पञ्चभ्यस्तिसृभ्यो नवभ्यश्चेत्येकः । तत उद्यती ततो भस्त्रेति दशसप्तसप्तास्थितयोर्भेदेन सहेत्येवं सप्तविष्टुतयः । तत्राद्यां दशसप्ताख्यां विष्टुतिं दर्शयति ।

पञ्चभ्यो हिङ्करोति स तिसृभिः स एकया स एकया, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिः स एकया, सप्तभ्यो हिङ्करोति स एकया स तिसृभिः स तिसृभिर्दशसप्ता सप्तदशस्य विष्टुतिः ॥ १ ॥

स्पष्टार्थः। आदितो द्वाभ्यां पञ्चभ्यां हिङ्करोति पर्यायाभ्यां दश। उत्तरे सप्तेति दश च सप्त चास्यां विष्टुत्यामिति दशसप्तेयं सप्तदशस्तोमस्य विष्टुतिः ॥ १ ॥

एतां प्रशंसति।

एतया वै देवा असुरानत्यक्रामन्नतिपाप्मानं भ्रातृव्यं क्रामति य एतया स्तुते ॥ २ ॥

एतया दशसप्तया विष्टुत्या खलु देवाः पूर्वं असुरानत्यक्रामत् अतिक्रान्तवन्तः तिरस्कृतवन्त इत्यर्थः। तस्मादन्योपि यो यजमान एतया स्तुते सोपि पाप्मानं पापरूपं भ्रातृव्यं शत्रुं अतिक्रामति अतिक्रान्तो भवति ॥ २ ॥

पुनरपि प्रकारान्तरेण प्रशंसति।

अभिक्रामन्ती विष्टुतिरभिक्रान्त्या एवाभिक्रान्तेन यज्ञसमृध्नोति तस्मादेतया स्तोतव्यमृद्ध्या एव ॥ ३ ॥

उद्यत्या वाक्यशेषवदेतत् व्याख्येयं ॥३॥

तथा प्रजापशुसाधनत्वेनैतां प्रशंसति।

गर्भिणी विष्टुतिः प्रप्रजया प्रपशुभिर्जायते य एतया स्तुते ॥ ४ ॥

यथेयं विष्टुतिः गर्भिणी अस्यां हि मध्यमेषु विष्टावेषु तिस्र-एकैका वेति पञ्च भवन्ति, उत्तमेषु एकैका तिस्रस्रेति पञ्च, एवं द्वयोः पञ्चकयोर्म्मध्ये सप्तभवन्त्यधिकसंख्यया प्रविष्टत्वात् अस्याविष्टुतेर्गर्भिणीत्वं। तस्या अपि गर्भावस्थानप्रदेशो मध्य-कायस्थूलो भवति तत्सामान्येन गर्भिणी स्तुतिः। अतो यो यज-मान एतया स्तुते सः प्रजया प्रजापतेः पुत्रपौत्रादिभिः प्रवृद्धो भवति, तथा पशुभिश्च प्रजापतेः गवाश्वादिभिश्च प्रवृद्धो भवति ॥ ४ ॥

पुनरपि प्रकारान्तरेण प्रशंसति।

विड्वै सप्तदशस्तस्या राजा गर्भोविशएव तद्रा-जानङ्गर्भङ्करोति ॥ ५ ॥

योऽयं सप्तदशस्तोमः सविड्वैश्य एवेति परिजन एव उभयोः प्रजापतेर्मध्यभागादुत्पत्तेः सम्बन्धः। तस्याः परिजन-भूताया विशः राजा गर्भः गर्भवन्मध्ये वा स्थितो भवति विट्त्वेन संस्तुतस्य सप्तदशस्तोमस्य मध्ये प्रजायतनभूता मध्यमा स्तो-

तीया भवति गर्भङ्करोतीति यत् तत् राजानं क्षत्रियमेव विशो गर्भङ्करोति । मध्यस्तोतीयायाश्च ऋत्विजायतनत्वमुत्तरत्राम्नास्यते ॥ ५ ॥

ब्रह्मणो वा आयतनम्प्रथमा चत्रस्य मध्यमेति विवृतं ब्रह्मत्या इव ज्ञानाज्ञानयोर्विवेकवदस्याः फलमित्याह ।

**नावगतोपरुध्यते नापरुद्धोवगच्छति ॥ ६ ॥**

पूर्ववद्व्याख्येयं ॥ ६ ॥

तथा अन्नस्य साधनत्वेन दुर्निवारिकैषा विष्टुतिरिति प्रशंसति ।

**अन्नं वै सप्तदशो यत्सप्तमध्ये भवन्ति पञ्चपञ्चाभितोन्नमेव तन्मध्यतो धीयतेऽनशनायुको यजमानो भवत्यनशनायुकाः प्रजाः ॥७ ॥**

अयं सप्तदशस्तोमः, अन्नं वै अन्नमेव, दशसंख्याया ऊर्द्ध्वं सप्तसंख्यातिरिच्यते । तया सप्तसंख्यया सप्त ग्राम्या ओषधयः सप्तारण्या इति श्रुतिप्रतिपादितं अन्नञ्च स्मार्य्यते । एवं परम्परया सप्तदशस्यान्नत्वं । यद्वा प्रजापतेरन्नायतनादुदरात् सृष्टत्वात् सप्तदशस्यान्नत्वं । शाखान्तरे सप्तदशस्योत्पत्तिं प्रस्तुत्य सूयते हि तस्मात् आद्या अन्नधनाद्यसृजन्तेति । विष्टावसन्निवेशनमध्यमविष्टावे स्थिताः यत् सप्तमध्यमा भवन्ति,

अभितः प्रथमेषूत्तमेषु च विष्टावेषु पञ्चपञ्चर्चो भवन्ति । तत्तेन पञ्चसंख्यया युक्तस्य पाङ्क्तस्य पुरुषस्य मध्यतो मध्ये उदरे अन्नमेव धीयते । सप्तसंख्योपेतं ग्राम्यारण्यादिकं अन्नमेव धीयते । यतएवं ततः कारणात् सप्तदशस्तोमस्य प्रयोक्ता यजमानः अनशनायुक्तो अशनाया अशने वा क्षुत्पीड़ा तत् रहितो भवति । तद्देशवर्त्तिन्यो अन्या अपि प्रजाः अनशनायुकाः अशनायारहिता भवन्ति ॥ ७ ॥

तथा पशुसाधनत्वेनैतां प्रशंसति ।

## वैराजो वै पुरुषः सप्त ग्राम्याः पशवोयद्दशपूर्व्वा भवन्ति सप्तोत्तमा यजमानमेव तत् पशुषु प्रतिष्ठापयति ॥ ८ ॥

पर्य्यायद्वयगताः दशसंख्याः पूर्व्वोत्तमा भवन्ति, प्रथमतृतीयपर्य्यायगता ऋचो भवन्तीति, यत् तत्तेन यजमानमेव पशुषु प्रतिष्ठापयति । कथमेतत् यतो वैराजः पुरुषः विराट् पादेन च दशसंख्या विद्यते । नव वै पुरुषे प्राणा दशमी नाभिरिति श्रुत्यन्तरात् पुरुषेप्यस्ति दशसंख्या । अतो वैराजः पुरुष इति आद्यस्य दशर्चस्य स्तुतिः । सप्तसंख्याका ग्रामे भवाः पशवो गवाश्वाद्या अवशिष्टसप्तर्चस्थानीयाः । अतो यजमानं पुरुषं उद्गाता सप्तसंख्याकेषु स्थापयतीत्येतदुपपन्नं ॥८॥

एवमुक्तेन प्रकारेण इयं विष्टुतिः प्रतिष्ठाहेतुरिति दर्शयति ।

**एषा वै प्रतिष्ठिता सप्तदशस्य विष्टुतिः प्रतितिष्ठति य एतया स्तुते ॥८॥**

स्पष्टोऽर्थः ॥८॥

इति ताण्ड्यमहाब्राह्मणे द्वितीयाध्यायस्य
सप्तमः खण्डः ।

---

अथ अष्टमः खण्डः ।

उक्ताया एव दशसप्ताया विष्टुतेर्विधान्तरमाह ।

**एष एव व्यूढः सप्तैकमध्या ॥ १ ॥**

दशसप्तायाविष्टुत्याय स्तृतीयः पर्य्यायः । सप्तभ्यो हिङ्करोति स एकया स तिसृभिस्स तिसृभिरित्युक्तः एष एव पर्य्यायो व्यूढः व्यूढे विभजनीयः । कथमिति तदुच्यते । उत्तमपर्य्यायगतो यः सप्तर्चः सा एकमध्या कुर्य्यात् । स एकया स तिसृभिस्स तिसृभिरिति पूर्व्वमुक्तः स तिसृभिस्स एकया स तिसृभिरिति कुर्य्यात् । आद्यां तृतीयां च विरावर्त्तयेदित्यर्थः ।१

एतां प्रशंसति ।

**ब्रह्मणो वा आयतनं प्रथमा क्षत्रस्य मध्यमा विशउत्तमा, यत् प्रथमा भूयिष्ठा भाजयति ब्रह्मण्येव**

तदोजोवीर्य्यन्दधाति ब्रह्मण एव तत् क्षत्रञ्च विश-ञ्चानुगे करोति क्षत्रस्येवास्य प्रकाशो भवति य एतया स्तुते ॥ २ ॥

प्रथमा स्तोत्रीयत्र्यचस्याद्या या सा ब्रह्मणोब्राह्मणजातेराय-तनं स्थानं, उभयोः प्राथम्येन सम्बन्धात् । या मध्यमा द्वितीया सा क्षत्रियस्य क्षत्रियजातेः । योत्तमा तृतीया सा विशोवैश्यजा-तेरायतनं । तथा सति प्रथमां ब्राह्मणजातेरायतनभूतां आद्या-मृचं भूयिष्ठा बहुतरा संख्या भाजयति प्रापयति । तत् कथमि-त्युच्यते । पूर्वस्यां विष्टुतौ द्वयोः पर्य्याययोः सा प्रथमा एकैका ष्ठावृत्त्या तिस्रश्चेति पञ्चसंख्यायुक्ताऽभूत् । सैवेदानीं तृती-येऽपि पर्य्याये त्रिरावर्त्तनात् सप्तसंख्योपेता भवति । मध्यमोत्तमे तु पञ्चसंख्योपेते एवं प्रथमामधिकसंख्यां करोतीति यत् तत् तेन ब्रह्मणि ब्राह्मणजातावेव ओजो बलं वीर्य्यं परप्रेरणसा-मर्थ्यं दधाति स्थापयति । अपिच तत्तेन क्षत्रियवैश्यस्थापनभू-तयोर्द्वितीयतृतीययोर्जनसङ्ख्योपेतत्वकरणेन क्षत्रं च क्षत्रियजातिं च विशं च वैश्यजातिं च ब्रह्मणो ब्राह्मणजातेरेव अनुगे अनु-गत्यौ उपचीर्णे करोति स्तोता तस्मादन्योपि यो यजमानः एतया स्तुते क्षत्रस्येव क्षत्रियजातेरिवास्य यजमानस्य प्रकाशः कीर्त्ति र्भवति ॥ २ ॥

उक्ता विष्टुतिः त्रिखर्व्वशाखिनान्नित्येत्याह ।

तामेतान्त्रिखर्व्वा उपासते तस्मात्ते स्पर्द्धमाना न वीयन्ते ॥ २ ॥

तामेतां दशसप्ताख्यां विष्टुतिं त्रिखर्व्वशाखिन उपासते प्रयुञ्जते। तस्मादुपासनात् ते कदाचिदपि स्पर्द्धमानाः सन्तो न व्लीयन्ते नहिंऽस्यन्ते व्लीनाऽति हिंसाकर्म्मा ॥ २ ॥

इति ताण्ड्यमहाब्राह्मणे द्वितीयाध्यायस्य अष्टमः खण्डः।

---

अथ नवमः खण्डः।

अथ सप्तदशस्तोमस्य सप्तास्थिताख्यां विष्टुतिमाह।

सप्तभ्यो हिङ्करोति स तिसृभिस्स तिसृभिस्स एकया, तिसृभ्यो हिङ्करोति सपराचीभिस्सप्तभ्यो हिङ्करोति स एकया स तिसृभिस्स तिसृभिस्सप्तास्थिता ॥ १ ॥

सप्तसंख्या प्रथमे पर्याये स्थिता सा सप्तास्थितेति नाम सम्पन्नं। स्पष्टमन्यत् ॥ १ ॥

अस्यामधिकारिणमाह।

**भ्रातृव्यवां स्तुवीत यथा सप्तास्थितेन मत्येन मती करोत्येवं पाप्मानं भ्रातृव्यं प्ररुजति ॥ २ ॥**

भ्रातृव्यः शत्रुः तद्वान्यजमानः एतया सप्तास्थितया विष्टुत्या स्तुवीत स्तावयेत् । यथा लोके सप्तास्थितेन सप्तभिरनडुद्भिः सप्तभि स्तीक्ष्णभागैः शङ्कुभिर्वा अधिष्ठितेन मत्येन मत्यन्नाम कृष्टस्य क्षेत्रस्य समीकरणादिसाधनफलकं तेन समीकरोति समीकरणार्थं कर्षकः प्रव्रजति क्षेत्रं एवं पाप्मानं पापकर्षनहेतुं भ्रातृव्यं शत्रुं अनया प्रथमतः सप्तसंख्यया विष्टुत्या स्तुवानः प्ररुजति प्रभुनक्ति रुजो भङ्ग इति धातुः ॥२॥

फलसाम्यहेतुत्वेन वङ्गयजमानकेष्वपि प्रयोगेषु प्रयोक्तव्येत्याह ।

**एतामेव वङ्गभ्यो यजमानेभ्यः कुर्य्याद्यः प्रथमो हिङ्कारः स प्रथमाया यत्ताऽ सप्तभ्यो हिङ्करोति तेन सा सप्तभजते यत्सप्तैव मध्ये सम्पद्यन्ते ते नो सा सप्त भजते य उत्तमो हिङ्कारः स उत्तमाया यत्ताऽ सप्तभ्यो हिङ्करोति तेन सा सप्त भजते सर्व्वानेवैनान् समावद्भाजः करोति नान्योन्यमपव्रते सर्वे समावदिन्द्रिया भवन्ति ॥ ३ ॥**

वङ्गयजमानार्थं सतां विष्टुतिङ्कुर्य्यात् । तथा सति त्रिच-

गतानां तिसृणामृचां सप्तसंख्यात्वसम्पादनात् सर्वे यजमानाः समानफला भवन्तीति समुदायार्थः । कथं सप्तदशे तिसृणामृचां प्रत्येकं सप्तसंख्यायोग इत्याशंक्य तत् प्रकारं सम्पत्त्या दर्शयति, यः प्रथमो हिङ्कारः सप्रथमाया ऋचः स्थाने भवति उभयोः प्राथम्यात् तां प्रथमामुद्दिश्य सप्तभ्यो हिङ्करोति हिङ्कृत्य स्तौतीति यत् तत् तेन ऋकस्थानीयेन हिङ्कारद्वयेन सहसा प्रथमपर्य्यायविष्टावसन्निवेशेन पञ्चधा आवर्त्त्यमाना सती सा सप्तसंख्या भजते प्रथमपर्य्याये प्रथमविष्टावे तिस्रः इतरयोस्तु पर्य्याययोः प्रथमविष्टावगता एकैकेति तस्याः पञ्चधा आवृत्तिः यत्सप्तैव मध्ये सम्पद्यते त्रयाणामपि पर्य्यायाणाम्मध्यमेषु विष्टावेषु क्रमेण तिस्र एका तिस्र इति सप्तानां सम्पत्तिः तेन तेनैव सा मध्यमा सप्तसंख्या भजते य उत्तमस्तृतीयपर्य्यायगतो हिङ्कारः स उत्तमायास्तृतीयास्थाने उभयोस्तृतीयत्वसाम्यात् यत्तामुत्तमामुद्दिश्य सप्तभ्यो हिङ्करोतीति हिङ्कृत्य स्तौतीति यो द्वितीयो हिङ्कारस्सोपि तस्याः स्थाने भवति यदेतत् हिङ्कारद्वयमृक्स्थानीयं यत् तेन हिङ्कारद्वयेन सह पर्य्यायत्रये उत्तमविष्टावेषु क्रमेणैकैके तिस्रश्चेत्यावर्त्त्यमाना पञ्चेति सप्तसंख्यां भजते । इत्यन्तिसृणां सप्तसंख्यासाम्यसम्पत्तेः सर्वानेवैनान्यजमानान् समावद्भाजः समानफलयुक्तान् करोति उद्गाता ॥ ३ ॥

एषापि केषाञ्चिन्नित्येत्याह ।

तामेतामाभिप्रतारिणा उपासते तस्मात्तेऽोजिष्ठाः स्वानाम् ॥ ४ ॥

अभिप्रतारी नाम कश्चिद्राजर्षि स्तद्गोत्रजा अभिप्रतारिणः तेन आभिप्रतारिणा तामेतां सप्तास्थितां विष्टुतिमुपासते कर्म्मसु नित्यं प्रयुञ्जते । अतस्ते स्वानां ज्ञातीनां मध्ये ओजिष्ठाः ओजसि स्थिता भवन्ति । स्वशब्दस्य ज्ञातिवचनत्वेन स्वं ज्ञातिधना-ख्यायामिति सर्व्वनामसंज्ञां पर्य्युदस्य आमः सुड भावः ।४।

इति ताण्ड्यमहाब्राह्मणे द्वितीयाध्यायस्य

नवमः खण्डः ।

अथ दशमः खण्डः ।

सप्तदशस्तोमस्य सप्तास्थितायाः विष्टुतेर्व्यूहनप्रकारान्तर-माह ।

एष एव व्यूह उभयस्सप्तैकमध्या निर्म्मध्या ॥ १ ॥

उक्तायाः सप्तास्थितायाः एष वक्ष्यमाणोव्यूहो विभाग-प्रकारः । कथमिति तदुच्यते प्रथमोत्तमयोः पर्य्याययो-र्विद्यमाना उभयः उभयविधाः सप्तर्च्च एकमध्याः कार्य्याः स तिसृभिः स तिसृभिस्स एकयेति हि प्रथमे पर्य्याये समा-म्नाताः । स एकया स तिसृभिः स तिसृभिरिति ह्युत्तमे तत्ो-

भयोः पर्य्याययोः स तिसृभिः स एकया स तिसृभिरिति मध्यमा एकैव यथा स्यात् तथा कुर्य्यादित्यर्थः। एवं सति तथा सति त्रिष्वपि पर्य्यायेषु मध्यमायाः स्तोत्रीयाया ऋच आष्टत्वभावादेषां निर्म्मध्या निर्गतमध्यस्थौल्या तनुमध्येत्यर्थः ॥ १ ॥

अस्यामधिकारिणमाह।

आनुजावरस्तुवीतालोको वा एष यदानुजावरो यत् सप्तप्रथमास्सप्तोत्तमास्तिस्रोमध्ये व्यच्चरः पुरुषो लोकमेवास्मै तन्मध्यतः करोति तस्मिंल्लोके प्रतितिष्ठति ॥ २ ॥

एतया विष्टुत्या आनुजावरेति कनिष्ठो यजमानः स्तुवीत यत् तय आनुजावरः स एष अलोको वै लोकः स्थानं तत् रहितः खलु जनैरपरिगृहीतत्वात् तथा सति यद्यस्मात्प्रथमाः प्रथमपर्य्यायस्थाः सप्तर्चः उत्तमाः उत्तमपर्य्यायगताश्च सप्तर्चः मध्ये मध्यमपर्य्याये तिस्रः यद्वा त्रिषु पर्य्यायेषु प्रथमोत्तमविष्टावगताः सप्तसप्तर्च्चो भवन्ति। मध्यमविष्टावगास्तु तिस्रः पुरुषस्तु व्यच्चरवाच्यो भवत्यानुजावरोपि पुरुषः यस्मादेवं तस्मात् व्यच्चराभिधेयपुरुषस्थानीयर्क्चत्रयमध्ये प्रयुञ्जानः स्तोता अस्मा आनुजावराय लोकं स्थानमेव मध्यतो मध्ये करोति। अनया विष्टुत्या तस्य लोको लभ्यत इत्यर्थः। तस्मिंल्लोके प्रतिष्ठितश्च भवति ॥ २ ॥

अधिकार्य्यन्तरमाह।

**एतामेव प्रजाकामाय कुर्य्यान्मध्यतो वा एष संरूढ़ो यः प्रजान्न विन्दते लोकमेवास्मै तं मध्यतः करोति तं लोकं प्रजया च पशुभिश्चानुप्रजायते ॥३॥**

एतामेव विष्टुतिं प्रजां पुत्रभृत्यादिकां कामयमानायोद्गाता कुर्य्यात्। यः प्रजान्न विन्दते न लभते, एषः पुत्रपश्वादीनां मध्यतो मध्यदेशात् संरूढः सम्यगुत्थितः प्रजावान्हि पुत्रभृत्यादीनां मध्ये तिष्ठति तत्तथा ततोऽस्मै प्रजाकामाय तिस्रो मध्ये प्रयुञ्जानः स्तोता मध्यतो मध्ये लोकं स्थानं करोत्येवं तल्लोकमनुलोकं सम्पत्तेरूर्द्ध्वं प्रजया पशुभिश्च प्रजायते प्रवृद्धो भवति अतः पशुकामोप्यत्राधिकारीत्युक्तं भवति ॥ ३ ॥

पुनरप्यधिकारिविशेषं दर्शयति।

**एतामेवापरुद्धराजन्याय कुर्य्याद्विड्वै सप्तदशस्तस्या राजा गर्भो विशएव तद्राजानन्निर्हन्त्यपावगतो रुध्यतेवगच्छत्यपरुद्धः ॥ ४ ॥**

एतामेव विष्टुतिं अपरुद्धः परिजनैर्निरुद्धस्तादृशाय राजन्याय अभिषिक्ताय राज्ञे एतामेव विष्टुतिं प्रयुञ्जीत योयं सप्तदशस्तोम उक्तः सविड्वै राज्ञः परिजनभूता वैश्यजातिरेव।

अनयोः प्रजापतेर्म्मध्यदेहादुत्पत्तेः परस्परं सम्बन्ध इति पूर्व्वमेवोक्तं। तस्य विशो राजा गर्भस्थानीयो भवति गर्भवन्मध्येवस्थानात्तथा सति सप्तकयोर्म्मध्ये तिस्रः प्रयुञ्जान उद्गाता विशो वैश्यजातेरेव मध्ये पुरुष इति व्यचराभिधेयं राजानं निर्हन्ति अपराधकारिणन्निष्क्रष्य हन्ति गमयति स्थापयतीत्यर्थः अन्यत् पूर्व्ववद्याख्येयं ॥ ४ ॥

पुनरप्यधिकार्य्यन्तरमाह।

**एतामेवाभिचर्य्यमानाय कुर्य्यात्प्रजापतिर्वै सप्तदशः प्रजापतिमेव मध्यतः प्रविशत्यस्तृत्यै ॥ ५ ॥**

यो यजमानोभिचर्य्यमाणो द्वेष्टृभिः क्रतमभिचारं प्राप्तो भवति तस्मै एतामेव विष्टुतिं कुर्य्यात् योयं सप्तदशस्तोमः स प्रजापतिर्वै प्रजापतिरेव उभयोः सप्तदशसंख्यासाम्यात्। प्रजापतेः सप्तदशत्वं ऐतरेयके समाम्नातं। द्वादशमासाः पञ्चर्त्तवो हेमन्तशिशिरयोः समासेन तावान् संवत्सरः संवत्सरः प्रजापतिरिति। तथासति प्रजापत्यात्मनः सप्तदशस्य मध्ये यास्तिस्रः प्रयुज्यते तेन व्यचरवाच्यः पुरुषोभिचर्य्यमाणः प्रजापतिमेव मध्यतः प्रजापतेरेव मध्यदेशे प्रविशति अस्तृत्यै अहिंᳫसायै स्तृञ् हिंसायामिति धातुः ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे द्वितीयाध्यायस्य

दशमः खण्डः।

---

अथ एकादशः खण्डः ।

तस्य सप्तदशस्तोमस्यैवापरा विष्टुतिः प्रदर्श्यते ।

पञ्चभ्यो हिङ्करोति स तिसृभिः स एकया स एकया, तिसृभ्यो हिङ्करोति स पराचीभिर्नवभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स तिसृभिः ॥ १ ॥

स्पष्टार्थः ॥ १ ॥

उक्तां विष्टुतिं स्तोमचतुष्टयरूपेण प्रशंसन् ब्रह्मवर्चसकामस्यैवेत्याह ।

चतुरस्तोमान् प्रतिविहिता ब्रह्मवर्च्चसकामः स्तुवीत पञ्चभिः पञ्चदशं तिसृभिस्त्रिवृतन्नवभिस्त्रिणवꣳ स्वयꣳ सप्तदशः सम्पन्नो वीर्य्यं वै स्तोमावीर्य्यमेव तदेकधा समूहते ब्रह्मवर्चसस्यावरुध्यै तेजस्वी ब्रह्मवर्च्चसी भवति यएतया स्तुते ॥ २ ॥

क्रमेण त्रिभिः पर्य्यायैः पञ्चदशादिस्तोमत्रयपर्य्यायसाम्यात्स्वस्य च सप्तदशत्वादियं विष्टुतिः स्तोमचतुष्टयप्रतिनिधित्वेन कृतया एतया ब्रह्मवर्चसकामः स्तुवीत । कुत एतत् य एते चत्वारः स्तोमास्तद्वीर्य्यं वै वीर्य्यं खलु स्तूयमानाया देव-

ताया वीर्य्यहेतुत्वात् तत् तथा सति वीर्य्यमेव एकधा समूहते एकत्र समूहीकरोति तच्च समूहनं ब्रह्मवर्चसस्य लाभाय भवति । अन्योपि यो यजमान एतया स्तुते तेजस्व्येव सन् ब्रह्मवर्चसी भवति ॥ २ ॥

इति ताण्ड्यमहाब्राह्मणे द्वितीयाध्यायस्य
एकादशः खण्डः ।

---

अथ द्वादशः खण्डः ।

अथोद्यत्याख्यां सप्तदशस्यापरां विष्टुतिमाह ।

तिसृभ्यो हिङ्करोति स पराचीभिः पञ्चभ्यो हिङ्करोति स एकया स तिसृभिः स एकया नवभ्यो हिङ्करोति स तिसृभिस्स तिसृभिस्स तिसृभिरुद्यती सप्तदशस्य विष्टुतिः ॥ १ ॥

तिसृभ्यः पञ्चभ्यो नवभ्य इति क्रमेण सङ्ख्याया ऊर्द्ध्वगमनादुद्यती ऊर्द्ध्वं गच्छन्ती एतत्सञ्ज्ञा एषा सप्तदशस्तोमस्य विष्टुतिः ॥ १ ॥

अथैतां स्वर्गादिसाधनतया प्रशंसति ।

एतया वै देवाः स्वर्गं लोकमायं स्वर्गकामः स्तुवीत स्वर्गस्य लोकस्य समष्ट्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानोभिक्रामन्ती विष्टुतिरभिक्रान्त्या एवाभिक्रान्तेन हि यज्ञस्यर्ध्नोति तस्मादेतया स्तोतव्यमृद्ध्या एव ॥ २ ॥

एतया वा इत्यादि तुष्टुवान इत्यन्तं पञ्चदशस्तोमस्योद्यत्यां व्याख्यातं सर्व्वमन्यत् लिङ्गद्वयत्यां। तद्वदत्रापि व्याख्येयं ॥ २ ॥

इति ताण्ड्यमहाब्राह्मणे द्वितीयाध्यायस्य द्वादशः खण्डः।

---

अथ त्रयोदशः खण्डः।

सप्तदशस्यैव भस्त्राख्यापरा विष्टुतिः प्रदर्श्यते।

सप्तभ्यो हिङ्करोति स तिसृभिः स तिसृभिस्स एकया पंचभ्यो हिङ्करोति स एकया स तिसृभिस्स एकया पंचभ्यो हिङ्करोति स एकया स एकया स तिसृभिर्भस्त्रावाचीनविला ॥ १ ॥

प्रथमे पर्य्याये सप्त इतरयोः पञ्चपञ्चेति हीनसंख्योत्तरत्वादवाचीनविलोदवाङ्मुखद्वारा भस्त्रा तत्साम्यात् भस्त्रा

एतत्संज्ञा एषा सप्तदशस्तोमस्य विष्टुतिः । अतएवावाचीनविलत्वादेवानिकृष्टा ॥ १ ॥

अस्यां विष्टुतावधिकारिणमाह ।

**यं द्विष्यात्तस्य कुर्य्याद्यथावाचीनविलया भस्त्रया प्रधूनुयादेवं यजमानस्य पशून् प्रधूनोत्यपक्रामन्ती विष्टुतिस्तया यजमानस्य पशवोपक्रामन्ति पापीयान् भवति य एतया स्तुते ॥ २ ॥**

यं यजमानमुद्गाता द्विष्यात् तस्य यजमानस्यैतां भस्त्राख्यां विष्टुतिं कुर्य्यात्, तया सति अवाचीनविलया भस्त्रया स्तुत्या यथा अयस्कारः प्रधूनुयात् प्रकम्पयेत् प्रधमयेदित्यर्थः एवमेवैतया विष्टुत्या यजमानस्य पशून् प्रधूनोति प्रगमयति। तथेयं विष्टुतिरपक्रामन्ती उत्तरोत्तरहीनसंख्यात्वेन अपगच्छन्ती तया विष्टुत्या यजमानस्य पशवोपक्रामन्ति यजमानान्निर्गच्छन्ति यो यजमान एतया स्तुते यस्यैतयोद्गाता स्तौतीत्यर्थः स यजमानः पापीयान् अन्यैरपि फलैर्विहीनो भवति ॥ २ ॥

इति ताण्ड्यमहाब्राह्मणे द्वितीयाध्यायस्य त्रयोदशः खण्डः ।

---

अथ चतुर्दशः खण्डः ।

एकविंशस्तोमस्य चतस्रो विष्टुतयः । तत्र सप्तसप्तिन्याख्यां प्रथमां विष्टुतिं दर्शयति ।

सप्तभ्यो हिङ्करोति सतिसृभिस्स तिसृभिस्स एकया सप्तभ्यो हिङ्करोति स एकया स तिसृभिः स भिसृभिः सप्तभ्यो हिङ्करोति स तिसृभिस्स एकया स तिसृभिः सप्तसप्तिन्येकविꣳशस्य विष्टुतिः ॥ १ ॥

स्पष्टोर्थः ॥ १ ॥

अथैतां स्तौति ।

सप्त ग्राम्याः पशवस्तानेतया स्पृणोति सप्त शिरसि प्राणाः प्राणा इन्द्रियाणीन्द्रियाण्येवैतयाप्नोति ॥ २ ॥

पुरुषो गौरविरजो गर्द्दभोश्वोश्वतर इति ग्राम्याः सप्त पशवस्तानेतया स्पृणोति प्राप्नोति । स्पृ प्रीतिचलनयोरत्र प्राप्त्यर्थः धातूनामनेकार्थत्वात् । किञ्च सप्तशीर्षण्याः प्राणाः मुखनासिके चक्षुषी कर्णाविति इन्द्रियाणि तदधिष्ठानत्वात् । अत इन्द्रियाण्येवैतया सप्तसप्तिन्याप्नोति ॥ २ ॥

अथैतां पुनरपि स्तौति ।

एषा वै प्रतिष्ठितैकत्रिंशस्य विष्टुतिः प्रतितिष्ठति य एतया स्तुते ॥ ३ ॥

त्रिष्वपि पर्य्यायेषु समसंख्यासद्भावात् अस्याः प्रतिष्ठितत्वं । तथा सति एतां प्रयुञ्जानः पश्वादिभिः प्रतिष्ठितो भवति ॥३॥

इति ताण्ड्यमहाब्राह्मणे द्वितीयाध्यायस्य चतुर्दशः खण्डः ।

---

अथ पञ्चदशः खण्डः ।

अथास्यैव स्तोमस्य उद्यत्याख्यां द्वितीयां विष्टुतिमाह ।

पञ्चभ्यो हिङ्करोति स तिसृभिः स एकया स एकया सप्तभ्यो हिङ्करोति स एकया स तिसृभिः स तिसृभि र्न्नवभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स तिसृभिरुद्यत्येकविंशस्य विष्टुतिः ॥ १ ॥

स्पष्टोर्थः ॥ १ ॥

एतां विष्टुतिं प्रशंसति ।

एतया वै देवाः स्वर्गं लोकमायन् स्वर्गकामः स्तुवीत स्वर्गस्य लोकस्य समष्टै स्वर्गाल्लोकान्न च्यवते

तुष्टुवानोभिक्रामन्तो विष्टुतिरभिक्रामन्त्या एत्राभि-क्रान्तेन हि यज्ञस्समर्ध्नोति तस्मादेतया स्तोतव्यन्त्रद्धा-एव ॥ २ ॥

एतत्सर्व्वं पूर्व्ववद्योज्यं ॥ २ ॥

प्रकारान्तरेण प्रशंसति ।

सैषा त्रिवृत्प्रायणा त्रिवृदुदयना यत्त्रिवृद्वहिष्पव-मानं भवति नवैता एकविंशस्योत्तमा भवन्ति प्राणावै त्रिवृत्प्राणानेव तदुभयतो दधाति तस्मादय-मर्द्धभागवाक्प्राण उत्तरेषां प्राणानां सर्व्वमायुरेति न पुरायुषः प्रमीयते य एतया स्तुते ॥ ३ ॥

अग्निष्टोमसंस्थस्य यज्ञायज्ञीयस्तोत्रे अस्या विष्टुतेः प्रयोज्यत्वादेकविंशस्तोमस्याग्निष्टोमत्वमारोप्य स्तूयते सैषा विष्टुतिः त्रिवृत्प्रायणा त्रिवृत् ऋक्नवकं प्रायणे प्रारम्भे यस्याः सा तथोक्ता । तथा त्रिवृदुदयना त्रिवृत् ऋक्नवक-मुदयने समाप्तौ यस्याः सा उक्तरूपा । कुतइत्यत आह । यद्यस्माद्वहिष्पवमानस्तोत्रं त्रिवृत् ऋक्नवकं आदौ भवति । यस्मादेकविंशस्य स्तोमस्य उत्तमास्तृतीयपर्य्यायगता एता-नवर्चो भवन्ति । अत एषा विष्टुतिः त्रिवृत्प्रायणा त्रिवृद-

दयनेति किमतो भवति उच्यते। त्रिवृत् स्तोम इति यदस्ति तत्प्राणा वै प्राणाः खलु प्राणा नवसंख्यकाः सप्त शीर्षण्या द्वौ मूत्रपुरीषश्चेति। त्रिवृदपि ऋक्नवात्मकः तथा सति उभयत्र संख्यासाम्यात्त्रिवृत् प्राणरूपतैतत् स्तुतिः। तत्तथा सति प्राणानेव तत् उभयतः शिरस्याधोभागे च दधाति धारयति। तस्मादयमाद्यन्तयोः प्राणस्थानीयं ऋक्नवकं प्रयुक्तवान् तस्मादयमवाग्वर्त्ती प्राणः उत्तरेषां उपरि वर्त्तमानानां शीर्षण्यानां प्राणानां यावत् कार्य्यमस्ति शरीरस्थितिहेतुभूतं अर्द्धभाक् अर्द्धभागवान् तावत् कार्य्यवान् भवति यावत् कार्य्यं कर्म्मणा शरीरं ध्रियते तदर्द्धं शीर्षण्याः प्राणाः कुर्व्वन्ति। शिष्टमर्द्धमवाञ्चौ प्राणावित्यर्थः तयोः कार्य्यं हि मूत्रपुरीषयोर्विसर्ज्जनं। तदभावे उदवर्त्ताख्येन रोगेण म्नियत इति तयोरर्द्धभाक्त्वं। एवं सति च य एतया त्रिवृत्या स्तुते स सर्व्वमायुरेति प्राप्नोति आयुषः पुरा क्लृप्ताच्छतवर्षलक्षणादायुषः पूर्व्वं न म्नियते ॥ ३ ॥

एषा विष्टुतिः केषाञ्चिन्नित्येत्याह।

**तामेताङ्करद्विष उपासते तस्मात्ते सर्व्वमायुर्यन्ति ॥ ४ ॥**

करद्विषो नाम गोत्रभेदा शाखिभेदा वा ते तामेतामुद्यती-

मेकविंꣳशस्य विष्टुतिं उपासते नित्यं प्रयुञ्जते। तस्मात्ते सर्व्वं शतवर्षलक्षणं कृत्स्नमायुर्य्यन्ति प्राप्नुवन्ति ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे द्वितीयाध्यायस्य
पञ्चदशः खण्डः।

---

अथ षोड़शः खण्डः।

अथास्यैव स्तोमस्य प्रतिष्टुतिर्न्नाम तृतीया विष्टुतिः प्रदर्श्यते।

नवभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स तिसृभिः, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिः स एकया, सप्तभ्यो हिङ्करोति स तिसृभिः स एकया स तिसृभिः प्रतिष्टुतिः ॥ १ ॥

त्रिवृदादिस्तोमचतुष्टयप्रतिरूपकत्वात् अस्याः प्रतिष्टुतिरिति संज्ञा यौगिकी ॥ १ ॥

एतदेव दर्शयति।

नवभिस्त्रिवृतं प्रतिष्टौति पञ्चभिः पञ्चदशꣳ सप्तभिः सप्तदशꣳ स्वयमेकविंꣳशः सम्पन्नः ॥ २ ॥

अस्या विष्टुतेः प्रथमपर्य्यायगताभिर्नवभिर्ऋग्भिस्त्रिवृतं स्तोमं प्रतिष्टौति त्रिवृत् स्तोमेन स्तुतवान् भवतीत्यर्थः एवमुत्तरत्रापि योज्यं ॥ २ ॥

एतां विष्टुतिं प्रशंसति ।

**य एव स्तोमा यज्ञं वहन्ति तानुत्तमे स्तोत्रे सन्तर्पयति यथानडुहो वाश्वान्वाश्वतरान्वोऊ्ढषः सन्तर्पयेदेवमेतदुत्तमे स्तोत्रे स्तोमान् सन्तर्पयति तृप्यति प्रजया पशुभिर्य एतया स्तुते ॥ ३ ॥**

य एव स्तोमास्त्रिवृत् पञ्चदश सप्तदशैकविंशाख्ययज्ञमग्निष्टोमं वहन्ति तान् स्तोमान् सर्व्वान् तर्पयति अन्तिमे यज्ञायज्ञीयस्तोत्रे अनया विष्टुत्या स्तुवन्नुद्गाता सन्तर्पयति उक्तक्रमेण ताननुस्मरन् संतृप्तान् करोति एतदेव दृष्टान्तेन समर्थयते। ऊ्ढषः वहेः कसिप्रत्यये शसि रूपमेतत्। ऊ्ढषः ऊढवत ऊढभारान् अनडुहादीन्यथा सन्तर्पयेत् उत्तमे स्तोत्रे स्तोमान् सन्तर्पयति यत् एवमेतत् य एतया स्तौति अयं तर्पयतीत्यन्वयः ॥३॥

पौरोहित्यकामयमानस्यैषा विष्टुतिः प्रयोज्येत्याह ।

**एतामेव पुरोधाकामाय कुर्य्याद्ब्रह्म वै त्रिवृत् क्षत्रमेकविंशो यत्त्रिवृतैकविंशं प्रतिपद्यते ब्रह्म**

**तत् क्षत्रस्य पुरस्तान्निदधाति गच्छति पुरोधान्न पुरोधायाश्च्यवते य एतया स्तुते ॥ ४ ॥**

पुरोधा पौरोहित्यं तत्कामः यजमानो यस्तस्मै यजमानाय एकविंशस्यैतामेव विष्टुतिं कुर्य्यात्। योयं त्रिवृत् स्तोमः ब्रह्म वै ब्राह्मणजातिः खलु उभयोः प्रजापतिमुखजन्यत्वात्। एकविंशस्तोमः प्रतिष्ठाहेतुत्वात् क्षत्रं क्षत्रियजातिः एवं सति त्रिवृता ऋक्नवके एकविंशस्तोमं प्रतिपद्यते प्रारभत इति यत्तत्तेन क्षत्रस्य क्षत्रियजातेः पुरस्ताद्ब्रह्म ब्राह्मणजातिन्निदधाति अतः कारणात् स यजमानः पुरोधां पौरोहित्यं गच्छति प्राप्नोति कदाचिदपि तस्याः पुरोधाया न च्यवते न प्रच्युतो भवति ॥ ४ ॥

एषापि केषाञ्चिन्नित्येति दर्शयति।

**तामेतां प्रावाहणय उपासते तस्मात्ते पुरोधाया न च्यवन्ते ॥ ५ ॥**

प्रावाहणयः प्रवाहणो नाम कश्चित् ऋषिः तस्य सन्तानभूताः प्रावाहणयः स्पष्टमन्यत् ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे द्वितीयाध्यायस्य

षोड़शः खण्डः।

---

अथ सप्तदशः खण्डः ।

अथास्यैव स्तोमस्य सूर्य्याख्याञ्चतुर्थीं विष्टुतिं दर्शयति ।

**नवभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स तिसृभिस्तिसृभ्यो हिङ्करोति स पराचीभिर्नवभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स तिसृभिः सूर्य्युभयत आदीप्ता ॥ १ ॥**

उभयत आद्यन्तयोः पर्य्याययोर्र्र्टक्नवकान्तेन त्रिवृत्त्वादुभयतः आदीप्ता, त्रिवृतश्चाग्नेश्च प्रजापतिमुखात् सहोत्पत्तेरादीप्ता, सूर्म्मी क्षशा मध्ये स्थूलेतरा तस्मादुभयादस्या अग्रेषा संज्ञा । अस्या अपि मध्यमपर्य्यायस्य त्र्यृक्त्रयात्मकत्वेन त्र्यृक्नवकाभ्यामल्पत्वात् ॥ १ ॥

अस्यामधिकारिणमाह ।

**ब्रह्मवर्चसकामः स्तुवीत तेजो वै त्रिवृत् त्र्यचरः पुरुषो यत् त्रिवृताविभितो भवतस्तिस्रो मध्ये यथा हिरण्यं निष्टपेदेवमेनं त्रिवृतौ निष्टपतस्तेजसे ब्रह्मवर्चसाय ॥ २ ॥**

अनया ब्रह्मवर्चसकामः स्तुवीत यः त्रिवृत् स्तोमोस्ति स तेजोवै तेजोरूपः खलु पुरुषो यजमानोपि त्र्यचरः पुरुषः इति

त्र्यक्षरैर्वाच्यस्तथा सति यत् यस्मात्त्रिवृतौ तेजोरूपावुभयतः प्रथमतृतीयपर्य्याययोर्भवतः मध्ये मध्यमपर्य्याये तिस्रस्त्र्यक्षरात्मकपुरुषस्थानीयास्तिस्र ऋचो भवन्ति तस्य यथा हिरण्यमग्निमध्ये वर्णोत्कर्षाय निष्टपेत् नितरां तापयति स्वर्णकारः एवमेनं अक्षरत्रयाभिधेययजमानं एतौ त्रिवृतौ उभयतः स्त्रिवृतौ निष्टपतः निक्रम्य दीपयतः एवं सति यजमानस्तेजसे ब्रह्मवर्चसाय भवति ॥ २ ॥

अस्यां विष्टुतौ दोषद्वयमप्यस्ति ।

**अपशव्येव तु वा ईश्वरा पशून्निर्दहः किलासत्त्वान्नुभयमति हि निष्टपतः ॥ ३ ॥**

तुशब्दः फलवैलक्षण्यद्योतनार्थः । अपशव्येव वै पशूनां वृद्धिविघातिनी खलु अतएवैषा पशून्निर्दहोनिर्दग्धुमीश्वरा समर्था ईश्वरेतोसुन्क्सुनाविति दहेः कसु तथा किलासत्वात् किलासः सिध्मः त्वक्रोगविशेषः तद्धेतुत्वात् चैषा दुष्टा उभयत हेतुः उभयमति हीति । हि हेतौ यस्माच्चाद्यन्तयोः प्रयुक्तौ त्रिवृतौ त्रिवृतौ त्र्यक्षराभिधेयस्य पुरुषस्य यजमानस्योभयपार्श्वद्वयन्निष्टपतः निःशेषेण दहतः अत ऊर्द्ध्वं दोषद्वयं सम्पद्यत इत्यर्थः ॥ ३ ॥

अधिकार्य्यन्तरमाह ।

**एतामेवाभिशस्यमानाय कुर्य्याद्धमलं वा एतस्-**

**च्छति यमश्लीला वागृच्छति यैवैनमसावश्लीलं वाग्वदति तामस्य त्रिष्टतौ निष्टपतस्तेजस्वी भवति य एतया स्तुते ॥ ४ ॥**

एतामेव सूर्य्याख्यां विष्टुतिं अभिशस्यमानाय परैर्निन्द्यमानाय यजमानायोद्गाता कुर्य्यात् यं यजमानमश्लीला निन्दारूपा वाक् ऋच्छति प्राप्नोति एनं यजमानं अमलं पापमेव ऋच्छति प्राप्नोति। यैव सा वाक् एनमश्लीलमश्रीकरन्निन्दारूपं वदति अस्य यजमानस्य अश्लीलवादिनीं वाचं अस्यां विष्टुतौ प्रयुज्यमानावुभयतस्त्रिवृतौ निष्टपतो निर्दहतः अश्लीलवादिन्योवाचो निर्दहो यजमानो निर्दोषो जायत इत्यर्थः। अन्योपि यो यजमान एतया स्तुते स्तावयति सोपि तेजस्वी भवतीति।

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ४ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकबुक्कभालसाम्राज्यधुरन्धरेण सायनाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे द्वितीयाध्यायस्य सप्तदशः खण्डः।

द्वितीयाध्यायः समाप्तिमगमत्।

---

# तृतीयोऽध्यायः।

अथ प्रथमः खण्डः।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं॥ १॥
द्वितीये दशरात्रस्य चतुर्णां विष्टुतिक्रमः।
प्रदर्शितस्तृतीयेऽथ वक्ष्यन्ते त्रिणवादयः॥ २॥

त्रिणवस्य स्तोमस्य द्वे विष्टुती प्रतिष्ठिता उद्यती चेति तत्र प्रतिष्ठितां विष्टुतिं प्रदर्शयति।

**नवभ्यो हिङ्करोति स तिसृभिः स पञ्चभिः स एकया, नवभ्यो हिङ्करोति स एकया स तिसृभिः स पञ्चभिर्नवभ्यो हिङ्करोति स पञ्चभिः स एकया स तिसृभिः॥ १॥**

सर्व्वस्य स्तोमस्य त्रयस्त्रयः पर्य्यायास्तत्र प्रथमपर्य्यायस्य या प्रथमा सा तृचभागेत्यन्वर्थसंज्ञका अतस्तस्यास्त्रिर्वचनं कार्य्यं

तस्यैव पर्य्यायस्य या मध्यमा सस्या आवापस्थानमिति संज्ञा अतस्त्रिर्वचनावशिष्टाः प्रथमपर्य्यायसम्बन्धिनो येभ्यासा अन्य वर्ज्जितास्तेषां तेषामियमावापस्थानभूतेत्यर्थः। या तृतीया सा परिचरासंज्ञका सकृद्वचनेनैव प्रायेन परितः सर्व्वतश्चरणात्तन्नाम सम्पन्नं तथा मध्यमपर्य्याये ता एव तिस्रः स्तोत्रीया परिचरात्तृचभागा आवापस्थानमिति क्रमेण संज्ञां लभन्ते। उत्तमे पर्य्याये आवापस्थानं परिचरात्तृचभागेति संज्ञां लभन्ते अत स्तोमंदृष्टौ तृचभागायाः सर्वत्र त्रिर्वचनमेव अनावृत्तैकैव परिचरा यावताभ्यासेन पर्य्याये संख्यापूर्य्यते तावत्कृत्वोमध्यमायावर्त्तनीयेत्यर्थः। तदुक्तं सूत्रकारेण, वर्द्धमानेषु स्तोमेषु प्रथमस्य पर्य्यायस्य प्रथमा तृचभागा तस्यास्त्रिर्वचनं मध्यमावापस्थानमुत्तमा परिचरा तृचभागावापस्थानमिति मध्यमे आवापस्थानं परिचरा तृचभागेत्युत्तम इत्यादिना, अतोस्यां विष्टुतौ अपि पर्य्यायत्रये तृचभागा परिचरयोः पूर्व्वोक्तसंख्यैव आवापस्थानभूता तु पञ्चकृत्वोभ्यस्यते। एषैव संख्याभिधेयत्वेन स्तोतव्या ॥ १ ॥

तं प्रशंसिष्यन्नुक्तं व्यूहनं प्रशंसति।

## वज्रो वै त्रिणवो वज्रमेव तद्व्यूहति शान्त्यै ॥ २ ॥

त्रयो हि त्रिवृत् स्तोमा मिलित्वा त्रिणवः तस्य त्रिवृत-एकैकस्य पर्य्यायस्य त्रित्वसंख्योपेतत्वात् वज्रस्य चेन्द्रो वृत्ताय

वज्रं प्राहरत् स त्रेधा व्यभजदिति श्रुत्यन्तरात् त्रेधा भावद्-र्शनात् तदुभयत्र संख्यासाम्येन त्रिवृतोवज्रत्वं तत्समुदायात्मकः त्रिणवोपि वज्रमेव वज्रवृद्धिं संक्रमेव तया सत्युक्तप्रकारेण यद्व्यूहनं त्रित्वसंख्याविभजनं तत्तेन वज्रमेव तद्व्यूहति वज्र-मेवापनयतीत्यर्थः तद्व्यूहनं यजमानस्य शान्त्यै उपद्रवसमनाय भवति ॥ २ ॥

अथ विहितां पञ्चसङ्ख्यां प्रशंसति ।

पञ्चभिर्विहितैका परिचरा पाङ्क्ताः पशवो यजमानः परिचरा यत्पञ्चभिर्विदधात्येका परिचरा भवति यजमानमेव तत्पशुषु प्रतिष्ठापयत्येषा वै प्रतिष्ठिता त्रिणवस्य विष्टुतिः प्रतितिष्ठति य एतया स्तुते ॥ ३ ॥

एषा विष्टुतिः पञ्चभिर्ऋग्भिर्विहिता विशेषेणोपदिष्टा आवापस्थानगतायाः पञ्चता एव विधेया अप्राप्तत्वात् परिचरा तृचभागयोस्तु सङ्ख्यानियमस्योक्तेन प्रकारेण सर्वतः प्राप्ते-स्तस्मादावापस्थानभूता पञ्चसङ्ख्योपेता परिचरास्वैकापशव-श्चत्वारः पादाः पुच्छञ्चेति च त्वङ्मांसं स्नायुचास्थिमज्जेत्येवं वा पञ्चसम्बन्धात् पाङ्क्ताः अत आवापस्थानीयाः पञ्चर्चः पशव-इत्युपचर्य्यते परिचरा च यजमानस्थानीया एकत्वसाम्यात् एवं

स यत् पञ्चभिर्ऋग्भिरावापस्थानगताभिरिमां विष्टुतिं विदधाति परिचरा चैका भवति तत्तेन यजमानमेव पशुष्ववस्थापयति एषा तु त्रिणवस्य विष्टुतिः प्रतिष्ठिता उक्तप्रकारेण पशुषु यजमानस्यावस्थितिहेतुत्वात् अतो य एतया स्तुते सः प्रतितिष्ठति ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे तृतीयाध्यायस्य

प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

अथ त्रिणवस्योद्यत्याख्यां द्वितीयां विष्टुतिमाह ।

**सप्तभ्यो हिङ्करोति स तिसृभिस्स तिसृभिस्स एकया नवभ्यो हिङ्करोति स एकया स तिसृभिस्स पञ्चभिरेकादशभ्यो हिङ्करोति स पञ्चभिः स तिसृभिः स तिसृभिरुद्यती त्रिणवस्य विष्टुतिः ॥ १ ॥**

तत्र सप्तभ्यो नवभ्य एकादशभ्यः प्रतिसंख्यारोहणं, उद्यत्येषा विष्टुतिस्त्रिणवस्य ॥ १ ॥

अथैतां प्रशंसति ।

**एतया वै देवाः स्वर्गं लोकमायन् स्वर्गकामः स्तु-**

वीत स्वर्गस्य लोकस्य समष्ट्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानोभिक्रामन्तो विष्टुतिरभिक्रान्त्या एवाभिक्रान्तेन हि यज्ञस्यर्ध्नोति तस्मादेतया स्तोतव्यमृध्या एव ॥ २ ॥

त्रिवृत्पञ्चदशयो रुद्युत्यर्थवादवदेतत्सर्व्वन्नेयं ॥ २ ॥

इति ताण्ड्यमहाब्राह्मणे तृतीयाध्यायस्य
द्वितीयः खण्डः।

---

अथ तृतीयः खण्डः।

त्रयस्त्रिंशस्तोमस्य विष्टुतयः, पञ्च तत्राद्यां समत्वंशाख्यां दर्शयति।

एकादशभ्यो हिङ्करोति स तिसृभिस्स सप्तभिस्स एकयैकादशभ्यो हिङ्करोति स एकया स तिसृभिस्स सप्तभिरेकादशभ्यो हिङ्करोति स सप्तभिस्स एकया स तिसृभिः ॥ १ ॥

त्रयाणां पर्य्यायाणां समसङ्ख्यात्वात् समत्वंशैषा विष्टुतिः ॥ १

अथैतां विष्टुतिं स्तौति।

अन्तो वै त्रयस्त्रिंशः परमो वै त्रयस्त्रिंशः स्तोमानां सप्तभिर्विहितैका परिचरा सप्त ग्राम्याः पशवो यजमानः परिचरा यत् सप्तभिर्विदधात्येका परिचरा भवति यजमानमेव तदन्ततः पशुषु प्रतिष्ठापयत्येषा वै प्रतिष्ठिता त्रयस्त्रिंशस्य विष्टुतिः प्रतितिष्ठति य एतया स्तुते॥ २॥

यस्त्रयस्त्रिंशस्तोमोऽस्ति एष अन्तो वै चरमः खलु पृष्ठ्यषडहस्तोमापेक्षयास्यान्तत्वं तदेवमाह परमो वै अयं त्रयस्त्रिंशः परमो वै पृष्ठ्यानामुत्तमः खलु। शिष्टं त्रिणवस्याद्यविष्टुत्यर्थवादवद्व्याख्येयं अन्तत इति षडहस्यान्तत इत्यर्थः॥ २॥

इति ताण्ड्यमहाब्राह्मणे तृतीयाध्यायस्य

तृतीयः खण्डः।

---

अथ चतुर्थः खण्डः।

अथैवानेदीयः संक्रमाख्यां द्वितीयां विष्टुतिमाह।

एकादशभ्यो हिङ्करोति स तिसृभिः स पञ्चभिः स तिसृभिरेकादशभ्यो हिङ्करोति स तिसृभिः स

**तिसृभिः स पञ्चभिरेकादशभ्यो हिङ्करोति स पञ्च-भिः स तिसृभिः स तिसृभिर्नेदीयः संक्रमा ॥ १ ॥**

नेदीयसि अन्तिकतमे संख्याविशेषे संक्रामतीति नेदीय-स्संक्रमा तथाहि प्रथमे पर्य्याये आरोहावरोहाभ्यां तिसृभ्यः पञ्चसु पञ्चभ्यः तिसृष्वित्येवमन्तरिताः अयुक् संख्यास्तेषां संक्रा-मति द्वितीयतृतीययोरपि यथासंख्यमारोहावरोहाभ्यां अन्तिक-तमामेवायुक् संख्यां क्रामति यथा पूर्व्वा विष्टुतिः तिसृभ्यस्सप्तसु सप्तभ्य एकस्यामिति व्यवहितसंक्रमा तद्वैलक्षण्यादेषा नेदीयः संक्रमा ॥ १ ॥

अथोक्ता विष्टुतिस्त्रयस्त्रिंशेन संगतेत्याह।

**अन्तो वै त्रयस्त्रिंशो यथा महावृक्षस्याग्रꣳ स्पृत्वा नेदीयः संक्रमात् संक्रामत्येवमेतन्नेदीयः संक्रमया नेदीयः संक्रमात् संक्रामति ॥ २ ॥**

षडहस्तोमापेक्षयास्यान्तत्वं कश्चित् पुरुषो महावृक्षस्याग्रं अन्तिकतमां शाखामालम्ब्यारुह्य ततो नेदीयः संक्रमात्सं-क्रामति एवमेतया विष्टुत्या नेदीयः संक्रमाख्यया नेदीयस्य-न्तिकतमे संख्याविशेषे संक्रामति ॥ २ ॥

अथैनां प्रतिष्ठाहेतुत्वेन प्रशꣳसति।

**पञ्चभिर्व्विहिता तिस्रः परिचराः पाङ्क्ताः पशव-**

एतावान् पुरुषो यदात्मा प्रजा जाया यत्पञ्चभिश्चिद-धाति तिस्रः परिचरा भवन्ति यजमानमेव तत् पशुषु प्रतिष्ठापयति पशुमान् भवति य एतया स्तुते ॥ ३ ॥

त्रिणवस्य प्रथमविष्टुत्यर्थवादवद्व्याख्येयं । अत्र त्वयं विशेषः परिचरास्तिस्रश्च यजमानपुत्रपत्नीस्थानीयाः तथा सति प्रजया जायासहितं यजमानमेव पशुषु स्तोता स्थापितवान् भवति ॥३॥

इति ताण्ड्यमहाब्राह्मणे तृतीयाध्यायस्य
चतुर्थः खण्डः ।

---

अथ पञ्चमः खण्डः ।

अथास्यैव स्तोमस्योद्यत्याख्यां विष्टुतिमाह ।

नवभ्यो हिङ्करोति स तिसृभिः स पञ्चभिस्स एकयैकादशभ्यो हिङ्करोति स एकया स तिसृभिस्स सप्तभिस्त्रयोदशभ्यो हिङ्करोति स सप्तभिस्स तिसृ-भिस्स तिसृभिरुद्यती त्रयस्त्रिंशस्य विष्टुतिः ॥ १ ॥

स्पष्टार्थः ॥ १ ॥

स्वर्गकामस्यैषा विष्टुतिरिति प्रदर्शयन्निमां प्रशंसति ।

एतया वै देवाः स्वर्गं लोकमायन् स्वर्गकामः स्तुवीत

स्वर्गस्य लोकस्य समष्ट्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवा-नोग्रादग्रꣳ रोहत्यभिक्रामन्ती विष्टुतिरभिक्रान्त्या एवाभिक्रान्तेन हि यज्ञस्यर्ध्नोति तस्मादेतया स्तोतव्यमृद्ध्या एव ॥ २ ॥

पूर्ववद्व्याख्येयं ॥ २ ॥

इति ताण्ड्यमहाब्राह्मणे तृतीयाध्यायस्य

पञ्चमः खण्डः ।

---

अथ षष्ठः खण्डः ।

अथास्यैव विष्टुत्यन्तरमाह ।

त्रयोदशभ्यो हिङ्करोति स तिसृभिः स पञ्चभिः स पञ्चभिरेकादशभ्यो हिङ्करोति स पञ्चभिस्स तिसृभिः स तिसृभिर्नवभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स तिसृभिः प्रत्यवरोहिणी त्रयस्त्रिꣳशस्य विष्टुतिः ॥ १ ॥

त्रयोदशभ्य एकादशभ्यो नवभ्य इति संख्याया उत्तरोत्तरमवरोहनादेषा प्रत्यवरोहिणी ॥ १ ॥

एतदेव सदृष्टान्तमुपपादयति ।

**यथा महावृक्षस्याग्रꣳ रुत्वा शाखायाः शाखा-मालम्भमुपावरोहेदेवमेतयेमं लोकमुपावरोहति प्रतिष्ठायै ॥ २ ॥**

यथा कश्चिदुन्नतस्य वृक्षस्याग्रमारुह्योपरितनायाः शाखायाः शाखामालम्भमवलम्ब्यावलम्ब्य पृथिव्यामुपावरोहेत् एवमेव त्रिवृदादिक्रमेणानुष्ठाय षष्ठेऽहनि त्रयस्त्रिꣳशेनाधिकसंख्येन स्वर्गमारुह्यैतया विष्टुत्येमं लोकमुपावरोहति प्रतिष्ठायै अस्मिन् लोके चिरावस्थानार्थं ॥ २ ॥

अथैनामायुर्हेतुत्वेन प्रशꣳसति।

**त्रिवृता प्रैति त्रिवृतोदेति प्राणो वै त्रिवृत् प्राणे-नैव प्रैति प्राणमभ्युदेति सर्वमायुरेति न पुरायुषः प्रमीयते य एतया स्तुते ॥ ३ ॥**

पृष्ठ्यषडहस्य प्रथमेऽहनि त्रिवृत् प्रयुज्यते षष्ठेऽहनि त्रयस्त्रिꣳ-शः उत्तमे पर्य्याये नवभ्यो हिङ्करोतीति विधानादन्ते च त्रिवृत् प्रयुज्यते अतस्त्रिवृता प्रैति प्रक्रमते त्रिवृतैवोदेत्युद्गच्छति परि-समापयति प्राणापानव्यानरूपेण वृत्तित्रयात्मको यः प्राणोऽस्ति स त्रिवृत्स्थानीयो भवति तथा सति प्राणेनैव प्रक्रमसमाप्ती कृते भवतः एवं प्राणस्य त्यागात् यजमानः सर्व्वं सम्पूर्णमायु-रेति ततः पूर्व्वन्न म्रियते ॥ ३ ॥

एषा केषाञ्चिन्नित्येत्याह ।

**तामेताङ्करद्विष उपासते तस्मात्ते सर्व्वमायुर्य्यन्ति ॥ ४ ॥**

करद्विषो नाम केचित् शाखिविशेषा गोत्रविशेषावा ॥ ४॥

इति ताण्ड्यमहाब्राह्मणे तृतीयाध्यायस्य

षष्ठः खण्डः ।

अथ सप्तमः खण्डः ।

अथ तस्यैवान्यां विष्टुतिमाह ।

**पञ्चदशभ्यो हिङ्करोति स तिसृभिः स सप्तभिः स पञ्चभिरेकादशभ्यो हिङ्करोति स पञ्चभिस्स तिसृभिस्स तिसृभिस्सप्तभ्यो हिङ्करोति स तिसृभिः स एकया स तिसृभिः ॥ १ ॥**

स्पष्टोर्थः ॥ १ ॥

अथैतां प्रशꣳसति ।

**यो वै त्रयस्त्रिꣳशमेकविꣳशे प्रतिष्ठितं वेद प्रतितिष्ठति प्रतिष्ठा वा एकविꣳशः स्तोमानां यदेताः सप्त**

त्रयस्त्रिंशस्योत्तमा भवन्ति सप्तविधैकविंशस्य विष्टुतिरेकविंश एव तत् त्रयस्त्रिंशं प्रतिष्ठापयति प्रतितिष्ठति य एतया स्तुते ॥ २ ॥

यः खलु त्रयस्त्रिंशमेकविंशे प्रतिष्ठितं जानाति स प्रतितिष्ठति कथं तस्य प्रतिष्ठालाभः य एकविंशस्तोमानाम्मध्ये प्रतिष्ठाहेतुः खलु सर्व्वप्रकृतिभूतो ह्यग्निष्टोम एकविंशेन सन्तिष्ठत इति तस्य प्रतिष्ठितत्वं त्रयस्त्रिंशस्य कथमेकविंशे प्रतिष्ठानमित्यत आह अस्यां विष्टुतौ त्रयस्त्रिंशस्योत्तमे पर्य्याये सप्तम्य इति विहिता एताः सप्तर्च्च उत्तमा भवन्ति एकविंशस्य विष्टुतिः सप्तविधा एकैकस्मिन् पर्य्याये सप्तर्चो भवन्ति यत् यस्मादेवं तस्मादेकविंश एव त्रयस्त्रिंशं प्रतिष्ठापयति अतो य एतया स्तुते स यजमानः प्रतितिष्ठति ॥ २ ॥

इति ताण्ड्यमहाब्राह्मणे तृतीयाध्यायस्य सप्तमः खण्डः।

---

अथ अष्टमः खण्डः।

इत्यनु पृष्ठ्यषडहस्य त्रिवृदादयः षट् स्तोमाः क्रमेण विहिताः, अथ छन्दोमानां चतुर्विंशचत्वारिंशाष्टचत्वारिंशा इति त्रयस्तोमाः, तत्र प्रथमस्य स्तोमस्यैका विष्टुतिः सा प्रदर्श्यते ॥

अष्टाभ्यो हिङ्करोति स तिसृभिः स चतसृभिः स एकयाष्टाभ्यो हिङ्करोति स एकया स तिसृभिः स चतसृभिरष्टाभ्यो हिङ्करोति स चतसृभिः स एकया स तिसृभिः ॥ १ ॥

स्पष्टोऽर्थः ॥ १ ॥

अथैतां प्रशंसति ।

पशवो वै छन्दोमा यदष्टाभ्योऽष्टाभ्यो हिङ्करोति अष्टाशफाः पशवः शफशस्तत्पशूनाप्नोति ॥ २ ॥

पशुसाधनत्वाच्छन्दोमानां पशुत्वमेवं भवति त्रिष्वपि पर्य्यायेष्वष्टाभ्यो हिङ्करोतीति यत्तत्तेन पशवश्चाष्टाशफास्तत् पशून् शफशः शफद्वारेणाप्नोति ॥ २ ॥

अथैतां प्रकारान्तरेण स्तौति ।

चतसृभिर्विहितैका परिचरा चतुष्पादाः पशवो यजमानः परिचरा यच्चतसृभिर्विदधात्येका परिचरा भवति यजमानमेव तत्पशुषु प्रतिष्ठापयत्येषा वै प्रतिष्ठिता चतुर्विंशस्य विष्टुतिः प्रतितिष्ठति य एतया स्तुते ॥ ३ ॥

एतत्मन्त्रभिर्व्विहितैका परिचरेत्यादिविद्याख्येयं । २ ॥

इति ताण्ड्यमहाब्राह्मणे तृतीयाध्यायस्य

अष्टमः खण्डः ।

---

अथ नवमः खण्डः ।

अथ चतुश्चत्वारिंशस्य तिस्रो विष्टुतयः तत्र प्रथमामाह ।

पञ्चदशभ्यो हिङ्करोति स तिसृभिः स एकादशभिः स एकया, चतुर्द्दशभ्यो हिङ्करोति स एकया स तिसृभिः स दशभिः, पञ्चदशभ्यो हिङ्करोति स एकादशभिः स एकया स तिसृभिः ॥ १ ॥

स्पष्टोर्थः ॥ १ ॥

अथैतां प्रशंसति ।

ब्रह्मणो वा आयतनं प्रथमा क्षत्रस्य मध्यमा विश उत्तमा यत् पञ्चदशिन्यौ पूर्वे भवतश्चतुर्द्दशोत्तमा ब्रह्मणि चैव तत् क्षत्रे चौजो वीर्य्यं दधाति ब्रह्मणे चैव तत् क्षत्राय च विशमनुगां करोति क्षत्रस्यैवास्य प्रकाशो भवति य एतया स्तुते ॥ २ ॥

तृचगतास्तिस्रः स्तोत्रीयाः क्रमेण ब्रह्मक्षत्रविशामायतन-

भूताः, एवं सति तिसृष्वपि पर्य्यायेषु विष्टावगणनया पूर्वे प्रथममध्यमोत्तमे स्तोत्रीये पञ्चदशिन्यौ पञ्चदशसंख्योपेते भवत उत्तमा तृतीया चतुर्द्दशविष्टावगणनया चतुर्द्दशसंख्याका तत्तेनोक्तप्रकारेण ब्रह्मक्षत्रायतनभूतयोरधिकसंख्यात्वात् ब्रह्म-क्षत्रयोरेवौजोवीर्य्यं च दधाति तत्तया ब्रह्मक्षत्राथं विशमनु-गामनुगन्त्रीङ्करोति विशायतनाया उत्तमाया हीनसंख्यात्वात् अस्यां विष्टुतौ क्षत्रस्याधिक्यात् य एतया स्तुते तस्य क्षत्रिय-जातेरिव कीर्त्तिर्भवति ॥ २ ॥

तां पुनः प्रशंसति।

**अस्तोमा वा एते यच्छन्दोमा अयुजोहि स्तोमा युग्मन्ति छन्दांसि यदेषा युजिनी चतुश्चत्वारिंश-शस्य विष्टुतिस्तेन स्तोमाः ॥ ३ ॥**

छन्दोभिर्गायत्रीत्रिष्टुप्जगतीभिर्गीयन्त इति छन्दोमाश्च-तुर्विंशादयः यत् य इमे छन्दोमा एते अस्तोमा वै स्तोम-लक्षणरहिताः खलु कथं अयुज अयुक् संख्या हि अन्ये प्रसिद्धाः त्रिवृदादयः स्तोमा उक्तानि गायत्र्यादीनि छन्दांसि युग्मन्ति युक्संख्यावन्ति तै गीयमानाश्चतुर्विंशादयोपि युक् संख्या-वन्त इति स्तोमलक्षणराहित्यं एवमस्तोमवत्त्वे प्राप्ते समाधत्ते यस्मादेतेषां मध्ये चतुश्चत्वारिंशस्य स्तोमस्य विहितैषा विष्टु-तिरयुजिनी अयुक् संख्योपेता द्वयोः पर्य्याययोः पञ्चदशसंख्या-

योगात् अतस्तोमलक्षणसद्भावाच्चतुर्विंशादीनामपि स्तोमत्वं सिद्धं ॥ २ ॥

अथैतां पुनः प्रशंसति।

**एषा वै प्रतिष्ठिता चतुश्चत्वारिंशस्य विष्टुतिः प्रतितिष्ठति य एतया स्तुते ॥ ४ ॥**

आद्यन्तयोः पर्य्याययोः पञ्चदशसंख्यासाम्यादस्याः प्रतिष्ठितत्वं ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे तृतीयाध्यायस्य नवमः खण्डः।

---

अथ दशमः खण्डः।

अथास्यैव द्वितीया निर्म्मध्याख्या विष्टुतिः।

**चतुर्द्दशभ्यो हिङ्करोति स तिसृभिस्स दशभिस्स एकया, पञ्चदशभ्यो हिङ्करोति स एकया स तिसृभिः स एकादशभिः, पञ्चदशभ्यो हिङ्करोति स एकादशभिस्स एकया स तिसृभिर्न्निर्मध्या ॥ १ ॥**

अत प्रथमोत्तमे ऋचौ विष्टावे पञ्चदशिन्यौ मध्यमा चतुर्द्दशसंख्याकेति हीनमध्यत्वान्निर्म्मध्या भवति ॥ १ ॥

अथैतां प्रशंसति।

अस्तीव वा अयं लोकोऽस्तीवासौ छिद्रमिवेदमन्तरिक्षं यदेषा निर्मध्या भवतीमानेव लोकाननु प्रजायते प्रप्रजया प्रपशुभिर्जायते य एतया स्तुते ॥ २ ॥

अयम्भूर्लोकोऽस्तीव वै प्राणिनामाश्रयभूतः सन् स्पष्टमुपलभ्यमानोऽवतिष्ठते, तथासौ द्युलोकश्चास्तीव ग्रहनक्षत्रादिभिः प्रकाशमानत्वात्, उभयोर्मध्येवस्थितमिदमन्तरिक्षं छिद्रमिव सुषिरमिव निरात्मकं भवति, एवं सति लोकत्रयानुगुण्येन स्थिताभि ऋग्भिरुपेतेवैषा निर्मध्या भवतीति यत्तेन यजमानः इमानेव लोकाननु इमांस्त्रीन् लोकाननु प्रजायते त्रिष्वपि लोकेषु समृद्धो भवतीत्यर्थः, उक्तस्यैव विवरणं प्रप्रेति ॥ २ ॥

इति ताण्ड्यमहाब्राह्मणे तृतीयाध्यायस्य
दशमः खण्डः।

---

अथ एकादशः खण्डः।

अथ तृतीया विष्टुतिः।

पञ्चदशभ्यो हिङ्करोति स तिसृभिस्स एकादशभिस्स एकया, पञ्चदशभ्यो हिङ्करोति स एकया

स तिसृभिस्स एकादशभिश्चतुर्दशभ्यो हिङ्करोति स दशभिः स एकया स तिसृभिः ॥ १ ॥

स्पष्टोर्थः ॥ १ ॥

अथोक्तानां तिसृणां विष्टुतीनां प्रयोगस्यानियमे प्राप्ते सवनत्रयभेदेन व्यवस्थामाह ।

आज्यानां प्रथमा पृष्ठानां द्वितीयोक्थानां तृतीया ॥ २ ॥

आज्यानां प्रातःसवनिकानां स्तोत्राणां प्रथमया विष्टुत्या चतुश्चत्वारिंशस्तोमक्लृप्तिः, पृष्ठानां पृष्ठस्तोत्राणाम्माध्यन्दिनगतानाञ्चतुर्णां चतुश्चत्वारिंशस्य द्वितीया विष्टुतिः तथोक्थानां च अत्रोक्थशब्दस्तृतीयसवनगतस्तोत्रोपलक्षणार्थः तेनाग्निष्टोमसाम्नोयुक्तशब्देन ग्रहणात् तत्सहितानां चतुर्णां स्तोत्राणां चतुश्चत्वारिंशस्य तृतीया विष्टुतिः कार्य्या ॥ २ ॥

अथ प्रकारान्तरेणासां व्यवस्थामाह ।

याज्यानांᳫ सा होतुर्य्या पृष्ठानांᳫ सा मैत्रावरुणस्य योक्थानांᳫ सा ब्राह्मणाच्छᳫसिनो यैव होतुः साच्छावाकस्य या पृष्ठानांᳫ सा होतुर्य्योक्थानांᳫ सा मैत्रावरुणस्य याज्यानांᳫ सा ब्राह्मणाच्छᳫसिनो यैव

होतुः साच्छावाकस्य योक्थानाꣳ सा होतुर्य्याज्यानाꣳ सा मैत्रावरुणस्य या पृष्ठानाꣳ सा ब्राह्मणाच्छꣳसिनो यैव होतुः साच्छावाकस्य, सर्वा आज्येषु सर्वाः पृष्ठेषु सर्वा उक्थेषु ॥ ३ ॥

या आज्यानामुक्ता प्रथमा विष्टुतिः सा होतुराज्यस्य कार्य्या यत्प्रथमं आज्यस्तोत्रं तत् हि होता प्रयोगशस्त्रेणानुशंसति अतः तत्सम्बन्धात्तदाज्यत्वं एवं मैत्रावरुणादीनामप्यनुशंसितृत्वेन तत्स्तोत्रसम्बन्धः पृष्ठानां पृष्ठस्तोत्राणां या द्वितीया विहिता सा मैत्रावरुणस्याज्यस्य कार्य्या योक्थानां विहिता तृतीया विष्टुतिः सा ब्राह्मणाच्छꣳसिन आज्यस्य कार्य्या यैव होतुराज्यस्य प्रथमा विष्टुतिः सा छावाकस्य कार्य्या, एवं सर्वा अपि विष्टुतयः प्रातःसवने उपयुक्ताः, तथा माध्यन्दिनसवनेपि या पृष्ठानां विष्टुतिर्द्वितीया सा होतुः पृष्ठस्य कार्य्या योक्थानां विहिता तृतीया सा मैत्रावरुणस्य पृष्ठे कार्य्या आज्यानां विहिता प्रथमा सा ब्राह्मणाच्छꣳसिनः पृष्ठे कार्य्या यैव होतुः पृष्ठे विहिता द्वितीया साच्छावाकस्य पृष्ठे कार्य्या एवं माध्यन्दिनसवनेपि सर्वा विष्टुतयः प्रविष्टाः, योक्थानां विहिता तृतीया विष्टुतिः सा होतुरग्निष्टोमस्य साम्नः कार्य्या आज्यानां विहिता या प्रथमा सा मैत्रावरुणस्योक्थे कार्य्या या पृष्ठानां विहिता द्वितीया सा ब्राह्मणाच्छꣳसिन उक्थे कार्य्या

यैव होतुरुक्थस्य विहिता साछावाकस्योक्थे कार्य्या, एवं तृतीयसवने सर्व्वाः प्रविष्टाः। एवं व्यतिसङ्गे सति सर्व्वा विष्टुतयः आज्येषु सर्व्वाः पृष्ठेषु सर्व्वाश्चोक्थेषु विनियुक्ता भवन्ति ॥ ३ ॥

उक्थव्यवस्थां प्रशंसति ।

**पशवो वै समीषन्ती यदेषा सर्वाणि सवनान्यनुसञ्चरत्यनुसवनमेवैनं पशुभिः समर्द्धयति पशुमान् भवति य एतया स्तुते ॥ ४ ॥**

समीषन्ती समित्येकीभावे सवनत्रयेष्वेकीभूय ईषति गच्छतीति समीषन्ती एषा विष्टुतिः पशवो वै पशुहेतुत्वात्, सा एषा सर्व्वाणि सवनान्यनु सर्व्वेषु सवनेषु सञ्चरतीति यत् तेन एनं यजमानं अनुसवनं सवनएव पशुभिः समृद्धिं करोति, यश्चैतया स्तुते सोपि पशुमान् भवतीति ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे तृतीयाध्यायस्य
एकादशः खण्डः ।

---

अथ द्वादशः खण्डः ।

अथाष्टाचत्वारिंशस्य द्वे विष्टुती तयोः प्रथमामाह ।

षोडशभ्यो हिङ्करोति स तिसृभिस्स द्वादशभिः स एकया, षोडशभ्यो हिङ्करोति स एकया स तिसृभिस्स द्वादशभिः, षोडशभ्यो हिङ्करोति स द्वादशभिस्स एकया स तिसृभिः ॥ १ ॥

स्पष्टार्थः ॥ १ ॥

अथैतां प्रशंसति ।

अन्तो वा अष्टाचत्वारिंशः पशवश्छन्दोमा यत् षोडशभ्यः षोडशभ्यो हिङ्करोति षोडशकलाः पशवः कलाशस्तत् पशूनाप्नोति ॥ २ ॥

योयमष्टाचत्वारिंशस्तोमः असावन्तो वै अत ऊर्द्ध्वं स्तोमान्तरस्यानुक्तत्वात् त्रिवृदादीनामवसानभूतः खलु, पशुसाधनत्वात् छन्दोमाश्च पशवः, ते च पशवः षोडशकलाः अष्टौ शफाश्चत्वारः पादाः शिरो ग्रीवा आत्मा पुच्छमिति एवं सति त्रिष्वपि पर्य्यायेषु यद् षोडशभ्यः षोडशभ्यो हिङ्करोति तत् तेन कलाशः अवयवश एव पशूनन्ततः प्राप्नोति ॥ २ ॥

प्रकारान्तरेण स्तौति ।

द्वादशभिर्विहितैका परिचरा द्वादशमासास्सम्वत्सरो यजमानः परिचरा यद्द्वादशभिर्विदधात्येका

परिचरा भवति यजमानमेव तदन्ततस्संवत्सरे पशुषु प्रतिष्ठापयत्येषा वै प्रतिष्ठिताष्टाचत्वारिंशस्य विष्टुतिः प्रतितिष्ठति य एतया स्तुते ॥ ३ ॥

त्रिषु पर्य्यायेष्वावापस्थानगताभिर्द्वादशभिः स्तोत्रीयाभिरेषा विष्टुतिर्विशेषतो विहिता तृचभागयोस्त्रिर्वचनं परिचराया एकत्वञ्च न्यायतः प्राप्तं । संवत्सरश्च द्वादशमासात्मकः परिचरा यजमानस्थानीयाः एवं सति द्वादशभिः स्तोत्रीयाभिरावापस्थानगताभिरिमां विष्टुतिं विदधाति परिचरा चैका भवतीति यत् तेनान्ततः स्तोमानामवसाने यजमानमेव संवत्सरे पशुषु प्रतिष्ठापयति । समपर्य्यायत्वादेषा खलु विष्टुतिः प्रतिष्ठिताऽष्टाचत्वारिंशस्य, अतो य एतया स्तुते स प्रतितिष्ठति ॥३॥

इति ताण्ड्यमहाब्राह्मणे द्वितीयाध्यायस्य
द्वादशः खण्डः ।

---

अथ त्रयोदशः खण्डः ।

अथान्यां विष्टुतिं दर्शयति ।

षोड़शभ्यो हिङ्करोति स तिसृभिस्स दशभिस्स तिसृभिः, षोड़शभ्यो हिङ्करोति स तिसृभिस्स

तिसृभिस्स दशभिः, षोडशभ्यो हिङ्करोति स दशभिः स तिसृभिः स तिसृभिर्नेदीयः संक्रमा ॥ १ ॥

पर्य्यायात्पर्य्यायान्तरं संक्रामन्ती समानसंख्यास्वेव संक्रमणान्नेदीयः संक्रमैषा ॥ १ ॥

अथैतां स्तौति।

अन्तो वा अष्टाचत्वारिंशो यथा महाद्वृक्षस्याग्रं स्पृष्ट्वा नेदीयः संक्रमात् संक्रामत्येवमेतन्नेदीयः संक्रमया नेदीयः संक्रमात् संक्रामति ॥ २ ॥

त्रयस्त्रिंशस्य नेदीयः संक्रमार्थवादवदिदमपि व्याख्येयं ॥ २ ॥

प्रकारान्तरेण स्तौति।

दशभिर्विहिता तिस्रः परिचरा दशाक्षरा विराडेतावान् पुरुषो यदात्मा प्रजा जाया यद्दशभिर्विदधाति तिस्रः परिचरा भवन्ति यजमानमेव तत् विराज्यन्नाद्येऽन्ततः प्रतिष्ठापयत्यन्नादो भवति य एतया स्तुते ॥ ३ ॥

यत् या विष्टुतिर्दशभिरावापस्थानगताभिः स्तोत्रीयाभिर्विहिता तिस्रः परिचराः परिचरस्थाने तिस्रो भवन्तीत्यर्थः।

अन्नाद्यरूपा विराडपि प्रतिपादं दशाक्षरा, आत्मा प्रजा पुत्रपौत्रादिरूपा जाया चेति यदेतत्त्रितयमस्ति एतावान् हि पुरुषः एवं सति आवापस्थाने यद्दशभिर्विदधातीमां विष्टुतिं तिस्रः परिचरा भरन्ति तत्तेन प्रजया जायया च सहितं यजमानमेवान्नाद्ये अन्नाद्यरूपे विराजि अन्ततः स्तोमसमाप्तौ प्रतिष्ठापयति स्तोता, अतो य एतया स्तुते सोऽन्नादो भवति अदनीयान्नबाहुल्योपेतो भवति।

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥ ३॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकवुक्क-भूपालसाम्राज्यधुरन्धरेण सायनाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे तृतीयाध्यायस्य त्रयोदशः खण्डः।

तृतीयाध्यायः समाप्तिमगमत्।

---

# चतुर्थोऽध्यायः ।

अथ प्रथमः खण्डः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥ १ ॥
स्तोमानां दशरात्रस्य प्रोक्ता विष्टुतयः क्रमात् ।
गवामयनिकानां च ता एवेत्यवगम्यते ॥ २ ॥
शतानि त्रीणि षष्टिश्च विषुवांश्च चतुर्थके ।
प्रोक्तानि गव्यसत्रस्य सुत्याहानि क्रमादिह ।
तानि संगृह्य वक्ष्यन्ते बुद्धिव्युत्पत्ति सिद्धये ॥ ३ ॥

द्विविधं गवामयनं दशमाससाध्यं द्वादशमाससाध्यञ्च तस्य द्वादशमासनिर्वर्त्यस्य प्रायणीयोतिरात्रः प्रथममहस्ततश्चतुर्विंशः उक्थ्य आरम्भणीयः ते उभे अहनी अनुष्ठाय ज्योतिर्गौरायुर्गौ-रायुर्ज्योतिरित्यभिप्लविकः षडहः स चतुर्वारमावर्त्तनीयः तत-स्त्रिवृदादिसोमषट्कसाध्यः पृष्ठ्यः षडहः एवं पञ्चभिः षडहैरेको मासः पूर्य्यते एतस्यैवावर्त्तनेन पञ्चमासाः सम्पाद्याः तत्र षष्ठे मासादौ त्रयोभिप्लवाः षडहाः कार्य्याः ततः एकः पृष्ठ्यः षडहः

ततोभिजिदेकमहः त्रयः स्वरसामान इत्येवमष्टाविंशत्यहानि आद्याभ्यां प्रायणीयचतुर्विंशाभ्यां षष्ठमासपूरणं इत्थं पूर्व्वपक्षे अशीत्युत्तरशतं संख्यान्यहानि सम्पन्नानि ततो विषुवमेकमहः सोस्य सत्रस्य प्रधानभूतः सप्तमे मासस्यादौ त्रयः स्वरसामानः प्रतिलोमाः कार्य्याः ततो विश्वजिदावृत्तः पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भस्त्रिवृदुत्तमः ततस्त्रयोभिप्लवाः षडहाः आवृत्ताः एवमष्टाविंशत्यहानि स्युः अस्य च मासस्य महाव्रतातिरात्रौ च ततोभिधास्यमानः पूरकः स सप्तमो मासः ततः पृष्ठ्यः षडहः पूर्वकैश्चतुर्भिराभिप्लवकैः प्रतिलोमक्रमेणानुष्ठितैरष्टमो मासः स एवावृत्त्या नवमदशमैकादशा अपि सम्पाद्याः द्वादशमासस्यादौ त्रयोभिप्लवः षडहः ततो गोरायुषि द्वे अहनी द्वादशाहस्य दशाहानि चेति त्रिदशाहानि स द्वादशो मासः ततो महाव्रतमुपान्त्यमहः तेन उदयनीयोतिरात्रइत्यपि सप्तममासस्य पूरकाविति तदेतद्गवामयनसत्रं विधास्यन् तन्नामनिर्व्वचनप्रदर्शनायादावाख्यायिकामाह।

## गावो वा एतत् सत्रमासत तासां दशसु मासु शृङ्गाण्यजायन्त ता अब्रुवन्नराल्मोत्तिष्ठामोपशा नो ऽज्ञतेति ता उदतिष्ठन्॥ १॥

पुरा खलु गावः एतत्सम्वत्सरसत्रमासत अन्वतिष्ठन् आसिचोदना अपायचोदना च तत्र लिङ्गमिति मीमांसकाः,

अत्रासिरूपपूर्वतिथे चानुष्ठाने ये वर्त्तेते अत इति तदङ्गैरनुष्ठितं अत इदं गवामयनमित्याचक्षते तासां सत्रस्थितानां मध्ये कासाञ्चिद्गवां दशसु मा:सु मासेषु यदन्ते मासि इत्यादिना मासशब्दस्य मा:सुभाव: तेष्वनुष्ठितेषु शृङ्गाण्यजायन्त ता जातशृङ्गा अब्रुवन् परस्परमुक्तवत्य: किमिति अराध्मा अस्त्ज्ञा अभूम अतोवायमुत्तिष्ठामासत्वं समायाम अराध्मेति यदुक्तं तद्व्याचष्टे उपशा: आ अभित: शिर: प्रदेशमुपेत्याश्नरन्ति इत्योपशा: शृङ्गाणि तानि नोऽस्माकं अज्ञता जातान्यभूवन्निति सम्बन्ध: अज्ञतेति जनीप्रादुर्भाव इत्यस्मात् लुङि बहुवचने मन्त्रेघसेत्यादिना व्लेर्लुकि गमहनजनेत्युपधालोपे रूपं, एवमुक्ता ता गाव: सत्रादुदतिष्ठन्। ता एवं दशभिर्मासै: फलप्राप्तैर्दशमासनिर्व्वर्त्यमपि गवामयनमस्तीत्युक्तं भवति ॥ १ ॥

अथ द्वादशमासनिर्व्वर्त्यमप्यस्तीति दर्शयति ।

तासान्त्वेवाब्रुवन्नासामह्वा एवेमौ द्वादशौ मासौ सꣳसम्वत्सरमापयामेति तासान्द्वादशसु मा:सु शृङ्गाणि प्रावर्त्तन्त ता: सर्व्वमन्नाद्यमाप्नुवꣳस्ता एतास्तूपरा स्तस्मात्ता: सर्व्वान्द्वादशमास: प्रेरते सर्वꣳ हि ता अन्नाद्यमाप्नुवन् ॥ २ ॥

तुशब्दो वैलक्षण्यद्योतनार्थः, तासामेव गवां मध्ये काश्चिदब्रुवन् किमित्युच्यते, यौ द्वादशौ द्वादशसंख्यापूरकावेव शिष्टावेकादशद्वादशौ मासौ इमौ आसामहा एवं अनुष्ठायैवं अनुष्ठाय प्रारब्धं सम्वत्सरसाध्यं समापयामेति व्यवहितास्मेति समित्यस्य व्यवहितेन सम्बन्धः, तासां गवां जातानि शृङ्गाणि द्वादशसु माःसु मासेषु पूर्णेषु प्रावर्त्तन्त प्रापयत् दशभिर्मासैः शृङ्गप्राप्तिलक्षणफले सिद्धेपि पुनरश्रद्धया यतो मासद्वयमन्वतिष्ठन् अतो जातानामपि शृङ्गाणां पुनःपतनमित्यभिप्रायः, तथा चैतरेयकं, अथ समापयिष्यामः सम्वत्सरमित्यासत तासामश्रद्धया शृङ्गाणि प्रावर्त्तन्तेति एतास्तूपरा इति ताः पतितशृङ्गाः गावः सर्व्वर्त्तुभवमन्नाद्यमदनीयमन्नं प्राप्नुवन् ता गावस्तूपराः शृङ्गहीनाः दृश्यन्ते तस्मात्ताः सर्व्वान् द्वादशमासो मासान् प्रेरते प्रगच्छन्ति ईर गतौ सीतवातातपेषु सर्व्वदा पुष्टाङ्गा एव यथायथं गच्छन्ति शृङ्गिण्यो महिष्यादयस्तु कृशा भवन्ति, तस्मादित्युक्तं कस्मादित्याह हि यस्मात्ता गावः सर्व्वमन्नाद्यमाप्नुवन् तस्मात्सर्व्वर्त्तुषु पुष्टाङ्गा भवन्ति तथा चैतरेयकं ऊर्ज्जमसमभवत तस्मादुताः सर्व्वभूतान्तरमुत्तिष्ठन्तीति ॥ २ ॥

उक्तार्थं जानतः फलमाह।

**सर्वमन्नाद्यमाप्नोति य एवं वेद ॥ ३ ॥**

स्पष्टोर्थः ॥ ३ ॥

तदेवं दशमासनिर्व्वर्त्यं द्वादशमासनिर्व्वर्त्यं चेति द्विविधं गवामयनं प्रतिपादितं, तयोर्ज्योतिष्टोमदर्शपूर्णमासादिवदेतत्काम एतत्कुर्य्यादिति कामफलसम्बन्धफलविशेषश्रवणाद्विश्वजिन्न्यायेनात्यन्ताश्रुतस्य स्वर्गस्य कल्पनाया अन्याय्यत्वाद्रात्रिसत्रन्यायेनार्थवादिकस्य समृद्धिफलस्य वाक्यशेषे श्रुतत्वादश्रुतत्वाच्छ्रुतशरीय इति समृद्धिकामा एतत्सत्रमासीरन्निति विधिरुन्नेतव्यः। तैत्तिरीयके समृद्धिफलकत्वं स्पष्टमाम्नातं, य एवं विद्वान् सम्वत्सरमुपयन्त्याब्रुवन्त्येवेति। अथास्य सत्रस्य पूर्व्वोक्तान्यहानि क्रमेण विधास्यन्नतिरात्रसंस्थं प्रथममहर्विधातुमाख्यायिकामाह।

**प्रजापतिर्वा इदमेक आसीत् सो कामयत बहु स्यां प्रजायेयेति स एतमतिरात्रमपश्यत्तमाहरत्तेनाहोरात्रे प्राजनयत् ॥ ४ ॥**

यदिदं दृश्यमानं जगत् सृष्टेः पूर्वं प्रजापतिरेकएवासीत् प्रलयावस्थायामव्याकृते कारणे कार्य्यप्रपञ्चस्य लीनत्वात् सृष्टौ हिरण्यगर्भ एक एवासीदित्यर्थः स एकलः प्रजापतिरकामयत कामनामकरोत् किमिति बहु स्यां व्यगिरिनदीसमुद्रादिभेदेनानेकविधः स्यां भवेयं, तदर्थमहं प्रजायेय अहमेव कार्य्येण रूपेण परिणतो भवेयमिति, स एवं कामयमानः प्रजापतिः सृष्ट्युपायत्वेन एतं गवामयनस्याद्यमतिरात्रमपश्यत् दृष्टवान्

दृष्ट्वा च तमाहरत् तदन्वतिष्ठत् तेनानुष्ठितेनाहोरात्रे अहश्च रात्रिं च प्राजनयत् उदपादयत् सर्वकारणभूतः प्रजापतिः अहोरात्रप्रमुखं कृत्स्नं जगत् यज्ञरूपेणैव साधनेन ससर्जेति संग्रहार्थः ॥ ४ ॥

अथेदानीन्तमतिरात्रम्विधत्ते।

**यदेषोतिरात्रोभवत्यहोरात्रे एव प्रजनयन्त्यहोरात्रयोः प्रतितिष्ठन्त्येतावान्वाव सम्वत्सरो यदहश्च रात्रिश्चाहोरात्राभ्यामेव तत्सम्वत्सरमाप्नुवन्ति ॥ ५ ॥**

एषः प्रजापतिना दृष्टोतिरात्रः गवामयनस्य प्रथममहर्भवतीति यत् तेन सत्रानुतिष्ठन्तो यजमाना अहोरात्रे एव प्रजनयन्ति उत्पादयन्ति स्वाधीने कुर्व्वन्तीत्यर्थः। तथा सति तयोः स्वाधीनयोः प्रतितिष्ठन्ति प्रतिष्ठिता भवन्ति तत्र यद्यपि यद्वृत्तयोगासिद्धवदनुवादता प्रतिभाति तथापि यदाग्नेयोष्टाकपाल इतिवदप्राप्तत्वादतिरात्रस्य विधेयता द्रष्टव्या। न केवलमहोरात्रयोः प्रतिष्ठा किन्तु तत्सम्पाद्यात्मकं प्रतिष्ठितं सम्वत्सरमपि प्राप्नुवन्तीत्याह एतावानित्यादिना। ५ ॥

अथैनमतिरात्रमवयुज्य प्रशंसति।

**यज्ज्योतिष्टोमो भवति यज्ञमुखन्तदभुवन्ति यदुक्थो यज्ञक्रतोरनन्तरयाय यद्रात्रिः सर्वस्याप्त्यै ॥ ६ ॥**

अथ षोडशिकोऽयमतिरात्र इत्युक्तं, कृप्तो ज्योतिष्टोमोऽतिरात्रः स षोडशिक इति । अथ तद्व्यतिरिक्ताभिस्तिसृभिः संस्थाभिरवयुज्य स्तूयते । यद्यपि सर्व्वेषामपि ज्योतिष्टोमत्वमस्ति तथापि उक्थातिरात्रसंस्थयोः पृथग्वक्ष्यमाणत्वादग्निष्टोमसंस्थैव ज्योतिष्टोमशब्देनोच्यते । ज्योतींऽषि त्रिवृदादयः स्तोमा यस्य स ज्योतिष्टोमः । तथाच तैत्तिरीयकं त्रिवृत्पञ्चदशसप्तदश एकविंऽश एतानि ज्योतींऽषि य एतस्य स्तोमा इति । यज्ज्योतिष्टोमोग्निष्टोमो द्वादशस्तोत्रात्मको भवति ज्योतिष्टोमस्य हि अग्निष्टोमसंऽस्था मुख्या, एष वाव प्रथमो यज्ञानामिति श्रुतेः । तत्तेन यज्ञमुखं यज्ञानां मुखभूतमग्निष्टोमं प्राप्य आर्ध्नुवन्ति सत्रिणः समृद्धा भवन्ति तथा तस्मिन्नतिरात्रे उक्थः पञ्चदशस्तुतशस्त्रसाध्यः क्रतुरन्तर्भवतीति यत् तत् यज्ञक्रतोः संपूर्णस्य यज्ञस्य अनन्तरयाय अपरित्यागाय भवति । उक्थसंस्थायां हि क्रतुः संपूर्णो भवति यथापूर्व्वयोः सवनयोः पञ्चदशपञ्चदशस्तोत्राणि तथा तृतीयेपि स्तोत्रपञ्चकसद्भावात् । अग्निष्टोमस्त्वसंपूर्णः क्रतुः उक्तहेतोरभावात् । अपिच त्रिष्वपि सवनेषु प्रस्थिता याज्या देवताः शस्त्रैः प्रशस्यन्ते, यथा हि प्रातःसवने मैत्रावरुणस्य प्रस्थितयाज्या देवता मित्रावरुणौ शस्त्रेपि तावेव प्रशस्येते ब्राह्मणाच्छंऽसिन इन्द्रप्रस्थितयाज्या देवता सैव तदीयशस्त्रेण स्तूयते तथा माध्यन्दिनसवनस्य सर्वैन्द्रत्वात् प्रस्थितयाज्यासु शस्त्राणि चैन्द्राण्येव तथा तृतीयसवने मैत्रावरुणस्यैन्द्रावरुणा स्तुतपा इति । ऐन्द्रावारुणी प्रस्थितयाज्या

इन्द्रश्च सोमं पिबन्तं बृहस्पतिः ऐन्द्राबार्हस्पत्या ब्राह्मणाच्छंसिनः प्रस्थितयाज्या इन्द्राविष्णूपि पिबतमित्यच्छावाकस्य चैन्द्रा वैष्णवी । यदि तृतीयसवनएतद्देवत्यानि शस्त्राणि नशस्येरन् प्रस्थितयाज्यदेवतास्तुत्यभावेन क्रतुरपूर्णः स्यात् उक्थेषु च प्रथमशस्त्रमैत्रावरुणं द्वितीयमैन्द्राबार्हस्पत्यं तृतीयमैन्द्राविष्णवं एतेषु तृतीयसवने सवनान्तरवत् प्रस्थितयाज्यदेवतानां प्रशंसा जातेति यज्ञक्रतुः संपूर्णो भवति । इत्थमन्तर्भूतेन संख्याद्वयेन प्रशस्तविहितयातिरात्रसंख्ययापि प्रशंसति यदित्यादिना । अत रात्रिशब्देन त्रयः पर्य्याया: सन्धिः स्तोत्रं तच्छस्त्राणि च लक्ष्यन्ते । रात्रिर्भवतीति यत् तत् सर्व्वेषां स्तुतशस्त्राणां परिगृहीतत्वात् सर्वस्य संपूर्णस्य यज्ञस्य प्राप्त्यै भवति । न च यद्येषोतिरात्रो भवतीति च यज्ज्योतिष्टोमो भवति यदुक्थो भवति यद्रात्रिरित्यादिवाक्यत्रयेण पृथक्पृथक् कर्म्मविधिरिति मन्तव्यं । वैश्वानरं द्वादशकपालन्निर्वपेत् पुत्रे जात इति विहितायां जातेष्ट्यां यदष्टाकपालो भवति यन्नवकपालो भवतीत्यादिवदश्रुतानुवादत्वेन स्तुतिपरत्वात् ॥ ६ ॥

क्रमप्राप्तस्य चतुर्विंशस्य बहुवक्तव्यसद्भावात पृथगवक्तुकामः इदानीमभिप्लवपृष्ठयोरङ्गां संग्रहेण क्लृप्तिमभिदधानआदावभिप्लविकपूर्वं त्र्यहं विधातुं प्रस्तौति ।

स एतान् स्तोमानपश्यत् ज्योतिर्गौरायुरितीमे वै

**लोका एते स्तोमा अयमेव ज्योतिरयम्मध्यमो गौर-सावुत्तम आयुः ॥ ७ ॥**

स पूर्व्वोक्तः प्रजापतिः एतान् स्तोमान् स च स्तोमशब्देन त्रिवृदादि स्तोमवन्त्यहानि लक्ष्यन्ते। तानि ज्योतिर्गौरायुरिति एतन्नामकान्यपश्यत्। तत्र ज्योतिरग्निष्टोमसंस्थः गौरायुषी उक्थसꣳस्थे ज्योतिष इयं स्तोमक्लृप्तिः। त्रिवृद्बहिष्पवमानं पञ्च-दशान्याज्यानि पञ्चदशो माध्यन्दिनः पवमानः सप्तदशानि पृष्ठानि सप्तदश आर्भव एकविꣳशोग्निष्टोमसामेति। अथ गोष्टोमस्य पञ्चदशो बहिष्पवमानः त्रिवृदाज्यानि सप्तदशम्माध्य-न्दिनꣳ सवनमेकविꣳशं तृतीयसवनं। अथायुष्टोमस्य त्रिवृ-द्बहिष्पवमानं पञ्चदशान्याज्यानि सप्तदशम्माध्यन्दिनꣳ सवन-मेकविंशं तृतीयसवनमिति। एते उक्ताः स्तोमा इमे लोका वै भूरादिकाः खलु कः कतमोलोक इति बुभुत्सायामाह अयमेव लोकोज्योतिः अयम्मध्यमो अन्तरिक्षलोको वै असा-वुत्तमस्तृतीयः स्वर्लोक आयुः स्तोमत्रयस्य लोकत्रयेण सह संख्यासाम्यात् तत् शब्दता एतैः त्रिभिः स्तोमैः साधनै स्त्रीन् लोकान् प्राजनयदिति शेषः ॥ ७ ॥

अथैतान् विधत्ते।

**यदेते स्तोमा भवन्तीमानेव लोकान् प्रजनयन्त्येषु लोकेषु प्रतितिष्ठन्ति ॥ ८ ॥**

यद्देषोतिरात्रो भवतीति वाक्यवदेतत्सर्व्वं व्याख्येयं ॥ ८ ॥

अभिप्लवषडहस्योत्तरं व्यहं विधातुमाह।

स एतन्त्र्यहं पुनः प्रायुङ्क्त तेन षड़हेन षट्-क्रतून् प्राजनयत् ॥ ९ ॥

स प्रजापतिरेतं पूर्व्वोक्तं व्यहं पुनः प्रयुक्तवान्। गौरायु-र्ज्योतिरिति क्रमोत्रावगन्तव्यः। तथा चापस्तम्बः। ज्योतिष्टोम-मग्निष्टोमं रथन्तरसामानङ्गामुक्थं बृहत्सामानमायुषमुक्थं-रथन्तरसामानं ज्योतिष्टोमं बृहत्सामानमिति। तेन षडहेन षट्क्रतून्वसन्तादीन् प्राजनयत् सृष्टवान् ॥ ९ ॥

अथार्थवादानुगुण्याय पूर्व्वविहितेन व्यहेन संयुज्य इम-मुत्तरं व्यहं विधत्ते।

यद्देष षड़हो भवति ऋतूनेव प्रजनयन्ति ऋतुषु प्रतितिष्ठन्ति ॥ १० ॥

स्पष्टार्थः ॥ १० ॥

अथ द्वितीयं षडहं विधातुमाह।

स एतꣳ षड़हं पुनः प्रायुङ्क्त ताभ्यां द्वाभ्याꣳ षड़हाभ्यां द्वादशमासः प्राजनयत् ॥ ११ ॥

पूर्व्वप्रयुक्तमेव षडहं पुनरपि प्रयुक्तवान् तैर्मिलितैर्दशभि-रहोभिर्द्वादशमासो मासान् प्राजनयत् ॥ ११ ॥

पूर्व्ववदर्थवादानुगुण्याय विहितेन षडहेन सह द्वितीयं षडहं समुच्चित्य विधत्ते।

**यदेतौ द्वौ षड़हौ भवतो मासानेव प्रजनयन्ति मासेषु प्रतितिष्ठन्ति ॥ १२ ॥**

पूर्व्ववद्व्याख्येयं ॥ १२ ॥

तृतीयचतुर्थौ षडहौ विधातुमाह।

**स एतौ द्वौ षड़हौ पुनः प्रायुङ्क्त तैश्चतुर्भिः षड़हैश्चतुर्विंशतिमर्द्धमासान् प्राजनयत् ॥ १३ ॥**

एतौ पूर्व्वप्रयुक्तावेव षडहौ पुनः प्रयुक्तवान् तदेवं प्रयुक्तैश्च-तुर्भिः षडहैश्चतुर्विंशतिसंख्यान्यहानि सम्पन्नानि। तैश्च तत्संख्याकानर्द्धमासान् प्रजापतिः सृष्टवान् ॥ १३ ॥

अथ पूर्व्ववद्विहितेन षडहद्वयेन सह अर्थवादानुगुण्याय द्वमं तृतीयचतुःषडहद्वयं विधत्ते।

**यदेते चत्वारः षड़हा भवन्त्यर्द्धमासानेव प्राजन-यन्त्यर्द्धमासेषु प्रतितिष्ठन्ति ॥ १४ ॥**

स्पष्टोर्थः ॥ १४ ॥

इत्थं षडहचतुष्कं विधाय पञ्चमषष्ठषडहं विधातुमाह ।

**स इदं भुवनं प्रजनयित्वा पृष्ठेग्न षड़हेन वीर्य्य-मात्मन्यधत्त ॥ १५ ॥**

स प्रजापतिः इदमहोरात्रादिरूपं भुवनं सर्व्वं जगत् प्रकर्षेणोत्पाद्य निर्वीर्यः सन् प्रयुक्तेन पृष्ठ्येन षडहेन त्रिवृदादिस्तोमकेन वीर्य्यं सृष्टस्य जगतो भागरक्षणाद्यर्थं सामर्थ्यमात्मनि स्वस्मिन्नधत्त पुनर्हृतवान् ॥ १५ ॥

तमिमं पृष्ठ्यषडहं विधत्ते ।

**यदेष पृष्ठ्यः षड़होभवति वीर्य्य एवान्ततः प्रतितिष्ठन्ति ॥ १६ ॥**

यस्मात्प्रजापतिरिमं षडहं वीर्य्यधारणार्थं प्रयुक्तवान् तस्मादिमं षडहं प्रयुञ्जानः सत्रिणः अन्ततो मासावसाने वीर्य्ये एव प्रतिष्ठिता भवन्तीत्युक्तं । इत्थमनुष्ठितषडहपञ्चमात्मकेन मासेन तत्संघात्मकं संवत्सरं प्रजापतिः सृष्टवान् । सत्रिणोपि षडहपञ्चकानुष्ठानेन मासद्वारा सम्वत्सरमेव स्वभोगसाधनमुत्पादयन्ति तस्मिंश्च प्रतिष्ठिता भवन्ति इति ॥ १६ ॥

तस्य स्तुतिः ।

**तेन मासान् संवत्सरं प्राजनयद्यदेषमासो भवति**

**संवत्सरमेव प्रजनयन्ति संवत्सरे प्रतितिष्ठन्ति ॥१७॥**

स्पष्टोर्थः ॥ १७ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्थाध्यायस्य
प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

प्रायणीयातिरात्रानन्तरमनुष्ठेयं चतुर्विंशमन्यद्द्वितीयमहः बहुवक्तव्यत्वेन पश्चाद्विधास्यत इति यदवादि अतस्तदहर्विदधाति ।

**प्रायणीयमेतदहर्भवति ॥ १ ॥**

एतद्वक्ष्यमाणमहः प्रायणीयं प्रकर्षेण यान्ति गच्छन्ति स्वर्गमनेनेति व्युत्पत्तिः । एतत्संज्ञकं गवामयनस्य द्वितीयमहरनुष्ठेयं भवति । यद्यपि श्रुत्यन्तरे प्रथमविहितस्यातिरात्रस्यैव प्रायणीय इति संज्ञा प्रसिद्धा तथापि प्रथमोत्तमयोरतिरात्रयोः सर्वत्र साधारणत्वादस्यैवाह्नोगवामयने असाधारणं प्राथम्यमितिकृत्वा एतदादिकङ्गवामयनस्वरूपमित्यस्मिन् द्वितीयेऽहनि प्रायणीयशब्दोऽत्र प्रयुज्यते ॥ १ ॥

उक्तमहर्नामनिर्वचनद्वारा प्रशंसति ॥

प्रायणीयेन वा अह्ना देवाः स्वर्गं लोकं प्रायन्यत् प्रायꣳस्तत्प्रायणीयस्य प्रायणीयत्वम् ॥ २ ॥

पुरा देवाः प्रायणीयेन प्रायणीयाख्येन खल्वह्ना स्वर्गं लोकं प्रायन् प्राप्ताः यद्यस्मात्प्रायन् स्वर्गं प्रागमन् तस्मादस्याह्नः प्रायणीयत्वं प्रायणीयसाधनत्वात्प्रायणीयमिति नाम सम्पन्नं ॥ २ ॥

अथैतस्याह्न उक्तरूपेण प्रशस्तत्वात् सर्वैर्ऋत्विग्भिरस्मिन्नहनि अवश्यमृत्विग्भिर्भाव्यमित्यन्वयव्यतिरेकाभ्यामाह ।

तस्मात्प्रायणीयस्याह्न ऋत्विजा भवितव्यमेतद्धि स्वर्गस्य लोकस्य नेदिष्ठं य एतस्यर्त्विङ् भवति हीयते स्वर्गाल्लोकात् ॥ ३ ॥

यस्मादेतदहः स्वर्गप्राप्तिसाधनं तस्मादस्याह्नः प्रयोगाय ऋत्विजा जातावेकवचनमृत्विग्भिर्भवितव्यं, एतत् खलु द्वितीयमहः स्वर्गलोकस्य नेदिष्ठतममन्तिकतमं साक्षात् प्राप्तिसाधनत्वात् । अतो य एतस्यर्त्विक् न भवति आर्त्विज्यन्न करोति स स्वर्गाल्लोकात् हीयते हीनो वियुक्तो भवति ॥ ३ ॥

अथैतस्मिन्नहनि स्तोमं विधत्ते ।

चतुर्विꣳशं भवति ॥ ४ ॥

इदमहरुक्थसंस्थन्तत्र सर्वेषु स्तोत्रेषु चतुर्विंश एव स्तोमः कार्य्यः ॥ ४ ॥

तदेतत् प्रशंसति ।

**चतुर्विंशत्यक्षरा गायत्री तेजोब्रह्मवर्चसङ्गायत्री तेजएव ब्रह्मवर्चसमारभ्य प्रयन्ति ॥ ५ ॥**

अयञ्च स्तोमश्चतुर्विंशतिसंख्याकः गायत्री चतुर्विंशत्यक्षरा सा च गायत्री तेजः प्रजापतिमुखादग्निना सहोत्पन्नत्वात् अस्यास्तेजोरूपं ब्रह्मवर्चसं च तेजोऽवान्तरभेदइति तेजोब्रह्मवर्चसरूपा गायत्री एवं सति चतुर्विंशतिस्तोममतः प्रयुञ्जानाः साक्षादेव प्रत्यक्षमेव संवत्सरं प्रारभन्ते अस्मिन्नहनि प्रयुञ्जानाः संख्याद्वारेण तेजो ब्रह्मवर्चसञ्चारभ्य अवष्टभ्य स्वर्य्यन्ति स्वर्गं गच्छन्ति ॥ ५ ॥

पुनरपि विहितं स्तोमं अनूद्य प्रशंसति ।

**चतुर्विंशं भवति चतुर्विंशो वै संवत्सरः साक्षादेव संवत्सरमारभन्ते ॥ ६ ॥**

चतुर्विंशत्यर्द्धमासात्मकत्वात् संवत्सरस्य चतुर्विंशत्वं तथा सति चतुर्विंशस्तोमं प्रथमतः प्रयुञ्जानाः साक्षादेव प्रत्यक्षमेव संवत्सरमारभन्ते ॥ ६ ॥

अथेमं स्तोमं स्तोत्रीयागतसंख्याद्वारेण प्रशंसति ।

**यावत्यश्चतुर्विंशस्योक्थस्य स्तोत्रीयास्तावत्यः संवत्सरस्य रात्रयः स्तोत्रीयाभिरेव तत् संवत्सरमाप्नुवन्ति ॥ ७ ॥**

पञ्चदशस्तोत्रे अस्मिन्नहनि पञ्चदशस्तोत्रेषु प्रत्येकं चतुर्विंशस्तोत्रीयायुक्तेषु परिगणनायां मिलित्वा षष्ठ्युत्तरत्रिंशस्तोत्रीया भवन्ति। तथा सति चतुर्विंशस्तोमकस्य यावत्यः स्तोत्रीयाः संवत्सरस्यापि तावत्योरात्रयः एवं प्रयुञ्जानाः सत्रिणस्तेन चतुर्विंशेन स्तोत्रीयाभिरेव संवत्सरं प्राप्नुवन्ति ॥ ७ ॥

स्तोत्रसंख्ययापीदमहः प्रशंसति।

**पञ्चदशस्तोत्राणि भवन्ति पञ्चदशार्द्धमासस्य रात्रयोऽर्द्धमासश एव तत् संवत्सरमाप्नुवन्ति ॥ ८ ॥**

स्पष्टोऽर्थः ॥ ८ ॥

अथ स्तोत्रशस्त्राणि समुच्चित्य तत्संख्ययापीदमहः प्रशंसति।

**पञ्चदश स्तोत्राणि पञ्चदश शस्त्राणि समासो मासश एव तत् संवत्सरमाप्नुवन्ति ॥ ९ ॥**

स्पष्टोऽर्थः ॥ ९ ॥

अथास्याह्न उक्थपक्षे किञ्चिद्दोषमाशङ्क्य तत्परिहाराय सामद्वयं विधत्ते ।

तदाहुरीर्म्म इव वा एषा होत्रा यदच्छावाक्या यदच्छावाकमनुसन्तिष्ठत ईश्वरेर्म्मा भवितोरिति यद्युक्थ९ स्यात्त्रैककुभञ्चोद्व९शीयञ्चान्ततः प्रतिष्ठाप्ये वीर्य्यं वा एते सामनी वीर्य्यएवान्ततः प्रतितिष्ठन्ति ॥ १० ॥

तत्तस्मिन् उक्थपक्षमाहुर्ब्रह्मवादिनः किमिति तदुच्यते होतृव्यतिरिक्तानां होत्रकाणां किमहो यत् वा अच्छावाक्या अच्छावाकसम्बन्धिनी होत्रा शंसनादिरूपा क्रिया एषा ईर्मेति व्रणमुच्यते, तद्व्रणमनुतिष्ठते अच्छावाकमनुलक्ष्य सन्तिष्ठते अच्छावाकशस्त्रेण समाप्यते नाच्छावाकसमापनेन ईर्म्मयज्ञस्य दुष्टतां भवितो भवितुमीश्वराः समर्थाः भवन्तीत्याहुरित्यन्वयः । अतो यदीयमुक्थं उक्थसंस्थं स्यात् उक्तदोषपरिहाराय त्रैककुभं चोद्व९शीयं चोभे सामनी अन्ततस्तृतीयसवनस्यान्ते प्रतिष्ठाप्य त्रैककुभं ब्रह्मसाम उद्व९शीयमच्छावाकसामेत्येवं कर्त्तव्येत्यर्थः । शाट्यायनेन स्पष्टमाम्नातं, ईर्म्म इव वा एषा होत्राणां यदच्छावाको यदच्छावाकमनुसन्तिष्ठेतेर्म्म इव तुष्टवानाः स्युरिति । तस्य त्रैककुभं ब्रह्मसाम भवत्युद्व९शीयमच्छावाकसामेति य एक इद्विदयते इति तृचे गेयं उद्व९शीयं एते सामनी

वीर्य्यं वै वीर्य्यरूपे एव कथमनयोर्वीर्य्यवत्त्वमुच्यते ककुभमिति शृङ्गवदुन्नतस्थाभिमानं त्रीणि ककुभानि यस्य तत् त्रिककुभं तत्सम्बद्धं त्रैककुभं अतस्त्युन्नतसम्बन्धादेते सामनी वीर्य्यमित्युच्यते उन्नतं हि लोके वीर्य्यवद्भवति उद्वंशीयस्य चोद्वंशमिव येमिर इत्युद्यमनश्रवणादुच्छ्रायप्रतीतेर्व्वीर्य्यत्वं, एवं सति वीर्य्यरूपयोः साम्नोः प्रयोगात् अन्ततस्तृतीयसवनस्यान्ते वीर्य्यएव यजमानाः प्रतितिष्ठन्ति अतोऽच्छावाकसमापनदोषो न भवतीत्यर्थः ॥ १० ॥

अथास्यैवाह्नो विकल्पेन अग्निष्टोमसंस्था कार्य्येत्याह ।

**अथो खल्वाहुरग्निष्टोममेव कार्यमेष वै यज्ञः स्वर्ग्यो यदग्निष्टोम ऊर्द्धोहि होतारमनुसन्तिष्ठते ॥ ११ ॥**

अथो शब्दः पक्षव्यावृत्त्यर्थः । अभिज्ञाः खल्वाहुः किमिति इदमहरग्निष्टोमं अग्निष्टोमसंस्थमेव कार्य्यं न तु अग्निष्टोम इति यत् एष खलु यज्ञः स्वर्ग्यः स्वर्गाय हितः तत् कुतो हेतोः हि यस्मादूर्द्ध्वस्त्रिवृदादिक्रमेण ऊर्द्ध्वाभिमुखः सन् अयमग्निष्टोमो होतारमनुलक्ष्य संन्तिष्ठते होता हि स होत्रीणां मुख्यस्तदीयेनाग्निमारुतशस्त्रेणाग्निष्टोमः परिसमाप्यते अतोऽस्य स्वर्ग्यत्वं ॥ ११ ॥

उक्थत्वे संवत्सरावाप्तिरूपं यत् फलमुक्तं तदप्यत्रापि विद्यत इत्याह ।

द्वादश स्तोत्राण्यग्निष्टोमो द्वादश मासाः संवत्सर-स्तेन संवत्सरसम्मितो द्वादश स्तोत्राणि द्वादश शस्त्राणि तच्चतुर्विंशतिश्चतुर्विंशतिरर्द्धमासाः संवत्सर-स्तेन संवत्सरसम्मितः ॥ १२ ॥

योयमग्निष्टोमः स द्वादश स्तोत्राणि द्वादशानां स्तोत्राणां सङ्घात्मकः संवत्सरश्च द्वादशमासात्मकस्तेनायमग्निष्टोमसंस्थः संवत्सरसम्मितः संवत्सरसदृशस्तेन संवत्सरमेवाप्नुवन्तीत्यर्थः। किंचाग्निष्टोमे द्वादश स्तोत्राणि द्वादश शस्त्राणि भवन्ति तदु-भयम्मिलित्वा चतुर्विंशति सम्पद्यन्ते संवत्सरश्च चतुर्विंश-त्यर्द्धमासात्मकः तेनाप्ययं संवत्सरसम्मितः ॥ १२ ॥

एवमग्निष्टोमसंस्थायाः सिद्धान्तत्वाशङ्कायामुक्थसंस्थैव सिद्धान्तइति निगमयति।

अथो खल्वाहुरुक्थमेव कार्य्यमह्नः समृद्धै ॥१३॥

अथो इति पूर्व्वपक्षव्यावृत्त्यर्थः। उक्थसंस्थमेवैतदहः कार्य्यः, किमर्थमह्नः समृद्धौ सम्पूर्णताया इति ब्रह्मवादिन-श्चाहुः। अग्निष्टोमे हि पूर्वयोः सवनयोः पञ्चपञ्च स्तोत्राणि तृतीये तु द्वे एवेत्यह्नः समृद्धिर्न भवति, उक्थे तु तृतीयसवने पञ्च स्तोत्राणीत्यहः समृद्धं भवति ॥ १३ ॥

उक्थसंस्थाङ्गीकारे युक्त्यन्तरमाह।

**सर्व्वाणि रूपाणि क्रियन्ते सर्व्वं ह्येतेनाह्राप्यते ॥ १४ ॥**

उत्तरेषामह्नां सम्बन्धीनि यानि रूपाणि स्तोमपृष्ठविभक्त्यादीनि तान्यस्मिन्नुक्थे क्रियन्ते अतः सर्व्वं हि यज्ञसम्बन्धिरूपं तेनाह्ना उक्थसंस्थेन आप्यते प्राप्यते तत उक्थसंस्थैव कार्य्येत्यर्थः। सर्व्वरूपकरणञ्च सर्व्वावाप्तिश्च सम्पादनद्वारेणेति निदानकारेणैवमुच्यते, अथो खल्वाहुः सर्व्वाणि रूपाणि क्रियन्त इति आचार्य्याः एतेष्वेव सर्व्वान् स्तोमान् सर्व्वाणि पृष्ठानि सर्व्वाणि विभक्तीर्दशरात्ररूपाणीति विभक्तिमात्रेण कल्पयन्त इति संगृह्योक्त्वा पुनस्त्रिवृत्पञ्चदशौ चतुर्विंशः सम्पाद्यत इत्यादिना एतान्येव स्तोमपृष्ठादीनि प्रत्येकं क्रमेण विविच्य प्रदर्शितानि तत्सर्व्वं तत्रैवावगन्तव्यं ॥ १४ ॥

अस्मिन्नहनि बहिष्पवमानस्य आद्यां स्तोत्रीयां पूर्व्वपक्षतया विदधाति।

**पवन्ते वाजसातये सोमाः सहस्रपाजस इति सहस्रवतो प्रतिपत्कार्य्या ॥ १५ ॥**

प्रतिपद्यते प्रक्रम्यते बहिष्पवमानस्तोत्रे एषा प्रतिपत् सा सहस्रवती सहस्रशब्दोपेता एषा कार्य्या ॥ १५ ॥

एतां प्रशंसति।

**संवत्सरस्य रूपꣳ सर्वानेवैनानेतया पुनाति सर्वानभिवदति ॥ १६ ॥**

अस्यां हि बहुत्वसंख्या सहस्रपदेन प्रतीयते। संवत्सरश्च बहुदिवसात्मकः अत एषा सहस्रवती संवत्सरस्य बहुदिवसात्मकस्य रूपं अनुरूपं अनुगुणेत्यर्थः, अपि चैतान् यजमानान् सर्वानेव एतया प्रतिपदा पुनाति स्तोता शोधयति, कथमिति तदुच्यते यस्मादेषा पवन्ते इत्यनेन बहुवचनेन सर्वानभिवदति प्रतिपादयति अत इत्यर्थः यद्यपि तत्र बहुवचनेन स्तोमबहुत्वमेव प्रतीयते तथापि बहुत्वश्रुतिसामान्यात् सर्वान् यजमानानेतया पुनातीति श्रुतिः ॥ १६ ॥

इत्थं ब्राह्मणाभिप्रेतं पक्षमभिधाय स्वाभिमतं पक्षं दर्शयति।

**अथो खल्वाहुः पवस्व वाचो अग्रिय इत्येव कार्या मुखं वा एतत् संवत्सरस्य यद्वाचोग्रम्मुखतएव तत् संवत्सरमारभन्ते ॥ १७ ॥**

अथो खल्विति पक्षान्तरव्यावृत्त्यर्थः। पवस्व वाच इत्येषैव बहिष्पवमानस्य प्रतिपत्कार्य्येति ब्रह्मवादिनश्चाहुः। अस्य प्रायणीयस्याह्न एषाभिरूपेति स्तौति मुखं वा एतत् संवत्सरस्य यद्वाचोग्रं मुखतएव तत् संवत्सरमारभन्त इति। वाचः स्तोत-

शस्त्राल्लिकाया: अग्र्यं प्राथम्यं प्रथमप्रयोगइति यत् एतत् संवत्सरस्य सत्रस्य गवामयनस्य मुखं वै भवति, अस्याञ्च प्रतिपदि पवस्व वाचो अग्रिय इति अग्रशब्दो विद्यते। अनेन च श्रुतिसामान्येन च स्तुतशस्त्रादिवाङ्निष्पाद्यस्य गवामयनस्य मुखभूतमग्रं प्रतीयते। एवं सत्येषा प्रतिपद्भवतीति यत्तेन संवत्सरसत्रं मुखतएव आरभन्ते यजमाना: प्रक्रमन्ते अस्यामृच्यग्रियशब्दसद्भावात् आग्रियस्य चतुर्विंशस्य रूपेत्यभिप्राय: ॥१७॥

एषा प्रजननहेतुत्वादपि प्रशस्तेत्याह।

**मिथुनमिव वा एषा व्याहृति: पवस्वेति पुंसो रूपं वाच इति स्त्रिया: सोमेति पुंसो रूपञ्चित्राभिरिति स्त्रिया मिथुनमेवैभ्यो यज्ञमुखे दधाति प्रजननाय॥ १८॥**

एषा मन्त्रगता व्याहृतिरुक्तिर्मिथुनमिव वै इत्यवधारणे मिथुनरूपैव भवति तदेव दर्शयति पवस्वेति यत् पवनं प्रतिपाद्यते तत् पुंस: पुरुषस्य रूपं प्रायेण सोमस्य पवनं पुरुषएव करोति यद्वा पवनकर्त्तु: सोमस्य पुंस्त्वादस्य पुंरूपत्वं वाच इति स्त्रीलिङ्गत्वात् स्त्रियारूपं तथा सोमेति यदामन्त्रितं तत् पुंसो रूपं चित्राभिरिति स्त्रिया: एवं सति एषा प्रतिपद्भवतीति यत् तेन एभ्यो यजमानेभ्यो यज्ञमुखे मिथुनमेव दधाति किमर्थं प्रजननाय यजमानानां प्रजोत्पत्तये॥ १८॥

अथास्याह्न अग्निष्टोमस्तोत्रे ब्राह्मणान्तरसिद्धं किञ्चित् साम विदधाति।

**अग्ने युङ्क्ष्वा हि येत वेति जराबोधीयमग्निष्टोम साम कार्य्यं युक्तेनैव संवत्सरेण प्रयन्ति चतुर्विंशत्यक्षरासु भवति चतुर्विंशस्य रूपं ॥ १९ ॥**

अग्ने युंच्वा हीत्यस्मिंस्तृचे गायत्रे जराबोधीयं जराबोधेत्यस्यामृच्युत्पन्नं साम यद्यपि नाधीमहे तथाप्यूहेन अस्मिन्नहनि अग्निष्टोमसामत्वेन तत्कार्य्यं। एवं सति युङ्क्ष्वेति मन्त्रे युक्तत्वलिङ्गदर्शनात् युक्तेनैव परस्परसम्बद्धेनैव संवत्सरसत्रेण प्रयन्ति गच्छन्ति सत्रस्य पारं प्राप्नुवन्तीत्यर्थः। किञ्च एतत्साम चतुर्विंशत्यक्षरासु गायत्रीषु भवति, एतच्चाहश्चतुर्विंशस्तोमकं तथा सति संख्यासामान्यात् तत्साम अस्याह्नोऽनुरूपं भवति ॥ १९ ॥

अथ स्वाभिमतं सिद्धान्तमाह।

**अथो खल्वाहुर्यज्ञायज्ञीयमेव कार्य्यं ॥ २० ॥**

स्पष्टार्थः ॥ २० ॥

इमं पक्षं प्रशंसति।

**पन्था वै यज्ञायज्ञीयं पथ एव तन्न यन्ति ॥ २१ ॥**

यज्ञायज्ञीयमग्निष्टोमसामेति यदेतत् एष खलु पन्था

यज्ञस्य न्याय्योमार्गः यज्ञायज्ञीयमग्निष्टोमसाम कुर्व्वन्तीति यत् तत्तेन पथः मार्गादेव एतान् न यन्ति न गच्छन्ति प्रच्युता न भवन्ति ॥ २१ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्थाध्यायस्य
द्वितीयः खण्डः।

---

अथ तृतीयः खण्डः।

अथास्मिन्नेवाहनि माध्यन्दिनसवने ब्राह्मणाच्छंसिनः पृष्ठस्तोत्रनिवर्त्तकमेकं साम विधत्ते।

**अभीवर्त्तो ब्रह्मसाम भवति ॥ १ ॥**

तच्चोदग्नस्तीवहमित्यस्मिन् योनावुत्पन्नं साम अभीवर्त्ताख्यं एतत् साम ब्राह्मणाच्छंसीयपृष्ठस्तोत्रमनुशंसति, तत्र वक्ष्यमाणासु ऋक्षु कर्त्तव्यं ॥ १ ॥

अथैतन्नामनिर्व्वचनेन प्रशंसति ।

**अभीवर्त्तेन वै देवाः स्वर्गं लोकमभ्यवर्त्तन्त यदभीवर्त्तो ब्रह्मसाम भवति स्वर्गस्य लोकस्याभिवृत्त्यै ॥ २॥**

अभीवर्त्ताख्येन साम्ना देवाः स्वर्गं लोकमभ्यवर्त्तन्त अगच्छन् अतएवास्याभिवृत्तिसाधनत्वादस्य साम्नोऽभीवर्त्तइति

संज्ञा निष्पन्ना अतएव शाट्यायनकं यदभ्यवर्त्तन्त तदभीवर्त्तस्या-भीवर्त्तत्वमिति, अभिपूर्व्वाद्वृतवर्त्तन इत्यस्मात्करणे घञ् उपसर्गस्य घञ्यमनुष्यबहुलमिति पूर्व्वपदस्य दीर्घः। एवं सति अस्मिन्नहनि अभीवर्त्तो ब्रह्मणः पृष्ठसाम भवतीति यत् तत् स्वर्गस्य लोकस्याभिहत्यै अभिवर्त्तनायाभिगमनाय सत्रिणां सम्पद्यते ॥ २ ॥

अस्य च साम्नः इन्द्रं गीर्भिर्हवामह इति पादस्यान्त्यं हे इत्येतत् हा इति विकृतं निधनं तदेतदनूद्य प्रशंसति।

**एकाक्षरणिधनो भवत्येकाक्षरा वै वाग्वाचैव तदारभ्य स्वर्गं लोकं यन्ति ॥ ३ ॥**

अयमभीवर्त्त एकाक्षरणिधनः हे इत्येकमक्षरन्निधनं यस्य तादृशो भवति वागप्येकाक्षरा इति तत्तेन एकाक्षरनि-धनप्रयोगेण एकाक्षरया वाचैव यज्ञमारभ्य स्वर्गं लोकं यान्ति यजमाना गच्छन्ति। एतदभीवर्त्ताख्यं साम पूर्व्वस्मिन् पक्षसि विद्यमानानामभिप्लविकानामह्नां स्वरसाम्नां च माध्यन्दिने सवने वक्ष्यमाणासु ऋक्षु ब्रह्मणः पृष्ठस्तोत्रतया कर्त्तव्यं तथा उत्तरस्मिन् पक्षसि इन्द्रक्रतुन्न आभरेत्येक एव प्रगाथः ब्रह्म-सामाश्रयः कर्त्तव्यः। प्रत्यहं तस्मिन् प्रगाथे अन्यदन्यत्साम ब्रह्मणः पृष्ठस्तोत्रार्थं कर्त्तव्यं ॥ ३ ॥

तदेतदुभयं विधत्ते ॥

## साम्नेतो यन्त्यृचा पुनरायन्ति ॥ ४ ॥

साम्ना अभीवर्त्ताख्येन पूर्व्वस्मिन् पक्षसि विद्यमानेषु पूर्व्वो-क्तेष्वहःसु प्रत्यहं प्रयुज्यमाने इतो अस्माल्लोकाद्यन्ति गच्छन्ति स्वर्गं तया ऋचा सामान्याभिप्रायमेकवचनमिन्द्रक्रतुन्न आभ-रेति तृचेनेत्यर्थः उत्तरस्मिन् पक्षसि पुनः पुनः प्रयुज्यमानेनैतेन तृचेन पुनरायन्ति इमं लोकमभिलक्ष्य स्वर्गात्पुनरावर्त्तन्ते, अत उभयलोकप्राप्त्यर्थत्वादुभयोः पक्षसोरेतदुभयं कर्त्तव्यमि-त्यर्थः ॥ ४ ॥

तदेव कथमित्यत आह।

## साम वा असौ लोक ऋगयं यदितः साम्ना यन्ति स्वर्गं लोकमारभ्य यन्ति यदृचा पुनरायन्त्यस्मिन् लोके प्रतितिष्ठन्ति ॥ ५ ॥

यदिदं साम तदसौ स्वर्लोकः ऋग्यजुरपेक्षया साम तृतीयं भवति स्वर्लोकस्य पृथिव्यन्तरिक्षापेक्षया तृतीयः अनयोः स्थानसाम्यादिभेदेन व्यपदेशः, येयमृक् सा अयं लोकः उभ-योः प्राथम्यात् किमतो भवति तदुच्यते इतः साम्ना यन्तीति यत्तत् स्वर्गं लोकमेव साक्षादारभ्य यन्ति। तथा ऋचा ऋग्भि-स्तृचेन पुनरायन्तीति यत् तेन अस्मिन्नेव लोके पुनः प्रतिष्ठा भवति ॥ ५ ॥

विहितं साम तृचरूपमुभयं व्यतिरेकत्वेन प्रशंसति।

यत्सामावसृजेयुरव स्वर्गाल्लोकात्पद्येरन्यदृचमनु-सृजेयुर्नश्येयुरस्माल्लोकात् ॥ ६ ॥

यद्यदि पूर्वं विहितं साम अवसृजेयुः परित्यजेयुः स्वर्गा-ल्लोकादवपद्येरन् अधः पतेयुः यद्यदि ऋचमनुसृजेयुः तस्माल्लो-ल्लोकान्नश्येरन् प्रच्यवेरन् स्वर्गस्थितिसाधनं साम अस्मिन लोके प्रतिष्ठाहेतुः ऋगिति उभयमुक्तं भवति ॥ ६ ॥

तदुभयमनूद्य प्रशंसति।

समानꣳ साम भवत्यन्योन्यः प्रगाथोन्यदन्यद्वि चितमध्वानमवगच्छन्नेति ॥ ७ ॥

पूर्वपचेऽस्मिन् पचसि उक्तेष्वहःसु समानमेकमेवाभीवर्त्ता-ख्यं ब्रह्मसाम भवति प्रगाथः प्रग्रथनीयस्तदाश्रयस्तृचस्त्वन्योन्यः प्रत्यहं विलक्षणो भवति लोकेऽपि हि दीर्घेध्वनि अन्यदन्यत्परस्पर-विलक्षणं चितं चायनीयलब्धव्यं धनं अवगच्छन् प्राप्नुवन् अध्वा-नम्मह्वापथमिति पुरुषः प्राप्नोति एवमेवैते सत्रिणोन्यमन्यं प्रगाथमेव गच्छन्तो विषुवत्पर्य्यन्तं यज्ञमार्गं यन्ति ॥ ७ ॥

एतत् प्रजननहेतुत्वेन प्रशंसति।

वृषा वा एष रेतोधा यदभीवर्त्तः प्रगाथेषु रेतो दधदेति यदितः समानꣳ साम भवत्यन्योन्यः प्रगाथो

रेत एव तद्दधति यत्परस्तात् समानः प्रगाथो भवत्यन्यदन्यत्साम रेत एव तद्धितं प्रजनयन्ति ॥ ८ ॥

अर्भावर्त्त इति एष वृषा वर्षणशीलः सेचनसमर्थो युवैव अतएव रेतोधाः रेतसो वीर्य्यस्य निधाता स प्रगाथेषु प्रगाथःस्थास्वृचु रेतो दधत् एति गच्छति यत् इतश्चतुर्विंशाहादारभ्य सामानमेवाभीवर्त्ताख्यं ब्रह्मसाम भवति प्रगाथस्तदाश्रयोन्योन्यः प्रत्यहं भिन्नो भवतीति तदेतदुभयं तत्तेन सत्रिणो रेतएव दधति प्रजोत्पादनाय रेतसएव धारणां कुर्व्वन्ति परस्तात् परस्मिन्नुत्तरस्मिन् पक्षसि समानः एकः प्रगाथ इन्द्रक्रतुमित्यादिको भवति ब्रह्मसाम तु प्रत्यहमन्यदन्यद्विलक्षणमेव भवतीति यत् तत्तेन हितं पूर्व्वस्मिन् पक्षस्याहितरेतएव प्रजनयन्ति बहुविधस्य साम्नः प्रयोगेण बहुविधकार्य्यरूपेणोत्पादयन्ति ॥ ८ ॥

प्रकारान्तरेण प्रशंसति ।

साम्नेतः प्रगाथां दुग्धे प्रगाथेन परस्तात्सामानि दुग्धे सलोमत्वाय ॥ ९ ॥

इतश्चतुर्विंशाहादारभ्य साम्नैकेन सर्व्वां प्रगाथां दुग्धे पूर्व्वस्मिन् पक्षसि बहूनि फलानि प्रगाथेभ्यः क्षारयति युक्तात् परस्मिन् पक्षसि प्रगाथेन पूर्व्वोक्तेन सामानि दुग्धे यान्यस्मिन्

प्रगाथे प्रयुज्यन्ते तेभ्यः फलानि च्चारयति एवं क्रियमाण-मेतदुभयं सलोमत्वाय अनुलोमत्वाय भवति ऋचो हि साम्नां आधारतया प्रथमसिद्धाः सामानि तु तदाश्रितत्वात् पश्चाद्भा-वीति तेनैवानुपूर्व्येण फलोत्पादनमेवानयोः सलोमत्वं ॥ ६ ॥

पूर्वस्मिन् यज्ञसि त्टचां चैषामनाटत्तिः उत्तरस्मिंस्तु साम्नां तदुभयं प्रशंसति।

## ये वा अध्वानं पुनर्निवर्त्तयन्ति नैनं ते गच्छन्ति येऽपुनर्निवर्त्तं यन्ति ते गच्छन्ति ॥ १० ॥

ये खलु पान्थाः अध्वानं पुनर्निवर्त्तयन्ति पुनः पुनर्निटत्ता गच्छन्ति ते एनमध्वानं न गच्छन्ति अध्वनः पारं न प्राप्नु-वन्ति, ये तु अपुनर्निवर्त्तं पुनःपुनर्निटत्तिराहित्येनाध्वानं यन्ति ते गच्छन्ति अध्वानं एवमेव सत्रिणोपि सकृत्प्रयुक्तान् पुन-रपि प्रयुञ्जानाः संवत्सरसत्रस्य पारं प्राप्नुवन्ति ॥ १० ॥

प्रयुक्तस्य पुनः प्रयोगे दोषमाह।

## य आस्तुतं कुर्वते यथा दुग्धामुपसीदेदेवन्तत्॥११॥

आस्तुतं पूर्व्वस्तुतं प्रगाथं ये कुर्वते ते पुनः प्रयुञ्जते यथा दुग्धामुपसीदेत् दोग्धा दोग्धुमुपविशेत् एवमेव तद्भवति ॥११॥

एतदेव व्यतिरेकमुखेन दृढयति।

ये नास्तुतं यं कामं कामयन्ते तमभ्यश्नुवते ॥१२॥

ये तु आस्तुतं सकृत्प्रयुक्तं न कुर्व्वते न पुनः प्रयुञ्जते यं कामं कामयन्ते तं प्राप्नुवन्ति ॥ १२ ॥

उक्तमर्थं विचारपूर्व्वकं नियमयति ।

ब्रह्मवादिनो वदन्ति यातयामाः संवत्सरा ३ अयातयामा ३ इति ते नायातयामेति वक्तव्यं पुनरन्यानि स्तोत्राणि निवर्त्तन्त ऊर्द्धमेव ब्रह्मसामैति ॥ १३ ॥

अस्मिन् गवामयनसत्रे ब्रह्मवादिनः परस्परमाहुः, किमिति अयं संवत्सरः सत्रात्मकः किं यातयामो गतरसः उतायातयाम इति विचार्य्यमाणानामिति संशये स्तुतिः । पक्षद्वयोत्थानस्य का शङ्का उच्यते, बृहद्रथन्तरयोरेव पुनः पुनः प्रयोगात् वामदेव्यकाले ययोश्च नित्यशः प्रयोगात् ब्रह्मसाम्नश्चाभीवर्त्तः च सर्व्वान्वयित्वात् प्रयुक्तानां पुनः पुनः प्रयोगेण यातयामत्वाशङ्का तथा ब्रह्मसाम्नः पुनः पुनः प्रयुज्यमानस्यापि तदाश्रयाणां प्रगाथानां प्रत्यहं विभिन्नत्वादयातयामत्वमित्युभयदर्शनाद्विशेषाग्रहणाच्च संशये इत्यं निर्णेतव्यं अयातयाम एव संवत्सर इति वक्तव्यमभिज्ञैस्तत् कस्य हेतोः यतः अन्यान्यभीवर्त्तव्यतिरिक्तानि स्तोत्राणि साश्रयाणि निवर्त्त्य तत्स्थाने साश्रयाण्यप्रयुक्तानि स्तोत्राणि पुनरावर्त्तन्ते ब्रह्म-

सामैकमेव ऊर्द्ध्वमनिवृत्तिमितरस्याप्याश्रयभेदो विद्यते अतो हेतोः संवत्सरस्यागतरसत्वं ॥ १३ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्थाध्यायस्य
तृतीयः खण्डः।

---

अथ चतुर्थः खण्डः।

तदेवं चतुर्थेऽहनि ब्रह्मसाम विधाय प्रसङ्गात् संवत्सरस्यापि ब्रह्मसाम निरूपितं, चतुर्विंशस्य पुनरन्यानि स्तोत्राणि तानि सर्व्वाणि आर्षेयकल्पेनैव बोद्धव्यानि, तदेवं पूर्व्वस्मिन् पचसि चतुर्विंशाभिप्लविकस्वरसामस्वहःसु एकमेवाभीवर्त्तसाम पुनः पुनरावर्त्तनीयं, प्रगाथस्तु प्रत्यहं भिन्न इति स्थितं, तत्रादौ पञ्चमासास्चतुरभिप्लवा इति तेषु विंशतिशतमहान्यभिप्लविकानि भवन्ति षष्ठे तु त्रयोभिप्लवा इत्यष्टादश: त्रयः स्वरसामान इत्येकविंशतिः तदुभयम्मिलित्वा एकचत्वारिंशच्छतमहानि भवन्ति एतेष्वहःसु प्रगाथभेदस्योक्तत्वात् के ते स्तोत्रीयाः प्रगाथास्तृचाश्चेत्याकांक्षायामह।

## पञ्चसु माःसु बार्हताः प्रगाथा आप्यन्ते ॥ १ ॥

पूर्व्वस्मिन् पचसि पञ्चसु माःसु मासेषु बार्हताः प्रगाथाः आप्यन्ते समाप्यन्ते प्रगाथमुपलक्षणं बार्हतास्तृचाश्च समा-

यन्त इत्यर्थः, कथमेतदुच्यते चतुःशतं त्र्यैन्द्राबार्हताः प्रगाथा दाशतय्यां विद्यन्ते तेषु चत्वारः प्रगाथा ऊर्द्धायाः बृहद्रथन्तरकाले यस्तोतीया इन्द्रक्रतुन्न आभरेत्युत्तरपचीयस्त्वैक इति कुतस्तेषामुद्धारः बृहत् स्तोतीयस्य चतुर्विंशेऽहनि प्रयुक्तत्वात् अभिप्लवेषु वा युग्मेष्वहःसु प्रयुक्तत्वात् रथन्तरस्य स्तोतीयस्य युग्मेषु प्रयुक्तत्वात् कालेयस्तोतीयस्य अन्वहं प्रयुक्तत्वात् इन्द्रक्रतोश्चोत्तरस्मिन् पचसि पृथग्विधास्यमानत्वात् पूर्व्वस्मिन् पचयोग इति ते ऽभिप्रयन्ते ततः शतं भवति तेषु चतुर्विंशे कार्य्य इत्येकोनशतं सप्ताशीतिस्तृचः सतो बृहत्यादाशतय्यामाम्नाताः ते चैकोनत्रिंशस्तृचो भवन्ति अष्टाविंशतिशतं प्रगाथतृचसमुदायो भवति तत्र विंशतिशतं पञ्चानाम्मासानामपेक्षितं एकोनशतमेव प्रगाथा विद्यन्ते इत्येकैकस्मिन् अभिप्लवे तृतीयेष्वभिप्लवेषु तृतीयेष्वहःसु सतोबृहतोस्तृचाः कार्य्याः इतरेषु प्रगाथा एव कार्य्याः एवं कृते पञ्चमस्य मासस्योत्तरेऽभिप्लवे चत्वार एव प्रगाथा लभ्यन्ते तत्र तृतीयेऽहनि सतो बृहतीः कृत्वा पञ्चापि सतो बृहत्यः कार्याः एवं पञ्चसु बार्हताः प्रगाथा आप्यन्ते सतो बृहतास्तृचाः अष्टौ परिशिष्यन्ते षष्ठे च मासे एकविंशतिसंख्यान्यहानि तत्राद्येषु षष्ठेष्वहःसु एते अवशिष्टास्तृचाः कार्य्याः ॥ १ ॥

ततस्त्रयोदशस्वहःसु कथं प्रगाथलाभ इत्याशङ्क्याह।

**तेष्वाप्तेषु छन्दसी संयुज्यैतव्यं ॥ २ ॥**

तेषु बार्हतेषु प्रगाथेषु तृचेषु चोक्तप्रकारेण परिसमाप्तेषु सत्सु अवशिष्टेष्वहःसु द्वे छन्दसी संयुज्य तृचीकृत्य एतद्वं ब्रह्मसाम्न आश्रयत्वेन प्रयोक्तव्यं ॥ २ ॥

के ते छन्दसी इत्यतआह।

**तिस्र उष्णिहः स्युरेका गायत्री तास्तिस्रो बृहत्यो भवन्ति ॥ ३ ॥**

तिसृभिरुष्णिग्भिरेकया च गायत्र्या तिस्रो बृहत्यः सम्पद्यन्ते उष्णिहस्त्वाद्यौ पादावष्टाक्षरौ तृतीयो द्वादशकः तथा सति तिसृषूष्णिक्षु एकैकस्य गायत्रपादस्य संयोजने प्रत्येकं बृहती भवति एवं छन्दोद्वयं संयुज्यैतव्यमित्यर्थः। तथाच सूत्रकृतोक्तं, षष्ठे मासि गायत्रीपादमेकैकमुष्णिहामुपरिष्टात्कुर्य्याद्दिष्टावानुपपत्तिर्ह्यन्यथेति उष्णिहा गायत्री चेति, या एता ऐन्द्रस्तुतस्तः अवशिष्टानां प्रथमेऽहनि प्रयुज्यन्ते तेभ्यो अन्या एवोत्तरेष्वहःसु प्रयोक्तव्याः य आस्तुतं कुर्वते यथा दुग्धामुपसीदेदिति प्रयुक्तं पुनः प्रयोगे निन्दादर्शनात् ॥ ३ ॥

अथ पक्षान्तरं विवक्षुश्छन्दस्संयोगे पूर्वोक्तदोषमाह।

**तदाहुः सञ्चर इव वा एष छन्दसां यत् द्वे छन्दसी संयुञ्जन्तीति ॥ ४ ॥**

संशीर्य्यते शिथिलीभवत्यनेनेति सञ्शरः यत् द्वे छन्दसी संयुञ्जन्तीति एष छन्दसां संशर इव वै शिथिलीभाव एवेति तत्तस्मिन्विषये ब्रह्मवादिन आहुः ॥ ४ ॥

कथं तर्हि न्यूनाहःपूरणमिति चेत्तत्राह ।

**चतुरुत्तरैरेव छन्दोभिरेतव्यं ॥ ५ ॥**

गायत्र्यादिभिर्जगत्यन्तैश्चतुरुत्तरैः पूर्वस्मात्पूर्वस्मात् छन्दसः उत्तरोत्तरं चतुर्भिरक्षरैरधिकैश्छन्दोभिरेतव्यं गायत्रीव्यतिरिक्तानामेव पशूनाञ्चतुरुत्तरत्वं गायत्र्याः प्रथमत्वात् पशूनाञ्चतुष्पात्त्वात्पशुत्वेन स्तुतिः । स्पष्टमन्यत् ॥ ५ ॥

चतुरुत्तरप्रायन्तमिमं पक्षं प्रशंसति ।

**पशवो वै चतुरुत्तराणि छन्दांऽसि पशुभिरेव तत् स्वर्गं लोकमाक्रममानयन्ति ॥ ६ ॥**

चतुरुत्तरेषु छन्दःसु चतुःसंख्यायोगात् पशूनाञ्च चतुष्पात्त्वात् पशुत्वेन स्तुतिः । स्पष्टमन्यत् ॥ ६ ॥

चतुरुत्तरस्य प्रयोगस्य स्थानान्याह ।

**एकाङ्गायत्रीमेकाहमुपेयुरेकामुष्णिहमेकाहमेकामनुष्टुभमेकाहं बृहत्या पञ्चमास इयुः पङ्क्तिमे-**

काहमुपेयुस्त्रिष्टुभा षष्ठं मासमियुः श्वो विषुवान् भवितेति जगतीमुपेयुः ॥ ७ ॥

एकाङ्गायत्रीच्छन्दसः प्राधान्यादेकवचनं एकङ्गायत्रीतृचं एकाहं एकस्मिन्नहनि आदिभूते चतुर्विंशेऽहनि ब्रह्मसामाश्रयं उपेयुः उपगच्छेयुः कुर्युरित्यर्थः, एवमुत्तरेष्वपि संख्यैकत्वं द्रष्टव्यं। एकामुष्णिहमेकमौष्णिहं तृचं एकाहं एकस्मिन्नहनि प्रथममासस्य प्रथमस्याभिप्लवस्य प्रथमेऽहनि अभीवर्त्तस्याश्रयत्वेन कुर्युः। तस्यैव द्वितीयेऽहनि एकामनुष्टुभं एकमानुष्टुभं तृचं ब्रह्मसामाधारत्वेनोपेयुः। ततो बृहत्या बार्हतैः प्रगाथैस्तृचैश्च पञ्च मासः पञ्च मासान् प्रथमद्वितीयाभ्यामहोरात्राभ्यां वर्जितान् इयुः प्राप्नुयुः तेषु मासेषु बार्हतेषु तृचेषु च ब्रह्मसामाभिवर्त्तं कुर्युरिति। अस्मिन्नपि पचे आभिप्लविकेषु तृतीयेष्वहःसु बार्हतास्तृचामन्यत्र प्रगाथा इति द्रष्टव्यं। एवं पञ्च मासेषु पूर्णेषु द्वौ प्रगाथौ नव तृचाश्च शिष्यन्ते। षष्ठे महाप्रथमाभिप्लवे द्वितीयस्य पञ्चाहे चैतान् प्रयुज्य एकाहमेकस्मिन्नहनि द्वितीयाभिप्लविकस्य षष्ठेऽहनि एकां पङ्क्तिमेकं तृचं ब्रह्मसामार्थमुपेयुः। ततस्त्रैष्टुभेन तृचेन षष्ठं मासं षष्ठमासस्य अवशिष्टानि यान्यभिप्लविकान्यहानि षट्संख्याकानि यौ च प्रथमद्वितीयौ स्वरसामानौ एतदहरष्टकं उपेयुः, षष्ठमासशब्देन उक्तान्येवाहानि लक्ष्यन्ते, तत्राह श्वो विषुवान् भवितेति जगतीमुपेयुरिति, श्वः विषुवान् भविता भविष्यतीति यत्पूर्व-

महत्तृतीयस्वरसामाख्यं तत्र जगतीञ्जागतं तृचं ब्रह्मसामाधारतयोपेयुः ॥ ७ ॥

इममपि पक्षं निन्दित्वा पक्षान्तरं दर्शयति ।

**तदाहुरनवक्लृप्तानि वा एतानि छन्दांसि मध्यन्दिने बृहत्या चैव त्रिष्टुभा चैतव्यं ॥ ८ ॥**

तत्तत्र विषये ब्रह्मवादिन आहुः । एतानि छन्दांसि चतुरुत्तराणि मध्यन्दिने सवने अनवक्लृप्तानि अवक्लृप्तिसामर्थ्यानि यद्यप्यत्र सप्तानामनवक्लृप्तिः समानैवेति प्रतीयते तथापि माध्यन्दिने पवमाने गायत्री बृहतीत्रिष्टुब्व्यतिरिक्तानामेव चतुर्णामनवक्लृप्तिर्वर्ण्यते यद्येतान्यवक्लृप्तानान्मध्ये केन छन्दसैतव्यन्तत्राह बृहत्या चेति, बार्हतैः प्रगाथैस्तृचैश्च त्रैष्टुभैरेतव्यमित्यर्थः । ८ ।

ननु त्रीणि छन्दांसि मध्यन्दिने अवक्लृप्तानि तेषु गायत्रीं परित्यज्य इतरयोर्ग्रहणे किं कारणन्तत्राह ।

**एते वै छन्दसी वीर्य्यवती एते प्रत्यक्षं मध्यन्दिनस्य रूपं ॥ ९ ॥**

एते वै बृहतीत्रिष्टुभौ छन्दसी वीर्यं वै वीर्यरूपे एव वीर्य्यं वै त्रिष्टुविति श्रुतेः त्रिष्टुभोवीर्य्यत्वं बृहत्याश्रयमित्याहुरयानि

छन्दांꣳसि वर्षीयांꣳसि कस्माद्बृहत्या मध्यन्दिने स्तुवन्तीत्यादिना छन्दोन्तरेभ्यो वैशिष्ट्यप्रतीतेर्वीर्यवत्त्वं। ननु गायत्र्याश्च सोमाहरणादौ छन्दोन्तरेभ्यो वैशिष्ट्यदर्शनात् माध्यन्दिने पवमाने चान्वयित्वात्सापि वीर्यरूपैवेति प्रयोज्या चेत्तेन एते एव बृहती-त्रिष्टुभौ छन्दसी प्रत्यक्षं असाधारणं मध्यन्दिनस्य रूपङ्गायत्री तु त्रिष्वपि मध्यन्दिनेषु प्रयुज्यते इति सवनत्रयसाधारणं त्रिष्टुप्बृहत्योश्च माध्यन्दिनएव प्रयोग इत्यसाधारणं। ९।

किमनयोरनियमेन प्रयोगः उत नियमेनेति जिज्ञासायामाह।

राथन्तरेऽहनि बृहती कार्यैतद्वै रथन्तरस्य स्वमायतनं यद्बृहतो स्वएव तदायतने रथन्तरं प्रतितिष्ठति वार्हतेऽहनि त्रिष्टुप् कार्यैतद्वै बृहतः स्वमायतनं यत् त्रिष्टुप् स्वएव तदायतने बृहद्रथन्तरे प्रतितिष्ठन्ती इतः॥ १०॥

चतुर्विंꣳशादिषु यस्मिन्नहनि रथन्तरं प्रयुज्यते तस्मिन्नहनि अभीवर्त्तस्य बहती आश्रयत्वेन कार्य्या बार्हताः प्रगाथा इत्यर्थः बृहतीति यत् एतद्धि रथन्तरस्यायतनं स्थानम्माध्यन्दिनसवने बृहती पूर्वं प्रयुज्यते अतस्तदायतनत्वं एवं सति तत्तेन बार्हतेऽहनि बृहत्याः करणेन स्वकीयएव स्थाने रथन्तरं प्रतिष्ठितं भवति उक्तेष्वहःसु अस्मिन्नहनि बृहत्साम प्रयुज्यते तस्मिन्बा-

ऽहनि त्रिष्टुप् कार्य्या त्रैष्टुभे तृचे अभीवर्त्तौ ब्रह्मसाम कर्त्तव्यं बृहत्त्रिष्टुभोर्द्वितीयप्रयोज्यत्वात् त्रिष्टुभो बृहदायतनत्वं तत्तेन त्रिष्टुभः प्रयोगेण बृहत्साम स्वएवायतने प्रतितिष्ठतीति शेषः, अत्रापि त्रैष्टुभबार्हते तृचानां यो यः पूर्व्वं प्रयुज्यते तत उत्तरमन्योन्य एव उत्तरेष्वहःसु प्रयोक्तव्यः आस्तुतं कुर्वते इति प्रयुक्तस्य पुनः प्रयोगे निन्दाश्रवणात्। एवं व्यवस्था बृहतीत्रिष्टुभोः प्रयोगे क्रियमाणे बृहद्रथन्तरे सामनी प्रतितिष्ठन्तीति शतन्तस्य द्विवचनान्तस्य रूपमेतत् स्वे स्वे एवायतने प्रतिष्ठिते सती इतो गच्छतः अत्स्वमहर्व्याप्नुतः। एतदुक्तं भवति चतुर्विंशेऽहनि दृते रथन्तरे उभे अपि प्रयुज्येते आभिप्लविकेषु तु प्रथमतृतीयादिष्वयुग्मस्वहःसु रथन्तरं प्रयुज्यते द्वितीयादिषु युग्मेष्वहःसु बृहत्साम अतश्चतुर्विंशेऽहनि प्रथम आभिप्लविके च बृहत्सामभीवर्त्तं कुर्य्यात् द्वितीये त्रिष्टुभि एवमतऊर्द्ध्वं विन्यासेनोभयोश्छन्दसोः प्रयोगः। यद्वा चतुर्विंशेऽहनि त्रिष्टुभि अभीवर्त्तः कार्य्यः बार्हतं ह्येतदहः अत ऊर्द्ध्वं बृहतीत्रिष्टुभोः क्रमेण प्रत्यहं विन्यासेन प्रयोग इति। निदानकारस्तु एतत् पचद्वयमभिधाय पुनरपि पचान्तराण्यभ्यधात् बृहत्या चैतव्यं त्रिष्टुभा चैतव्यमिति प्रतीकमुपादाय त्रिष्टुभि चतुर्विंशेऽभीवर्त्तः कुर्य्यात् बृहत्यां प्रथम आभिप्लविके त्रिष्टुभि द्वितीये एवमनुपूर्व्वं छन्दसोः प्रयोगो भवति तत ऊर्द्ध्वं विन्यसेत् इत्यादिना तत्सर्वं तत्रैव द्रष्टव्यं इत्य त्रयः पचा गताः, प्रगाथेषु प्राप्तेषु छन्दसी संयुज्यैतव्यमिति प्रथमः चतुरुत्तरैः छन्दो-

भिरेतव्यमिति द्वितीयः बृहत्या चैव त्रिष्टुभा चैतव्यमिति तृतीयः ॥ १० ॥

अथान्ये सप्त पक्षाः प्रदर्श्यन्ते ।

त्रयस्त्रिꣳशता प्रगाथैरेतव्यं त्रयस्त्रिꣳशद्देवता देवतास्वेव प्रतितिष्ठन्तोयन्ति, चतुर्विंशत्यैतव्यं चतुर्विꣳशतिरर्द्धमासाः संवत्सरः संवत्सरएव प्रतितिष्ठन्तो यन्ति, द्वादशभिरेतव्यं द्वादशमासाः संवत्सरः संवत्सर एव प्रतितिष्ठन्तोयन्ति, षड्भिरेतव्यꣳ षड्तव ऋतुष्वेव प्रतितिष्ठन्तोयन्ति, चतुर्भिरेतव्यञ्चतुष्पादाः पशवः पशुष्वेव प्रतितिष्ठन्तोयन्ति, त्रिभिरेतव्यन्त्रय इमे लोका एष्वेव लोकेषु प्रतितिष्ठन्तोयन्ति, द्वाभ्यामेतव्यन्द्विपाद्यजमानः स्वर्गस्य लोकस्याक्रान्त्या अन्येनान्येन हि पदा पुरुषः प्रतितिष्ठन्नेति ॥ ११ ॥

चतुर्विꣳशप्रभृतिषु तृतीयस्वरसामान्तेष्वहःसु त्रयस्त्रिꣳशता त्रयस्त्रिꣳशतिसंख्याकैर्बार्हतैः प्रगाथैरेतव्यं आदितस्त्रयस्त्रिꣳशत्स्वहःसु त्रयस्त्रिꣳशत् प्रगाथामभीवर्त्तस्य क्रमेण स्तोत्रीयत्वेन प्रयुज्य पुनरपि तैरेवाष्टत्तैस्तृतीयस्वरसामान्तं ब्रह्मसाम कर्त्तव्यं तथा सति त्रयस्त्रिꣳशद्देवता अष्टौ वसव एकादशरुद्रा द्वादशादित्या इन्द्रश्च प्रजापतिश्चेति तास्वेव प्रति-

तिष्ठन्तः सुन्वो यजमाना यन्ति एवमुत्तरत्रापि व्याख्येयं ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्थाध्यायस्य

चतुर्थः खण्डः ।

---

अथ पञ्चमः खण्डः ।

इत्थं पूर्व्वस्मिन् *पञ्चस्वभीवर्त्तं ब्रह्मसामत्वेन विधाय तत् प्रगाथास्त्र निरूपिताः । अथाभिजित् त्रयः स्वरसामानोदिवाकीर्त्यमहस्त्रयः स्वरसामानो विश्वजिदिति नवरात्र इति नवरात्रो विधातव्यः, षष्ठे मासि त्रीनभिप्लवान् एकं पृष्ठञ्च कृत्वा अभिजिदनुष्ठेयः ततस्त्रयः स्वरसामानः ततो विषुवानिति तत्राभिजिद्विषुवतोर्मध्यगतान् स्वरसाम्नो विधत्ते ।

स्वरसामान एते भवन्ति ॥ १ ॥

यज्ञा यथा अपूर्व्वैत्यस्यां योनावुत्पन्नानि चत्वारि स्वरसंज्ञकानि सामानि येषु भवन्ति ते स्वरसामानः तानि चत्वारि आर्भवेषु पवमानेष्वनुष्टुप्सु कर्त्तव्यानि प्रस्तुत्वानायान्त्सः अयं पूषा रयिर्भगः सुतासो मधुमत्तमा इति आनुष्टुभास्तृच एतेषु कर्त्तव्या इति अपरे तु स्वराणि पृष्ठानीति वर्णयन्ति, तदुक्तं सूत्रकृता स्वरपृष्ठास्चेत् समसामिकेषु पृष्ठस्तोत्रीयेष्विति ।

---

* पञ्चसीत्यसंस्कृतः पाठः । पञ्चे इति साधुः । यद्यप्यत्र लिपिकरप्रमादोनिश्चीयते, तथाप्युभयपुस्तकएवानेकत्रैवं दर्शनात्तथैव रचितः ।

यदि स्वरसामानः स्वरपृष्ठाः स्युः तदा स्वरसामसम्बन्धि बृहद्रथन्तरपृष्ठस्तोत्रीयेषु कल्पकारोक्तेषु यज्ञा यथा अपूर्वामत्स्यपायितेमद्दः प्रत्यस्मै पिपीषत इत्येतेष्वेव स्वराणि पृष्ठानि कुर्यादिति सूत्रार्थः । एवं विधान् स्वरसाम्न अभिजित ऊर्द्धमुपेयुरित्यर्थः तेषां स्वराख्यानां साम्नां स्वराणि पराणीति च अन्ये द्वे संज्ञे भवतः ॥ १ ॥

तत्र स्वरसंख्यापूर्वकं स्तौति ।

**स्वर्भानुर्वा आसुर आदित्यन्तमसाऽविध्यत्तं देवाः स्वरैरस्पृण्वन्यत् स्वरसामानो भवन्त्यादित्यस्य स्पृत्यै ॥ २ ॥**

आसुरो असुरजातीयः स्वर्भानुर्नाम अन्धकारात्मकः आदित्यं तमसा स्वशरीरभूतेनान्धकारेणाविध्यत् अबाधत आहतवानित्यर्थः तं आदित्यन्देवाः स्वरैः सामभिः अस्पृण्वन् तस्य तमसोऽपनयनेन अबलयन् स्पृ प्रीतिबलनयोः बलिनं कृतवन्त इत्यर्थः । तथा सति स्वरसामानो भवन्तीति यत् तत् आदित्यस्य आदित्यात्मना संस्तुतस्य विषुवतः स्पृत्यै बलनाय प्रबलीकरणाय भवति धातूनामनेकार्थत्वात् स्पृणोती रक्षाकर्मा, देवाः स्वरैः सामभिररक्षन् इदानीमपि सत्रिभिः क्रियमाणानि स्वराणि विषुवदात्मन आदित्यस्य रक्षायै भवन्ति अतः स्वरणसाधनत्वात् एतेषां स्वराणीति संज्ञा सम्पन्ना तथाच तैत्तिरीयकं यदस्पारणं तत् स्वराणां स्वरत्वमिति ॥ २ ॥

अथैतेषां परसंज्ञान्तद्धेतुकथनेन प्रशंसति ।

**परैर्वै देवा आदित्यꣳ स्वर्गं लोकमपारयन्यद-पारयꣳस्तत्पराणां परत्वं ॥ ३ ॥**

परशब्दाभिधेयैरेतैः स्वरैः देवा आदित्यं स्वर्गं लोकमपारयन् प्रापयन् । स्पष्टमन्यत् ॥ ३ ॥

वेदनं प्रशंसति ।

**पारयन्त्येनं पराणि य एवं वेद ॥ ४ ॥**

एतत् स्वरसंज्ञायामप्युपलक्षणं स्वराणि पराणीति संज्ञेयः इत्थं वेद एनं वेदितारं स्वर्गं लोकं पारयन्ति सामानि प्रापयन्ति संज्ञावेदनेन स्वर्गप्राप्तिर्भवतीत्यर्थः ॥ ४ ॥

अथैतेषां स्वरसाम्नां स्तोमं विधत्ते ।

**सप्तदशा भवन्ति ॥ ५ ॥**

सर्वेषु स्तोत्रेषु सप्तदश स्तोमो भवतीत्यर्थः ॥ ५ ॥

तदेतत्प्रशंसति

**प्रजापतिर्वै सप्तदशः प्रजापतिमेवोपयन्ति ॥६॥**

संवत्सरो हि प्रजापतिः सप्तदशो भवति द्वादशमासाः पञ्चर्त्तव इति एवं सति सप्तदश प्रयुञ्जानाः प्रजापतिमेवोपयन्ति ॥ ६ ॥

**अनुष्टुप् छन्दसो भवन्त्यानुष्टुभो वै प्रजापतिः साक्षादेव प्रजापतिमारभन्ते ॥ ७ ॥**

प्रजापतिः सवनच्छन्दांꣳसि गायत्र्यादीनि सवनदेवताभ्यो विभज्य आनुष्टुभं स्वं छन्दोऽकल्पयदिति ऐतरेयादिषु श्रवणात् प्रजापतेरानुष्टुभत्वं एवमनुष्टुभां प्रयोगे सति साक्षात्प्रत्यक्षमेव आरभन्ते अवलम्बन्ते ॥ ७ ॥

एते स्वरसामानः कुत्रानुष्ठेया इति तेषां स्थानमाह।

**त्रयः पुरस्तात् त्रयः परस्ताद्भवन्ति ॥ ८ ॥**

विषुवतः पुरस्तादभिजित ऊर्द्ध्वमुपेतव्याः परस्ताद्विषुवत-ऊर्द्ध्वं विश्वजितः प्राक् एतएव प्रतिलोममनुष्ठेया भवेयुः ॥ ८ ॥

अथैतान् प्रशंसति।

**देवा वा आदित्यस्य स्वर्गाल्लोकादवपातादबिभयुस्तमेतैः स्तोमैः सप्तदशैरदृꣳहन्यदेते स्तोमा-भवन्त्यादित्यस्य धृत्यै ॥ ९ ॥**

देवाः पुरा आदित्यस्य स्वर्गाल्लोकादवपातात् अधःपातनात् अबिभयुर्भीता आसन् तमादित्यमेतैः स्तोमैः सप्तदशकैः स्वरसामभिः अभितः स्थितैः अदृꣳहन् अदृढयन् यदेते

स्तोमाः स्तोमयुक्ताः स्वरसामानोऽभितो भवन्ति तदादित्यस्य धृत्यै धारणाय स्थैर्याय भवति ॥ ६ ॥

प्रकारान्तरेण प्रशंसति ।

**चतुस्त्रिꣳशा भवन्ति वर्ष्म वै चतुस्त्रिꣳशो वर्ष्मणैवैनꣳ सम्मिमते ॥ १० ॥**

तेषु स्वरसामसु प्रयुज्यमानाः सप्तदशस्तोमाः द्वौ द्वौ सम्पद्य चतुस्त्रिꣳशा भवन्ति चतुस्त्रिꣳशश्च वर्ष्म वै उच्छ्रितं स्थानं वर्ष्म तद्रूपः खलु । ननु यत्र षड्विꣳश एव स्तोमानि ह्रदादायपेक्षया उच्छ्रितस्थानगताः न चतुस्त्रिꣳशाः कथन्तस्योच्छ्रितस्थानत्वं, नैषदोषः, त्रयस्त्रिꣳश एव एकाधिकश्चतुस्त्रिꣳशो भवतीति तदुपपत्तेः एवं सति चर्ष्मणा उच्छ्रितेन स्थानेन सहैव एनमादित्यं विषुवदात्मकं सम्मिमते सत्रिणः स्थापयन्ति स्वरसामभ्यः पुरस्तादभिजित्कार्य्यः आवृत्तेभ्यस्तेभ्य ऊर्द्ध्वं विश्वजित् तयोर्विधिरर्थवादेनोन्नेय इति ॥ १० ॥

**तस्य पराचीनातिपादादविभयुस्तꣳ सर्व्वैः स्तोमैः पर्य्यारिषन्विश्वजिदभिजिद्वग्रां वीर्यं वा एतौ स्तोमौ वीर्य्यैणैव तदादित्यं पर्य्युषन्ति धृत्यै ॥ ११ ॥**

तस्यादित्यस्य पराचीनातिपादात्पराचीनेन अनाभिमुख्येन अतिपादादत्यूर्द्ध्वगमनात् शङ्कमानात् अविभयुः भीताः देवाः

स्तं सर्व्वैः स्तोमैस्त्रिवृदादिभिस्त्रयस्त्रिंशान्तैः पर्य्यैषन् परिगता आसन् ऋषी गतौ परितोदृढीचक्रुरित्यर्थः कथं विश्वजिदभिजिद्भ्यां सर्वस्तोमाभ्यामूर्द्ध्वं विश्वजिता अधस्तादभिजितेत्यर्थः वीर्य्यं वा एतौ स्तोमौ स्तोमवन्तौ विश्वजिदभिजितौ यदेतौ भवतः तत्तेन वीर्य्येणैव आदित्यं विषुवदाख्यं पर्य्युषन्ति सत्रिणः परिगच्छन्ति दृढीकुर्व्वन्ति किमर्थं धृत्यै स्थिरत्वाय ॥११॥

अथ विश्वजिदभिजिद्भ्यां कृतैषा धृतिः आदित्यात्मना संस्तुतस्य विषुवतः अनवपादायानतिपादाय न भवतीत्युक्तं उपसंहरति ।

अनवपादायानतिपादाय ॥ १२ ॥

एवं स्वरसाम्ना विश्वजिदभिजितोश्च प्रयोगेण धृतत्वात् आदित्यात्मनो विषुवतोऽधःपतनमूर्द्ध्वगमनञ्च न भवतीत्यर्थः ॥१२॥

तदेवं षष्ठे मासि त्रयोऽभिप्लवाः षडहाः पृष्ठ्यः षडह अभिजित् स्वरसामान इत्यनुपूर्व्वं कर्त्तव्या इत्युक्तं तत्र कश्चिद्दोषमाशङ्क्य पक्षान्तरमुपन्यस्यति ।

तदाहुः कर्त्तप्रस्कन्द इव वा एष यत् त्रयस्त्रिंशात् सप्तदशमुपयन्तीति पृष्ठ्योत्तरः कार्य्यः ॥ १३ ॥

तत्र विषये ब्रह्मवादिन आहुः, किमिति अभिजितो ह्यग्निष्टोमसाम त्रयस्त्रिंशस्तोमकं तदनन्तरं यत् सप्तदशं

स्तोमं स्वरसाम प्रापयन्ति एषः कर्त्तप्रस्कान्द इव वै कर्त्तं अवरे प्रपात इव भवति उभयोर्मध्ये त्रिणवैकविंशौ विद्यमाना-वतिक्रम्य अवाचीने सप्तदशे प्रवृत्तिरिति तस्य दोषस्यायं परि-हारः। अभिजित् स्वरसाम्नोर्मध्ये पृष्ठ्यः षड़हः अन्तरः मध्यतः कार्य्यः ॥ १३ ॥

ननु तत्रापि पृष्ठस्य यत् षड़हस्तस्मात् त्रयस्त्रिंशमुपेत इति उक्तदोषोऽपरिहृतो भवति तत्राह।

तस्य यत्सप्तदशमहस्तदुत्तमं कार्यं सलोमत्वाय ॥ १४ ॥

तस्य पृष्ठ्यषड़हस्य सप्तदशं तृतीयमहस्तदुत्तमं पृष्ठं कार्य्यं तथा सति सप्तदशात् सप्तदशमुपेतो भवति तत् सलोमत्वाय अनुरूपत्वाय भवति। एतदेव शाट्यायनमुनिभिर्विस्पष्टमा-म्नातं, तदाहुः स्तोमत्वं सत्रमिव वा एतत् स्तोमा यन्ति यत्त्रयस्त्रिंशात् सप्तदशमुपयन्तीति। पुरस्तादेव पृष्ठस्य षड़-हस्याभिजितमुपेत्यापृष्ठस्यैव षड़हस्य तस्य यन्मध्ये सप्तदश-स्तदुपरिष्टात् त्रयस्त्रिंशस्य पर्य्यहेयुः तत्सप्तदशात् सप्तदशमुप-यन्ति ॥ १४ ॥

समात्सम स्तोमकृत् तत्र स्तोमा यन्तीति तमिमं पक्षं निरस्यति।

तदाहुरुदरं वा एषः स्तोमानां यत् सप्तदशो

**यत् सप्तदशम्मध्यतो निर्हरेयुरशनायव: प्रजा: स्युरशनायव: सत्रिण: ॥ १५ ॥**

तत्रान्ये ब्रह्मवादिन आहु:। स्तोमानां मध्ये सप्तदश इति यत् एष यज्ञस्योदरं वै उदरस्थानीय: अतो यत् यदि सप्तदशं मध्यत: षड़हस्य मध्यात् निर्हरेयु: बहि: कुर्यु: अन्नाद्यस्थानस्योदरस्य निर्हारान्न देशवर्त्तिन्य: प्रजा: अशनायवो बुभुचिता: चुधार्त्ता: स्युर्भवेयु: तत: सत्रिणोपि अशनायवो भवेयुरिति ॥ १५ ॥

कथं तत्र कर्त्तव्यमिति तदाह।

**त्रयस्त्रिंशादेव सप्तदश उपेत्यो वर्ष्म वै त्रयस्त्रिंशो वर्ष्म सप्तदशो वर्ष्मण एव तद्वर्ष्माभिसंक्रामन्ति ॥ १६ ॥**

त्रयस्त्रिंशात् स्तोमात् पूर्व्वेद्यु: क्रियमाणादेव अनन्तरं सप्तदश एव स्तोम उपेत्य: उपगन्तव्य:। नन्वेवं सति कर्त्तप्रस्कन्दलचणो दोष उक्त इति चेत् मैवं त्रयस्त्रिंश: स्तोमो वर्ष्म अधिकसंख्यत्वात् श्रेष्ठ: खलु सप्तदशोपि प्रधानभूतानां पृष्ठस्तोत्रासां निर्व्वर्त्तकत्वात् वर्ष्म श्रेष्ठ:। एवं सति यत् त्रयस्त्रिंशात्सप्तदशमुपयन्ति तद्वर्ष्मण एव श्रेष्ठादेव वर्ष्म श्रेष्ठमभिसंक्रामन्ति अत: सदृशात्सदृशसंक्रान्ते: कर्त्तप्रस्कन्दलचणो दोषो न भवतीत्यर्थ: ॥ १६ ॥

अथैतेषां स्वरसाम्नां संख्यानिर्णयाय ब्रह्मवादिनां विचारं दर्शयति ।

**तानाहुरुक्थ्याः कार्य्या३ अग्निष्टोमा३ इति यद्युक्थ्याः स्युः ॥ १७ ॥**

केषुचिद् ब्राह्मणेषु स्वरसाम्नां उक्थ्यत्वं श्रुतं केषुचिदग्निष्टोमत्वं तदुभयदर्शनात् संशये ब्रह्मवादिभिर्विचार्य्यते तान् स्वरसाम्नोऽधिकृत्यैवमाहुः किमुच्यते उक्थसंस्थाः कार्य्याः उताग्निष्टोमसंस्था इति विचार्यमाणानामिति वाक्यद्वये प्लुतिः ॥१७॥

उक्थ्यत्वपक्षे तावदयं गुणइत्याह ।

**पशवो वा उक्थानि शान्तिः पशवः शान्तेनैव तद्विषुवन्तमुपयन्ति ॥ १८ ॥**

तदुक्थ्याः स्युः स्वरसामानः तदा शान्तेनैव कर्म्मणा विषुवन्तं आदित्यात्मना संस्तुतमुपयन्ति परितापाभावायेति शेषः कथमुक्थस्य शान्तत्वमुच्यते पशवो वा उक्थानि तत्साधनत्वात् शान्तिश्च पशवः पशुप्रभावेन क्षीरादिनोत्पाद्यत्वात् अत उक्थस्य शान्तत्वं ॥ १८ ॥

अग्निष्टोमाख्यं विधास्यन्निमं पक्षन्दूषयति ।

**तदाहुर्विवीवधमिव वा एतद् यदग्निष्टोमो विषु-**

वानग्निष्टोमौ विश्वजिदभिजितावथेतर उक्थ्याः स्युरिति ॥ १९ ॥

तत् स्वरसामविषये ब्रह्मवादिन आहुः। उभयतः शिक्यगतभारद्वयोपेतं स्कन्धेन वोढव्यं काष्ठं विवधं विषमं विवधं विवीवधं तदिव ह्येतत् यत्त्वविषुवान् विश्वजिदभिजिताविति तयोऽग्निष्टोमाः अथेतरे स्वरसामान उक्थ्याः स्युः अग्निष्टोमानां द्वादशस्तोत्रशस्त्रत्वाल्लत्वं उक्थानां पञ्चदशस्तोत्रशस्त्रत्वाद्गुरुत्वं न हि गुरुलघू भारौ वीवधेन वोढुं शक्यौ अतो वैषम्यादेतद्वीवधम् ॥ १९ ॥

अग्निष्टोमा एव सर्व्वे कार्य्याः ॥ २० ॥

सर्व्वेपि स्वरसामानोऽग्निष्टोमसंस्था एव कार्य्याः ॥ २० ॥

अथैतत्प्रशंसति।

वीर्य्यं वा अग्निष्टोमो वीर्य्य एव मध्यतः प्रतितिष्ठन्ति नव संस्तुता भवन्ति नव प्राणाः प्राणेष्वेव प्रतितिष्ठन्ति ॥ २१ ॥

योऽयमग्निष्टोमः स वीर्य्यं वै सर्व्वप्रकृतित्वाद्वीर्य्यरूप एव तथा सति स्वरसाम्नोऽग्निष्टोमसंस्थान् कुर्व्वन्तः सत्रिणः मध्यतो गवामयनस्य मध्ये वीर्य्यएव प्रतितिष्ठन्ति किञ्च संस्तुता एते षट् स्वर-

सामानो भवन्ति नवसंख्यायाविभागे समाप्यन्ते तथाहि एकैकमहर्द्वादशस्तोत्रं सर्व्वेषु च स्तोत्रेषु सप्तदश एव स्तोमः तत्रैकस्मिन्नहनि चतुरधिकद्विशतस्तोत्रीया भवन्ति एवं षट्सु स्वरसामसु ससहस्रं चतुर्व्विंशत्युत्तरद्विशतञ्च स्तोत्रीया भवन्ति तास्च षट्त्रिंशदधिकशतं नवका भवन्ति किमतो भवति उच्यते नवसंख्या हि पुरुषे प्राणाः सप्त शीर्षण्याः द्वाववाञ्चाविति तथा सति नवसंख्याकेषु प्राणेष्वेव सत्रिणः प्रतिष्ठिताः भवन्ति दीर्घायुषोभन्तीत्यर्थः ॥ २१ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्थाध्यायस्य

पञ्चमः खण्डः।

---

अथ षष्ठः खण्डः।

गवामयनस्य मध्यवर्त्तिनि नवरात्रे अष्टावहान्युक्तानि अथ पूर्वोत्तरयोः पक्षसोर्मध्येऽनुष्ठेयं गवामयनस्य प्रधानभूतं विषुवदाख्यमहः प्रदर्शयति।

## विषुवानेष भवति ॥ १ ॥

एष विषुवान् संवत्सरस्य सत्रस्य मध्यतो भवति ॥ १ ॥

अथेमं स्तौति।

**देवलोको वा एष यद्विषुवान्देवलोकमेव तद्-भ्यारोहन्ति ॥ २ ॥**

यत् यो विषुवान् एष देवलोको वै देवानां लोकस्थानभूत आदित्यात्मको हि विषुवान् तत्तेन विषुवतः प्रयोगेण देवलोक-मेव यजमाना अभ्यारोहन्ति ॥ २ ॥

अथ तस्मिन्नहनि स्तोमं विधत्ते ।

**एकविꣳशो भवत्येकविꣳशो वा अस्य भुवनस्या-दित्य आदित्यलोकमेव तदभ्यारोहन्ति ॥ ३ ॥**

तस्मिन्नहनि सर्व्वेषु स्तोत्रेष्वेकविꣳश एव स्तोमो भवति । अस्य भुवनस्य लोकस्य आदित्य एकविꣳशो वै अत आदित्या-त्मकस्य विषुवत एकविꣳशस्तोमत्वमुचितं एकविꣳशस्तोममुप-यन्तीति यत् तेन आदित्यलोकमेवाभ्यारोहन्ति ॥ ३ ॥

कथमादित्यस्यैतल्लोकापेक्षयैकविꣳशत्वमिति तत् दर्शयति ।

**द्वादशमासाः पञ्चर्त्तवस्त्रय इमे लोका असावादि-त्य एकविꣳशः ॥ ४ ॥**

हेमन्तशिशिरयोः समासेनैकत्वात् ऋतूनां पञ्चसंख्या ॥ ४ ॥

एकविंशस्तोम प्रयुक्तं फलं दर्शयति।

**मध्यत एव यज्ञस्य प्रतितिष्ठन्ति ॥ ५ ॥**

एकविंशो वै स्तोमानां प्रतिष्ठा अतो यज्ञस्य संवत्सरसत्रस्य मध्यतोमध्य एवास्मिंल्लोके प्रतितिष्ठन्ति यद्वा द्वादशमासा इत्यादिना ये अनुक्रान्ता एषु सर्व्वेषु प्रतितिष्ठन्ति, तथाच शाट्यायनकं, एकविंशो विषुवान् भवति एकविंशो वा अस्य भुवनस्य विषुवान् द्वादशमासाः पञ्चर्त्तवस्त्रय इमे लोका असावादित्य एकविंशः सर्वस्मिन्वा एषोति प्रतिष्ठितः यद्यस्मिन्नेष सर्व्वस्मिन्नधिप्रतितिष्ठन्तीति तस्मिन् सर्व्वस्मिन्नधिप्रतिष्ठामेति ॥ ५ ॥

अस्मिन्नहनि बहिष्पवमानस्य प्रतिपदं विधत्ते ।

**वायो शुक्रो अयामित इति शुक्रवती प्रतिपद्भवत्यादित्यस्य रूपं ॥ ६ ॥**

प्रतिपदिति प्रथमस्तृच उच्यते अयन्तृचो विषुवति बहिष्पवमानस्य प्रतिपद्भवति प्रतिपच्छब्दस्य स्त्रीलिङ्गत्वात् शुक्रवती स्त्रीलिङ्गता भास्वरवाचकशुक्रशब्दोपेतत्वात् एष आदित्यस्य रूपं आदित्यात्मकस्य विषुवतोनुरूपं ॥ ६ ॥

ननु सर्वेष्वहःसु पावमान्या गायत्र्या हि प्रतिपदा भाव्यं, तत कस्माद्गायत्र्यनुष्टुप् विधीयत इति तत्राह ।

**वायुर्वा एतद्देवतानामानशेऽनुष्टुप् छन्दसां यद-तोन्या प्रतिपत् स्यात्प्रदहेत् ॥ ७ ॥**

देवतानां देवानां मध्ये वायुरेवैनमादित्यमानशे व्याप्नोति, छन्दसाम्मध्ये अनुष्टुवेनमानशे नान्यच्छन्दः यद्यपि अतो वा-यव्याया अन्या अन्यदेवत्या प्रतिपत्स्यात् तदा यजमानान् प्रद-हेत् ॥ ७ ॥

अथैतां वायव्यां प्रशंसति ।

**यन्ति वा एते प्राणादित्याहुर्य्ये गायत्र्याः प्रति-पदो यन्तीति यद्वायव्या भवन्ति तेन प्राणान्न यन्ति प्राणोहि वायुः ॥ ८ ॥**

ये यजमानाः गायत्र्याः प्रतिपदो यन्ति अपगच्छन्ति गायत्री-प्रतिपदं न प्रयुञ्जते एते प्राणापानव्यानरूपेण गायत्री-संस्तुतान् प्राणादेव यन्त्यपगच्छन्तीति अत एते प्राणविरहात् सद्यएव म्रियेरन् इति ब्रह्मवादिन आहुः, तत्रायं परिहारः वायव्या वायुदेवत्या प्रतिपद्भवतीति यत् तेन प्राणान्न यन्ति नापगच्छन्ति तत्कुतो हेतोः प्राणो हि वायुरतस्तद्देवत्यया प्राण-लाभोयुक्त एवेत्यर्थः ॥ ८ ॥

अथानया अपरोपि गुणो भवतीत्याह ।

**अथो शमयन्त्येवैनमेतया शान्तिर्हि वायुः ॥ ९ ॥**

अथो अपिच एनं तपन्तमादित्यं एतया वायव्यया शमयन्त्येव वायुशान्तिर्हि तापशान्तिकरो भवति ॥ ९ ॥

पवमानस्तोत्रस्य सोमदेवत्यत्वात् वायव्यानुपपन्नेत्याशंक्याह।

**आयाहि सोमपीतय इति सौमी पावमानी ॥ १० ॥**

वायो शुक्रो अयामित इत्यस्यामृचि अनेन तृतीयपादेन सोमकीर्त्तनात् सोम एव पवमानो भवति। एषा सौमी पावमानी च भवति अत उपपन्नैषा पवमानस्तोत्रे ॥ १० ॥

तथैषा शान्तिहेतुश्चेति प्रशंसति।

**नियुत्वती भवति पशवो वै नियुतः शान्तिः पशवः शान्त्यैव तदादित्यमुपयन्ति ॥ ११ ॥**

स्वाहौ देव नियुत्वतेति नियुच्छब्दोस्यां दृश्यते, नियुतश्च वायवोहि वडवास्ताश्च पशवः पशवश्च शान्तिरूपा एवञ्च नियुत्वती एषा प्रतिपद्भवतीति यत् तेन शान्त्यैवानुष्ठानेन आदित्यमुदाह्नाय ।११।

अथास्मिन्नहनि सामानि विधत्ते।

**दिवाकीर्त्यसामा भवति ॥ १२ ॥**

दिवाकीर्त्यानि सुक्रियाणि सामानि अस्मिन् प्रयुज्जन्त इति

दिवाकीर्त्यसामा । अयं विसुवान् दिवाकीर्त्यसामा कार्य्यः । कानि पुनस्तानि दिवाकीर्त्यानि, भ्राजाभ्राजे इत्यादिना अग्रे वक्ष्यमाणानि ॥ १२ ॥

अथैतद्दिवाकीर्त्यसामत्वं प्रशंसति ।

**स्वर्भानुर्वा आसुर आदित्यन्तमसाविध्यत्तस्य देवा दिवाकीर्त्यैस्तमोपाघ्नन्यद्दिवाकीर्त्यानि भवन्ति तम एवास्मादपघ्नन्ति रश्मयो वा एत आदित्यस्य यद्दिवाकीर्त्यानि रश्मिभिरेव तदादित्यं साक्षादारभन्ते ॥ १३ ॥**

आसुरेण स्वर्भानुना तमसाविध्यस्यादित्यस्य बाधकं तमोन्धकारं देवा दिवाकीर्त्यैः सामभिरपाघ्नन् व्यनाशयन् अतो यद्दिवाकीर्त्यान्यस्मिन् भवन्ति तेन तमएवास्मादादित्यादपघ्नन्ति । कथमेषां साम्नां तमसोहननसामर्थ्यमिति चेत्, उच्यते, दिवाकीर्त्यसामानीति यत् एते आदित्यस्य रश्मयो वै रश्मिरूपा एव अत एषां युक्तमेव तमसोनाशकत्वं तत्तथा सति रश्मिभिरेवादित्यं साक्षात् प्रत्यक्षमारभन्ते, ये सत्रिणो विषुवति दिवाकीर्त्यानि प्रयुञ्जत इत्यर्थः ॥ १३ ॥

दिवाकीर्त्यसामभिस्तमसोपहननं सामान्येनोक्तं तदेव विवृणोति ।

भ्राजाभ्राजे पवमानमुखे भवतो मुखत एवास्य ताभ्यां तमोपघ्नन्ति ॥ १४ ॥

पवमानमुखे माध्यन्दिनार्भवयोः पवमानयोर्म्मुखे प्रमुखे भ्राजाभ्राजे सामनी भवतः गायत्रस्य नित्यत्वात् ततः परस्तात् क्रमेण भवत इत्यर्थः। अस्य प्रत्नामनुद्यूतमिति तृचे गातव्यं साम भ्राजं तन्माध्यन्दिने पवमाने मुखे परिस्वानो गिरिष्ठा इत्यस्मिनोऽयं साम आभ्राजं तदार्भवपवमानमुखे यद्यप्यत्र पवमानमुख इति सामान्यसम्बन्धएव दृश्यते ये गायत्रे ते गायत्रीषूत्तरयोः पवमानयोरिति विशेषावगतेरेवं व्याख्यातं, स्पष्टमन्यत्। अनेन भ्राजाभाजयोः साम्नोः स्थाननियमोऽर्थादुक्तोभवति ॥ १४ ॥

तथान्येषामपि त्रयाणां साम्नां स्थानविशेषं प्रदर्शयन् पूर्व्वोक्तं तमोपहननमेव तत्साध्यं प्रदर्शयति।

महादिवाकीर्त्यञ्च विकर्णञ्च मध्यतो भवतो मध्यत एवास्य ताभ्यां तमोपघ्नन्ति भासमन्ततो भवति पत्तएवास्य तेन तमोपघ्नन्ति ॥ १५ ॥

विभ्राड् बृहत्यवत् सोम्यमध्विति तृचे जागते गेयं साम महादिवाकीर्त्यं। इन्द्र क्रतुन्न आभरेति प्रगाथे गेयं विकर्णं। एते सामनी मध्यतोऽस्य विषुवतो मध्ये पृष्ठस्तोत्रेषु भवतः। महा-

दिवाकीर्त्यं होतृसाम इतरद्ब्रह्मसाम। तथाच तैत्तिरीयकं, महादिवाकीर्त्यं होतुः पृष्ठं विकर्णं ब्रह्मसामेति। एवं सति ताभ्यामस्यादित्यस्य मध्यतो मध्यदेशात् एव तमो विनाशयन्ति। तथा अन्ततोऽन्तेऽवसाने भासमग्निष्टोमसाम कार्य्यं। प्रत्यस्य-स्येत्यस्यामृच्युत्पन्नं दशस्तोभं सामभासं तन्मूर्द्धानं दिव इत्येऽत गातव्यं। तेनान्ततः क्रियमाणेनैव भासेन पत्तः पादप्रदेशादेव तमोपघ्नन्ति ॥ १५ ॥

अग्निष्टोमसामत्वेन विहितं भासं प्रशंसति।

**दशस्तोभं भवति दशाक्षरा विराड् विराज्येव प्रतितिष्ठन्ति ॥ १६ ॥**

इदं भासं दशस्तोभं भवति आद्यन्तयोः प्रयुज्यमाना हाउ-हावादयो भासान्ता दशस्तोभास्तैर्य्युक्तमेतत् विराट् दशाक्षरा सा चान्नरूपा अन्नं वै विराडिति श्रुतेः तथा सति दश-स्तोभेन साम्ना विराज्येव सत्रिणः प्रतिष्ठिता भवन्ति ॥ १६ ॥

भासस्य स्तोत्रियद्वारेण स्तुतिं चिकीर्षुः काञ्चित्प्रश्नमुपक्षि-पति।

**यन्त्वित्याहुः षड्भिरितो मासैरध्वानं यन्ति षड्भिः पुनरायन्ति क्व तर्हि स्वर्गो लोको यस्य कामाय सत्रमासत इति ॥ १७ ॥**

इतोऽस्माल्लोकात् षड्भिः पूर्व्वपक्षसि भवैर्मासैः अध्वानमेव यन्ति स्वर्गप्राप्तिसाधनमार्गमेव यन्ति। पुनरुत्तरपक्षैः षड्भिः मासैरायन्ति इममेव लोकं प्रत्यागच्छन्ति। तर्हि तथा सति स्वर्गोलोकः क्व भवति यस्य स्वर्गस्य कामाय काममाप्तुं इमे यजमानाः सत्रमासत इति। यत्तु यत् खल्वाहुः कथयन्ति ब्रह्मवादिनः ॥ १७ ॥

तत्रेदमुत्तरमाह।

**मूर्द्धानन्दिव इति स्वर्गं लोकमारभन्ते ॥ १८ ॥**

विषुवतोऽग्निष्टोमसाम्नि मूर्द्धानन्दिव इति स्वर्गलोकवाचक-शब्दप्रयोगात् प्रयोगफलभूतं स्वर्गं लोकमारभन्ते प्राप्नुवन्ति ॥ १८ ॥

तर्हि व्याप्तत्वात् सत्रावसानएव म्रियेरन् तत्राह।

**अरतिं पृथिव्या इत्यस्मिन् लोके प्रतितिष्ठन्ति ॥ १९ ॥**

अत्र पृथिव्या इति कीर्त्तनात् एषामस्मिल्लोके प्रतिष्ठा भवतीत्यर्थः ॥ १९ ॥

अथ तस्यैतस्य स्तोत्रीयस्य तृचो विषुवतो रूप इत्याह।

**वैश्वानर ऋत आजातमग्निमिति विषुवत एव-तद्रूपं क्रियते ॥ २० ॥**

ऋतमित्यादित्यनाम विषुवानप्यादित्यसंस्तुतः। अत ऋत-शब्दस्य कीर्त्तनं विषुवतोरूपमित्यर्थः इत्थं प्रथमायाः स्तोत्रीयायाः पादद्वयेन प्रशंसा कृता ॥ २० ॥

अथ तृतीयपादे अतिथिशब्देनान्नाद्यप्राप्तिर्भवतीत्याह।

कविꣳ सम्राजमतिथिञ्जनानामित्यन्नाद्यमेवोपयन्ति ॥ २१ ॥

अतिथिर्ह्यन्नेन तर्पणीयः अतस्तद्वाचकेनातिथिशब्देन तत् सम्बन्धिनोऽन्नस्य प्रतीतेः सत्रिणोऽन्नाद्यमेवोपगच्छन्ति ॥ २१ ॥

चतुर्थपादे जनयन्तेति पदप्रयोगेण फलं दर्शयति।

आसन्नः पात्रञ्जनयंत देवा इति जायन्त एव ॥ २२ ॥

जनिधातोः प्रयोगात् विशिष्टेन संस्कृतरूपेण पुत्रपौत्रादिना वा जायन्ते एवैते ॥ २२ ॥

विहितमहः प्रशंसति।

तत्त्रिष्टुब्जगतीषु भवति त्रैष्टुब्जागतो वा आदित्यो यदतोऽन्यासु स्यादेव स्वगाल्लोकात्पद्येरन् ॥ २३ ॥

तदेतद्विषुवदहस्त्रिष्टुब्जगतीषु च भवति अत चाहःशब्द-

परामर्शकेन तच्छब्देन तस्मिन् प्रधानभूतं पृष्ठस्तोत्रमग्निष्टोमेति तदेतत्त्रिष्टुब्जगतीषु कर्त्तव्यं पृष्ठं हि महादिवाकीर्त्यं तद्विभ्राड्बृहदिति जागते तृचे गातव्यं मूर्द्धानमिति तृचे त्रैष्टुभे अग्निष्टोमसामभासं कार्य्यं तत्रात तच्छब्देन प्रकृतं भासमेवैकं साम परामृश्यते। तत् त्रिष्टुब्जगतीषु त्रैष्टुभजागतरूपयुक्तासु कार्य्यं तथाहि मूर्द्धानं दिवोऽरतिं पृथिव्या इत्यस्मिन् या दैव्या इत्यत्र ऋचो व्यूहेन द्वादशाक्षरत्वात् एषा जागतरूपा स्वतस्त्रिष्टुप्त्वादेव त्रैष्टुभरूपापि तिस्रोपि ऋचः त्रिष्टुप्जगत्यो-भवन्ति निदाने त्वेतद्वाक्यमुदाहृत्य त्रिष्टुब्जगतीष्विति पदं बहुधा व्याख्यातं तत्सर्व्वमनुसन्धेयं, आदित्यश्च त्रैष्टुब्जागतः कथं, गायत्रो वा अयं लोकः त्रैष्टुभान्तरिक्षलोकः जागतोऽसौ लोकः दिवश्चान्तरिक्षस्य मध्ये सञ्चरतीत्यादित्यस्त्रैष्टुब्जागतो भवति विषुवांश्चादित्यस्तुतः अतो विषुवतोऽग्निष्टोमस्य साम त्रैष्टुब्जागतमेव स्यादित्यर्थः। ननु शाट्यायनकादिषु अनुष्टुप्सु भासं कार्य्यमिति दृश्यते तत्कथं त्रिष्टुब्जगतीष्विति चेत् नैवं अतस्त्रिष्टुब्जगतीभ्यामन्यासु अन्यच्छन्दस्कासु यद्यदि भासं स्यात् स्वर्गाल्लोकात्पद्येरन् अधः पतेयुः सत्रिणः॥ २३॥

तथा प्रकारान्तरेण एता ऋचः प्रशंसति।

**सम्राड्वतीषु भवति साम्राज्यं वै स्वर्गो लोकः स्वर्गएव लोके प्रतितिष्ठन्ति॥ २४॥**

सम्राट् शब्दवतीषु ऋक्षु भासमग्निष्टोमसाम भवति यत्

स्वर्गस्तत् साम्राज्यं वै साम्राज्य ईश्वरस्य कर्म्माख्यं तथा सति कविं सम्राजमिति सम्राड् शब्दप्रयोगात् साम्राज्ये स्वर्ग-लोके प्रतिष्ठिता भवन्ति ॥ २४ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्थाध्यायस्य षष्ठः खण्डः।

---

अथ सप्तमः खण्डः।

पूर्व्वमवादिष्म इन्द्र क्रतुन्न आभर इत्यस्मिन् प्रगाथे विषुवति विकर्षं ब्रह्म साम कार्य्यमिति तं प्रगाथं माध्यन्दिने पवमाने अभीवर्त्ताख्यं साम च विधास्यन्नाह।

**आत्मा वा एष संवत्सरस्य यद्विषुवान् पक्षावेतावभितो भवतो येन चेतोऽभीवर्त्तेन यन्ति यश्च परस्तात् प्रगाथो भवति तावुभौ विषुवति कार्य्यौ पक्षावेव तद्यज्ञस्यात्मन् प्रतिदधति स्वर्गस्य लोकस्य समष्ट्यै ॥ १ ॥**

यत् यो विषुवान् एष सम्वत्सरसत्रस्य गवामयनस्यात्मा मध्यमौ यौ द्वौ षण्मासौ एता विषुवन्तमभितः क्रियमाणौ पक्षावेव भवतः। तत्र पूर्व्वस्मिन् पक्षसि येनाभीवर्त्तेन यन्ति यश्च

परस्तादुत्तरस्मिन् पचसि इन्द्रक्रतुमिति प्रगाथो भवति एतौ विषुवतः पक्षभूतौ अतो विषुवति कार्य्यौ प्रगाथे विकर्णादयः कार्य्याः अभीवर्त्तस्तु माध्यन्दिने पवमाने कार्य्यः एतत्तेनैतयोः करणेन यज्ञस्य गवामयनस्यात्मनि पक्षौ प्रतिदधति यजमानाः एतच्च पक्षयोः प्रतिनिधानं स्वर्गस्य लोकस्य समष्ट्यै सम्यक् प्रति कल्पते पक्षवान्हि पतितुं प्राप्नोति ।१।

कोसौ प्रगाथ उत्तरपक्षे यो यस्मिन् विकर्णं भवति तमाह।

इन्द्रक्रतुन्न आभरेति प्रगाथो भवति ॥ २ ॥

स्पष्टोऽर्थः ।२।

अस्य प्रगाथस्य प्रयोगः प्रजातिहेतुरित्याख्यानमुखेन दर्शयति ।

वसिष्ठो वा एतं पुत्रहतोऽपश्यत् स प्रजया पशुभिः प्राजायत यदेष प्रगाथो भवति प्रजात्यै ॥ ३ ॥

पुत्रहतो हतपुत्रः सौदास अग्नौ प्रक्षेपात् शक्त्याख्ये पुत्रे हते इमं प्रगाथं वसिष्ठोऽपश्यत् स तेन प्रगाथेन प्रजया च पशुभिश्च प्राजायत यदेष प्रगाथो भवति गवामयने तत् सतिणां प्रजात्यै पुत्रादिरूपेण यजमानाय भवति ॥ ३ ॥

अस्मिन् प्रगाथे जीवा ज्योतिरशीमहीति जीवनप्रतिपादनात् संवत्सरस्य क्षेमेण सन्तरणमेव प्रार्थ्यमित्याह ।

जीवा ज्योतिरशीमहीति ये वै स्वस्ति संवत्सरꣳ सन्तरन्ति ते जीवा ज्योतिरश्नुवते ॥ ४ ॥

ये खलु यजमानाः स्वस्ति खलु क्रमेण संवत्सरꣳ सन्तरन्ति ते जीवाः जीवन्तः सन्तो ज्योतिरश्नुवते एतत् पादेन जीवतामेव सतां संवत्सरसवसंपूर्त्त्या तेजसः प्राप्तिः भवतीत्यर्थः ।४।

तथास्मिन् प्रगाथे विद्यमानं दुराध्य इति पदं व्याचष्टे ।

मानो अज्ञाता वृजना दुराध्यो माशिवासो वक्रमुरिति ये वै स्तेना रिपवस्ते दुराध्यस्तानेव तदतिक्रामन्ति ॥ ५ ॥

स्तेनाः तस्करा रिपवो वाधकास्तेति दुराध्यः दुष्टाध्यानाः तानेव तत्तेन पदातिकामन्ति अशिवासोऽशिवकरा अस्मात् प्रतिक्रमिषुरिति मन्त्रवर्णात् । उत्तरा ग्रन्थे ऋचः सर्व्वा-व्याख्याता अस्माभिरिति पुनरत्र न व्याख्यायन्ते ॥ ५ ॥

पुनरपि प्रगाथशेषमुदाहृत्य प्रशंसति ।

त्वया वयं प्रवतः शश्वतीरपोऽति शूरतरामसीति संवत्सरो वै प्रवतः शश्वतीरपस्तमेव तत्तरन्ति ॥६॥

शश्वतीः वह्वीः प्रवतः प्रवणगामिनीः अपोऽतितराम इति अतितरणं श्रूयते । अत्र प्रवतः शश्वतीरप इति त्रिभिरपि शब्दै-

र्बह्वनुष्ठानेन दुस्तरत्वात् संवत्सर एवोच्यते एतत् एतेन प्रार्थ्येन तं संवत्सरमेव यजमानास्तरन्ति ॥ ६ ॥

अथोत्तरस्मिन् पक्षसि विकल्पो त्रयः प्रगाथाः इन्द्रक्रतुमित्यस्य स्थाने कर्त्तव्या इत्युपन्यस्यति।

अद्याद्याश्वःश्वस्त्वामिदा ह्यो नरो वयमेनमिदा ह्य इति सन्तनयः प्रगाथा भवन्ति तेषामेकः कार्य्यः सलोमत्वाय श्वस्तनमेवाभिसन्तन्वन्ति ॥ ७ ॥

एषु प्रगाथेषु अद्याद्याश्वः श्वः इदानीं इदानीं ह्यः पूर्व्वेद्युरिति अहर्द्वयसम्बन्धदर्शनात् एते प्रगाथाः सन्तनयः सन्तानस्य अहर्द्वयसम्बन्धस्य वाधका भवन्ति। अत उत्तरस्मिन् पक्षसि तेषामेकः प्रगाथः कार्य्यः सच सलोमत्वायानुलोमतायै भवति एवं कुर्व्वन्तो यजमानाः श्वस्तनं आगाम्यहरेव वर्त्तमानेनाह्ना अभिसन्तन्वन्ति सन्ततं सम्बद्धं कुर्व्वन्ति ॥ ७ ॥

इमं पक्षं निरस्य पूर्व्वोक्तमेव प्रगाथं विदधाति।

अथो खल्वाहुरिन्द्र क्रतुन्न आभरेत्येव कार्य्यꣳ समृद्ध्यै ॥ ८ ॥

अथो खल्विति पक्षान्तरपरिग्रहे समृद्ध्यै समृद्ध्यर्थमिन्द्रक्रतुन्न आभरेत्येव प्रगाथं कार्यमाहुर्ब्रह्मवादिनः। वसिष्ठो वा एतं पुत्रहत इत्यादिना समृद्धिहेतुत्वं चास्योक्तं ॥ ८ ॥

अथोत्तरस्मिन् पक्षसि अहःक्लृप्तिं विदधाति।

प्रत्यवरोहिणोमासा भवन्ति ॥ ९ ॥

पूर्वस्मिन् पक्षसि ये मासा अनुक्रान्ता उत्तरस्मिन् पक्षसि प्रत्यवरोहिण: कार्याः प्रथमं तावत् स्वरसामानः तृतीयो द्वितीयः प्रथम इति क्रमेण प्रथममनुष्ठेयाः पृष्ठ्यश्च त्रयस्त्रिंशादारम्भण-स्त्रिवृदन्तः कार्य्यः। अभिप्लवा अपि प्रतिलोमा भवेयुः ॥ ९ ॥

इममेव प्रत्यवरोहं लौकिकदृष्टान्तेन स्तौति।

यथा वा इतो वृक्षं रोहन्त्येवमेनं प्रत्यवरो-हन्ति स्वर्गमेव तल्लोकं रूढ्वास्मिँल्लोके प्रतिति-ष्ठन्ति ॥ १० ॥

यथा खलु लोके पुरुषा इतो मूलादारभ्य उन्नतं वृक्षं रोहन्ति रूढ्वा च पुनरग्रादारभ्य मूलमवरोहन्ति एवमेव तत् षड्भि-र्मासैरारुह्य एनं यज्ञं यजमानाः प्रत्यवरोहन्ति तत्तेनारोहा-वरोहयोः करणेन स्वर्गमेव लोकं रूढ्वा षड्भिः मासैरारुह्य पुनः षड्भिर्मासैरवरोहणेनास्मिँल्लोके प्रतिष्ठिता भवन्ति ॥१०॥

इति ताण्ड्यमहाब्राह्मणे चतुर्थाध्यायस्य

सप्तमः खण्डः।

---

अथ अष्टमः खण्डः ।

एवमुत्तरस्मिन् पचसि स्वरसामप्रभृति प्रत्यवरोहणमासा-नुपयन्ति उत्तरे मासि तीनभिप्लवान् कुर्य्युः ततो गो आयुषी द्वे अहनी कर्त्तव्ये तत्र विधीयते ।

**गौश्चायुश्च स्तोमौ भवतः ॥ १ ॥**

गोष्टोम आयुष्टोमश्चेति द्वे अहनी उक्थसंस्थे कर्त्तव्ये ॥१॥

अनयोर्द्वित्वसङ्ख्यां प्रशंसति ।

**द्विपाद्यजमानः प्रतिष्ठित्यै ॥ २ ॥**

यस्मादिमौ गोष्टोमायुष्टोमौ द्वौ अतो द्विपाद् यजमानः प्रतिष्ठित्यै प्रतिष्ठानाय भवति ॥ २ ॥

स्तोत्रीयासंख्याद्वारेणैतौ प्रशंसति ।

**ऊनातिरिक्तौ भवत ऊनातिरिक्तं वा अनु प्रजाः प्रजायन्ते प्रजात्यै ॥ ३ ॥**

तत्र गोष्टोमस्य पञ्चदशं बहिष्पवमानं त्रिष्टदाज्यानि सप्तदशं माध्यंदिनं सवनं एकचत्वारिंशदधिकद्विशतास्तोत्रीया भवन्ति । आयुष्टोमस्य तु त्रिष्टद्बहिष्पवमानं पञ्चदशान्याज्यानि शेषं गोष्टोमवदिति स्तोमक्लृप्तौ सत्येकोनषष्ट्यधिकद्विशतस्तोत्रीया भवन्ति । उभयत्र दशसंख्याया विराट् संपादने सति एतौ

गोष्टोमायुष्टोमौ ऊनातिरिक्तौ भवतः। गोष्टोम एकया स्तोत्रीययातिरिक्त इतरस्त्वेकया न्यूनः किमितो भवति उच्यते ऊनं वातिरिक्तं यदाह्नि पुंसो हि वीर्य्यमतिरिक्तं स्त्रिया न्यूनं अथवा स्त्रिया अतिरिक्तं पुंसो न्यूनं एतदूनातिरिक्तं युगलमनुलक्ष्य ईदृशे युगले प्रजाः प्रजायन्ते स्त्रीपुंसरूपा उत्पद्यन्ते। यदा तु स्त्रीपुंसयोरपि वीर्य्यं समं भवति तदा नपुंसकमेव जायते उक्तं हि पुमान् पुंसोधिके शुक्रे स्त्री भवत्यधिके शोणिते स्त्रियाः, तथाच यास्कः, शुक्रातिरेके पुमान् भवति, शोणितातिरेके स्त्री भवति, द्वाभ्यां समेन नपुंसको भवतीति। एवं न्यूनातिरिक्तं करणं सत्रिणां प्रजात्यै पुत्रादिरूपेण प्रजननाय भवति ॥ ३ ॥

अथैतौ संयुज्य स्तौति।

**वैराजौ भवतोऽन्नं विराडन्नाद्य एव प्रतितिष्ठन्ति ॥ ४ ॥**

एतौ गोष्टोमायुष्टोमौ विराजौ विराजमभिसम्पन्नौ भवतः दशाक्षरा विराडिति श्रुतेः, दशसंख्यया अनयोः स्तोत्रीयाणां विभागे सति विराट् संपत्तेर्वैराजत्वं, स्पष्टमन्यत् ॥ ४ ॥

इत्यमुत्तरस्मिन् पक्षे षष्ठे मासि त्रिंशत्संख्यान्यहानि विहितानि तत ऊर्द्ध्वं द्वादशाहस्य मध्यतो यो दशरात्रः स कर्त्तव्य इति विदधाति।

**द्वादशाहस्य दशाहानि भवन्ति ॥ ५ ॥**

प्रायणीयोदयनीयौ मुक्त्वा यानि मध्ये दशाहानि तानि कर्त्तव्यानीत्यर्थः ॥ ५ ॥

अथैतानि स्तौति ।

**विराड्वा एषा समृद्धा यद्दशाहानि विराज्येव समृद्धायां प्रतितिष्ठन्ति ॥ ६ ॥**

सर्व्वस्तोमसर्व्वपृष्ठसंयोगात् एषा समृद्धा विराट् यत् यान्येतानि दशाहानि तेन विराज्येव समृद्धायां सत्रिणः प्रतिष्ठिता भवन्ति ॥ ६ ॥

अथ विहितानि दशाहान्यवयुज्य स्तौति ।

**पृष्ठानि भवन्ति वीर्यं वै पृष्ठानि वीर्य एव प्रतितिष्ठन्ति छन्दोमा भवन्ति पशवो वै छन्दोमाः पशुष्वेव प्रतितिष्ठन्त्यथैतद्दशममहराप्तस्तोममाप्तछन्दआप्तविभक्तिकमनिरुक्तं प्राजापत्यं ॥ ७ ॥**

पृष्ठ्ये षडहे क्रमेण रथन्तरबृहद्वैरूपवैराजशाक्वररैवतानि सामानि पृष्ठानि पृष्ठस्तोत्रनिर्व्वाहकाणि भवन्ति तानि च सर्व्वसाधकत्वाद्वीर्य्यमित्युच्यते तथा सति वीर्य्यएव प्रतितिष्ठन्ति षड़हानन्तरं त्रयश्छन्दोमा भवन्ति ते च पशुसाधनत्वात् पशवो वै तदनुष्ठानेन पशुष्वेव प्रतितिष्ठन्ति अथ छन्दो

मानन्तरं एतद्दशममहरविवाक्यनामकं भवति तदेवाहराप्तस्तोमादि विशेषणैर्विशेष्यते एको हि गणो द्वादशाहिकोदशरात्रः तत्र पूर्वेष्वहस्सु त्रिवृदादयोऽष्टाचत्वारिंशान्ताः स्तोमाः क्रमेण प्रयुज्यमाना आप्यन्ते समाप्यन्त इत्याप्तस्तोमकमेतत् । तथा आप्तछन्दविभक्तायस्य सः तं तेन तस्मै तस्मात् तस्य तस्मिन्निति सप्त आमन्त्रितविभक्तिरष्टमी तास्च पूर्वेष्वेवाहस्सु समाप्ता इति । इदमहराप्तविभक्तिकं अनिरुक्तं देवतावाचिनः पदस्य पृष्ठस्तोत्रे अभावादनिरुक्तं अत्र हि कयानश्चित्र आभुवदिति ककतीषु रथन्तरं पृष्ठस्तोत्रस्य चेन्द्रो देवता सा चात्र न निरुच्यते । आज्येष्वपि यदद्य सूर उदित इति तृचस्तोत्रे अनिरुक्ते उत्वा मन्दन्त्विति तृचस्याद्ये अनिरुक्ते इत्येवं अस्मिन्नहनि अनिरुक्तदेवता द्रष्टव्या अत एवैतदहः प्राजापत्यं अनिरुक्तं प्रजापतिरितिश्रुतेः अतएवङ्गुणविशिष्टमहः सत्रिणां फलावाप्त्यै सम्पद्यत इत्यर्थः ॥ ७ ॥

अथैतस्मिन् दशमेऽहनि किञ्चिद्धर्म्मं विधत्ते ।

## यदध्याङ्करतितद्रेचयन्ति तस्मान्न व्युच्यं ॥ ८ ॥

अस्मिन्नहनि यत् यदध्याङ्कः विक्रवन्ति । अज्ञानं प्रंसयितुं चानुष्ठेयं पदार्थं स्तुतशस्त्रादिषु तादृशं शब्दं वा इदमेतेनायथाकृतं इदमेतेन यथोक्तमिति क्रियमाणविरोधिवचनं यदि कुर्वन्ति विभक्तारः तस्मात् नव्युच्यं अस्मिन्नहनि विरुद्धवचनं न कर्त्तव्यं अविवाक्यमहरिति ह्येतदाचक्षते ॥ ८ ॥

अथास्मिन्नहनि अनुष्टुप्छन्दसः प्रयोगं परोक्षेण विधत्ते।

**परोक्षमनुष्टुभमुपयन्ति प्रजापतिर्वा अनुष्टुप् यत् प्रत्यक्षमुपेयुः प्रजापतिमृच्छेयुः ॥९॥**

आनुष्टुभं छन्दः परोक्षं अप्रत्यक्षमुपयन्ति उपेयुः कुर्य्युः। अष्टाक्षरैश्चतुर्भिः पादैः प्रत्यक्षमनुष्टुप् भवति अतोऽन्या द्वात्रिंशदक्षरा परोक्षानुष्टुप् सैवास्मिन्नहनि कार्य्या न प्रत्यक्षा आर्भवे श्यावा श्वान्धीगवे अनुष्टुप्सु प्रकृतौ भवतः ते एव पर्यूषु प्रधन्वेति पिपीलिकमध्यासु कार्य्ये इति ईदृशं अनुष्टुभं परोक्षमुपयन्त्यतिरेके निन्दामुखेन पुरोच्यते यदिदमनुष्टुप् छन्दः स प्रजापतिर्वै तदीयत्वात् तद्रूप एव तदीयत्वञ्च पूर्वमेवोक्तं एवं सति यत् यदि प्रत्यक्षमनुष्टुभमुपेयुः प्रजापतिमृच्छेयुः प्राप्नुयुः सत्रान्तरे अस्माल्लोकात्प्रच्युता भवेयुरित्यर्थः। इह लोके चिरं स्थित्वा देहान्ते प्रजापतेः सायुज्यं सत्रिभिः काम्यते ॥ ९ ॥

अथैतस्याह्नोऽग्निन्नरोदीधितिभिररण्योरिति विराडग्निष्टोमसाम वामदेव्यं त्रयस्त्रिंशस्तोमकं कार्य्यमिति विधित्सुरर्थवादेनैतद्विधिमुन्नयति।

**योवै सत्रस्य सदेद सन्नवति वामदेव्यं वै साम्नां सदग्निर्देवतानां विराट् छन्दसान्त्रयस्त्रिंशः स्तोमानां तान्येव तदेकधा संभृत्योत्तिष्ठन्ति ॥ १० ॥**

यः खलु सत्रस्य सत् सारं वेद सत् सारभूतः श्रेष्ठः स्वानां भवति किं तत् सत्रस्य सारमित्युच्यते, साम्नां मध्ये वामदेव्यं वामदेवेन दृष्टं साम सत् सत्रसम्बन्धि सत्रात्मकं, देवानां मध्ये अग्निः छन्दसां मध्ये विराट् स्तोमानां मध्ये त्रयस्त्रिंशः, एवं सति वामदेव्यादीन्येकधा सम्भृत्योत्तिष्ठन्ति सत्रादुत्थिता भवन्ति आग्नेयीषु विराट्सु वामदेव्यमग्निष्टोमं त्रयस्त्रिंश-स्तोमकं कुर्य्युरित्यर्थः ॥१०॥

अथ वामदेव्यस्तुत्यर्थं ब्रह्मवादिनां विचारं दर्शयति ।

**ब्रह्मवादिनो वदन्ति यतः सत्रादुदस्थाता ३ स्थिता ३ दिति ॥ ११ ॥**

यतो गच्छतः सत्रात् किंसेते सत्रिण उदस्थाता उत्तिष्ठन्ति उत स्थितात् सत्रादिति ब्रह्मवादिन आहुः उभयत्र विचार्य्य-माणानामिति श्रुतिः तिष्ठतेर्लुङ्लङिति वर्त्तमाने लुट् प्रत्ययेन मध्यमः ॥११॥

तत्र केचन यतः सत्रादुत्तिष्ठन्ति केचित् स्थितादिति तदु-भयं विविच्य दर्शयन् फलमपि तयोः दर्शयति ।

**ये रथन्तरेण स्तुत्वोत्तिष्ठन्ति ते यत उत्तिष्ठन्ति तान् ब्रूयादप्रतिष्ठाना भविष्यन्तीति ये बृहता स्तुत्वो-त्तिष्ठन्ति ते स्थितादुत्तिष्ठन्ति तान् ब्रूयात् स्वायु-**

**कैषाꣳ श्रीर्भविष्यति न वसीयाꣳसो भविष्यन्तीति ॥१२**

ये रथन्तरमग्निष्टोमसाम कृत्वा तेन स्तुत्वोत्तिष्ठन्ति ते यतो यतः गच्छतः सत्रात् उत्तिष्ठन्ति रथन्तरं हि माध्यन्दिने सवने बृहतः पूर्वं प्रयुज्यते तस्मिन् समये गच्छत्येव यज्ञो न समाप्यत इति गच्छत एव सत्रादुत्तिष्ठन्ति तान्यदि कश्चिद्ब्रूयात् अप्रतिष्ठाना: प्रतिष्ठारहिता: एते सत्रिणो भविष्यन्ति तथैव तेषां फलं स्यादिति शेषः। ये बृहदग्निष्टोमसाम कृत्वा तेन स्तुत्वोत्तिष्ठन्ति रथन्तरप्रयोगावस्थायां बृहता स्थितत्वात् ते स्थितादेव सत्रादुत्तिष्ठन्ति तान्यदि कश्चिद् ब्रूयात् स्थायुका स्थितिशीलास्य श्रीर्भविष्यति नोत्तरोत्तरं वर्द्धते अतो न वसीयाꣳसः श्रेयाꣳसो भविष्यन्तीति तदपि फलं तथैव स्यादित्यर्थः। तस्मादुभयमग्निष्टोमसाम न कार्यमित्युक्तं भवति अतो वामदेव्येन स्तुत्वोत्थेयमिति ॥१२॥

पूर्वोक्तमेव पक्षं निगमयति।

**ये वामदेव्येन स्तुत्वोत्तिष्ठन्ति ते सतः सदभ्युत्तिष्ठन्ति पूर्णात्पूर्णमायतनादायतनमन्तरिक्षायतना हि प्रजा ॥ १३ ॥**

ये वामदेव्येन स्तुत्वोत्तिष्ठन्ति ते सतः सारात् सारमभिलक्ष्योत्तिष्ठन्ति वामदेव्यादिकात् पूर्वोक्तात् सतः सारात् उत्तिष्ठन्तः सत्फलं लभन्त इत्यर्थः। तथा पूर्णाच्चास्मादुत्तिष्ठन्तः

पूर्णफलं प्राप्नुवन्ति तथा अन्तरिक्षं वै वामदेव्यमिति श्रुतेः वामदेव्यमन्तरिक्षात्मकमायतनं प्रजाश्चान्तरिक्षायतना अवकाशमन्तरेण सञ्चरणानुपपत्तेस्तासां तदायतनत्वं तथा सति आयतनभूताद् वामदेव्यादुत्तिष्ठन्त आयतनं प्रजानामायतनं स्थानं अन्तरिक्षात्मकं अभिलक्ष्योत्तिष्ठन्ति प्रजानामायतनत्वं लभन्त इत्यर्थः ॥१३॥

अथ स्तोत्रीयाक्षरसंख्यया प्रशंसति।

**त्रयस्त्रिꣳशदक्षरासु भवति त्रयस्त्रिꣳशद्देवतास्वेव प्रतिष्ठायोत्तिष्ठन्ति ॥ १४ ॥**

अग्निं नर इत्याद्यासु त्रयस्त्रिꣳशदक्षरासु वामदेव्यं भवति देवतासु त्रयस्त्रिꣳशत्, तथा सति स्तोत्रीयाक्षरसंख्यया देवतास्वेव प्रतिष्ठायोत्तिष्ठन्ति ॥ १४ ॥

अथ वामदेव्यं बहुधा प्रशंसति।

**प्राजापत्यं वै वामदेव्यं प्रजापतावेव प्रतिष्ठायोत्तिष्ठन्ति पशवो वै वामदेव्यं पशुष्वेव प्रतिष्ठायोत्तिष्ठन्ति ॥ १५ ॥**

वामदेव्यं हि कयानश्चित्र इत्यनिरुक्तदेवतायां तस्यामृच्युत्पन्नं अनिरुक्ता च प्राजापत्या अतस्तत्रोत्पन्नं वामदेव्य-

मिति प्राजापत्यमित्युच्यते पशुसाधनत्वात् शान्तिहेतुत्वाच्च वामदेव्यस्य तच्छन्दत्वं, स्पष्टमन्यत् ॥ १५ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्थाध्यायस्य
अष्टमः खण्डः ।

---

अथ नवमः खण्डः ।

अहर्गणेष्वन्त्यान्यहान्युदवसानीयान्तानि पत्नीसंयाजान्तानीतराणि अस्मिन् दशमेऽहनि पत्नीसंयाजेभ्य ऊर्द्ध्वमपि मानसस्तोत्रादयः केचित् धर्मा अनुष्ठेयाः तानत्र विधास्यन् आदावाहवनीयोपस्थानं विधत्ते ।

**पत्नीः संयाज्य प्राञ्च उदेत्यायꣳ सहस्रमानव इत्यतिच्छन्दसाहवनीयमुपतिष्ठन्ते ॥ १ ॥**

पत्नीसंयाजान् कृत्वा प्राञ्चः प्रङ्मुखादेत्य प्राग्वंशान्निर्गम्य मानसेन स्तोष्यतः अयꣳ सहस्रमानव इति अतिच्छन्दसा अतिछन्दस्यृचि गीतेन गोरिति निधनवता उद्गातारः त्रय आहवनीयमुपतिष्ठन्ते । नन्वत्रातिछन्दसेति ऋच एव करणता श्रूयते न साम्नः, अतः कथं साम्नोपस्थानमुच्यते, यस्मात् सूत्रकारएवमुक्तवान् आहवनीयं गत्वाऽयꣳसहो हा इति त्रिरुद्गाता गायेन्निधनमितरावनूपेयातामिति, अतः साम्नैवोपस्थानमवगम्यते

इति गानविशिष्टयैवर्चोपस्थानं पत्नीसंयाज्येति क्त्वाप्रत्ययस्य पूर्वकालतामात्रेण समानकर्तृकत्वेपि उद्गातॄणां पत्नीसंयाजेन सम्बन्धाभावात् ॥ १ ॥

एतदतिछन्दसोपस्थानं स्तौति।

**इमे वै लोका अतिछन्दा एष्वेव लोकेषु प्रतितिष्ठन्ति ॥ २ ॥**

गायत्र्यादीनां छन्दसां भूराद्येकैकलोकसम्बन्धिनां अतिछन्दास्तु इमे त्रय एव लोकाः तत्र गायत्रीत्रिष्टुब्जगतीनामन्तर्भावित्वात् अतस्तत्करणकोपस्थानेन एष्वेव भूरादिलोकेषु सत्रिणः प्रतितिष्ठन्तीति ॥ २ ॥

तदीयं निधनमनूद्य प्रशंसति।

**गोरिति निधनं भवति विराजो वा एतद्रूपं यद्गौर्विराज्येव प्रतितिष्ठन्ति ॥ ३ ॥**

यत् एतद्विराट्छन्दसोरूपं गौः गोमान् हि लोके विराजति यद्वा गोप्रभवं यदेतत् क्षीरादिकमेतत् विराडन्नं वै विराडिति श्रुतेः अतोऽनेन विधानेन अन्नरूपे विराज्येव प्रतितिष्ठन्ति ॥ ३ ॥

अथ मानसं स्तोत्रं विधत्ते।

**प्रत्यञ्चः प्रपद्य सार्पराज्ञ्या ऋग्भिस्तुवन्ति ॥ ४ ॥**

आहवनीये यत् प्रत्यञ्चः प्रत्यङ्मुखाः सदः प्रपद्य सार्प-राज्ञ्या सर्पराज्ञी ब्रह्मवादिनी तया दृष्टाभिः ऋग्भिः आयङ्गौः पृश्निरक्रमीदित्यादिभिः स्तुवन्ति आसु गायत्रसाम्ना स्तुवन्तीत्यर्थः ॥ ४ ॥

अथैताः प्रशंसति।

अर्बुदः सर्प एताभिर्मृतान्त्वचमपाहत स्तामे-वैताभिस्त्वचमपघ्नते ॥ ५ ॥

अर्बुदो नाम काद्रवेयः एताभिः ऋग्भिर्मृतां शीर्णान्त्वच-मपाहत अपागमयत् सत्रिणोप्येताभिर्मृतां पापात्मिका-न्त्वचरूपामपघ्नते अपगमयन्ति ॥ ५ ॥

प्रतिष्ठाहेतवश्चैता इति प्रशंसति।

इयं वै सार्पराज्ञ्यस्यामेव प्रतितिष्ठन्ति ॥ ६ ॥

इयं वै दृश्यमाना भूमिः सार्पराज्ञी सर्पणशीलानां प्राणिना-मीश्वरी ये तु तद्दृष्टाभिः ऋग्भिः स्तुवन्ति ते नास्यामेव भूमौ प्रतितिष्ठन्ति ॥ ६ ॥

अस्य च स्तोत्रस्य त्रिकएव स्तोम इति तत्संख्यया प्रशं-सति।

तिसृभिः स्तुवन्ति त्रय इमे लोका एष्वेव लोकेषु प्रतितिष्ठन्ति ॥ ७ ॥

स्तोत्रीयासु त्रिसंख्यायोगात् त्रिष्वपि लोकेषु प्रतितिष्ठन्तीत्यर्थः ॥ ७ ॥

अध्वर्युणा स्तोत्रोपाकरणं मनसा कर्त्तव्यमिति विधत्ते।

**मनसोपावर्त्तयति ॥ ८ ॥**

असर्ज्जसर्ज्जीत्यादिकमुपावर्त्तध्वमित्यन्तं स्तोत्रोपाकरणं मन्त्रम्मनसा जपेदित्यर्थः ॥ ८ ॥

तथोद्गातॄणामपि हिङ्कारप्रस्तावादिकमपि मनसैव कर्त्तव्यमिति विधत्ते।

**मनसा हिङ्करोति मनसा प्रस्तौति मनसोद्गायति मनसा प्रतिहरति मनसा निधनमुपयन्त्यसमाप्तस्य समाप्त्यै ॥ ६ ॥**

सर्व्वे निधनइति वचनादत्त निधनमुपयन्तीति बहुवचनं एतच्च मनसा करणं यज्ञे यत्किञ्चिदसमाप्तमनुष्ठानेनानवाप्तमस्ति तस्य सर्वस्य समात्यै समापनाय भवति ॥ ६ ॥

असमाप्तसमापनं लोके प्रसिद्धमित्याह।

**यद्वै वाचा न समाप्नुवन्ति मनसा तत्समापयन्ति ॥ १० ॥**

यत् खलु वाचा वाक्येन लौकिकाः पुरुषाः समाप्तुं न प्रभुवन्ति मनसैव तत्समापयन्ति॥ १० ॥

स्तोत्रस्थानस्य परिश्रयणं विधत्ते।

परिश्रिते स्तुवन्ति ब्रह्मणः परिगृहीत्यै ॥ ११ ॥

परिश्रिते कटादिभिरावेष्टिते स्थाने स्तुयुः तच्च परिश्रयणं ब्रह्मणः स्तोत्रात्मकस्य परिगृहीत्यै परिग्रहणाय बहिर्गमना-भावाय भवति ॥ ११ ॥

अथ ब्रह्मोद्यं विधत्ते।

ब्रह्मोद्यं वदन्ति ब्रह्मवर्चस एव प्रतितिष्ठन्ति ॥१२॥

अथ सूत्रकारः गायत्रीं निर्ब्रूयुरिति धानञ्जय्यस्तुतुर्होता-रमभिप्रेत्यैतदिति गौतमः, तर्कं वा कथयेयुर्यथाश्वत्तिरात्र इति शाण्डिः, तत्सवितुर्वरेण्यमित्येषा गायत्री साक्षाद्-ब्रह्मणः प्रतिपादिका तस्यास्त्रिर्वचनं ब्रह्मोद्यमिति धानञ्जय्यस्य मतं, चित्तिस्रुक् चित्तमाज्यमित्यादिकाः पञ्चानुवाकाः चतु-र्होतारोऽध्वर्युभिः समाम्नाताः तेषामाद्यं स्तुत्यनुशंसनाय होता व्याचष्टत इति विधास्यते तदेवाख्यानं ब्रह्मोद्यमिति गौतमः, यथा त्रिरात्रेऽश्वमेधे वादिप्रतिवादिरूपेण तर्कं प्रश्नप्रतिवचने कुर्वन्ति किंस्विदासीदित्यादिभिर्मन्त्रैस्तथैवा-त्रापि कर्त्तव्यमिति शाण्डिल्यः, एवं ब्रह्मवादे कृते सति ब्रह्म-वर्चसएव यजमानाः प्रतितिष्ठन्ति ॥ १२ ॥

स्तोत्रानुशंसनार्थं होतुश्चतुर्होतृमन्त्रं विधत्ते।

**चतुर्होतारꣳ होता व्याचष्टे स्तुतमेव तदनुशꣳसति नहि तत् स्तुतं यदननुशस्तं ॥ १३ ॥**

मानसस्तोत्रानन्तरं स्तोत्रीया ऋचो मनसा शस्त्वा चतुर्होतॄणां आद्यश्चित्तिस्स्रगित्यनुवाकं व्याचक्षीत व्याख्यानमध्वर्युस्वरेण कथनं तत्तेन व्याख्यानेन स्तुतस्य स्तोत्रस्यानुशंसनं कृतं भवति यद्यपि स्तोत्रीयाभिरेव अनुशंसनं कृतं तथापि ताः पराच्यः शस्यन्त इति नैतावता स्तोमाभिशंसनं निष्पद्यते तदर्थमेव तद्व्याख्यातमित्यर्थः, अनुशंसनाभावे कृतमपि स्तोत्रमकृतसमं स्यादित्ययमर्थो न हि तदित्यादिनोच्यते ॥ १३ ॥

अथ प्रजापतिपरिवादः कर्त्तव्य इति विधत्ते ।

**प्रजापतिं परिवदन्त्याप्नुवैनं तद्व्याचक्षते तावदापामैनमिति ॥ १४ ॥**

हे प्रजापते त्वं दुर्लभः दुराराध्यश्च तथापि त्वां दशमेनाह्ना गृहीतवन्तः क्वेदानीं गमिष्यतीत्येवं परिवादं कुर्युरित्यर्थः; यद्वा श्रुत्यन्तरप्रसिद्धोऽकुशलोवायं प्रजापतिः यो दंशमशकान् असृजत् यस्तेनानित्यादिकं, अथ वा प्रजापतिर्वै स्वां दुहितरमभ्यधावदित्यादिकं यत्पापं कर्म्म तस्य कीर्त्तनं परिवादः, तथा च सूत्रितं प्रजापतिं परिवदन्ति पापैः कर्मभिरित्येके नत्वधीमहे, अपि वाध्वर्युबह्वृचानां न किञ्चित्स्यादिति किमर्थः प्रजापतेः परिवादः उच्यते यथा महारण्ये मत्तगजं उपायेन गृहीत्वा

सन्तुष्टाः परिवदन्ति केदानीं दुर्ग्रहो मूढचारी दुश्चरित्वः त्वं गमिष्यसीति परिवदन्ति, एवमेव प्रजापतिं प्रत्यक्षत उपलभ्य हर्षातिशयेन परिवादः क्रियते तदेतदुच्यते, एनं प्रजापतिं वयन्तावदापाम प्राप्तवन्त इति बुद्धा एनं प्रजापतिमाप्त्वैव प्राप्यैव तद्याचक्षते तस्य भर्त्सनाय प्रजापतिकृतं तत् पापं कर्म्म कथयन्ति ॥ १४ ॥

अथ गृहपतिकर्त्तृमौदुम्बरीधारणं विधत्ते।

**गृहपतिरौदुम्बरीं धारयति गृहपतिर्वा ऊर्ज्जो यन्तोर्जमेवैभ्यो यच्छति ॥१५॥**

सत्रिणां मध्ये यो गृहपतिरसावौदुम्बरीं सदसो मध्ये निखातां धारयति समन्वारभत आनक्षत्रदर्शनात् नोत्सृजेत्, ऊर्ज्जा उदुम्बर इतिश्रुतेः ऊर्ग्रूपैवौदुम्बरी, गृहपतिः खलु ऊर्जोऽन्नस्य यन्ता नियन्ता प्रदातेत्यर्थः तस्मादौदुम्बरीधारणेन ऊर्ज्जमन्नमेव एभ्यः सत्रिभ्यो यच्छति ददाति ॥ १५ ॥

अथ सर्व्वेषां वाग्यमनं विधत्ते।

**वाचं यच्छन्ति ॥१६॥**

आनक्षत्रदर्शनादेतद्वाग्यमनं ॥१६॥

अथैतत् स्तौति।

दुग्धानीव वै तर्हि छन्दांꣳसि यातयामान्यन्त-गतानि तान्येव तद्रसेनाप्याययन्ति ॥ १७ ॥

तर्हि तस्मिन् काले पूर्व्वैरहःसु दुग्धानि इव वै दुग्धान्येव छन्दांꣳसि अतोऽन्तगतानि यातयामानि गतरसानि तत्तथा सति अनेन वाग्यमनेन तान्येव छन्दांꣳसि रसेनाप्याययन्ति पुनः सारयुक्तानि कुर्व्वन्ति ॥१७॥

प्रकारान्तरेण स्तौति ।

अथो श्वस्तनमेवाभिसन्तन्वन्ति ॥१८॥

अथो अपि च श्वस्तनं परस्मिन् दिवसे कर्त्तव्यं कर्म्मैवाभि-लक्ष्य वाचं सन्तन्वन्ति श्वस्तने कर्म्मणि वाचा निष्पाद्यं स्तुतशस्त्रा-दिकं कुर्व्वन्ति वाग्यमनेन सम्पादयन्तीत्यर्थः ॥ १८ ॥

अथ गवामयनस्य सत्रत्वेनादक्षिणत्वाद्दक्षिणाभावाद्यं स्तुतशस्त्रादिकं कुर्व्वन्ति कृतं वा समृद्ध्यभावमाशंक्य तां सम्पा-दयति ।

आत्मदक्षिणं वा एतद्यत्सत्रम् ॥१९॥

आत्मैव दक्षिणा यस्य तादृशमेव तत् यदेतत्सत्रं सत्रयागः न यज्ञान्तरवत् गवादिदक्षिणं अतो दक्षिणासद्भावात् समृद्धि-रस्त्येवेत्यर्थः ॥ १९ ॥

एतत् स्तौति ।

यदा वै पुरुष आत्मनोऽवद्यति यं कामं कामयते तमभ्यश्नुते ॥२०॥

यदा खलु पुरुष आत्मनः स्वशरीरात् अवद्यति देवेभ्यः प्रदातुं तदा यं कामं कामयते तमभिप्राप्नोति ॥ २० ॥

आत्मनोऽवदानप्रकारं दर्शयति ।

द्वाभ्यां लोमावद्यति द्वाभ्यां त्वचं द्वाभ्यां माꣳसं द्वाभ्यामस्थि द्वाभ्यां मज्जानं द्वाभ्यां पीवश्च लोहितञ्च ॥ २१ ॥

संवत्सरसत्रस्य आदितो द्वाभ्याम्मासाभ्यां आत्मनः सम्बन्धि यल्लोम शरीरगतं लोम तदवद्यति देवेभ्यो दातुं स्वशरीरात् पृथक् करोति, द्वाभ्यां लोमान्तर्गतां त्वचमवद्यति, अथ द्वाभ्यान्त्वगन्तर्गतं मांसमवद्यति, पुनर्द्वाभ्यां मांसान्तर्गतमस्थ्यवद्यति, ततो द्वाभ्याम्मज्जानं अस्थ्यन्तर्गतम्मज्जाख्यं रसमवद्यति, पुनरन्याभ्यां मासाभ्यामवशिष्टं पीवोमेदो लोहितञ्चावद्यति, एवं द्वादशभिर्म्मासैः पुरुष आत्मानमेव कृत्स्नमवदाय देवेभ्योदत्तवान् भवति किमत्र वाह्यया दक्षिणयेति आत्मदक्षिणं सत्रमित्युक्तं ॥ २१ ॥

अथ सर्वेषां सत्रिणां सशिखं वपनं विधत्ते ।

## शिखा अनु प्रवपन्ते पाप्मानमेव तदपघ्नते लघी-यांसः स्वर्गं लोकमयामेति ॥ २२ ॥

सर्वे सत्रिणः शिखाः शिरसि विद्यमानान् सर्वान् केशान् अनुक्रमेण दीर्घानुपूर्व्या प्रवपन्ते प्रकर्षेण वापयेयुः, तत्तेन वपनेन पाप्मानमेवापघ्नते अपहतपाप्मानो भवन्ति, सशिखं वपनं कुर्वतः कोऽभिप्राय इति चेत् लघीयांसोलघुतमाः केश-भारराहित्येन स्वर्गोत्पतनाय लघुतमगात्राः सन्तः स्वर्गं लोकमयाम प्राप्नुवामेति ॥ २२ ॥

प्रकारान्तरेण वपनं प्रशंसति।

## अथो गवामेवानुरूपा भवन्ति सर्वस्यान्नाद्यस्या-वरुध्यै ॥ २३ ॥

एतत्सत्रानुष्ठानेन गावः शृङ्गहीना भूत्वा सर्वमन्नाद्यं प्राप्नुयुरिति आदावुक्तं अतः सत्रिणोपि सर्व्वस्यान्नाद्यस्यावरो-धाय अनुष्ठितसत्राणां गवां शृङ्गहीनानामनुरूपा भवन्ति सशिख-वपनेन सदृशा भवन्ति ॥ २३ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्थाध्यायस्य
नवमः खण्डः।

---

अथ दशमः खण्डः ।

दशमस्याह्न ऊर्द्ध्वम्महाव्रताख्यं गवामयनस्योपान्त्यमहरनु-ष्ठेयं तद्विवक्षुराख्यानमुखेन तन्नाम निर्व्वक्ति ।

**प्रजापतिः प्रजा असृजत सोऽरिच्यत सोऽपद्यत तं देवा अभिसमगच्छन्त तेऽब्रुवन्महदस्मै व्रतᳪ संभराम यदिमन्धिनवदिति तस्मै यत्संवत्सरमन्नं पच्यते तत्समभरᳪस्तदस्मै प्रायच्छᳪस्तदव्रजयत्तदेनमधिनोन्महन्मय्यौ व्रतं यदिममधिन्वीदिति तन्महाव्रतस्य महाव्रतत्वं ॥ १ ॥**

सर्वकारणभूतः प्रजापतिः इमाः सर्वाः प्रजा असृजत आदौ सृष्टवान्, ततो बहुकार्यसृष्टेः स प्रजापतिः अरिच्यत रिक्तः क्षीणोऽभवत्, ततोऽपद्यत आन्त्यातिशयेन अपद्यत, तमभि-लक्ष्य देवाः समगच्छन्त, ततस्ते इदमब्रुवन्, अस्मै रिक्ताय प्रजापतये महद्व्रतमन्नं संभराम, यद्व्रतमिमन्धिनवत् प्रीणयेत्तर्प-येदिति, इधिः प्रीणतार्थः असंज्ञालेटि रूपमेतत् । एवमुक्त्वा यदन्नं संवत्सरं पच्यते समस्तेन संवत्सरेण निष्पद्यते तत्तस्मै तदर्थं तदन्नं समभरन् सम्पादितवन्तः सम्पाद्य चास्मै तत्प्राय-च्छन् तदन्नं स प्रजापतिः अव्रजयदभक्षयत् व्रजिरत्र भक्षणार्थः, भक्षितं तदन्नं एनं प्रजापतिमधिनोत् अतर्पयत्, तदनन्तरं

देवा इदमब्रुवन् हे मर्त्या मर्त्याः एतन्महद्व्रतं यदेनं प्रजापति-मधिन्वीत् अताप्सीदिति यदिदं महद्व्रतमित्युक्तं तन्महाव्रतस्य महाव्रतत्वं महाव्रतप्रवृत्तिनिमित्तं संवत्सरान्ते कर्त्तव्यमिद-मह: प्रजापतेरन्नत्वेन सूयतइति कर्मणोपि महाव्रतनाम सम्पन्नं ॥१॥

प्रकारान्तरेण निर्वचनं दर्शयति ।

## प्रजापतिर्वाव महाꣳस्तस्यैतद्व्रतमन्नमेव ॥ २ ॥

स प्रजापतिः खलु सर्वेभ्यो महान् तस्यैतद्व्रतं कर्म अन्नमेव अन्नवत् तृप्तिकरमेव अतो महतः सम्बन्धि व्रतमिति कृत्वा महाव्रतमित्युच्यते अस्मिन् पक्षे वैयधिकरण्यात् आन्महतः समानाधिकरणेनेति विधीयमानत्वं व्यत्ययेनेति द्रष्टव्यं ॥२॥

इदमहर्विषुवतस्थाने कर्त्तव्यमिति पूर्वपक्षेणोपन्यस्यति ।

## तदाहुर्मध्यतः संवत्सरस्योपेत्यं मध्यतो वा अन्नं जग्धं धिनोति ॥ ३ ॥

जग्धं भक्षितमन्नं मध्यत उदरमध्यस्थं सत् धिनोति तर्पयति अतोन्नस्थानीयमिदमहः संवत्सरस्य मध्यतो मध्ये उपेत्यं उपेतव्यमनुष्ठेयमित्यर्थः तत्र महाव्रतविषये केचिदाहुः, अपरेऽभिज्ञाः संवत्सरस्यान्तएवोपेत्यमित्याहुरिति ॥ ३ ॥

सिद्धान्तयति ।

तद्वाहुर्यन्मध्यत उपयन्त्यर्द्धमन्नाद्यस्यामुवन्त्यर्द्धं सं वट्कुर्वन्तीत्युपरिष्टादेव संवत्सरस्योपेत्यꣳ संवत्सरे वा अन्नꣳ सर्व्वं पच्यते॥ ४॥

तदु तत्रैव विषये अभिज्ञा ब्रह्मवादिन आहुः यत् यदि मध्यतः संवत्सरस्य मध्ये इदमहरुपयन्ति तर्हि संवत्सरसाध्यस्यान्नाद्यस्यार्द्धमेवाप्नुवन्ति अर्द्धं सं वट्कुर्वन्ति व्यर्थं कुर्व्वन्तीति अतः संवत्सरस्योपरिष्टादेव इदमहरुपेत्यं संवत्सरे संपूर्णएव हि सर्वमन्नं पच्यते अतः सर्वस्यान्नस्य प्राप्तयेऽवकल्पत इत्यर्थः॥४॥

अथास्याह्नः पञ्चविꣳशः स्तोमः स्यादिति विधित्सुराह।

चतुर्विꣳशं भवति चतुर्विꣳशो वै संवत्सरोऽन्नं पञ्चविꣳशं॥ ५॥

इदमहश्चतुर्विꣳशतिस्तोमकं भवति संवत्सरो हि चतुर्विꣳशत्यर्द्धमासात्मकः तस्यैतदनुगुणं अतस्तत्साध्यमन्नं पञ्चविꣳशं पञ्चविंशतिसंख्यापूरकं भवति॥५॥

प्रकारान्तरेण प्रशंसति।

यद्वा अदश्चतुर्विꣳशं प्रायणीयन्तदेतदुदयनीयं॥६॥

सर्वसत्रसाधारणावाद्यन्तावतिरात्राविति कृत्वा उपाद्यं प्रायणीयमुपान्त्यं प्रायणीयमिति उच्यते। यद्वै यत् खलु

अह: पूर्वमुक्तं चतुर्विंशस्तोमकं प्रायणीयमुपाद्यमहः तदेवैतदिदानीमुच्यमानं महाव्रतमुदयनीयं एवं सति उपक्रमोपसंहारौ समानरूपौ भवतः ॥६॥

ननु महाव्रतमहः पञ्चविंशस्तोमकं तस्य कथं चतुर्विंशस्तोमकेन प्रायणीयेन साम्यमित्यत आह।

## यत् संवत्सरमन्नं संभरन्ति सैषा पञ्चविंश्युपजायते ॥७॥

संवत्सरं संवत्सरपर्य्यन्तं संवत्सरे चतुर्विंशत्यर्द्धमासात्मके समाप्ते देवा यदन्नं सम्भरन्ति तेषां तदन्नमेव पञ्चविंशी पञ्चविंशतिसंख्यापूरणी स्तोत्रीयोपजायते सम्पद्यते अतः फलरूपैषा पृथग् भूतेति प्रायणीयेन साम्यं एवं सति अस्मिन्नहनि सर्वस्तोत्रेषु पञ्चविंशस्तोमः कर्त्तव्य इति विधिरुन्नेतव्यः।

वेदार्थस्य प्रकाशेन तमोहार्द्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ७ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायनाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे चतुर्थाध्यायस्य दशमः खण्डः।

चतुर्थोऽध्यायः समाप्तिमगमत्।

---

# पञ्चमोऽध्यायः ।

अथ प्रथमः खण्डः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥

उक्तं महाव्रतस्याङ्गः सर्वेषु स्तोत्रेषु पञ्चविंशः स्तोमः कार्य्यः इति शिरः पक्षौ पुच्छ आत्मेति पञ्चविधं होतुः पृष्ठस्तोत्रं तच्च महाव्रताख्यं, महाव्रतमित्युच्यते ।

## वामदेव्यं महाव्रतं कार्य्यं ॥१॥

स्पष्टोर्थः ॥ १ ॥

तस्मिंश्च स्तोत्रे आत्मैव पञ्चविंशः स्तोमः, शिरःप्रभृतिषु स्तोमान्तरं, तत्र शिरसस्त्रिवृत्स्तोमं विधत्ते ।

## त्रिवृच्छिरो भवति ॥ २ ॥

त्रिभिस्तृचैर्वर्त्तत इति त्रिवृत् स एव स्तोमः शिरोभागस्य भवति ॥२॥

तस्य स्तोमस्य शिरसा सहानुरूपं दर्शयति।

**त्रिवृद्ध्येव शिरोलोमत्वगस्थि ॥ ३ ॥**

लोके प्राणिनां शिरः लोम त्वक् अस्थीति भेदेन त्रिवृद्ध्येव त्रिगुणमेव खलु अतः शिरसस्त्रिवृतः स्तोमो युक्तः ॥ ३ ॥

शिरोव्यतिरिक्तस्य पाङ्क्तत्वप्रतिपादनेन शिरसस्त्रिवृत्त्वं व्यतिरेकेण दर्शयति।

**पाङ्क्त इतर आत्मा लोम त्वङ्माᳪसमस्थि मज्जा ॥ ४ ॥**

इतरः शिरोव्यतिरिक्त आत्मा देहः पाङ्क्तः पङ्क्तियुक्तः पञ्चसंख्योपेतः, कथमित्युच्यते लोमत्वङ्मांसमस्थिमज्जेति भेदेन, एवं शिरः पाङ्क्तन्न भवति अपि तु त्रिवृदेवेत्यर्थः ॥ ४ ॥

शिरसा त्रिवृत्स्तोमकेन स्तवनं विधत्ते।

**सकृद्धिङ्कृतेन शिरसा पराचा स्तुवते ॥ ५ ॥**

अनेन आदौ सकृत् हिंकृत्य पराचा अनावृत्तेन शिरसा स्तुवते उद्गातारः ॥ ५ ॥

तदेतदनावृत्तस्तवनं प्रशंसति।

**तस्माच्छिरोऽङ्गानि मेद्यन्ति नानुमेद्यति न क्षुध्यन्त्यनुक्षुध्यति ॥ ६ ॥**

तस्मादनावृत्तस्तवनात् अविकृतरूपं एकरूपमेव शिरो भवति अत इतराण्यङ्गानि मेद्यन्ति वर्द्धमानान्यनुवर्द्धन्ते इतरेष्वङ्गेषु वर्द्धमानेष्वपि शिरएकमेवावतिष्ठते तथा कृश्यन्ति कृशी भवन्ति अङ्गानि अनु न कृश्यति नाल्पीभवति इतरेष्वङ्गेष्वपचीयमाणेष्वपि स्वयन्नापचीयते ॥ ६ ॥

नन्वितरेषामपि वृद्धिकार्श्ये कथं स्यातां तत्राह।

**पुनरभ्यावर्त्तमितरेणात्मना स्तुवते तस्मादितर आत्मा मेद्यति च कृश्यति च ॥ ७ ॥**

इतरेण पक्षपुच्छादिरूपेणात्मना पुनरभ्यावर्त्तं पुनः पुनरभ्यावृत्त्य एकमेव तृचमावर्त्त्य स्तुवते तस्मादावृत्त्या विकृतत्वात् इतर आत्मा शिरोव्यतिरिक्तो देहो मेद्यति च कृश्यति च कदाचिद्वर्द्धते कदाचित् कृशी भवति ॥७॥

शिरसो गायत्रीसाम्नः स्तोत्रीयां विधत्ते।

**अर्कवतीषु गायत्रीषु शिरो भवति ॥ ८ ॥**

अर्कशब्दोपेतासु गायत्रीछन्दस्कासु इन्द्रमिद्गाथिनो वृहदिन्द्रो दधीचो अस्थभिरुद्वेदभिस्तुतामघमिति तृचं तयात्मकासु नवस्वृचु शिरो भवति ॥ ८ ॥

अथासामर्कत्वं गायत्रत्वञ्च प्रशंसति।

**अन्नं वा अर्को ब्रह्मवर्चसं गायत्र्यन्नाद्यं चैवैभ्यो-ब्रह्मवर्चसञ्च मुखतो दधाति ॥ ९ ॥**

अर्च्यते पूज्यते अनेनेति व्युत्पत्त्या अन्नमेवार्कः गायत्री च तेजोरूपेणाग्निना सह प्रजापतिमुखादुत्पन्ना ब्रह्मवर्चसं तेजोविशेष इति गायत्री ब्रह्मवर्चसमित्युच्यते एवमुभयोः स्तोत्रादौ करणेन एभ्यो यजमानेभ्यः अन्नाद्यञ्चैव ब्रह्मवर्च्चसञ्च मुखतः प्रमुखे दधाति विदधाति उद्गातेत्यर्थः ॥ ९ ॥

अथ पक्षौ स्तोमविशिष्टौ विधत्ते।

**पञ्चदशसप्तदशौ पक्षौ भवतः पक्षाभ्यां वै यजमानो वयो भत्वा स्वर्गं लोकमेति ॥१०॥**

पञ्चदशस्तोमं रथन्तरं दक्षिणपक्षतया कार्य्यं सप्तदशस्तोमं वृहदुत्तरपक्षत्वेन एवं कृताभ्यां पक्षाभ्यामेव यजमानो वयः पक्षी भूत्वा स्वर्गं लोकमुत्पतनेन प्राप्नोति एवमेकः पञ्चदशः पक्षः इतरः सप्तदश इत्युक्तं ॥१०॥

अधुनोभावपि समानस्तोमौ स्यातामिति केषाञ्चिन्मतमुपन्यस्यति।

**तावाहुः समौ कार्य्यौ पञ्चदशौ वा सप्तदशौ वा सवीवधत्वाय ॥ ११ ॥**

तौ पक्षौ पञ्चदशस्तोमकौ सप्तदशस्तोमकौ वा समौ समानावेव कार्य्याविति केचिदाहुः किमर्थं सवीवधत्वाय समानवीवधत्वाय इतरथा हि वैषम्यमेव दोषः स्यादिति ॥ ११ ॥

इमं पक्षं निराकृत्य पूर्व्वोक्तमेव पक्षं परिगृह्णाति।

**तद्वाहुर्य्यत्समौ भवत एकवीर्य्यौ तर्हि भवत इति पञ्चदशसप्तदशावेव कार्य्यौ साचीव वै वयः पक्षौ कृत्वा पतीयः पतति ॥ १२ ॥**

तत् उ आहुरिति पदच्छेदः, उ इति पक्षान्तरपरिग्रहे। तत्र आहुर्ब्रह्मवादिनोऽभिज्ञाः किमिति यद्यदि समौ समानस्तोमौ भवतः तर्हि तदा एकवीर्य्यौ समानवीर्य्यौ भवत इति, अस्त्वेकवीर्य्यत्वं को दोष इति चेत् पतनासामर्थ्य इति ब्रूमः वयः पक्षी साचीव वै तिर्य्यगिव पक्षौ कृत्वा पतीयः पतति अतिशयेन पतनं करोति पक्षयोः साम्ये तु साचीभावो न स्यात् अतः पञ्चदशसप्तदशावेव कार्य्यौ ॥ १२ ॥

बृहद्रथन्तरयोः किं दक्षिणतः कार्य्यं किमुत्तरत इत्याकांक्षायामाह।

**दक्षिणतो बृहत्कार्य्यं दक्षिणोवा अर्द्ध आत्मनो वीर्य्यवत्तरः ॥ १३ ॥**

दक्षिणतो दक्षिणपक्षे बृहत्साम कार्य्यं इन्द्रादिभिः सह प्रजापतेरुरसउत्पत्तेः वीर्य्यवद्बृहत् आत्मनो देहस्य दक्षिणोऽर्द्धो

भागः वीर्य्यवत्तरः अतिशयेन वीर्य्यवान् अतस्तत्र बृहत्साम प्रयोगार्हमित्यर्थः परिशेषात् रथन्तरमुत्तरमिति गम्यते ॥ १२ ॥

तमिमं पक्षं निरस्य सिद्धान्तमाह ।

**अथो खल्वाहुरुत्तरत एव कार्य्यं ब्राह्मणाच्छꣳसिनोऽर्द्धात् त्रैष्टुभं वै बृहत्त्रैष्टुभो ब्राह्मणाच्छꣳसी त्रैष्टुभः पञ्चदशस्तोमः ॥ १४ ॥**

अथो खल्विति पक्षान्तरपरिग्रहे । उत्तरत एव बृहत्सामकार्य्यमिति ब्रह्मवादिन आहुः ब्राह्मणाच्छꣳसिनोऽर्द्धात् समीपात् होतुरुत्तरो ब्राह्मणाच्छꣳसी उत्तरस्मिन् पक्षे क्रियमाणं बृहत्साम ब्राह्मणाच्छꣳसिनः समीपवर्त्ति भवति नान्यथा तस्मादुत्तरतः कार्य्यमिति कथनं, अनयोः सम्बन्धः बृहत्साम त्रैष्टुभं त्रिष्टुभा सह प्रजापतेरुरसउत्पत्तेः ब्राह्मणाच्छꣳसी च होतकाणां द्वितीयत्रिष्टुप्छन्दसां द्वितीयेति संख्यासाम्यात् त्रैष्टुभत्वं उभयोस्त्रिष्टुप् द्वारा सम्बन्धात् सामीप्यमुचितं यद्यप्यनेन न्यायेन त्रैष्टुभः पञ्चदशस्तोम इति पञ्चदशस्यापि त्रिष्टुभत्वश्रवणात् उत्तरपक्षे प्रयोगः प्रसक्तः तथापि रथन्तरेण पञ्चदशेन स्तुवीरन् बृहता सप्तदशेन स्तुवीरन्निति प्रयोगवचनकाले वक्ष्यमाणत्वात् अत्र पञ्चदशस्तोमत्वं पूर्व्वपक्षाभिप्रायेणेति ज्ञायते ॥ १४ ॥

तथा दक्षिणपक्षे रथन्तरं कार्य्यमित्याह ।

**दक्षिणतो रथन्तरं कार्य्यम्मैत्रावरुणस्यार्द्वीन्ना-यतं वै रथन्तरं गायत्रो मैत्रावरुणो गायत्रः सप्तदश स्तोमः ॥ १५ ॥**

पूर्ववद्व्याख्येयं, गायत्र्या सह रथन्तरस्य प्रजापतिमुखादुत्प-न्नत्वाद्गायत्रत्वं मैत्रावरुणस्य च होत्रकाणां प्रथमत्वात् प्रथमच्छन्दसा गायत्रेण सम्बन्धः सप्तदशस्तोमस्य गायत्रत्वमेवं सम्पाद्यं सप्तदशस्तोमो जगती च प्रजापतेः मध्यकायादुत्पन्न-त्वात् जगती च द्वे गायत्र्याविति जगती द्वारा सप्तदशस्य गाय-त्रत्वं ॥ १५ ॥

एकविंशात्मकं पुच्छं कार्य्यमिति विधत्ते।

**एकविंशं पुच्छं भवति ॥ १६ ॥**

स्पष्टोर्थः ॥ १६ ॥

तदेव प्रशंसति।

**एकविंशो वै स्तोमानां प्रतिष्ठा तस्माद्वयः पुच्छेन प्रतिष्ठायोत्पतति पुच्छेन प्रतिष्ठाय निषी-दति ॥ १७ ॥**

स्तोमानां त्रिवृदादीनां मध्ये एकविंशः प्रतिष्ठाहेतुः तस्मात्प्रतिष्ठाहेतोरेकविंशस्य पुच्छे करणात् वयः पक्षी पुच्छेन

प्रतिष्ठाय आश्रयमवष्टभ्य पक्षाभ्यामुत्पतति तथा पुच्छेनैव प्रतिष्ठाय स्वाश्रयमालम्ब्य निषीदति उपविशति ॥ १७ ॥

अथ पुच्छत्वेन यज्ञायज्ञीयं पुच्छे कार्य्यमिति कुत एतदित्यतआह।

**यज्ञायज्ञीयं पुच्छं कार्य्यं यज्ञायज्ञीयꣳ ह्येव महाव्रतस्य पुच्छं ॥ १८ ॥**

हीति प्रसिद्धौ यज्ञायज्ञीयꣳ साम हि महाव्रतस्य पुच्छतया प्रसिद्धं दृष्टद्रथन्तरे पक्षौ यज्ञायज्ञीयं पुच्छमिति मन्त्रवर्णादेतच्च यज्ञायज्ञीयमैन्द्रीषु कार्य्यं पृष्ठस्तोत्रस्यैन्द्रत्वात् ॥१८॥

अथैतं पक्षं निरस्य पक्षान्तरमाह।

**अथो खल्वाहुरतिशयं वै द्विपदां यज्ञायज्ञीयं भद्रमेव कार्य्यꣳ समृद्ध्यै ॥ १९ ॥**

अथो खल्वभिज्ञा ब्रह्मवादिन आहुः चतुष्पदास्वृक्षु हि यज्ञायज्ञीयं गीयते द्विपदां यजमानानां तदतिशयं अतिशयितमतिरिक्तमिति अतो भद्रं साम पुच्छतया कार्य्यन्तद्धि द्विपदासु गीयते तथा सति तत्साम द्विपदां यजमानानां समृद्ध्यै समृद्ध्यर्थं भवति ॥१९॥

इति ताण्ड्यमहाब्राह्मणे पञ्चमाध्यायस्य

प्रथमः खण्डः।

---

अथ द्वितीयः खण्डः ।

महाव्रतस्तोत्रस्य पक्षिरूपेण क्लृप्तस्य शिरःप्रभृतीनाꣳ स्तोमा उक्ताः सामानि च विहितानि अथ तस्यैवापरं कल्पं दर्शयति ।

**वामदेव्यम्महाव्रतं कार्य्यन्तस्य गायत्रꣳ शिरो-बृहद्रथन्तरे पक्षौ यज्ञायज्ञीयं पुच्छं ॥ १ ॥**

यद्यपि पञ्चानां समुदाय एव महाव्रतशब्दवाच्यः वाम-देव्यं कयानश्चित्रेत्यस्यामुत्पन्नं साम अतस्तस्यात्मत्वेन कार्य्य-मित्यर्थः, गतमन्यत् ॥ १ ॥

इत्थं पञ्चविधे महाव्रते एकैकस्यां विधायां सहस्रप्रोतत्वं वक्ष्यति तत्समुदायवेदनमादौ प्रशंसति ।

**यो वै महाव्रते सहस्रं प्रोतं वेद प्र सहस्रं पशू-नाप्नोति ॥ २ ॥**

शिरःपक्षादिरूपेण पञ्चावयवे महाव्रते सहस्रं प्रोतं सम्बद्धं वेद जानाति सहस्रं सहस्रसंख्यान् पशूनाप्नोति ॥ २ ॥

तस्य पञ्चावयवाः किमात्मकाः तेषु किं सहस्रं प्रोतमिति तदुभयं क्रमेण दर्शयति ।

तस्य प्राची दिक् शिरस्तच्छन्दोभिः साहस्रमसावन्यतरः पक्षः स नक्षत्रैः साहस्रोऽयमन्यतरः पक्षः स ओषधिभिश्च वनस्पतिभिश्च साहस्रोऽन्तरिक्षमात्मा तद्वयोभिः साहस्रं प्रतीची दिक् पुच्छन्तदग्निभिश्च रश्मिभिश्च साहस्रं प्र सहस्रं पशूनाप्नोति य एवं वेद ॥ ३ ॥

तस्य महाव्रतस्य प्राची दिक् शिरः तदात्मकमित्यर्थः तत् छन्दोभिर्गायत्र्यादिभिः साहस्रं सहस्रसम्बन्धी यद्यप्यसावन्यतरोऽयमन्यतर इति पक्षयोः सम्बन्धविशेषो न श्रुतः तथापीयं वै रथन्तरमसौ वै बृहदिति श्रुतेः विशेषोऽवगम्यते अन्तरिक्षं अन्तरिक्षलोक आत्मा तद्वयोभिः पक्षिभिः साहस्रं अन्तरिक्षचारित्वात् पक्षिणां प्रतीचीदिगात्मकं पुच्छं तत् अग्निभिश्च रश्मिभिश्च साहस्रं वेद यजमानस्य प्रतीच्यां हि गार्हपत्यादिरूपेण भूयांसोऽग्नयो भवन्ति उदितस्य चादित्यस्य रश्मयः प्रतीच्यां प्रसरन्तीति प्रतीच्यात्मकं पुच्छं अग्निभिश्च रश्मिभिश्च सहस्रसम्बन्धीत्यर्थः एवं प्राच्याद्यात्मकेषु महाव्रतावयवेषु सहस्रयोगित्वं यो वेद दशसहस्रं पशूनाप्नोति आदावुक्तस्यैवोपसंहारः ॥ ३ ॥

अस्मिन् कल्पे वामदेव्यमात्मत्वेन कार्यमित्युक्तं तन्निरस्यति ।

तदाङ्गरपृष्ठं वै वामदेव्यमनिधनं होति ॥४॥

तत्तत्र महाव्रते ब्रह्मवादिन आहुः अत्र पृष्ठमिति होतुरेव पृष्ठस्तोत्रं विवक्षितं वामदेव्यं होतुः पृष्ठत्वे अयोग्यं कुतः अनिधनं हि तदृचो बहिर्भूतन्निधनं यतोऽस्य नास्ति तत इत्यर्थः ॥ ४ ॥

अनिधनत्वं कथमपृष्ठत्वे हेतुः तत्राह।

**अनायतनं वा एतत् साम यदनिधनं ॥ ५ ॥**

साम्ना निधनमायतनं यस्य नास्ति तदनायतनं आयतनरहितमप्रतिष्ठितं ततो वामदेव्यस्य पृष्ठानर्हतेत्यर्थः ॥ ५ ॥

तर्हि किम्महाव्रतस्थालत्वेन कार्यं तदाह।

**राजनम्महाव्रतं कार्य्यं ॥ ६ ॥**

इन्द्रन्नरोनेमधितेत्यस्यामुत्पन्नं राजनाख्यं साम तदाद्येति तृचे अस्य स्तोत्रस्थालत्वेन कार्य्यं ॥ ६ ॥

तदेतत्प्रशंसति।

**एतद्वै साक्षादन्नं यद्राजनं पञ्चविधं भवति पाङ्क्तं ह्यन्नं ॥ ७ ॥**

एतत् खलु साक्षात्प्रत्यक्षमन्नं यद्राजनं साम स्तोभादिभिः शोभमानमन्नवत् प्रीतिकरं भवति, महाव्रतं चान्नत्वेन संस्तुतं अतस्तत्रैतत्प्रयोगार्हमित्यर्थः, अपि चैतत्साम पञ्चविधं भवति

महाप्रस्तावादिभक्तीनां प्रत्येकं प्रयोज्यत्वात् पञ्चवारं तथा चैतरेयकोपनिषदि श्रूयते, पञ्चकृत्वः प्रस्तौति पञ्चकृत्वोद्गायति पञ्चकृत्वः प्रतिहरति पञ्चकृत्वोपद्रवति पञ्चकृत्वोनिधनमुपयन्तीति। यद्वा हुं हुं हुं हुं हुं हो हो हो हो हो इत्यादि पञ्चस्तोभयोगात् वागिडासुवोऽहङ्का इति पञ्चनिधनयोगाद्वा पाञ्चविध्यं, अन्नं हि पाङ्क्तं पङ्क्तिसम्बद्धं भक्ष्यं खाद्यं चोष्यं लेह्यं पेयमिति, अतो राजनस्य पञ्चविधत्वात् पञ्चविधानरूपत्वं ॥ ७ ॥

ननु वामदेव्यस्याकरणे तत्कृतं फलन्न स्यादित्यत आह।

## हिङ्कारवद्भवति तेन वामदेव्यस्य रूपं ॥ ८ ॥

यदेतत्साम हिङ्कारवद्भवति तेन वामदेव्यस्य रूपमस्मिन् साम्नयन्तर्भूतं अत एतत्करणेन तत्कार्य्यमपि लभ्यत इत्यर्थः ॥ ८ ॥

नन्वस्यापि पृष्ठस्तोत्रे योग्यता कथमित्यत आह।

## निधनवद्भवति तेन पृष्ठस्य रूपं ॥ ९ ॥

निधनवत्त्वेन प्रतिष्ठितत्वात् इदं साम पृष्ठस्तोत्रमित्यर्थः अस्य पञ्च निधनानि पूर्व्वमेव प्रदर्शितानि ॥ ९ ॥

अथ ब्राह्मणाच्छंसिनः पृष्ठस्तोत्रनिवर्त्तकमेकं साम विधत्ते।

**अतिछन्दःसु पञ्च निधनं वामदेव्यं ब्रह्मसाम कार्य्यं ॥ १० ॥**

कयानश्चित्रेत्यस्यामुत्पन्नं इह प्रजाः रायस्पोषाय आगन्माम इदं वामं चराचरायेत्यादिभिः पञ्चभिर्निधनैरुपेतं वामदेव्यं साम अतिछन्दःसु त्रिकद्रुकेषु महिषोयवाशिर इत्यादिष ब्रह्मसामत्वेन कार्य्यं ॥ १० ॥

तदेतदतिछन्दस्सु गानं स्तौति।

**अति वा एषान्यानि छन्दांसि यदतिछन्दा अत्येतदन्यान्यहान्यहर्य्यन्महाव्रतं ॥ ११ ॥**

अतिछन्दा अतिछन्दस्का यत् या ऋक् एषा अन्यानि गायत्र्यादीनि छन्दांसि अति वै अतीत्यैव वर्त्तते यन्महाव्रताख्यमहः एतदस्यान्यान्यहान्यतिवर्त्तते अतोस्मिन्नहनि अतिछन्दः प्रयोगोयुक्त इत्यर्थः ॥ ११ ॥

तत्र विहितं ब्रह्मसाम प्रशंसति।

**ब्रह्मसाम्नैव तदन्यान्यहान्यतिमेदयति ॥ १२ ॥**

ततः स्वतएव वृत्तम्महाव्रतमहर्ब्रह्मसाम्नैव तदन्यान्यहान्यतिमेदयति आत्मानं वर्द्धयति स्वतोवृद्धमपि पुनः राजनेन साम्ना वर्द्धत इत्यर्थः ॥ १२ ॥

निधनद्वारेण प्रशंसति ।

**पञ्च निधनं भवति पाङ्क्तं ह्यन्नम् ॥ १३ ॥**

पञ्च निधनानि पूर्वं प्रदर्शितानि तद्युक्तमेतत् ब्रह्मसाम भवति अन्नस्य पाङ्क्तत्वं पूर्वमुक्तं अतो अन्नसंस्तुते महाव्रतेऽहनि पञ्च निधनं साम प्रयोगार्हमित्यर्थः ॥ १३ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चमाध्यायस्य

द्वितीयः खण्डः ।

---

अथ तृतीयः खण्डः ।

अथैलान्दं सामाग्निष्टोमसामत्वेन कर्त्तव्यमिति विधत्ते ।

**इलान्दमग्निष्टोम साम कार्य्यं ॥ १ ॥**

अग्निरस्मि जन्मनेत्यस्यामुत्पन्नं अग्ने तव श्रवोवय इति षड्चे इलान्दमग्निष्टोम साम कार्य्यं ॥ १ ॥

तदेतत्साम प्रशंसति ॥

**एतद्वै साक्षादन्नं यदिलान्दमिरान्नं वा एतदिरायामेवान्नाद्येऽन्ततः प्रतितिष्ठन्ति ॥ २ ॥**

इलान्दमिति यत् एतत् प्रत्यक्षमन्नं कुतः इरान्नं वा एतदिरायामेव इरा भूमिरन्नञ्च तत् उभयमिरान्नं इरान्नशब्दवाच्य-

मेवैतत्साम इलान्दमित्युच्यते रलयोरेकत्वस्मरणात् लकारस्य च व्यत्ययेन दकारः, इतरायां भूमौ अन्नाद्ये च अन्ततः सतस्यावसाने यजमानाः प्रतिष्ठिता भवन्ति ॥ २ ॥

यत्पूर्वमुक्तं अग्ने तव श्रवो वय इत्यादिके षड़ृचे इलान्दं कार्य्यमिति ता ऋचोविधास्यन् तदीयं छन्दो विधत्ते।

**समुद्रो वा एतच्छन्दः सलिलं लोमशꣳ समुद्र इव खलु वै स भवति सलिल इव लोमश इव यो भवति ॥ ३ ॥**

एतदिलान्दस्याधारभूतं छन्दः समुद्रो वै समुद्र इव अप्रधृष्यं सत् समुद्रनामकं भवति अग्ने तव श्रव इत्यादिषु द्वयोर्द्वयोर्ऋचोः साम समाप्यते प्रत्यृचं चत्वारिंशदक्षराणि मिलित्वा अशीत्यक्षराणि सम्पद्यन्ते एवमेकैका स्तोत्रीया अशीत्यक्षरा भवति अशीत्यक्षरस्य छन्दसः सिन्धुरिति संज्ञा समुद्रशब्दस्य सिन्धुपर्य्याय इति असावपि छन्दसः संज्ञा कुतोऽस्य छन्दसः संज्ञा कुतोस्य छन्दसः समुद्र इव प्रधृष्यत्वं सलिलं सर्व्वतो लेलायती चेदं साम लोमशं नानाविधा स्तोभा आवर्त्तमाना अस्य साम्नो लोमत्वे निरूप्यन्ते लोमभिर्युक्तमेवं विशिष्टस्य साम्न आधारत्वात् छन्दः समुद्र इत्युच्यते लोकेपि यः पुरुषः सलिल इव सर्वतो लेलायमान इव लोमश इव लोमस्थानीयैः पुत्रपौत्रादिभिरुपेत इव भवति इव शब्दोऽवधारणे उक्तविशेषण-

विशिष्ट एव हि स खलु समुद्रवदप्रधृष्य एव भवति यद्वा सलिलमुदकं तद्यथा व्याप्नोति एवं कृत्स्नं विषयं व्याप्नुवन् यथा च लोमशः पुरुषो आपादमस्तकं लोमभिरावेष्टितो भवति तथा परिजनैरावेष्टितो यो भवति समुद्रवदप्रधृष्य इत्यर्थः एवमस्यापि साम्नः सलिलत्वात् लोमशत्वाच्च तदाश्रयं छन्दः समुद्रवदप्रधृष्यमित्युक्तं ॥ ३ ॥

अथैतच्छन्दस्का ऋचः सामाधारतया विधत्ते।

**तस्मादेतासु कार्य्यꣳ समृद्ध्यै ॥ ४ ॥**

यस्मादेतच्छन्द उक्तप्रकारेण समृद्धः तस्मादेतासु छन्दस्का-स्वृक्षु इलान्दं कार्य्यं तच्च यजमानानां समृद्ध्यै सम्पत्त्यै भवति ॥ ४ ॥

अस्य च साम्नस्त्रीणि निधनानि एव्रतम् एसुवः एशकुन इति तानि प्रत्येकमनूद्य प्रशंसति।

**व्रतमिति निधनं भवति महाव्रतस्यैव तद्रूपं क्रियते स्वरिति भवति स्वर्गस्य लोकस्य समष्ट्यै शकुन इति भवति शकुन इव वै यजमानो वयो भूत्वा स्वर्गं लोकमेति ॥ ५ ॥**

व्रतमिति निधनमस्य साम्नो भवतीति यत् महाव्रतस्यैव तदनुगुणं रूपं क्रियते महाव्रतेऽपि व्रतशब्दसद्भावात् स्वरिति

द्वितीयं निधनं स्वर्गं साधयति अतः स्वर्गलोकस्य संप्राप्त्यै भवति शकुन इति तृतीयं निधनं भवति तेन शकुन इव पक्षीव यजमानो वयः पक्षी भूत्वा स्वर्गं लोकं प्राप्नोति इतीलान्दमग्निष्टोम साम कार्य्यमित्युक्तं ॥ ५ ॥

अथ यज्ञायज्ञीयं वा कार्य्यमिति विधत्ते।

**यज्ञायज्ञीयमग्निष्टोमसाम कार्य्यं ॥ ६ ॥**

स्पष्टोऽर्थः ॥ ६ ॥

तदेतत् स्तौति।

**यद्वा अन्या वाङ्नातिवदेत्तदग्निष्टोमसाम कार्यन्न वै वाग्वाचमतिवदति वाग्यज्ञायज्ञीयं वाच्येवान्ततः प्रतितिष्ठन्ति ॥ ७ ॥**

यत् साम अन्या वाङ्नातिवदतीत्योत्कृष्टं न वदेत् तदेव सामोत्कर्षविधिभूतं तदेवाग्निष्टोमसाम कार्य्यं न खलु वागेव स्वयं वाचमतिवदति यज्ञायज्ञीयं च वाङ्निधनत्वात् वागेव तस्मादिति वा तद्रहितस्य वाग्रूपस्य यज्ञायज्ञीयकरणात् अन्ततः सत्रावसाने वाच्येव सत्रिणः प्रतितिष्ठन्ति ॥ ७॥

अथ वारवन्तीयं वा अग्निष्टोमसाम कर्त्तव्यमिति दर्शयति।

**वारवन्तीयमग्निष्टोमसाम कार्यं ॥ ८ ॥**

स्पष्टोऽर्थः ॥ ८ ॥

इदं स्तौति।

**अग्निर्वा इदं वैश्वानरो दहन्नैत्तस्माद्देवा अबिभयुस्तं वरणशाखयाऽवारयन्त यदवारयन्त तस्माद्वारवन्तीयं ॥ ९ ॥**

अग्निर्वैश्वानरः पूर्व्वमिदं जगत् दहन् ऐत् आगच्छत तस्माद्ग्नेर्देवाभीता आसन् दहन्तं तमग्निं वरणो वृक्षविशेषः तस्य शाखयाऽवारयन्त अशमयन् तस्माद्वरणशाखया वार्य्यमाणाग्निस्तावकत्वात् अस्य साम्नो वारवन्तीयन्नाम सम्पन्नं ॥ ९ ॥

प्रसङ्गादन्यदपि किञ्चिदाह।

**तस्माद्वरणो भिषज्य एतेन हि देवा आत्मानमत्रायन्त ॥ १० ॥**

तस्मादुपशमहेतुत्वात् वरणो वृक्षो भिषज्यो भिषजि भेषजे साधुः एतेन हि वरणेन हि देवा आत्मानं दहतोग्नेः सकाशादरक्षन् अतो युक्तमेवैतस्य भेषजसाधुत्वं ॥ १० ॥

अन्यदपि किञ्चित्प्रासङ्गिकं रूपं विदधाति।

**तस्माद्ब्राह्मणो वारणेन न पिबेद् वैश्वानरन्नेच्छमया इति ॥ ११ ॥**

तस्माद्वरुणदृष्टस्याग्न्युपशमनहेतुत्वात् अग्न्युपासको ब्राह्मणः वरुणविकारेण पात्रेण न पिबेत् वैश्वानरमुपास्यमानमग्निन्नेत् नैव शमयै शान्तं करवाणीति बुद्ध्या ॥ ११ ॥

प्रकृतमेव वारवन्तीयं स्तौति ।

**पशवो वै वारवन्तीयꣳ शान्तिः पशवः शान्तादेव तत्संवत्सरादुत्तिष्ठन्ति ॥ १२ ॥**

पशूनां पोषकत्वात् वारवन्तीयं पशवो वै पशवः खलु पशवश्च शान्तिः शान्तिहेतवः तत्तस्माच्छान्तिरूपस्य वारवन्तीयस्यान्ततः करणात् शान्तादेव संवत्सरादुत्तिष्ठन्ति सत्रिणः ।१२॥

इति ताण्ड्यमहाब्राह्मणे पञ्चमाध्यायस्य

तृतीयः खण्डः ।

---

अथ चतुर्थः खण्डः ।

एवं महाव्रतस्तोत्रस्य स्वरूपमभिधाय प्राणेन पुरस्तादित्यादिना आसन्दीमारुह्योद्गायतीत्यन्तेन तत् प्रयोगप्रकार उच्यते पक्षिरूपस्य तस्य महाव्रतस्य लोमनखस्थानीयानां विधास्यमानानां प्राणादिसाम्नां परिमादइति सञ्ज्ञा तैस्त्वाहवनीयादिकमुपस्थेयमित्यस्मिन् खण्डे विधीयते, अस्य चोपस्थानस्य कालादिकं सूत्रकारो विशदीकृतवान्, महाव्रतस्य पृष्ठ उपा-

कृते युक्तं स्तोमं परिमाद्धो गायेदिति भाण्डितायनः, प्रतिगृह्य हृत्वा अयुक्तेति गौतमशाण्डिल्यौ, धानञ्जय्यश्च प्रागेव स्तोत्रोपाकरणादित्येक इति, तत्र प्राणसाम्ना आहवनीयोपस्थानं विधत्ते।

**प्राणेन पुरस्तादाहवनीयमुपतिष्ठन्ते प्राणमेव तज्जयन्ति ॥ १ ॥**

इन्द्रं नर इत्यस्यां हाउ२ आयुः२ सात्यं२ इति गीयमानं साम प्राणः तेन साम्ना पुरस्तात् पूर्व्वस्यां दिश्यवस्थाय आहवनीयमुपतिष्ठन्ते सदसो निर्गत्य दक्षिणेनाग्नीध्रीयं गत्वा चित्त्याग्निमुत्तरेण आहवनीयस्य पूर्व्वभागं प्राप्य उपस्थानमित्यर्थः। यद्यपि परिमाद्धो गायेदित्येकवचनेन एकस्यैव गानकर्त्तृत्वात् तत्करणके उपस्थानेऽप्येक एवेति उपतिष्ठन्त इति बहुवचनमनुपपन्नं तथापि सर्व्वाण्युद्गाता सकृत् सकृद्गायेत् निधनमितरानुपेयातामपि मध्ये निधनेष्विति सूत्रकारेण इतरयोरपि निधनभागेऽन्वयस्योक्तत्वात् तयोप्युपस्थाने कर्त्तॄर इति बहुवचनमुपपद्यते एवमुत्तरत्रापि द्रष्टव्यं तत्तेन प्राग्दिक् सम्बन्धिनाहवनीयोपस्थानेन प्राणमेव पञ्चवृत्त्यात्मकं शरीरे वर्त्तमानस्य प्राणवायोः या प्राणाख्या प्रथमा वृत्तिः तामेव जयन्ति लभन्त इत्यर्थः प्राणवृत्तिरपि नासिकातो निर्गत्य प्राग्गामिनी भवति अतः प्राक् सम्बन्धिनोपस्थानेन तज्जयोयुक्तः ॥ १ ॥

अथ चित्याग्नेः पुच्छस्य अपानसाम्नोपस्थानं विधत्ते ।

**अपानेन पश्चात्पुच्छमुपतिष्ठन्ते अपानमेव तज्जयन्ति ॥ २ ॥**

यथेतं प्रत्याव्रज्य पश्चादवस्थाय इन्द्रं नर इत्यस्यामेव हाउ२ आनोहियर२ मनदोहम्२ इति गीयमानं साम अपानः तेन पुच्छमुपतिष्ठेरन् तत्तेन प्रत्यग्दिक्सम्बन्धिनोपस्थानेन प्रत्यग्गामिनीं अपानवृत्तिमेव जयन्ति ॥ २ ॥

व्रतपक्षौ नाम द्वे सामनी इन्द्रं नर इत्यस्यामेवोत्पन्ने ताभ्यां चित्याग्नेः पक्षयोरुपस्थानं विधत्ते ।

**व्रतपक्षाभ्यां पक्षावुपतिष्ठन्ते दिश एव तज्जयन्ति ॥ ३ ॥**

व्रतपक्षयोः पूर्वेण दक्षिणं पक्षमिति सूत्रकारेण व्यवस्थाया दर्शितत्वात् पूर्वेण व्रतपक्षेण दक्षिणं पक्षमुत्तरेणोत्तरं चोपतिष्ठेरन् एते अपि सामनी इन्द्रं नर इत्यस्यां उत्पन्ने हाउ२ हे७२ ह७२ इन्द्रं नरो इति गीयमानं साम पूर्वो व्रतपक्षः हाउ३ इहा२ ह७२ इन्द्रं नरो इति गीयमानं सामोत्तरः तत्तेन दिक्सम्बन्धः पक्षयोरुपस्थानेन दिशां जयो भवति ॥ ३ ॥

पुनरन्यदुपस्थानं विधत्ते ।

प्रजापतेर्हृदयेनापिकक्षमुपतिष्ठन्ते ज्यैष्ठ्यमेव तज्जयन्ति ॥ ४ ॥

अपिकक्षं पक्षमूलमुत्तरमपि कक्षमुपतिष्ठेरन् प्रजापतेः ज्यैष्ठ्यत्वात् तत्तेनोपस्थानेन ज्यैष्ठ्यमेव जयन्ति ॥ ४ ॥

अथ चात्वालस्योपस्थानं विधत्ते ।

वशिष्ठस्य निहवेन चात्वालमुपतिष्ठन्ते स्वर्गमेव तल्लोकमाप्त्वा श्रियं वदन्ते ॥ ५ ॥

असावि देवमित्यस्यामुत्पन्नं साम वसिष्ठस्य निहवः तेन चात्वालमुपतिष्ठेरन् आइहोइ एहिया उ२३४वा हाइ असावि देवगोऋजीता२र्चां धाइ इत्येतदादिकं तत्साम विश्वे देवा मम शृण्वन्त्वित्यस्यामृचि कर्त्तव्यमूहेन वक्ष्यति तस्यामृचि सुम्नेष्विद्वो अन्तमा मदेमेति विद्यते तस्य चायमर्थः हे देवाः वः युष्माकं अन्तमाः अन्तिकतमाः सन्तः सुम्नेषु सुखेषु मदेम इति अतएवं रूपस्यार्थस्य दर्शनात् एतत् करणकोपस्थाने स्वर्गमेव लोकमाप्त्वा लब्ध्वा श्रियं सम्पदं अभिवदन्ते ॥ ५ ॥

अथैतस्य साम्न आधारभूतामृचं विधाय प्रशंसति ।

वैश्वदेव्यामृचि भवति विश्वरूपं वै पशूनाꣳ रूपं पशूनेव तज्जयन्ति ॥ ६ ॥

वैश्वदेव्यामृच्येतत् साम भवतीति विश्वरूपं बहुरूपं हि पशूनां रूपं तत्तेन वैश्वदेव्या करणेन पशूनेव जयन्ति ॥ ६ ॥

अथान्यदुपस्थानं विधत्ते ।

**सत्रस्यर्द्ध्याग्नीध्रमुपतिष्ठन्त ऋद्धावेव प्रतितिष्ठन्ति ॥ ७ ॥**

औहोवा३ अगन्म ज्योतिः इति सत्रस्य ऋद्धिस्तेन साम्ना आग्नीध्रं आग्नीध्रमण्डपस्थमग्निमुपतिष्ठेरन् अगन्म ज्योतिरमृता अभूमेत्यादिना ऋद्धेः सूचितत्वात् ऋद्धौ समृद्धावेव प्रतितिष्ठन्ति ॥ ७ ॥

अस्य च साम्नो निधनं स्वर्ज्योतिरिति तत्र वर्णव्यूहेन चतुरक्षरनिधनं भवति तदनूद्य प्रशंसति ।

**चतुरक्षरणिधनं भवति चतुष्पादाः पशवः पशुष्वेव प्रतितिष्ठन्ति ॥ ८ ॥**

स्पष्टोऽर्थः ॥ ८ ॥

यावत् प्राणस्य विरामो भवति तावन्तं कालं एतन्निधनमावर्त्तयेयुरिति विधत्ते ।

**आतमितोर्निधनमुपयन्त्यायुरेव सर्वमाप्नुवन्ति ॥ ९ ॥**

आतमितोतमुग्लाने भावलक्षणेस्येण्क्रमिवदिचरिक्ततमिर-जनिभ्यस्तोऽसुन् इत्यसुन् प्रत्ययः । आतमनात् प्राणवायोः यावन्तमनं ग्लानं समो भवति तावत्पर्य्यन्तं स्वर्ज्योतिः स्वर्ज्योतिरिति अनुच्छ्वसन्तः पुनःपुनरावर्त्तयेयुः एवं प्राणस्यान्तर्निरोधेन सर्व्वं सम्पूर्णमेवायुः प्राप्नुवन्ति ॥ ९ ॥

तथा हविर्द्धानयोरुपस्थानं विधत्ते ।

**श्लोकानुश्लोकाभ्याᳬ हविर्द्धाने उपतिष्ठन्ते कीर्त्तिमेव तज्जयन्ति ॥ १० ॥**

हाऊ स्वरता ब्रह्मणा इति गीयमानं साम श्लोकः, आनवस्ते रथमश्वायाता १२३४ इत्यस्यां गीयमानं हाऊ स्वरता स्वरतस्वरा २ ३ ता इत्यादिकं साम अनु श्लोकः । तत्र पूर्वेण श्लोकस्य साम्ना हविर्द्धानयोः पुरस्तात्प्रत्यङ्मुखाः स्थित्वा हविर्द्धाने उपतिष्ठेरन्, हविर्द्धानयोः पश्चात् स्थित्वा अनुश्लोकेन हिविर्द्धाने एवोपतिष्ठेरन्, तदुक्तं सूत्रकारेण, पुरस्तात्प्रत्यङ्मुखाः पश्चादितरेणेति, तत्तेन सामद्वयोपस्थानेन कीर्त्तिमीयुः एते पुण्यश्लोकाः एतैः सम्यक् सत्रमनुष्ठितमित्येवं रूपं यशः प्राप्नुवन्ति ॥ १० ॥

अथ अन्यदुपस्थानं विधत्ते ।

**यामेन मार्जालीयमुपतिष्ठन्ते पितृलोकमेव तज्जयन्ति ॥ ११ ॥**

द्वन्द्वेषु सामसु नाके सुपर्णमित्यस्यां यत्पठितं यामं औ होई इया हाऊ अहो हो२वा नाके सुपा इत्यादि, तेन मार्जालीयन्धिष्णमुपतिष्ठेरन् वेदेर्दक्षिणभागे हि मार्जालीयं पितृलोकस्य दक्षिणत इति, तत्तेन मार्जालीयोपस्थानेन पितृलोकमेव जयन्ति ॥ ११ ॥

अथ सदसउपस्थानं विधत्ते ।

**आयुर्नवस्तोभाभ्याᳪ सद उपतिष्ठन्ते ब्रह्म चैव तत् क्षत्रञ्च जयन्ति ॥ १२ ॥**

हाऊ२ आ विश्वतो दावन्विश्वतो न आ भर इत्यायुः, विश्वतो दावन्विश्वतोन आ इति नव स्तोभः, सदसः पुरस्तात् स्थित्वा पूर्वेण आयुःसाम्नोपतिष्ठन्ते पश्चात् स्थित्वोत्तरेण आयुर्नवस्तोभेन साम्ना, उक्तं हि सूत्रकारेण, यथा हविर्धाने तथा इति, तत्र ज्योतिःशब्देन सम्यग्विवचनेन ब्रह्म च क्षत्रञ्च कीर्त्यंत इति, तत्तेन सामद्वयोपस्थानेन ब्रह्म च ब्राह्मणजातिं क्षत्रं क्षत्रियजातिञ्च उभयमपि जयन्ति ॥ १२ ॥

अथ गार्हपत्योपस्थानं विधत्ते ।

**ऋष्यस्य साम्ना गार्हपत्यमुपतिष्ठन्ते ॥ १३ ॥**

हरीत इन्द्र श्मश्रूणीति गीयमानं ऋष्यस्य साम तेन गार्हपत्यं शालामुखीयमुपतिष्ठेरन् ॥ १३ ॥

अथैतत्साम स्तौति ।

इन्द्रꣳ सर्वाणि भूतान्यस्तुवꣳस्तस्यर्ध्य एकमङ्ग-मस्तुतमचायत्तदस्यैतेनास्तौत्तेनास्य प्रियं धामोपाग-च्छत्प्रियमेवास्यैतेन धामोपगच्छन्ति ॥ १४ ॥

पुरा इन्द्रं फलकामनया सर्वाणि भूतान्यस्तुवन् तस्यैकमङ्गं गुह्यरूपमस्तुतं न केनापि स्तुतमासीत् ऋध्ये तदङ्गमचायत् अजानत् ज्ञात्वा च स तस्येन्द्रस्य तदङ्गमेतेन साम्नाऽस्तौत् तेनास्य प्रियं धामोपागच्छत् अतएतेनोपतिष्ठमाना अपि अस्येन्द्रस्य प्रियमेव धाम स्थानमुपगच्छन्ति, अस्मिन् साम्नि भुङ्गिति प्रभुङ्गितीन्द्रस्तसरेति स्तोभवद्देनं भोगसाधनं गुह्यमङ्गं प्रतीयते, इन्द्रस्तसरपूता इत्यत्र च सरशब्देन तदेवोच्यते, तत्र शाट्यायनकं ऋध्यास इन्द्र भुङ्गिति मघवन्निन्द्र भुङ्गिति प्रभुङ्गि-तीन्द्रस्त सरपूता २३४५ इति पुनः पुनस्तसरस्थिरगित्येत इत्या-दिकमनुसंधेयं । अतो गुह्यस्य स्तुतिरधिगन्तव्या ॥ १४ ॥

अस्य च निधनं प्रत्यक्षमुपेतव्यं न परोक्षेणेति विधत्ते ।

यत् परोक्षं निधनमुपेयुर्ह्रीतमुखं प्रतिमुञ्चेरन् प्रत्यक्षमुपयन्ति ह्रीतमुखमेवापजयन्ति ॥ १५ ॥

यत् यदि अस्य साम्नो निधनं इन्द्रस्तसरपूता इत्येतत् परोक्ष-मुपेयुरुपगच्छेयुः ह्रीतमुखं लज्जाविष्टमुखं कारं पुत्रं प्रतिमुञ्चे-

रन् स्थानानि संयोजयेरन् यत् यदि प्रत्यक्षमुपयन्ति तदोद्गीत-मुखमेवमपरो निर्देशः द्वीतमुखत्वं पुत्रादिगतमापजयन्ति तिरस्कुर्वन्ति, किमिदन्निधनस्य परोक्षं किंवा प्रत्यक्षमिति चेत् तदुभयं विविच्य प्रदर्शितं निदाने, ऋच्यं प्रत्यक्षज्ञापितं परोक्षमपि वेन्द्रेति प्रत्यक्षं इन्द्र इति परोक्षमित्यादिना ऋक्षास इन्द्र भुङ्गितीन्द्रपदमित्युपरि सर्वाणीन्द्रवाचकानि पदानि सम्बुध्यन्तानि प्रयोज्यानि तेनेन्द्रस्तसरपूता इति प्रथमान्तमपो-ह्य इन्द्रस्तसरपूतेति संयोज्य यथा ऋक्षास इन्द्रमघवन्निन्द्रेति त्रीणि सम्बुध्यन्तानि एवं हीन्द्रः सम्बोध्यत्वात् प्रत्यक्षकृतो भवति अतस्तद्वाचकं निधनमपि प्रत्यक्षं भवति। प्रथमान्तत्वे तु परोक्ष-कृतत्वेन निधनस्य परोक्षता स्यात्, तदुक्तं सूत्रकृतापि, इन्द्र-प्रभृति प्रत्यक्षं निधनमुपेयुरिति ॥ १५ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चमाध्यायस्य
चतुर्थः खण्डः।

---

अथ पञ्चमः खण्डः।

एवं महाव्रतस्तोत्रस्याङ्गभूता लोमनखस्थानीयास्त्रयोदश परिमादो गताः, एतेषाञ्च लोमनखस्थानीयत्वं तैत्तिरीये समा-म्नातं, यदित इतो लोमानि इतो नखात्परिमादः क्रियन्ते तान्येव तेन प्रत्युप्यन्त इति, अथ महाव्रतस्तोत्रं पञ्चविधं भवता-

ध्वर्युः शिरसोद्गायेन्मैत्रावरुणो दक्षिणेन पक्षेण ब्राह्मणाच्छंस्युत्तरेण गृहपतिः पुच्छेनोद्गातात्मनेत्येवं कर्त्तृविशेषसम्बन्धं वक्ष्यति तत्रोद्गातुरुद्गानकाले कञ्चिद्विशेषं विधत्ते ।

**आसन्दीमारुह्योद्गायति देवसाक्ष्य एव तदुपरिषद्यं जयति ॥ १ ॥**

उद्गाता आसन्दीमारुह्य आत्मना राजनेन साम्ना उद्गायति तत्तेन भूमिं परित्यज्य आसन्द्या उपर्य्यारोहणेन देवसाक्ष्ये देवानां दर्शन एव उपरि षद्यं उपरि सदनं उच्छ्रिते स्वर्गादाववस्थानं जयति लभते ॥ १ ॥

आसन्द्या औदुम्बरीत्वं विधाय प्रशंसति ।

**औदुम्बरी भवत्यूर्गुदुम्बर ऊर्ज्जमेवावरुन्धे ॥ २ ॥**

औदुम्बरविकार औदुम्बरैः काष्ठैर्निर्मितो भवति योऽयमुदुम्बरः स ऊर्ग् वै बलकरमन्नमेव ऊर्ग्विभागसमये तस्योत्पत्तेः तथा च तैत्तिरीयकं देवावा उर्ज्जं व्यभज्जत तत उदुम्बर उदतिष्ठदिति अत औदुम्बर्य्यासन्द्युपवेशनेन ऊर्ज्जमेव साक्षात्प्राप्नोति, यदुक्तं सूत्रकारेण, प्रादेशमात्राः पादा अरत्निमात्राणीतराण्यङ्गानीति ॥ २ ॥

तदेतद्विधाय प्रशंसति ।

**प्रादेशमात्री भवत्यस्य लोकस्यानुख्यानाय ॥ ३ ॥**

प्रादेशमात्रपादत्वात् प्रादेशमात्री आसन्दी एवं पादानां ह्रसीयस्त्वं अस्य लोकस्य अस्मात् लोकादनुत्थानाय भवति ॥३॥

अथ तस्यारोहणं विधाय प्रशंसति।

## छन्दोभिरारोहति स्वर्गमेव तल्लोकमारोहति ॥४

गायत्रेण त्वा छन्दसा रोहामि त्रैष्टुभेन त्वा छन्दसा रोहामि जागतेन त्वा च्छन्दसा रोहामि आनुष्टुभेन त्वा च्छन्दसा रोहामि वैराजेन त्वा छन्दसा रोहामि इति वैराजपञ्चमैः गायत्र्यादिभिश्छन्दोभिरासन्दीमारोहति, छन्दोविकल्पश्च सूत्रकारेणोक्तः, चतुर्भिरिति धानञ्जय्यस्त्रिभिः इति शाण्डिल्य इति, तत्तेन रोहणेन स्वर्गं लोकमारोहति ॥ ४ ॥

उपावरोहणकाले एतैरेव प्रतिलोमैश्छन्दोभिरुपावरोहणं विधत्ते।

## छन्दोभिरुपावरोहत्यस्मिन् लोके प्रतितिष्ठति ॥५

एतेषामेव छन्दसां प्रतिलोम आरोहणे इति गायत्रस्य प्रथमत्वेन भूर्लोकात्मकत्वात् अस्मिन् लोके पुनः प्रतितिष्ठतीति, तदुक्तं सूत्रकृता, आह्वयमाणे अध्वर्यौ प्रतिलोमैः आरोहणीयैः अवरुह्य जपेन्मही द्यौः पृथिवी चनेति सर्वे सह सुवीरन्निति, यद्यध्वर्य्युप्रभृतयः शिरःप्रभृतिभिरुद्गानं कुर्य्युः तदा एकैकया स्तोत्रीयान्यया अस्तुतया उद्गाता अभिसमेयुरिति वक्ष्यति ॥ ५ ॥

उद्गातुस्तासामुद्गानं विधत्ते।

**सर्वेणात्मना समुद्धृत्योद्गेयमेषु लोकेषु नेद्व्याह्वितोऽसानीति ॥ ६ ॥**

अध्वर्युप्रभृतिभिः परिघोषिताः स्तोतीयाः समुद्धृत्य संगृह्य सर्व्वेण स्तोतीयेण आत्मना आत्मभूतेन राजनेन उद्गेयमुद्गानं कार्य्यं एषु लोकेषु स्थानेषु शिरःप्रभृतिषु नेत् नैव व्याह्वितोऽन्तरितोऽसानि भवानीति बुद्ध्वा अतः प्रभृतिषु सर्व्वेषूद्गातृषु स्तुतं भवतीत्यर्थः ॥ ६ ॥

अथोद्गातुरासन्द्यासकाशात्पादयोरवरोहणं विधत्ते।

**एकस्याꣳ स्तोत्रीयायामस्तुतायां पादावुपावहरति ॥ ७ ॥**

पञ्चविंशस्तोमस्य राजनस्य एकस्यां स्तोतीयायां अन्त्यायामस्तुतायां प्रस्तूयमानायां उद्गाता पदावुपाहरति भूमेरासन्नं स्थापयति ॥ ७ ॥

अथ त्रयाणामप्युद्गातॄणां पादयोर्भूमौ स्थापनकालं विधत्ते।

**सह निधनेन प्रतिष्ठामुपयन्त्येष्वेव लोकेषु प्रतितिष्ठन्ति ॥ ८ ॥**

उत्तमे निधने राजनस्य वाजीडासु इहद्गा२४५ इत्यन्तेन सह प्रतिष्ठामुपयन्ति भूमौ पादौ प्रतिष्ठापयन्ति एवं भूमौ स्थापनेन एष्वेव लोकेषु प्रतिष्ठिता भवन्ति, अत बहुवच-

नेन प्रक्षोटप्रतिहर्त्तोस्तस्मात् प्रष्टिरूपादासनात् भूमौ पाद-प्रतिष्ठापनं कर्त्तव्यमित्यवगम्यते ॥ ८ ॥

अथ प्रसङ्गात् होतुरप्यासनविशेषं विधाय प्रशंसति।

**प्रेङ्खमारुह्य होता शंसति महस एव तद्रूपं क्रियते ॥ ९ ॥**

होता प्रेङ्खं दोलामारुह्य तत्रैवासीनो निष्केवल्यं बृहती-सहस्रात्मकं शस्त्रं शंसति तत्तेन महसस्तेजस एवैश्वर्य्यरूपमेत-त्क्रियते ॥ ९ ॥

कथं प्रेङ्खारोहणेन महसो रूपं कृतं भवति तत्राह।

**यदा वै प्रजा मह आविशति प्रेङ्खाꣳस्तर्ह्यारो-हन्ति ॥ १० ॥**

यदा खलु प्रजाः जनान् महस्तेज ऐश्वर्य्यमाविशति तर्हि तस्मिन् काले प्रेङ्खान् आरोहन्ति ॥ १० ॥

तथाध्वर्य्योरासनं विधत्ते।

**फलकमारुह्याध्वर्युः प्रतिगृणाति ॥ ११ ॥**

औदुम्बरं फलकमारुह्याध्वर्युः निष्केवल्यं शस्त्रं प्रतिगृ-णाति ॥ ११ ॥

अन्येषामपि ऋत्विजामासनानि विधत्ते।

**कूर्चानितरेऽध्यासत ऊर्द्धा एव तदुत्क्रामन्तो यन्ति ॥ १२ ॥**

उक्तेभ्यो येऽन्ये मैत्रावरुणादयस्ते कूर्चान् दृसीरध्यासते, तथा च्चौतरेयकं दृसीः होतकाः समधिरोहन्ति सब्रह्मका इति, एवं सर्वेषामृत्विजामूर्द्धोपवेशनात् ऊर्द्धा एव ऊर्द्धाभिमुखा एव सन्त उत्क्रामन्त ऐहिकभोगावसाने स्वर्गं प्रत्युत्क्रामन्तः यन्ति इदानीमुच्चिक्रमिषयैव तेष्वासनेषूपविशन्तीत्यर्थः ॥ १२ ॥

ब्राह्मणस्य शूद्रस्य सत्रिणां प्रशंसनं निन्दनञ्च क्रमेण कुर्य्यातां तदेतद्विधत्ते।

**अभिगरापगरौ भवतो निन्दत्येनानन्यः प्रान्यः शꣳसति यएनान्निन्दति पाप्मानमेषाꣳ सोऽपहन्ति यः प्रशꣳसति यदेवैषां सुकृतꣳ सुशस्तं तत् सोऽभिगृणाति ॥ १३ ॥**

अभिगरः स्तोता अपगृणाति अपवदतीति अपगरो निन्दिता तावुभौ आनीतौ भवतः तयोरन्यः शूद्रः एनान् सत्रिणो निन्दति एतैः सम्यङ्नानुष्ठितमित्यपवदति तथा अन्यो ब्राह्मणः एनान् प्रशंसति एषां सत्रिणां सम्बन्धि सुकृतं शोभनं स्तवनं सुशस्तं सुशंसनं च यदस्ति तदेवासावभिगृणाति ॥ १३ ॥

अथ चर्म्मनिमित्तं ब्राह्मणशूद्रयोर्विवादं विधत्ते।

शूद्रार्य्यौ चर्म्मणि व्यायच्छेते तयोरार्य्यं वर्णमुज्जापयन्ति ॥ १४ ॥

शूद्रश्चार्य्यश्चोभौ चर्म्मणि परिमण्डलेष्वेते आदित्यप्रतिरूपे निमित्ते व्यायच्छेते व्यायमनं विविधमाकर्षणमस्मदीयमिति तत् कुरुतस्तयोर्म्मध्ये आर्य्यं वर्णं ब्राह्मणजातिमुज्जापयन्ति यथा ब्राह्मणो जयेत् तथा कुर्युरित्यर्थः ॥ १४ ॥

तदेतत् स्तौति ।

देवाश्च वा असुराश्चादित्ये व्यायच्छन्त तन्देवा अभ्यजयꣳस्ततोदेवा अभवन् परासुरा भवत्यात्मना परास्य भ्रातृव्यो भवति य एवं वेद ॥ १५ ॥

पुरा वै देवाश्चासुराश्चासावादित्योऽस्माकमेवेति तस्मिन् आदित्ये विषये व्यायच्छन्तः विवादं कृतवन्तः तमादित्यं देवा अभ्यजयन् असुराः जयं न प्राप्नुवन् स्पष्टमन्यत् ॥ १५ ॥

ब्राह्मणस्य जयो यथा स्यात् तथा कर्त्तव्यमित्युक्तं तदेव प्रशंसति ।

यदार्य्यं वर्णमुज्जापयन्त्यात्मानमेव तदुज्जापयन्ति ॥ १६ ॥

आर्य्यं ब्राह्मणं वर्णमुज्जापयन्तीति उत्कर्षेणायं प्रापयन्तीति यत् तत्तेन सतिण आत्मानमेव उज्जापयन्ति जयतेर्णिच्क्रीङ्-

जीनाणाविल्यात्वे ऋर्त्ति ह्रीह्नीत्यादिना नुमागमः ॥ १६ ॥

व्यायमनहेतुभूतस्य चर्म्मणः किञ्चिद्गुणं विधाय प्रशंसति।

परिमण्डलञ्चर्म भवत्यादित्यस्यैव तद्रूपं क्रियते ॥ १७ ॥

तच्चर्म परितः कृतमण्डलाकारं भवति तत्तेन आदित्यस्यैव रूपं अस्मिन् चर्म्मणि क्रियते आदित्ये हि पुरा देवानां व्यायमनं कृतमित्युक्तं अतएवैतच्चर्म आदित्यप्रतिरूपकं भवति ॥१७॥

अथास्मिन् स्तोत्रे गीयमाने दुन्दुभीनां वादनं विधत्ते।

सर्वासु स्रक्तिषु दुन्दुभयो वदन्ति या वनस्पतिषु वाक् तामेव तज्जयन्ति ॥ १८ ॥

सर्वासु स्रक्तिषु वेद्याः कोणेषु दुन्दुभयो वदन्ति शब्दं कुर्य्युस्तदेवं यथा वदन्ति तथा तान्वादयतीत्यर्थः वाक्पूर्वं देवेभ्यो निष्क्रम्य वनस्पतीन् पृथिवीञ्च प्राविशत् तत्र वनस्पतिषु या वाक् प्रविष्टा तामेव वाचं तत्तेन दुन्दुभिशब्देन जयन्ति प्राप्नुवन्ति ॥ १८ ॥

अथ भूमिदुन्दुभिवादनं विधत्ते।

भूमिदुन्दुभिर्भवति या पृथिव्यां वाक्तामेव तज्जयन्ति ॥ १९ ॥

आग्नीध्रीयस्य पश्चादर्द्धमन्तर्वेद्यर्द्धं वहिर्वेदिभूमाववटं

खात्वा सवनीयस्य ऋषभचर्म्मणापिदधाति स भूमिदुन्दुभिर्भवति तां वादयन्तीति शेषः, स्पष्टमन्यत् ॥ १८ ॥

अन्यासामपि वाचां प्रयोगं विधत्ते ।

**सर्वा वाचो वदन्ति येषु लोकेषु वाक् तामेव तज्जयन्ति ॥ २० ॥**

सर्वाः संस्कृताश्चासंस्कृताश्च ग्राम्यवाचश्च वदन्ति प्रेक्षकाः सर्वे जना इत्यर्थः, गतमन्यत् ॥ २० ॥

अथ राजपुरुषाणां देवयजनस्य परितो गमनं विधत्ते ।

**सन्नद्धाः कवचिनः परियन्तीन्द्रियस्यैव तद्रूपं क्रियतेऽथो महाव्रतमेव महयन्ति ॥ २१ ॥**

सन्नद्धाः सम्बद्धहस्तत्राणादिकाः कवचिनः कवचयुक्ताश्च राजपुरुषाः रथमारुह्य गृहीतचापशराः सन्तः परियन्ति देवयजनं परितो गच्छेयुः इन्द्रियस्यैव बलस्यैव तद्रूपं क्रियते यदेतत् कवचिनां परिगमनं अथो अपि च महाव्रतमेव महाव्रताख्यमेवाहर्महयन्ति ॥ २१ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चमाध्यायस्य

पञ्चमः खण्डः ।

---

अथ षष्ठः खण्डः

एवं पञ्चविधमहाव्रतस्तोत्रस्य शिरःप्रभृतिगान् पञ्चावयवानध्वर्य्यादयः पञ्च सहोपक्रम्य युगपदुद्गायेयुरित्येकः पक्षः, उद्गातैव कृत्स्नस्तोत्रमुद्गायेदित्यपरः, तत्र प्रथमं पक्षं विदधाति ।

**सर्वे सहर्त्विजो महाव्रतेन स्तुवीरन् ॥ १ ॥**

महाव्रतेन शिरआदिभिः पञ्चविधेन स्तोत्रेण ऋत्विजः सर्वे युगपत् स्तुवीरन् ॥ १ ॥

कतमः कतमेनावयवेन स्तुवीत इत्यत आह ।

**अध्वर्युः शिरसोद्गायेन्मैत्रावरुणो दक्षिणेन पक्षेण ब्राह्मणाच्छंस्युत्तरेण गृहपतिः पुच्छेनोद्गातात्मना ॥ २ ॥**

शिरसा शिरस्त्वेन परिकल्पितेन त्रिवृता स्तोमेन गायत्रेण साम्ना अध्वर्युः शिरसोद्गायेत्, तथा मैत्रावरुणो दक्षिणेन पक्षेण, तथा तेन परिकल्पितेन रथन्तरसाम्ना पञ्चदशस्तोमेनोद्गायेत्, तथा ब्राह्मणाच्छंस्युत्तरेण पक्षेण तदात्मना परिकल्पितेन सप्तदशस्तोमेन बृहत्साम्ना स्तुवीत, गृहपतिर्यजमानः भद्रं यज्ञायज्ञीयं च विकल्पितेन परिकल्पितेनान्यतरेण एकविंशस्तोमकेनोद्गायेत्, स्वयमुद्गाता आत्मनो मध्ये आत्मा तद्रूपतया परिकल्पितेन राजनसाम्नोद्गायेत्, अत्राध्वर्युः शिरसोद्गायेदि-

त्यादिना अध्वर्य्युप्रभृतीनामुद्गातृकार्य्ये विधानात्प्रस्तोतृप्रतिहर्त्तारावपि तस्य तस्य कल्पनीयौ, तत्राध्वर्य्योरग्रे द्वितीयः प्रस्तोता तृतीयः प्रतिहर्त्ता कार्य्यः पक्षयोस्तु द्वितीययोरुद्गातृत्वात् तदनन्तरभाविनौ तृतीयचतुर्थावेव प्रस्तोतृप्रतिहर्त्तारौ कार्य्यौ पुच्छे तु अविनियुक्तौ सुब्रह्मण्योन्नेतारौ प्रस्तोतृप्रतिहर्त्तारौ कर्त्तव्यौ नह्यत्र गत्यन्तरमस्तीत्येकः पक्षः । अध्वर्य्युप्रभृतीनामेवोद्गातृत्वविधानान्नेतरयोर्ब्बाध इति उद्गातृवर्गौ यौ प्रस्तोतृप्रतिहर्त्तारौ तावेव सर्व्वत्र क्रमेण प्रस्तोतृप्रतिहर्त्तारौ कुर्य्यातामित्यपरः पक्षः, इममेव पक्षं सूत्रकारः सर्व्वे सहर्त्विजो महाव्रतेन स्तुवीरन्नित्युद्गातृविकार एव स्यादित्यादिना दर्शितवान् ॥ २ ॥

यद्यध्वर्य्युप्रभृतयः सर्व्वे महाव्रतेन स्तुवीरन् तत्र किञ्चिद्विशेषमाह ।

## तद्यद्येवं कुर्य्युरेकैकया स्तोत्रीययास्तुतयोद्गातारमभिसमेयुः ॥३॥

तत्र महाव्रते यद्येवं कुर्य्युः तदा स्वीयेषु स्तोत्रेषु शिरःप्रभृतिषु अस्तुतया एकैकया स्तोत्रीयया उद्गातारमभिसमेयुरभिगच्छेयुः इयमस्तुतेत्युद्गात्रे निवेदयेयुरित्यर्थः ॥ ३ ॥

अथैतर्हि निवेदितानां स्तोत्रीयानां क्रमेणोद्गात्रा विनियोगप्रकारमाह ।

तिसृभिरुद्गातात्मन उद्गायेदथ या शिरसः स्तोत्री-या तां दध्यादपराभिस्तिसृभिरुद्गायेदथ या दक्षिणस्य पक्षस्य स्तोत्रीया तान्दध्यादपराभिस्तिसृभिरुद्गायेदथ योत्तरस्य पक्षस्य स्तोत्रीया तान्दध्यात्तिसृभिर्वैकया वा स्तुतꣳ स्यादथ या पुच्छस्य स्तोत्रीया तान्दध्यात् ॥४॥

आत्मनः राजनस्यादितस्तिसृभिः स्तोत्रीयाभिरुद्गीय उद्गानं कृत्वा अथानन्तरं या शिरसः स्तोत्रीया अध्वर्युणावघोषितामुद्गाता दध्यात् प्रथमपर्यायस्य प्रथमविष्टावानन्तरं तया स्तुवीतेत्यर्थः एवमुत्तरत्रापि योज्यं यदा राजनस्य साम्नः पञ्चविंशस्तोमस्य अन्त्याभिस्तिसृभिः स्तोत्रीयाभिरेकया वा अस्तुतं स्यात् स्तुतिः कृता न भवेत् अथास्मिन् स्थाने गृहपतिनोद्घोषितां पुच्छस्य स्तोत्रीयाम्प्रत्येतत् न त्वेकैकस्या उद्घोषणं ॥ ४ ॥

आत्मनि प्रतिधानञ्च किमर्थमित्यत आह।

आत्मन्येव तदङ्गानि प्रतिदधाति स्वर्गस्य लोकस्य समष्ट्यै ॥ ५ ॥

तत्तेन उक्तक्रमेण स्तोत्रीयाणां प्रक्षेपणेन आत्मनि मध्यकायएव शिरःप्रभृतीन्यङ्गानि प्रतिदधाति संयोजयति सम्पूर्णाङ्गो हि गन्तुं शक्नोति प्रतिधानं स्वर्गस्य लोकस्य समष्ट्यै सम्प्राप्त्यै भवति ॥ ५ ॥

अथ सर्वं महाव्रतेन सुवीरन्निस्युक्तं पचं निरस्य उद्गातैव शिरःप्रभृतिकेन सर्व्वेण स्तोत्रेण सुवीतेत्यमुं पचं दर्शयति।

**अथो खल्वाहुः कथमध्वर्युर्बह्वृचः साम गायेदित्युद्गातैव सर्वेणोद्गायेत्तदेव समृद्धं समृद्धावेव प्रतितिष्ठन्ति॥ ६॥**

अध्वर्युर्यजुर्वेदाध्यायी मैत्रावरुणोऽपि बह्वृचः ऋग्वेदाध्यायी अनित्यं हि तयोः सामाध्ययनं ततः कथं साम गायेतामिति ब्रह्मवादिन आहुः अथो खल्विति पक्षान्तरपरिग्रहे एवमुक्त्वा तदनन्तरमेव निश्चितवन्तः उद्गातैव सर्वेण कृत्स्नेन शिरःप्रभृतिकेन महाव्रतस्तोत्रेणोद्गायेत् तदेव समृद्धं स्वशाखात्वेन सम्यगधीतत्वात् स्वरादिविकल्पाभावेन सम्यक् प्रयुक्तत्वात् तदेव स्तोत्रं समृद्धं संपूर्णं भवति तथा च सतिर्णोऽपि समृद्धावेव प्रतिष्ठिता भवन्ति॥ ६॥

अथास्मिन् पक्षे स्तुतिप्रकारमाह।

**हविर्द्धाने शिरसा स्तुत्वा सꣳरब्धाः प्रत्यञ्च एयुस्ते दक्षिणेन धिष्ण्यान् परीत्य पश्चान्मैत्रावरुणस्य धिष्ण्यस्योपविश्य रथन्तरेण पञ्चदशेन स्तुवीरꣳस्त उदञ्चः सꣳसर्पेयुर्जघनेन होतुर्धिष्ण्यं पश्चाद्ब्राह्मणाच्छꣳसिनो धिष्ण्यस्योपविश्य बृहता सप्तदशेन स्तुवी-**

रꣳस्ते येनैव प्रसर्पेयुस्तेन पुनर्निःसृप्योत्तरेणाग्नीध्रं परीत्य पश्चाद्गार्हपत्यस्योपविश्य पुच्छेनैकविꣳशेन स्तुवीरꣳस्ते येनैव निःसर्पेयुस्तेन पुनः प्रसृप्य यथायतनमुपविश्यासन्दीमारुह्योद्गातात्मनोद्गायति ॥७॥

हविर्द्धाने हविर्द्धानमण्डपे उद्गातारः शिरसा स्तुत्वा सꣳरब्धाः समन्वारब्धाः प्रत्यञ्चः प्राङ्मुखाः सन्त एयुः हविर्द्धानाद्गच्छेयुः अपरया द्वारा हविर्द्धानान्निष्क्रम्य मार्ज्जालीयादीनां धिष्ण्यानां दक्षिणतः परीत्य पूर्व्वया द्वारा सदः प्रविश्य मैत्रावरुणधिष्ण्यस्य पश्चादुपविश्य रथन्तरेण पञ्चदशेन स्तुवीरन् ततस्तउद्गातारः उदञ्चः उदङ्मुखाः प्रसर्पेयुः होतुर्धिष्ण्यमपरेण ब्राह्मणाच्छंसिधिष्ण्यस्य पश्चादुपविश्य वृहता सप्तदशेन स्तुवीरन् ते पुनर्येनैव पथा प्रसर्पेयुः तेनैव पुनर्निःसृप्य निर्गत्य दक्षिणेन धिष्ण्यान् परीत्य पूर्व्वया द्वारा सदो निर्गत्य अपरया द्वारा हविर्द्धाने प्रपद्य पूर्व्वया द्वारा हविर्द्धानान्निष्क्रम्येत्यर्थः तत उत्तरेणाग्नीध्रं आग्नीध्रीयं धिष्ण्यं परीत्य गार्हपत्यस्य पश्चादुपविश्य एकविꣳशस्तोमकेन पुच्छेन स्तुवीरन् त उद्गातारो येनैव पथा निःसर्पेयुः सदसो निष्क्रान्ताः तेनैव पुनः सदः प्रसृप्य प्रपद्य यथायतनमुपविशेयुः तत उद्गाता आसन्दीमारुह्य आत्मनोद्गानं कुर्य्यात् अत्रोपविश्येति पूर्व्वकालतामात्रे क्त्वाप्रत्ययो द्रष्टव्यः ॥ ७ ॥

अन्तोद्गाने पत्नीनां वीणाविशेषैरुपगानं विधत्ते।

तं पत्न्योऽपघाटिलाभिरुपगायन्त्यार्त्विज्यमेव तत्पत्नयः कुर्वन्ति सह स्वर्गं लोकमयामेति॥ ८॥

तमुद्गातारं अपघाटिलाभिर्वीणाविशेषैरुपगायन्ति उपगानं कुर्युः तदुपगानं आर्त्विज्यमेव पत्नयः कुर्व्वन्ति यजमानैः सह स्वर्गं लोकं प्राप्नुयामेति बुद्ध्वा, अपघाटिलाशब्दस्यार्थं सूत्रकारो विस्पष्टमेवोक्तवान्, पश्चिमेनोपगातॄन्द्वेद्वे एकैका पत्नी काण्डवीणां पिच्छोलां व्यत्यासं वादयेदुपमुखं पिच्छोलावादनेन काण्डमयी अपघाटिला इत्याचक्षत इति, उपमुखं स्थापयित्वा मुखमारुतेन वाद्यमाना वीणापघाटिला इत्याचक्षत इति पिच्छोरा वादनदण्डेन वाद्यमाना काण्डमयी काण्डवीणा इतरयोरेव अपघाटिलासंज्ञेत्यर्थः॥ ८॥

अस्मिन्नहनि सर्वेषामपि यजमानानां गृहेषु ब्राह्मणभोजनार्थं पाकः कर्त्तव्य इति विधत्ते।

कुले कुलेऽन्नं क्रियते तद्यत्पृच्छेयुः किमिदं कुर्वन्तीतीमे यजमाना अन्नमत्स्यन्तीति ब्रूयुः॥ ९॥

अन्येष्वहःसु गृहपतिप्रधानाः एव सर्वे ब्राह्मणान् भोजयितुमन्नानि कामयन्ते अस्मिन् अहनि कुले कुले यजमानानां गृहे गृहे अन्नं क्रियते पृथक् पृथक् ब्राह्मणान् भोजयितुमन्नं

कर्त्तव्यं तत्तत एवं क्रियमाणे यद्यदि पृच्छेयुः प्रेक्षका जनाः किमिदं कुले कुले कुर्व्वन्तीति तदैवं प्रतिब्रूयुः इमे यजमाना अन्नमत्स्यन्तीति अस्मिन् लोके बहुलमन्नं प्रदाय अमुष्मिन् लोके बहुलमेते भोक्ष्यन्तीति ॥ ९ ॥

अथैतत्प्रशंसति ।

**यो वै दीक्षितानां पापं कीर्त्तयति तृतीयमेषाꣳस पाप्मनोहरत्यन्नादस्तृतीयं पिपीलिकास्तृतीयं ॥१०॥**

यः खलु दीक्षितानां दीक्षणीयेषु संस्कृतानां पापमशुभं कीर्त्तयति सपुरुषः एषां पापस्य तृतीयमंशं हरति, यो दीक्षितानामन्नमत्ति सोऽन्नादस्तृतीयमंशं हरति, आज्येष्वन्नेषु च बहुषु सत्सु बह्वः पिपीलिकास्तद्भक्षणार्थमागच्छन्ति तास्तृतीयमंशं पापं हरन्ति, अत आज्यादिषु पिपीलिकापतने दोषाशंका न कार्येत्यर्थः ॥ १० ॥

परिमादः पूर्व्वमुक्ताः ता अन्नस्य प्रशंसति ।

**परिमाद्भिश्चरन्ति त्वक्च वा एतल्लोम च महाव्रतस्य यत् परिमादस्त्वचञ्चैव तल्लोम च महाव्रतस्या-मवरुन्धते ॥ ११ ॥**

याः पूर्व्वमुक्ताः परिमादस्तामहाव्रतस्य त्वक्लोमस्थानीयास्ततस्ता आप्त्वा प्राप्य अवरुन्धते स्वयमपि त्वचं लोमच लभन्त

इत्यर्थः, यदेतान् ह वै पुरुषो देवेभ्यः करोति तादृगस्मै देवाः कुर्व्वन्तीति श्रुतेः ॥ ११ ॥

अथ वीणाविशेषस्य वादनं विधत्ते।

**वाणं वितन्वन्त्यन्तो वै वाणोऽन्तो महाव्रतमन्तेनैव तदन्तमभिवादयन्ति ॥ १२ ॥**

वाणं महावीणान्तं वितन्वन्ति तं तीभिः संयोज्य वादयन्तीत्यर्थः, वाणो वीणानामन्तः परमः श्रेष्ठ इत्यर्थः, वाणः खलु सर्व्वेषां वाद्यविशेषाणां अन्तोऽवसानभूतः महाव्रतमप्यन्तः तत्तेनान्तेनैवान्तमभिलक्ष्य वादयन्ति ॥ १२ ॥

तस्य वाणस्य तन्त्रीसंख्यां विधाय प्रशंसति।

**शततन्त्रीको भवति शतायुर्वै पुरुषः शतवीर्य्यः ॥ १३ ॥**

सर्वमायुर्य्यन्तीति शेषः अर्थो निगदसिद्धः ॥ १३ ॥

वाणस्योल्लेखनं विधाय प्रशंसति।

**तमुल्लिखेत्प्राणाय त्वापानाय त्वा व्यानाय त्वेति प्राणापानव्यानानेव तदात्मन्नवरुन्धते ॥ १४ ॥**

प्राणाय त्वेत्यादिना मन्त्रेण औदुम्बर्य्याः शाखया वाणमुप-

लिखति हे वाण त्वां प्राणाद्यर्थमुल्लिखामीति मन्त्रार्थः तत्तेन प्राणादीनि चाप्त्वा प्राप्य निरन्यते इति ॥ १४ ॥

अथ यजमानप्रेष्यास्त्रियः उदकुम्भं धारयन्त्यो नयेयुरिति विधत्ते।

परिकुम्भिन्यो मार्ज्जालीयं यन्तीदं मध्विदम्मध्विति सघोषा एव तद्वयो भूत्वा सह स्वर्गं लोकं यन्ति ॥ १५ ॥

इदं मध्विदं मध्विति मन्त्रं शंसन्त्यः पुनः पुनर्गायन्त्यः कुम्भिन्योदास्यः मार्ज्जालीयं धिष्ण्यं परियन्ति परितो नृत्यन्तीत्यर्थः तत्तेन एवं सशब्दं परिवर्त्तमानेन यजमानाः सघोषा एव सन्तः वयः पक्षिण इवान्तरिक्षगा भूत्वा सह संघशः स्वर्गं लोकं प्राप्नुवन्ति देहावसान इत्यर्थः ॥ १५ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चमाध्यायस्य
षष्ठः खण्डः।

---

अथ सप्तमः खण्डः।

इत्थं गवामयनस्योपान्त्यमहर्विस्तरेणोक्तं तथा पूर्व्वस्मिन् पक्षस्याभिप्लविकेष्वहःसु स्वरसामसु च अन्वहं एकमेव ब्रह्मसामाभीवर्त्तस्तोत्रीया त्वन्या अन्या, उत्तरस्मिन् पक्षसि ब्रह्मसाम-

स्तोत्रीया एका एव इन्द्रक्रतुन्न आभरेति सामनि अन्वहं अन्यदन्यदिति च सर्वस्य गवामयनस्य साधारण्येनोक्तं, अथ तस्मिन् प्रकृते गवामयने सर्व्वेष्वहःसु आर्भवे पवमाने अनुष्टुप्सु गौरीवितꣳ साम कार्य्यमिति विधित्सुराह।

**देवा वै वाचं व्यभजन्त तस्या यो रसोऽत्यरिच्यत तद्गौरीवितमभवदनुष्टुभमन परिप्लवते वागनुष्टुब्वाचो रसो गौरीवितं॥ १॥**

देवाः खलु पुरा वाचं छन्दोरूपां व्यभजन्त गायत्रीं प्रातःसवने अग्नये वसुभ्यो व्यभजन्त त्रिष्टुभं माध्यन्दिने सवने इन्द्राय रुद्रेभ्यो व्यभजन्त जागतं तृतीयसवने विश्वेभ्यो देवेभ्य आदित्येभ्यो व्यभजन्त एवं विभज्यमानायास्तस्या वाचः यो रसः सारोऽत्यरिच्यत तद्गौरीवितन्नाम सामाभवत् तच्च अनुष्टुभमनुलक्ष्य परिप्लवते सञ्चरति कुतएतत् यदिदमनुष्टुप् छन्दः सा वाक् गौरीवितं च वाचो रसः अतो अनुष्टुप्छन्दस्कामेवर्च्चं आधारतया गृह्णाति॥ १॥

एवं विशिष्टछन्दस्येतत्साम विधाय प्रशंसति।

**यद्गौरीवितेनान्वहꣳ स्तुवते वाच्येव तद्वाचा रसन्दधति॥ २॥**

अभि प्र गोपतिं गिरेत्यस्यां योनावुत्पन्नं साम गौरीवितं

तच्चानुष्टुभमूहते एवभूतेनानुष्टुभे तृचे गेयेन तेन साम्ना अन्वहं गवामयने अहन्यहनि सर्व्वेष्वहःसु आर्भवे पवमाने स्तुवते इति यत् तत्तेन वाच्येव वाचा रसं सारं दधाति निदधाति ॥ २ ॥

एतद्वेदनं प्रशंसति।

**रसवद्वाचा वदति य एवं वेदेति ॥ ३ ॥**

एवमर्थं यो वेद जानाति स वाचा रसवत् रसयुक्तमेव वदति वचनस्य सारवत्त्वेन ग्राह्या वाग्भवतीत्यर्थः ॥ ३ ॥

अस्मिन् साम्नि विद्यमानं किञ्चिदनूद्य प्रशंसति।

**द्युदासम्भवति स्वर्गस्य वा एतौ लोकस्यावसान-देशौ पूर्वेणैव पूर्व्वमहः सꣳस्थापयन्त्युत्तरेणोत्तरम-हरभ्यतिवदन्ति ॥ ४ ॥**

द्वावुदासावुत्क्षेपावस्मिन् साम्नि भवत इति द्युदासं उत्क्षेपोनाम दीर्घविशेषः एतावुत्क्षेपौ स्वर्गस्य लोकस्यावसानदेशौ पारदर्शिनौ तत्र पूर्वेणैवोदासेन पूर्वं वर्त्तमानमहः संस्थापयन्ति उत्तरेणोदासेन उत्तरमागाम्यहः अभि उद्दिश्य अतिवदन्ति इदमहरतीत्य प्रतिपादयन्ति ॥ ४ ॥

गौरीवितसामगतावुदासावुपजीव्य प्रशस्य तद्व्यतिरेके वाधोपन्यासेन प्रशंसति।

एतद्वै यज्ञस्य स्वस्त्ययनं यद्गौरीवितं यद्गौरीवितमनुसृजेयुरस्वस्त्ययना अप्रजसः स्युः ॥ ५ ॥

यद्गौरीवितं साम एतत् खलु यज्ञस्य यज्ञसम्बन्धि स्वस्त्ययनं श्वः परस्मिन् दिने भवं पूर्वापरयोरह्नोः सन्धायकमित्यर्थः, यद्यदि तद्गौरीवितमनुसृजेयुः परित्यजेयुः तदा सत्रिणोऽस्वस्त्ययनाः उत्तरकाले सम्बन्धरहितास्च अप्रजसः प्रजारहिताः स्युर्भवेयुः अतोऽन्वहं कर्त्तव्यमित्यर्थः ॥ ५ ॥

प्रकारान्तरेण प्रशंसति।

सं वा अन्यो यज्ञस्तिष्ठत इत्याहुर्वागेव न सन्तिष्ठत इति यत् गौरीवितमन्वहं भवति वाचमेव तत्पुनः प्रयुञ्जते ॥ ६ ॥

अन्यो वाग्रहितो यज्ञः सन्तिष्ठते वै परिसमाप्तएव भवतीति ब्रह्मवादिन आहुः तथा अन्येषु सन्तिष्ठमानेष्वपि वागेव न सन्तिष्ठत इत्याहुः यस्मादेवं तस्माद्गौरीवितं वाचः स्वरात्मकं सामान्वहं भवति तत्तेन असंस्थितां वाचमेव पुनः प्रयुञ्जते स्वस्त्ययनाभावाय गौरीवितं साम प्रत्यहमनुष्टुप्सु कर्त्तव्यमित्युक्तं भवति अत एतत् आद्यन्ते अहनी मुक्त्वा अन्येषु मध्यवर्त्तिष्वहःसु कर्त्तव्यमिति ज्ञायते। ६ ॥

अथ सुद्मानाख्यं सामान्वहं कार्य्यमिति विधित्सुस्तस्य निधनं विदधाति।

**स्वर्णिधनमन्वहं भवति॥ ७॥**

सोमः पुनान ऊर्म्मिणेत्यस्यां योनावुत्पन्नं सुद्मानं तस्योपेति निधनं तस्य स्थाने स्वरिति निधनं कर्त्तव्यमित्यर्थः तथा च सूत्रकृतोक्तं उपास्थानेष्वन्यानि निधनानि स्वरानादेशे तथा स्वराणि सुरिति प्रकृत्य स्वरसकाशात्ते दैवोदाससुद्मानयोश्चेति॥ ७॥

अथैतत् प्रशंसति।

**देवक्षेत्रं वा एतेऽभ्यारोहन्ति ये स्वर्णिधनमुपयन्ति स उ वै सत्रिणः सत्रमुपनयेदित्याहुर्य्य एनान्देवक्षेत्रमभ्यारोहयेदिति न वै देवक्षेत्र आसीन आर्त्तिमार्च्छति यत् स्वर्णिधनमन्वहं भवति नैव काञ्चनार्त्तिमार्च्छन्ति॥ ८॥**

ये स्वर्णिधनमुपयन्ति उपगच्छन्ति प्रयुञ्जत इत्यर्थः एते देवक्षेत्रं देवानां स्थानं स्वर्गशब्दवाच्यमेवाभ्यारोहन्ति अपि च य उद्गातादि एतान् यजमानान् देवक्षेत्रं स्वर्णिधनेनाभ्यारोहयेत् इति हेतौ अतः कारणात् स एव सत्रिणो यजमानान् सत्रमुपनयेत् फलप्रदानशब्दं सम्पूर्णप्रयोगं प्रापयेदित्याहुः

ब्रह्मवादिनः किञ्चन वै खलु देवचेते देवानां स्थाने आसीनः पुरुषः आर्त्तिमार्च्छति कदाचिदपि तस्यार्त्तिर्न भवतीत्यर्थः एवं सति यत् स्वर्णिधनमन्वहमनुष्ठितं भवति तेन काञ्चनार्त्तिं काममपि हिंसां नैवार्च्छन्ति न प्राप्नुवन्ति ॥ ८ ॥

अस्मिन् स्वर्णिधने किञ्चिद्दोषमाशङ्क्य परिहरति।

**च्यवन्ते वा एतेऽस्मात् लोकादित्याहुर्ये स्वर्णिधनमुपयन्तीति यद्दचा स्वरूपं यन्त्यस्मिँल्लोके प्रतितिष्ठन्ति यदेकारोऽन्तरिक्षे यत्साम्नामुष्मिन् सर्वेषु लोकेषु प्रतितिष्ठन्ति स्वर्णिधनेन तुष्टुवानाः ॥९॥**

अन्वहं स्वर्णिधनमुपयन्तः सद्यएवैते स्वर्गं गच्छन्ति अतोऽस्माल्लोकात् च्यवन्त इत्याहुः ब्रह्मवादिनस्तस्यायं परिहारः यद्दचा स्तोतीयया स्वरूपं यन्ति स्वर्णिधनमुपगच्छन्ति ऋचि हि स्वर्णिधनं गीयते तेनास्मिन् लोके प्रतितिष्ठन्ति ऋगात्मको हि भूर्लोकः एषुवरिति यदेकारस्तत्र विद्यते तेनान्तरिक्षलोके प्रतितिष्ठन्ति यत् साम्ना स्वर्णिधनमुपयन्ति तेनामुष्मिन् स्वर्गे प्रतितिष्ठन्ति एवं च स्वर्णिधनेन तुष्टुवानाः स्तुवन्तः सत्रिणः सर्वेषु लोकेषु प्रतिष्ठिता भवन्ति ॥ ९ ॥

अथ सुज्ञानं विधत्ते।

**सुज्ञानं भवति ॥ १० ॥**

स्पष्टोऽर्थः ॥ १० ॥

सोम: पुनान इत्यस्यां उत्पन्नं साम शोभनत्रानहेतुत्वात् सुत्रानं एतदेव आख्यायिकामुखेन प्रदर्श्य सत्रिणामपि अनेन साम्ना शोभनत्रानप्राप्तिर्भवतीत्याह ।

**देवा वै स्वर्गं लोकं यन्तो त्रानादबिभयुस्त एतत् सुत्रानमपश्यꣳस्तेन त्रातमगच्छन्यत् सुत्रानमन्वहं भवति त्रातमेव गच्छन्ति ॥ ११ ॥**

देवा: पुरा स्वर्गं लोकं गच्छन्त: शङ्कमाना: अत्राना-दबिभयु: भीता आसन् तदेतत्सुत्रानं साम दृष्ट्वा प्रायुञ्जत प्रायुङ्क्त न तेन त्रातं संत्रानमगच्छन् प्राप्ता: तथा सति इदानीमपि सत्रे अन्वहं सुत्रानं क्रियत इति यत् तेन त्रातं त्रानमेव गच्छन्ति सर्वे यजमाना: ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चमाध्यायस्य सप्तम: खण्ड: ।

---

अथ अष्टम: खण्ड: ।

अथ श्यावाश्वमन्धीगवञ्चैते द्वे सामनी अन्वहं भवेतामिति विधित्सुराह ।

**ये वै वाचमन्नमाद्यन्त्यन्नादाभवन्ति ये वितर्पयन्ति रूक्षाभवन्ति ॥ १ ॥**

ये खलु पुरुषाः वाचमन्नमादयन्ति वागन्नमन्नितां प्रयुञ्जत इत्यर्थः ते अन्नादा अन्नस्यात्तारो भवन्ति ये वाचन्वितर्दयन्ति निरभिलाषां कुर्व्वन्ति अन्नादं न कुर्व्वन्तीत्यर्थः ते रूचा अन्नराहित्येन पुरुषा अस्निग्धा भवन्ति ॥ १ ॥

किञ्च यद्वाचोऽन्नन्तद्दर्शयति।

गौरीवितं श्यावाश्वन्निहव एतानि वै सामानि वाचोऽन्नमेतेषां वागन्नं यदेतानि न च्यवन्ते वाचमेव तदन्नमादयन्ति तेन सर्व्वेऽन्नादा भवन्ति ॥ २ ॥

पूर्व्वं विहितस्यापि गौरीवितस्य पुनः सम्पादनं एतत्स्तुत्यर्थं इतरे एवाप्राप्तत्वात् विधित्सिते एतानि सामानि त्रीणि वाचो ऋगात्मिकाया अन्नं वागच्चराभिव्यक्तिद्वारा अन्नवदुपकारकं तथा एषाञ्च साम्नां ऋगात्मिका वागन्नं साधारणत्वेन तावदुपकारकं एवम्परस्परोपकारकत्वात् साम्नां वाचश्चान्नत्वं एवं सति एतानि सामानि अन्वहं न च्यवन्ते न गच्छन्ति प्रत्यहं प्रयुज्यन्त एवेति यत् तत्तेन वाचमेवादयन्ति साम्नां प्रयोक्तारः तेन सर्व्वे सत्रिणोऽन्नादा भवन्ति ॥ २ ॥

अथैतानि प्रकारान्तरेण प्रशंसति।

अभिक्रान्तापक्रान्तानि भवन्त्यभिक्रान्तापक्रान्तं वै वाचो रूपं ॥ ३ ॥

अभिक्रान्तमारोहः अपक्रान्तमवरोहः तदुभयमेतेषु सामसु भवति किमतो भवतीति उच्यते लोके भद्रां वाचं पुरुषा अभिक्रामन्ति तद्विपर्य्ययां वाचं पुरुषाः अपक्रामन्ति अतो अभिक्रान्तापक्रान्ता एव अभिक्रान्तापक्रान्तान्येवैतानि सामानि वाचो रूपमनुरूपं भवति ॥ ३ ॥

अथ माध्यन्दिने पवमाने बृहतीष्वन्वहं प्लवः कार्य्य इति विधत्ते ।

**प्लवोऽन्वहं भवति ॥ ४ ॥**

पुनानः सोमधारयेत्यस्यां योनावुत्पन्नं साम प्लवः तत् प्रतिदिवसं कर्त्तव्यमित्यर्थः ॥ ४ ॥

तदेतत् लौकिकप्लवसाम्येन स्तौति ।

**समुद्रं वा एते प्रस्नान्ति ये संवत्सरमुपयन्ति यो वा अप्लवः समुद्रं प्रस्नाति न स तत उदेति यत् प्लवो भवति स्वर्गस्य लोकस्य समष्ट्यै ॥ ५ ॥**

ये संवत्सरं संवत्सरसाध्यं गवामयनमुपयन्ति एते समुद्रमेव प्रस्नान्ति अवगाहन्ते समुद्रवदस्य सत्रस्यातिगाम्भीर्य्यात् यः खलु अप्लवः उडुपरहितः सन् समुद्रमवगाहते स ततः समुद्रान्नोदेति नोद्गच्छति निमग्न एव भवति यस्तु प्लवात् समुद्रं प्रस्नाति सतु ततः सकाशादुदेत्येव एवं सति समुद्रकल्पे

संवत्सरसत्रे अन्वहं स्तवो भवतीति यत् तेन स्तवेन संवत्सराख्यं सत्त्रन्तीर्त्वा स्वर्गलोकस्य सम्प्राप्त्यै यजमाना भवन्ति ॥ ५ ॥

अतत्यन्निधनमनूद्य प्रशंसति ।

अतिविश्वानि दुरिता तरेमेति यदेवैषां दुष्टुतं दुःशस्तं तदेतेन तरन्ति ॥ ६ ॥

अस्य साम्नो निधनं अतिविश्वानि दुरिता तरेमेति, अस्मिन्निधने विश्वानि दुरितानि अतितरेमेत्याशासनं दृश्यते एषां सत्रिणां यद्दुष्टुतं अयथाशास्त्रं स्तुतं यच्च दुःशस्तं अयथाशंसनं स्तवनं कृतं एतेनातितरणप्रार्थनेन तदुभयन्तरन्ति ॥ ६ ॥

अथाभिप्लवषडहस्य प्रथमेऽहनि अनुष्टुप्स्वोकोनिधनाख्यं साम कर्त्तव्यमिति विधत्ते ।

ओको निधनꣳ षडहमुखे भवति ॥ ७ ॥

तसु अभिप्रगायत आजामि रक्ते अव्यत इत्येतस्यां योनावुत्पन्नं साम ओकोनिधनं तत्र हि ओक इति निधनं दृश्यते तत् साम षडहस्य मुखे षडहस्य प्रमुखे प्रथमेऽहनि कार्य्यं ॥ ७ ॥

तदेतत् स्तौति ।

परां वा एते परावतं गच्छन्ति ये षडहस्यान्तं

गच्छन्ति यदोकोनिधनꣳ षडहमुखे भवति प्रज्ञात्यै ॥ ८ ॥

ये सत्रिणः षडहस्य अन्तं गच्छन्ति प्रथममहरारभ्य यावत् षष्ठमहस्तावत् पर्य्यन्तन्नैरन्तर्य्येणानुतिष्ठन्ति ते परास्परावतं अतिदूरं गच्छन्ति अतिदूरं हि गच्छतां मार्गज्ञानमपेक्षितं यत् षडहमुखें ओको निधनं भवति तत् यज्ञस्य प्रज्ञात्यै भवति ॥ ८ ॥

कथमोकोनिधनेन प्रज्ञातिर्भवति तत्राह।

यदा वै पुरुषः स्वमोक आगच्छति सर्वं तर्हि प्रजानाति सर्वमस्मै दिवा भवति ॥ ९ ॥

यदा वै खलु पुरुषः स्वं स्वकीयं ओको गृहं स्थानमागच्छति प्राप्नोति तर्हि तस्मिन् काले सर्व्वं प्रजानाति स्वगृहप्राप्तेः पूर्व्वं समाधिक्येन किञ्चिन्न ज्ञायते गृहप्राप्तौ सत्यां समपनोदे सति ज्ञानवान् भवतीत्यर्थः सर्वञ्च विद्यमानं वस्तु अस्मै गृहप्राप्ताय दिवा दिवे प्रकाशाय भवति प्रज्ञातं भवतीत्यर्थः अत ओको निधनेन तस्य प्रज्ञातिर्युक्तेत्यर्थः ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चमाध्यायस्य

अष्टमः खण्डः।

---

अथ नवमः खण्डः ।

उक्तं गवामयनं अथ तस्य दीक्षाकालमाह ।

**एकाष्टकायां दीक्षेरन् ॥ १ ॥**

माघकृष्णाष्टमी एकाष्टका उक्तं हि आपस्तम्बेन माघ्याः पौर्णमास्या उपरि यडष्टका तस्यामष्टमी ज्येष्ठा या सम्पद्यते तामेकाष्टकेत्याचक्षत इति ॥ १ ॥

अथ तस्यामेकाष्टकायां संवत्सरसत्राय दीक्षेरन् ।

**एषा वै संवत्सरस्य पत्नी यदेकाष्टकैतस्यां वा एतां रात्रिं वसति साक्षादेव तत् संवत्सरमारभ्य दीक्षन्ते ॥ २ ॥**

यत् या इयमेकाष्टका एषा खलु संवत्सरस्य प्रजापत्यात्मकस्य पत्नी स्त्री तथा सति एकस्यामेवैकाष्टकायां एतां रात्रिं अत्यन्तसंयोगे द्वितीया वसति संवत्सरात्मकः प्रजापतिः यतो लोके पत्न्या समीपे हि पतीरात्रौ वसति एवं चैकाष्टकायां दीक्षमाणाः साक्षात् प्रत्यक्षमेव संवत्सरं प्रजापत्यात्मकं आरभ्य गीत्वा दीक्षन्ते ॥ २ ॥

अस्मिन् पक्षे एको दोषः स्यादित्याह ।

**तस्य सानिर्य्या यदपोऽनभिनन्दन्तोऽभ्यवयन्ति ॥३॥**

तस्यैकाष्टकायां दीक्षितस्य सानिर्या दोषः अनभिनन्दन्तः प्रीतिहरिताः सन्तः अपोऽभ्यवयन्तीति यदेकाष्टकायां दीक्षमाणानां शिशिर अवभृथः स्यात् तदा आपः सूर्य्यरश्मिभिः प्रोषितत्वेन अल्पीयस्त्वात् तद्विषयाभिलाषरहिता एवावभृथं गच्छन्ति योयमभिनन्दनाभावः सोऽस्मिन् पक्षे दोष इत्यर्थः॥३॥

अपरोऽप्ययं दोषः स्यादित्याह।

**विच्छिन्नं वा एते संवत्सरस्याभिदीक्षन्ते य-एकाष्टकायां दीक्षन्तेऽन्तनामानावृतू भवते ॥ ४ ॥**

संवत्सरस्य विच्छिन्नं विच्छेदमभिमुखीकृत्यैते दीक्षन्ते यएकाष्टकायां दीक्षन्ते दीक्षिताः कुर्व्वन्ति कुत एतत् उच्यते मधुश्च माधवश्च वासन्तिकावृतू इत्यादाविव अत्रापि ऋतुशब्देन मासएवोच्यते यावेतौ माघफाल्गुनौ मासौ ऋतुशब्दवाच्यौ एतावन्तनामानौ शिशिरर्त्तुः संवत्सरान्त इति ॥ ४ ॥

तौ मासावन्तशब्दवाच्यौ तयोर्हि संवत्सरः समाप्यते तथा चैवास्मिन् संवत्सरे सत्रारम्भः अपरस्मिन् यजत इत्यत आह।

**आर्त्तं वा एते संवत्सरस्याभिदीक्षन्ते येऽन्तनामानावृतू अभिदीक्षन्ते ॥ ५ ॥**

ये अन्तनामानौ अन्तशब्दवाच्यौ ऋतू मासावभिलक्ष्य दीक्षन्ते एते संवत्सरस्यान्तं हि अन्तमेवाभिलक्ष्य दीक्षन्ते ॥५॥

एवं दोषग्रस्तत्वादयं पक्षो न कार्य्य इत्याह।

**तस्मादेकाष्टकायान्न दीक्ष्यं ॥ ६ ॥**

यस्मादेते पूर्वोक्ता दोषाः प्रसज्येरन् तस्मादेकाष्टकायान्न दीक्ष्यं दीक्षणं न कार्य्यं ॥ ६ ॥

एवं प्रथमपक्षं निन्दित्वा पक्षान्तरमाह।

**फाल्गुने दीक्षेरन् ॥ ७ ॥**

यस्मिन् मासे फल्गुनी पौर्णमासी युज्यते स फाल्गुनः तस्मिन् दीक्षा कार्य्या ॥ ७ ॥

तदेतद्गुणकथनेन प्रशंसति।

**मुखं वा एतत् संवत्सरस्य यत् फाल्गुनो मुखत एव तत् संवत्सरमारभ्य दीक्षन्ते ॥ ८ ॥**

यत् फाल्गुनो मास एतत् संवत्सरस्य मुखं यदुत्तरे फाल्गुनो मुखतएव तत् संवत्सरस्याग्निमाधायेति एतदुक्तं भवति यदा फलगुनी पौर्णमासी उत्तरफल्गुनीयुक्ता तदा फाल्गुनमासः संवत्सरस्यादिर्भवतीति तत्तथा सति मुखत एव प्रथमत एव संवत्सरमारभ्योपक्रम्य दीक्षन्ते ॥ ८ ॥

अस्मिन् पक्षसि दोषो विद्यत इत्याह।

**तस्य सानिर्य्या यत्सम्मेघे विषुवान् सम्पद्यते ॥९॥**

तस्य फाल्गुने दीक्षणस्य सानिर्यादोषः यत् संमेघे मेघ-संघयुक्ते सते [विषुवान् मध्यमहः सम्पद्यते] आदित्यस्तुतो हि विषुवान् तस्य मेघैरन्तर्द्धानं सम्भाव्यते इति यत् स दोषः स्यादित्यर्थः ॥ ९ ॥

तर्हि सर्व्वदोषविनिर्मुक्तो दीक्षायाः कालः क इत्याशङ्क्याह ।

**चित्रापूर्णमासे दीक्षेरन् ॥ १० ॥**

चित्रायुक्तः पौर्णमासः चित्रापूर्णमासः तस्मिन् दीक्षेरन् ॥ १० ॥

तदेतत् स्तौति ।

**चक्षुर्वा एतत् संवत्सरस्य यच्चित्रापूर्णमासो मुखतो वै चक्षुर्मुखत एव तत् संवत्सरमारभ्य दीक्षन्ते तस्य न निर्य्यास्ति ॥ ११ ॥**

चित्रापूर्णमास इति यत् एतत् संवत्सरस्य चक्षुर्वै जायमानस्य हि प्रथमं मुखञ्जायते तत्रापि चक्षुरेव प्रथममाविर्भवति अतस्तत्साहश्यादस्य चक्षुषः उक्तक्रमेण मुखतो मुखप्रदेशएव चक्षुः अतो मुखतएव तत् संवत्सरमारभ्य गृहीत्वा दीक्षन्ते यः फाल्गुनगुणउक्तः सोऽप्यत्र विद्यत इत्युक्तं भवति तस्य न निर्य्यास्ति कश्चिदपि दोषो न विद्यते ॥ ११ ॥

इत्थं चित्रापौर्णमास्यां दीक्षितव्यमित्युक्तं अथ तस्मिन्नेव मासे शुक्लैकादश्यां दीक्षितव्यमित्याह।

**चतुरहे पुरस्तात् पौर्णमास्या दीक्षेरन्॥ १२॥**

चैत्र्याः पौर्णमास्याः पुरस्ताच्चतुरहे चतुर्णामह्नां समाहारश्चतुरहस्तस्मिन्विद्यमाने गवामयनस्य दीक्षा कार्य्या॥ १२॥

एवं दीक्षणस्य गुणमाह

**तेषामेकाष्टकायां क्रयः सम्पद्यते तेनैकाष्टकान्न संवट् कुर्वन्ति॥ १३॥**

सर्व्वेषां सत्राणां द्वादश दीक्षा भवन्ति तत एकादशीप्रभृति द्वादशसु गतासु रात्रिषु त्रयोदशीरात्रिरष्टमी स्यात् एकाष्टका च बहुलाष्टमीति अस्यामेकाष्टकेत्युपचारः तस्याः क्रयः सम्पद्यते प्रथमे ह्युपसर्जने राजक्रयस्तस्मिन् दिने प्रातःकाले प्रायणीयाद्या यज्ञावयवाः प्रक्रम्यन्ते तेन प्रक्रमेण एकाष्टकां न संवट्कुर्व्वन्ति क्रियानुपयोगेन व्यर्थं न कुर्व्वन्ति अतएव एकाष्टकाप्रारम्भकृतो गुणस्त्वस्मिन् पक्षेऽन्तर्भवति इत्यर्थः॥१३॥

अन्येऽपि गुणा अस्मिन् पक्षे सन्तीत्याह।

**तेषां पूर्व्वपक्षे सुत्या सम्पद्यते पूर्व्वपक्षे मासाः सन्तिष्ठमाना यन्ति पूर्वपक्ष उत्तिष्ठन्ति तानुत्तिष्ठतः**

पशव ओषधयोऽनूत्तिष्ठन्ति तान्कल्याणी वागभिवदत्यरात्सुरिमे सत्रिण इति ते राध्नुवन्ति ॥१४॥

तेषामेकादश्यां दीक्षमाणानां सुत्या सोमयागः पूर्व्वपक्षे सम्पद्यते सत्राणां सर्वेषां द्वादशोपसदः तत्राष्टमीप्रभृति द्वादशसु गतासु त्रयोदशी शुक्लपक्षपञ्चमी तस्यां प्रथमोऽतिरात्र इति पूर्व्वपक्षे सुत्या प्रारभ्यत इत्यर्थः त्रिंशता त्रिंशताऽहोभिर्म्मासेषु सन्तिष्ठमानेषु पूर्व्वपक्षे एव सर्व्वमासाः सन्तिष्ठमाना यन्ति वर्त्तन्ते एवं द्वादशसु मासेषु गतेषु पूर्व्वपक्ष एव सत्रादुत्तिष्ठन्ति तानुत्तिष्ठतः सत्रादुत्थानं कुर्व्वतो यजमानाननु पश्चात् पशव ओषधयश्चोत्तिष्ठन्ति ऊर्द्ध्वं रोहन्ति तान्यजमानान् कल्याणी शोभना वाक् यशस्करी वाक् वदति किमिति इमे सत्रिणो यजमानाः अरात्सुः समृद्धा अभवन्निति तदनन्तरन्ते सत्रिणो राध्नुवन्ति समृद्धा भवन्ति॥ १४ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चमाध्यायस्य

नवमः खण्डः।

---

अथ दशमः खण्डः।

उक्तो गवामयनस्य दीक्षाकालः अथ तस्मिन्नेव गवामयने विकल्पेन मासि मास्येकमहरुत्सृजेयुरिति विधास्यन्नाह।

आ वा एते संवत्सरं प्यायन्ति य उत्सृजन्ति ॥१॥

ये अहान्युत्सृजन्ति एते संवत्सरमाप्याययन्ति छिद्रवान् हि देहो रसादिभिरायन्तो भवति एवमेव संवत्सरमध्ये एवमनुष्ठितः संवत्सरेपि तदन्तर्भवति ततः केषाञ्चिदह्ना-मुत्सर्गस्य संवत्सरछिद्रवत्त्वेनाप्यायितो भवति ॥ १ ॥

अनुत्सर्गे वाधमाह ।

यथा वै दृतिराध्मात एवꣳ संवत्सरोऽनुत्सृष्टोय-न्नोत्सृजेयुरमेहेन प्रमायुकाः स्युः ॥ २ ॥

यथा चर्म्ममयी दृतिराध्मातः छिद्रराहित्येन वायुना पूरितः एवमह्नामुत्सर्ज्जनाभावे संवत्सरोऽप्याध्मातो भवति एवं स्थिते यद्यहानि नोत्सृजेयुः अमेहेन आध्मानकृतेन उदावर्त्ताख्येन रोगेण प्रमायुकाः मरणशीलाः स्युर्भवेयुः सत्रिणः अतोऽह्नामुत्सर्गः कर्त्तव्य इत्यर्थः ॥ २ ॥

तथा प्रकारान्तरेणैतत् प्रशंसति ।

प्राणो वै संवत्सर उदाना मासा यदुत्सृजन्ति प्राण एवोदानान्दधति यो दीक्षितः प्रमीयते यां संवत्सरस्यानुत्सृष्टस्य भुक्त्वा तमृच्छति ॥ ३ ॥

देहधारकः प्राणएव संवत्सर उदानाः ऊर्द्ध्वगमनादि-

प्रवृत्तिहेतवः तस्य वृत्तयः उदाना मासः एवं स्थिते मासे अहानि यदुत्सृजन्ति तेन उदानान् स्तिमितान् प्राणाएव दधति धारयन्ति अनुत्सर्गे तु ऊर्द्ध्वगमनेन स्तिमितत्वभावात्प्राणसकाशादुदाना निर्गताःस्युः अपिच अहोभिरनुत्सृष्टस्य संवत्सरस्य या शुक् शोकः सा तमच्छति प्राप्नोति यो दीक्षितः सत्रमध्ये प्रमीयते म्रियते तस्मादह्नामुत्सर्ज्जनं कार्य्यमित्युक्तं भवति ॥ ३ ॥

अथ किं कृत्स्नमहरुत्सृज्यं उत किञ्चिदनुत्सृज्यमिति जिज्ञासायां ब्रह्मवादिनां विचारं दर्शयति।

तदाहुरुत्सृज्या ३न्नोत्सृज्या ३ मिति ॥ ४ ॥

तत्तत्र गवामयनविषये ब्रह्मवादिन आहुः किमिति किं कृत्स्नमहरुत्सृज्यं उताहु: किञ्चिदेवोत्सृज्यं अहस्तु नोत्सृज्यमिति श्रुत्यन्तरे तु पक्षद्वयदर्शनाद्ब्रह्मवादिनां विचारः विचार्य्यमाणानामिति श्रुतिः ॥ ४ ॥

तत्र न सर्व्वमुत्सृज्यं अपि तु किञ्चिदेवोत्सृज्यमिति पक्षमवलम्ब्याह।

यद्युत्सृजेयुरुक्थ्यान्युत्सृजेयुस्तदेवोत्सृष्टं तदनुत्सृष्टं ॥ ५ ॥

यद्यहान्युत्सृजेयुः यदीति वचनादयमुत्सर्गपक्षो वैकल्पिक-

इति गम्यते तस्मिन् पक्षे उक्थसंस्थेष्वहःसु उक्थान्यग्निष्टोमसाम्नः पराणि स्तोत्राणि शस्त्राणि चोत्सृजेरन् तदेवाह उत्सृष्टमग्निष्टोमसाम्नः परस्य प्रयोगस्य परित्यागात् उत्सृष्टं भवति तत्पर्य्यन्तस्यानुष्ठानात् अनुत्सृष्टञ्च भवति ॥ ५ ॥

अथास्मिन् पक्षे प्रकारान्तरेणोत्सर्ज्जनानुत्सर्ज्जने दर्शयति।

**अथो खल्वाहुरेकत्रिकं कार्य्यन्तदेव साक्षादुत्सृष्टमभ्युत्सुन्वन्ति ॥ ६ ॥**

अथो खल्विति पक्षान्तरपरिग्रहे अहरुत्सर्गपक्षे एकत्रिकमेव स्तोमं कार्य्यं उत्सृष्टव्येऽहनि विषुवान् स्तोत्रेष्वेकैव स्तोत्रीयेष्वार्भवेषु च तिस्र इत्यर्थः तत्तत साक्षादेव स्तीयस्य स्तोमस्योत्सर्गः विषमेषु स्तोत्रेषु एकैव स्तोत्रीया स्यात् समेषु च तस्रः इत्यर्थः कुतइत्युत्सृष्टं स्तोममभित्यज्यमभ्युत् सुन्वन्ति सवनादुपरि सुन्वन्ति अभिषवं कुर्व्वन्तीत्यर्थः एवं स्तोममात्रस्योत्सर्ज्जनादन्येषां स्तुतशस्त्राणां अनुत्सर्ज्जनाच्च तदहरुत्सृष्टमनुत्सृष्टञ्च भवति ॥ ६ ॥

अथ पक्षान्तरविधित्सयेमं पक्षं दूषयति।

**छिद्रो वा एतेषाꣳ संवत्सर इत्याहुर्य्ये स्तोममुत्सृजन्तीति ॥७॥**

ये उक्तं प्रकारान्तरेण स्तोमसुत्सृजन्ति एतेषां संवत्सरः संवत्सरसाध्योयागः छिद्रो वै छिन्नावयव एव भवतीति ब्रह्मवादिनः आहुः अतः अहरेवोत्सृज्यमिति अयमेव पचः आदरणीयः॥ ७॥

अस्मिन् पक्षे छिद्रपिधानाय कर्त्तव्यं सम्पूर्णप्रयोगमाह।

**पशुमालभन्ते स्तोममेव तदालभन्ते स्तोमोहि पशुः॥ ८॥**

यदहरुत्सृष्टुं कामयन्ते तस्माह्नः सवनीयं पशुमेवालभन्ते तत्तेन स्तोममेवालभन्ते स्तोमग्रहणं शस्त्रादीनामन्येषामप्युपलक्षणार्थं स्तोमो हि पशुः पशुवत् देवताप्रीतिकरत्वात् अतः पश्वनुष्ठानेनैव स्तोमादिकं सर्व्वमनुष्ठितं भवतीत्यर्थः॥ ८॥

अथ तस्मिन्नहनि प्रातःसवनयोगमाह।

**श्व उत्स्रष्टाः स्म इति वत्सानपाकुर्वन्ति प्रातः पशुमालभन्ते तस्य वपया प्रचरन्ति ततस्सवनीयेनाष्टाकपालेन तत आग्नेयेनाष्टाकपालेन ततोदध्नैन्द्रेण ततश्चरुणा वैश्वदेवेन तत्प्रातःसवनꣳ सन्तिष्ठते॥ ९॥**

श्वः परेद्युरह्नः उत्स्रष्टाः स्मः अहरुत्सर्ज्जनं करिष्याम इति बुध्वा पूर्व्वस्मिन्नेवाह्नि वत्सानपाकुर्व्वन्ति सायन्दोहार्थं मात-

भ्य: पृथक् कुर्य्यु: उत्सृष्टा: स्म इति सृजेयु: लुङुत्तमबहुवचने रूपमेतत् अनेन विहितस्य वत्सापाकरणस्य दोहार्थत्वात् सायं दुग्ध्वा तत्पयोदधि कुर्व्वन्ति इत्युक्तं भवति ततः प्रातःकाले उत्सृष्टव्यस्याङ्गोयः सवनीयः पशुस्तमालभन्ते आलम्भनस्य यागार्थत्वादालम्भनादीन् संस्कारान् कुर्युरित्यर्थः ततस्तस्य पशोर्व्वपया प्रचर्य्य ततः सवनीयेनाष्टाकपालेन अष्टसु कपालेषु संस्कृतेन पुरोडाशेन प्रचरन्ति ततो अन्येनाग्नेयेनाग्निदैवत्ये-नाष्टाकपालेन तत ऐन्द्रेण दध्ना ततो वैश्वदेवेन चरुणा प्रच-रेयुः तत्तेनानुष्ठानेन प्रातःसवनं सन्तिष्ठते समाप्यते ॥ ९ ॥

अथ माध्यन्दिनसवनस्य प्रयोगमाह ।

ततः पशुपुरोडाशेनैकादशकपालेन ततः सव-नीयेनैकादशकपालेन ततो मरुत्वतीयेनैकादश-कपालेन ततश्चरुणैन्द्रेण तन्माध्यन्दिनꣳ सवनं सन्तिष्ठते ॥ १० ॥

ततो माध्यन्दिनसमये पशुपुरोडाशेन यद्दैवत्यः पशुस्त-द्दैवत्येनैकादशसु कपालेषु संस्कृतेन पुरोडाशेन प्रथममिष्ट्वा ततः सवनीयेनैन्द्रेणैकादशकपालेन प्रचर्य्य ततो मरुत्वतीयेन मरुत्वत्गुणविशिष्टेनैन्द्रदैवत्येनैकादशकपालेन प्रचर्य्य ततः केवलेन्द्रदैवत्येन चरुणा प्रचरेयुः तत्तावतैव माध्यन्दिनं सवनं परिसमाप्यते ॥ १० ॥

अथ तृतीयसवनकृत्यमाह।

**पशुना प्रचरन्ति ततः सवनीयेन द्वादशकपालेन ततो वैश्वदेवेन द्वादशकपालेन ततश्चरुणाग्निमारुतेन तत्तृतीयसवनं सन्तिष्ठते॥ ११॥**

पशुना पश्ववयवैः हृदाद्यङ्गैः प्रथमं प्रचरन्ति ततः सवनीयेनैन्द्रेण पुरोडाशेन द्वादशकपालेन प्रचर्य्य ततो वैश्वदेवेन विश्वदेवदेवत्येन द्वादशकपालेन प्रचर्य्य ततोऽग्निमरुद्देवत्येन चरुणा प्रचरेयुः तत्तावतैव तृतीयसवनं परिसमाप्यते॥११॥

एवं सवनत्रये परिसमाप्ते यत् सायं काले कर्त्तव्यं तद्दर्शयति।

**पृषदाज्येन प्रचर्य्य पत्नीस्संयाजयन्ति॥ १२॥**

दधिमिश्रमाज्यं पृषदाज्यं तेनानुयाजान् इष्ट्वा ततः पत्नीः संयाजयन्ति पत्नीसंयाजान्तमहः समापनीय इत्यर्थः।

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥ १२॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायनाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे पञ्चमाध्यायस्य दशमः खण्डः।

पञ्चमाध्यायः समाप्तिमगमत्।

इति प्रथमा पञ्जिका।

# अथ षष्ठोऽध्यायः।

अथ प्रथमः खण्डः।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं॥
चतुर्थे पञ्चमे चैव गवामयनमीरितं।
सर्व्वप्रकृतिभूतोऽयमग्निष्टोमइहोच्यते॥

तस्येतमग्निष्टोमं विवक्षुराह।

**प्रजापतिरकामयत बहु स्यां प्रजायेयेति स एत-मग्निष्टोममपश्यत्तमाहरत्तेनेमाः प्रजा असृजत ॥१॥**

प्रजापतिर्ब्रह्मा हिरण्यगर्भः अकामयत कामितवान् कि-मिति उच्यते बहु स्यां इदानीमेकएव सन् नानारूपो भवेयं तदर्थं प्रजायेयेति स्वरूपानुपमर्द्देनैव प्रकर्षेण नानारूपेणोत्प-द्येयमिति, स एवं कामयमानः एतमग्निष्टोमं प्रजननसाधन-रूपमपश्यत् दृष्टवान् यज्ञायज्ञीयइत्यस्यामाग्नेय्यामुत्पन्नेना-ग्निष्टोमसाम्ना समाप्तेरस्याग्निष्टोम इति नाम सम्पन्नं तम-ग्निष्टोममाहरत् अन्वतिष्ठत तेनाहृतेन इमा दृश्यमानाः प्रजाः असृजत सृष्टवान् अत्र यस्मात् प्रजापतिराहरत् तस्माद-

न्यैरयमग्निष्टोमोऽनुष्ठातव्य इति विधिरून्नेयः यत् स्तूयते तद्वि-धीयत इति न्यायात् ॥ १ ॥

कथं प्रजाः सृष्टवानिति तत्राह ।

**एकादशेन च वै सता स्तोत्रेणाग्निष्टोमस्यासृजतैकादशेन च मासा संवत्सरस्य ता द्वादशेन च स्तोत्रेणाग्निष्टोमस्य पर्य्यगृह्णात् द्वादशेन च मासा संवत्सरस्य ॥ २ ॥**

सन्त्यग्निष्टोमे द्वादश स्तोत्राणि द्वादशाग्निष्टोमस्य स्तोत्राणीति श्रुतेः तत्रैकादशेन वै स्तोत्रेणाग्निष्टोमस्य सम्बन्धिना तथा संवत्सरस्य गवामयनसत्रस्य सम्बन्धिना एकादशेन च मासा मासेनोभाभ्यां सिसृक्षुः प्रजापतिः ताः प्रजा असृजत पूर्वं गवामयनप्रस्तावे गवामयनेन सर्वमसृजतेति वर्णितत्वात् तदवयवभूतेन एकादशेन मासेन सह इदानीं सृष्ट्यभिधानं एकादशस्य स्तोत्रस्य स्तुत्यर्थ एवमुत्तरत्रापि द्रष्टव्यं ताः सृष्टाः प्रजाः अग्निष्टोमस्य द्वादशेन स्तोत्रेण सम्वत्सरस्य गवामयनस्य द्वादशेन मासेन पर्य्यगृह्णात् आत्मसात् कृतवान् लोके एकादशद्वादशयोर्मासयोरनतिक्रमेण प्रसवः प्रजायते ॥२॥

उक्तलक्षणानुष्ठानेन तदेव लभ्यत इति प्रशंसति ।

**तस्मात्प्रजा दशमासो गर्भं भृत्वैकादशमनु प्रजायन्ते तस्मात् द्वादशन्नात्यतिहरन्ति द्वादशेन हि परि-**

**गृह्णीतास्त्वय एवं वेद परिजाताः प्रजा गृह्णाति प्र जाता जनयति ॥ ३ ॥**

यस्मात् प्रजापतिरेकादशेन प्रजा असृजत तस्माल्लोके प्रजास्त्रियः दशमासो दशमासान् गर्भं भृत्वा धारयित्वा एकादशमनु एकादशे मासि प्रजायन्ते प्रजनयन्ति यस्मात् द्वादशेन प्रजापतिः पर्य्यगृह्णात् तस्माद् द्वादशमासं अभिलक्षीकृत्य नातिहरन्ति गर्भन्न धारयन्ति अनतिक्रमणे कारणमाह हि यस्मात् द्वादशेन स्तोत्रेण परिगृहीताः प्रजाः गृह्णाति परिग्रहं करोति न कदाचित्तं परित्यजतीत्यर्थः किञ्च जाता अनुकृत्य ताः प्रजाः प्रजनयति उत्पादयति ॥३॥

अथ प्रजापतेः सृष्टिप्रसङ्गे किञ्चिदर्थमाह।

**तासां परिगृहीतानामश्वतर्य्यत्यक्रामत्तस्या अनुहाय रेत आदत्त तद्वडवायान्यमाड्यस्माद्वडवाद्विरेतास्तस्मादश्वतर्य्य प्रजा आत्तरेता हि ॥ ४ ॥**

तासां प्रजापतिना परिगृहीतानां प्रजानाम्मध्ये अश्वतर्य्यंत् पक्रासत् अतिक्रम्यागच्छत तामनुहायानुगम्य तस्यारेतः प्रजोत्पादनसाधनं वीर्य्यं आदत्त स्वीकृतवान् आदाय वडवायां न्यमाट् निमार्ज्जनं स्थापनमकरोत् यस्मादेवन्तस्माद्वडवाद्विरेता स्वकीयरेतसा सह द्विरेता अभूत् अस्मदश्वतरञ्च रेतोद्वयसामर्थ्यात् प्रसूतइत्यर्थः रेतस आहृतत्वात् अश्वतर्य्यप्रजा अनपत्याभूत् अश्वतर्य्याः कदाचिदश्वतरोऽन्योऽश्वोवा न जायत

इत्यर्थः सा आत्तरेता हि परित्यक्तप्रजननसमर्था खलु अय-मर्थः सर्वोऽपि तैत्तिरीयके स्पष्टमाम्नायते, अग्निष्टोमेन वै प्रजा असृजत ता अग्निष्टोमेनैव पर्य्यगृह्णात् तासां परिगृही-तानामश्वतर्यत्यक्रामत्तस्या अनुहाय रेत आदत्तेत्यादिना ॥४॥

अथास्या दक्षिणाऽनर्हतां विषयविशेषे तदर्हताञ्चाह ।

**तस्मादर्दाक्षणीयाति हि सा यज्ञमरिच्यतातिरिक्तस्य दक्षिणा स्यात्सलोमत्वाय षोडशिनः स्तोत्रे देयातिरिक्तो वै षोडश्यतिरिक्त एवातिरिक्तां ददाति ॥ ५ ॥**

तस्मादु तस्मादेव हेतोरश्वतरी अदक्षिणीया दक्षिणायामनर्हा तस्मादित्युक्तं विवृणोति हि यस्मात् सा यज्ञं यष्टव्यं प्रजापतिः अत्यरिच्यत अतिक्रम्यागच्छत यज्ञो वै प्रजापतिरितिश्रुतेः अत एषा यज्ञे यदतिरिक्तं तस्य दक्षिणा स्यात् अतिरिक्ताया दक्षिणाकल्पनं सलोमत्वाय आनुलोम्याय सादृश्याय] भवति कोसावतिरिक्तः प्रदेशः यस्मिन् सा दीयते तमाह षोड-शिनो यज्ञस्य स्तोत्रे सा देया दातव्यैषा तस्मिन् यागे पञ्च-दशभिः स्तोत्रैः क्लृप्तेभ्य उक्थादिभ्य एकं षोडशिस्तोत्रमतिरिक्तं भवति तदेवाह यत् षोडशं अस्तोत्रमतिरिक्तं तत्राश्वतरीन्दद्यजमान अतिरिक्तवति षोडशिनि अतिरिक्तामिमां ददाति प्रयच्छति ॥ ५ ॥

इत्थं प्रासङ्गिकं परिसमाप्य प्रकृतमनुसरति प्रजापतिः, प्रजा-सृष्टिसाधनत्वेनाग्निष्टोममपश्यत् तेन प्रजा असृजतेति योऽग्नि-ष्टोम उक्तस्तस्य त्रिवृदादिभिः स्तोमैर्गायत्र्यादिभिश्छन्दोभि-रग्न्यादिभिर्दैवैरन्यैर्ब्राह्मणादिभिः साध्यत्वात्तेषां सृष्टिं क्रमेण विवक्षुरादौ त्रिवृद्गायत्र्यादिसम्पाद्यां सृष्टिमाह।

**सोऽकामयत यज्ञं सृजेयेति समुखत एव त्रिवृतमसृजत तं गायत्रीछन्दोऽन्वसृज्यताग्निर्द्देवता ब्राह्मणो मनुष्यो वसन्त ऋतुस्तस्मात्त्रिवृत् स्तोमानां मुखं गायत्री छन्दसामग्निर्देवतानां ब्राह्मणो मनु-ष्याणां वसन्त ऋतूनां तस्माद्ब्राह्मणो मुखेन वीर्य्यं-ङ्करोति मुखतो हि सृष्टः॥ ६॥**

सः प्रजापतिरकामयत किमिति सर्व्वसाधकं यज्ञं सृजेयेति स एतमग्निष्टोममपश्यत् तमाहरदित्युक्तस्यैवेदं विवरणं सः प्रजापतिः मुखत आत्मनो मुखादेव त्रिवृतं त्रिवारमावृत्ति-त्रयसाध्यमेतन्नामकं स्तोमममसृजत तं त्रिवृतमनु पश्चाद्गायत्री-छन्दः गायत्रं नाम छन्दोऽसृज्यत तदनु अग्निर्दैवताऽन्वसृज्यत तमनु मनुष्यो ब्राह्मणोऽन्वसृज्यत तथा तमनु वसन्ताख्यश्च ऋतु-रसृज्यत यस्माद्येते मुखतएव सृष्टाः तस्मादेते त्रिवृदादयः स्वस्वजातीयानां मध्ये मुख्या अभवन् त्रिवृदादीनां मुख्यानां

मध्ये ब्राह्मणस्य मुख्यत्वप्रयुक्तं वीर्य्यं लोकसिद्धं दर्शयति तस्मान्मुखसृष्टत्वेन मुख्यत्वात् ब्राह्मणो मुखेनेदानीमपि वीर्य्यं स्वाध्यायप्रवचनादिजन्यं सामर्थ्यङ्करोति तस्मादित्युक्तं विवृणोति हि तस्माद्ब्राह्मणो मुखतः सृष्टस्तस्मादित्यर्थः ॥६॥

उक्तार्थविदुषः फलमाह ।

## करोति मुखेन वीर्य्यं य एवं वेद ॥ ७ ॥

एवमुक्तमर्थं यो वेद सोऽपि मुखेन वीर्य्यं करोति मुखसाध्येन स्वाध्यायप्रवचनादिनैवाभीष्टं साधयति इत्यर्थः ॥ ७ ॥

अथ पञ्चदशस्तोमत्रिष्टुभादीनां सृष्टिमाह ।

## स उरस्त एव बाहुभ्यां पञ्चदशमसृजत तं त्रिष्टुप् छन्दोऽन्वसृज्यतेन्द्रो देवता राजन्यो मनुष्यो ग्रीष्म ऋतुस्तस्माद्राजन्यस्य पञ्चदश स्तोमस्त्रिष्टुप् छन्द इन्द्रोदेवता ग्रीष्म ऋतुस्तस्माद बाहुवीर्य्यो बाहुभ्याᳪ हि सृष्टः ॥ ८ ॥

सः प्रजापतिरुरस्त एव तस्यैव च व्याख्यानं बाहुभ्यामिति पञ्चदशस्तोमं तृचगतानां तिसृणामृचां त्रिष्वपि पर्य्यायेषु पञ्चवारावृत्तिसाध्यं पञ्चदशस्तोममसृजत एवमुत्तरत्र सप्तदशादीनामावृत्तिप्रयुक्तसंख्यावत्त्वमिति द्रष्टव्यं तमनु त्रिष्टुप्-

छन्द इत्यादिः ग्रीष्मऋतुरित्यन्तः पूर्ववद्योज्यः तस्माद्यस्मात् पञ्चदशादीनां राजन्येन सहोत्पत्तिः तस्माद्राजन्यस्य पञ्चदशादयो भवन्ति तेषां पञ्चदशादीनां राजन्यसम्बन्धः श्रुतिषु प्रसिद्धः वसन्ते हि ब्राह्मणमुपनयीत ग्रीष्मे राजन्यः अग्नीनादधीत ग्रीष्मे राजन्य इत्यादिना राजन्यसम्बन्धः एवं प्रथमेऽपि पर्याये ब्राह्मणस्य त्रिवृद्गायत्र्यादीनां विशेषसम्बन्धोऽवगतः तस्मादु बाहुवीर्य्य इत्यादि स्पष्टं ॥ ८ ॥

अथ विदुषः फलमाह ।

करोति बाहुभ्यां वीर्य्यं य एवं वेद ॥ ९ ॥

ऋज्वर्थः ॥ ९ ॥

अथ सप्तदशादिसृष्टिमाह ।

स मध्यत एव प्रजननात्सप्तदशमसृजत तञ्जगतीछन्दोऽन्वसृज्यत विश्वे देवा देवता वैश्यो मनुष्यो वर्षा ऋतुस्तस्माद्वैश्योऽद्यमानो न क्षीयते प्रजननाद्धि सृष्टस्तस्मादु बहुपशुर्वैश्वदेवो हि जागतो वर्षा ह्यस्यर्त्तुस्तस्माद्ब्राह्मणस्य च राजन्यस्य चाद्यो ऽधरो हि सृष्टः ॥ १० ॥

सः प्रजापतिः मध्यतो मध्यदेशादेव तस्यैव व्याख्यानं प्रजन-

नात् सप्तदशं स्तोममसृजत तमनु जगतीछन्दोऽन्वसृज्यत तदनु क्रमेण विश्वे देवा देवता वैश्यो मनुष्यो वर्षा ऋतुश्चान्वसृज्यत तस्मात्प्रजोत्पादकप्रजननादुत्पन्नत्वात् वैश्यजातीयोऽद्यमानो भक्ष्यमाणो राजादिभिर्धनैरपह्रियमाणोऽपि न क्षीयते किन्तु पशुपालनादिना समृद्धो भवत्येव तत्र हेतुः प्रजननाद्धि सृष्ट इति तस्माद्द तस्मादेव कारणात् स वैश्यो बहुपशुर्भवति तत्रोपपत्तिरुच्यते वैश्वदेवो हि जागतो विश्वैर्देवैः सह सृष्टत्वात् असावपि वैश्वदेवस्तस्मादित्यर्थः वैश्वदेवत्वमस्य बहुपशुत्वे हेतुः जागतः जगत्या सहोत्पन्नत्वात् असौ जगतीसम्बन्धो भवति वर्षा ह्यस्य र्तुरित्ययमपि बहुपशुत्वे हेतुः एतत् स्तोमसम्बन्धस्योपलक्षणं अनेन वैश्यस्य सप्तदशस्तोमजगतीछन्दःप्रभृतीनां च विशेषसम्बन्ध उक्तो भवति तस्मादयं पूर्वसृष्टस्य ब्राह्मणस्य च राजन्यस्य चाद्योऽदनीय उपजीवनीयो भवति तस्मादिति हेतुं विवृणोति हि यस्मादधरः पश्चाद्भावी निकृष्टः सृष्टस्तस्मादित्यन्वयः ॥ १० ॥

अथैकविंशस्तोमादिसृष्टिमाह।

**स पत्त एव प्रतिष्ठाया एकविंशमसृजत तमनुष्टुप् छन्दोऽन्वसृज्यत न काचन देवता शूद्रो मनुष्यस्तस्माच्छूद्र उत बहुपशुरयज्ञियो विदेवो हि न हि तं काचन देवताऽन्वसृज्यत तस्मात् पादावनेज्य-**

न्नाति वर्द्धते पत्तो हि सृष्टस्तस्मादेकविंशस्तोमानां प्रतिष्ठा प्रतिष्ठाया हि सृष्टस्तस्मादनुष्टुभं छन्दांसि नानु व्यूहन्ति ॥ ११ ॥

सः प्रजापतिः पत्त एव प्रतिष्ठायेति परस्परं सामानाधिकरण्यं पादयोः प्रतिष्ठाहेतुत्वं स्पष्टं प्रतिष्ठारूपाभ्यां पादाभ्यां एकविंशं स्तोममसृजत तमनु अनुष्टुप् छन्दोऽन्वसृज्यत तदनु इतरेष्विव चात्र काचन देवता न सृष्टा किन्तु शूद्रो मनुष्योऽन्वसृज्यत तस्मात्पूर्वं देवसृष्ट्यभावात् शूद्र उत बहुपशुः पशुबहुत्वोपेतोऽपि अयज्ञियो यज्ञानर्होऽभूत् तस्माच्छूद्रो यज्ञेऽनवक्लृप्त इति हि श्रुत्यन्तरं तस्मादित्युक्तं कस्मादित्याह विदेवो देवरहितः खल्वयमेतदपि कुत इत्यत आह तं शूद्रमनु न हि काचन देवतासृज्यत यस्मात् विदेवः तस्माच्छूद्रः पादावनेज्यं त्रैवर्णिकानां पादप्रक्षालनरूपं कर्मातिक्रम्य न वर्द्धते, एतदितरशुश्रूषोपलक्षणं द्विजातिशुश्रूषातिरिक्तं किञ्चिदपि धर्म्मन्नानुतिष्ठेदित्यर्थः तथा च स्मर्य्यते शूद्रस्य द्विजशुश्रूषा परमो धर्म्म उच्यते । अन्यथा कुरुते किञ्चिद्भवेत्तत्तस्य निष्फलमिति तत्रोपपत्तिरुच्यते हि यस्मादयं पत्तः सृष्टः किञ्च तस्मात्प्रजापतिः प्रतिष्ठारूपपादतः सृष्टत्वादयमेकविंशस्तोम इतरस्तोमानामध्ये प्रतिष्ठा भवति एकविंशस्तोमकेन यज्ञायज्ञीयेनाग्निष्टोमस्य समाप्तेरस्य प्रतिष्ठात्वं हि यस्मादेकविंशः प्रतिष्ठाया सृष्ट अत इत्यर्थः, तस्मात्पादतो निकृष्टप्रदेशादुत्पन्न-

त्वात् अनुष्टुप् छन्दस्यनु तृतीयार्थमित्यर्थः अनोः कर्म्मप्रवचनीयत्वात् छन्दांसीति द्वितीया अनुसवनप्रयुक्तैर्गायत्र्यादिछन्दोभिः सह न व्यूहन्ति पृष्ठ्यादिषु छन्दसां व्यूहे क्रियमाणे स्वस्थानएवानुष्टुभं प्रयुञ्जते न तस्य स्थानेऽन्यद्गायत्र्यादिकं छन्दः तेषां वा स्थानेऽनुष्टुभं प्रयुञ्जत इत्यर्थः ॥ ११ ॥

किमर्थमेवमिति तत्राह।

पापवसीयसोविधृत्यै ॥ १२ ॥

पापं अधरस्थानादुत्पन्नं अनुष्टुप्छन्दः वसीयः पुण्यं मुखाद्युत्तमस्थानोत्पन्नं गायत्र्यादिकं तदुभयस्य विधृत्यै विधरणाय असाङ्कर्य्यायेत्यर्थः ॥ १२ ॥

अथ वेदितुः फलमाह।

विधृतिः पापवसीयसो भवति य एवं वेद ॥१३॥

यदुक्तमर्थज्ञानातिसयाय पुण्यद्वयस्य विधृतिः विवेचनको भवति तस्मिन्नुभे समानाश्रयणे स्त इत्यर्थः ॥ १२ ॥

इति ताण्ड्यमहाब्राह्मणे षष्ठाध्यायस्य

प्रथमः खण्डः।

---

अथ द्वितीयः खण्डः ।

तद्देवमग्निष्टोमोक्थस्य ज्योतिष्टोमस्य प्राधान्येन त्रिवृदा-दिस्तोमचतुष्टयस्य च सृष्टिरुक्ता इदानीं तेष्वेव हि तत् ज्ञात-व्यमित्याह ।

**यो वै स्तोमानुपदेशनवतो वेदोपदेशनवान् भवति ॥ १ ॥**

वै शब्दो वाक्यालङ्कारे यः पुमान् स्तोमान् त्रिवृदा-दीन् उपदेशनवतो वक्ष्यमाणोपदेशेन युक्तान् वेद जानाति सोऽप्युपदेशनवान् भवति वक्ष्यमाणेन प्राणादिदेवतावान् भवति ॥ १ ॥

के ते उपदेशा इति तानाह ।

**प्राणो वै त्रिवृदर्द्धमासः पञ्चदशः संवत्सरः सप्त-दश आदित्य एकविंश एते वै स्तोमा उपदेशनवन्त उपदेशनवान् भवति य एवं वेद ॥ २ ॥**

यस्तु त्रिवृत्स्तोमोऽस्ति प्राणो वै त्रिवृदिति व्याख्या नवत्वं सम्पद्यन्ते मुख्यः प्राणोऽपि शीर्षण्यैः सप्तप्राणैः अर्वाग्वृत्तिभ्यां प्राणद्वयाभ्यां सह नव प्राणात्मकः अतो नवभेदसाम्यात् त्रिवृ-

त्राण इति स्तूयते यथा पञ्चदशस्तोमोऽप्यर्द्धमासात्मकः पञ्चदशभिरहोभिर्युक्तत्वात् तत् संख्यासाम्येन स्तुतिः । योऽयं सप्तदश स्तोमः सः संवत्सरः द्वादशमासाः पञ्चर्त्तवोहेमन्तशिशिरयोः समासेन तावान् संवत्सर इति श्रुतेः सप्तदशसंख्यासाम्यादसौ सप्तदश इत्युच्यते योऽयमेकविंशस्तोमः स आदित्य एव द्वादशमासाः पञ्चर्त्तवस्त्रय इमे लोका असावादित्यइत्येकविंश इति श्रुतेरादित्यस्यैकविंशत्वात् तत्संख्यासाम्येनास्यादित्यत्वं एते स्तोमा उक्तास्त्रिवृदादय उपदेशनवन्तः त्रिवृदादीनां प्राणाद्यात्मादिकथनमेवोपदेशनं तद्वन्तः सिष्टं गतं ॥२॥

अथोक्तस्तोमचतुष्टयस्य प्रसङ्गेन त्रिणवस्त्रयस्त्रिंशयोरप्युपदेशनवत्त्वमाह ।

**इमे वै लोकास्त्रिणवस्त्रिणवस्य वै ब्राह्मणेनेमे लोकास्त्रिम्पुनर्नवा भवन्ति ॥ ३ ॥**

त्रिणवस्वरूपस्य त्रिवृत् त्रयात्मकत्वविधानेन इमे भूरादयो लोकाः त्रिः पुनर्नवा भवन्ति त्रित्वसंख्योपेताः सन्तः पुनर्नवसंख्याका भवन्ति त्रयो वा इमे त्रिवृतो लोका इति श्रुतेः एकैकस्य त्रिवृत्त्वान्मिलित्वा नवसंख्याकत्वं लोकत्रयस्याश्रयस्य स्तोमस्य त्रैलोक्यात्मकत्वमेवोपदेशनवत्त्वं ॥ ३ ॥

अथोक्तार्थविदुषः फलमाह ।

**एषु लोकेषु प्रतितिष्ठति य एवं वेद ॥ ४ ॥**

स्पष्टोऽर्थः। यदा त्रिणवस्य वा इत्यादिकमेवं वेदेत्यन्तं वेदितुः फलं त्रिणवस्य वै ब्राह्मणेनेमे वै लोकास्त्रिणव इति ध्यानध्यानेन इमे लोकास्त्रिष्वपुनर्नवेषु प्रतिष्ठितो भवति ॥ ४ ॥

अथ त्रयस्त्रिंशस्योपदेशनवत्त्वमुच्यते।

देवता वाव त्रयस्त्रिꣳशोऽष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च त्रयस्त्रिꣳशौ ॥ ५ ॥

अयं त्रयस्त्रिंशस्तोमः देवता वाव देवता एव उक्ते स्तोमे देवतासु च एकत्वापादकं संख्यासाम्यमुपपादयति अष्टौ वसव इत्यादिना। ५ ॥

अथ विदुषः फलमाह।

स देवेन यज्ञेन यजते य एवं वेद ॥ ६ ॥

यः पुमानेवं जानाति स देवेन सन्निहितदेवकेन यज्ञेन यजते उक्तदेवतात्मकत्वमेवास्य स्तोमस्योपदेशनवत्त्वं ॥ ६ ॥

अथ प्रकारान्तरेण त्रयस्त्रिंशं स्तोतुमाह।

यो वा अधिपतिं वेदाधिपतिर्भवति त्रयस्त्रिꣳशो वै स्तोमानामधिपतिः पुरुषः पशूनां ॥ ७ ॥

त्रयस्त्रिंशो वै त्रयस्त्रिंशः खलु स्तोमानामधिपतिः उक्तस्तोमेभ्योऽधिकसंख्योपेतत्वात् पुरुषस्यापि अधिपतित्वोपन्यासः स्तोमदृष्टान्तत्वेन तस्यैव स्तुत्यर्थः ॥ ७ ॥

अथ पुरुषस्याधिपतित्वमेवोपपादयति।

तस्मात्न्यञ्चोऽन्ये पशवोऽदन्त्यूर्द्ध्वः पुरुषोऽधिपतिर्हि सः ॥ ८ ॥

अस्मात्पुरुषस्याधिपतित्वात् अन्ये पुरुषव्यतिरिक्ता गवाश्वादयः पशवो न्यञ्चोऽवाङ्मुखाः सन्तः अदन्ति भक्षयन्ति तृणानि पुरुष ऊर्द्ध्वमुखः सन् भुङ्क्ते ऊर्द्ध्वत्वे हेतुं विवृणोति सः पुरुषः अधिपतिः खलु ॥ ८ ॥

अथ विदुषः फलमाह।

अधिपतिः समानानां भवति य एवं वेद ॥ ९ ॥

स्पष्टोऽर्थः ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे षष्ठाध्यायस्य

द्वितीयः खण्डः।

---

अथ तृतीयः खण्डः।

अथ संख्याक्रमेणाग्निष्टोमं प्रथमं विवक्षुस्तं बहुफलसाधनत्वेन प्रशंसति।

एष वाव यज्ञो यदग्निष्टोमः ॥ १ ॥

एष वाव एष एव मुख्यो यज्ञः यदग्निष्टोमः अग्निष्टोमइति सर्व्वफलसाधनत्वेन मुख्यत्वादेष एव यज्ञः इतरे त्वेकैकफल-साधनत्वाज्जघन्या इत्यर्थः ॥ १ ॥

अथ तदेवाह ।

एकस्मा अन्यो यज्ञः कामायाह्रियते सर्व्वेभ्योऽग्नि-ष्टोमः ॥ २ ॥

अन्य उक्थादिकः एकस्मै कामाय एकं फलमुद्दिश्याह्रि-यते अनुष्ठीयते तथा उक्थेन पशुकामो यजेत षोड़शिना वीर्य्यकामो यजेत वाजपेयेनाधिपत्यकामो यजेतेति अग्निष्टो-मस्तु सर्व्वेभ्य आह्रियते अतोऽयमेव मुख्यो यज्ञः ॥ २ ॥

अथ सर्व्वकामसाधनोऽग्निष्टोम इत्युक्तं तत्र पशोरपि फल-साधनत्वेनायं समृद्ध इत्याह ।

द्वादश स्तोत्राण्यग्निष्टोमो द्वादशमासाः संवत्सरः संवत्सरं पशवोऽनु प्रजायन्ते तेन पशव्यः समृद्धः ॥३॥

द्वादशानां स्तोत्राणामाधारोऽग्निष्टोमः द्वादशमास-समुदायात्मकश्च संवत्सरः अतः संख्यासादृश्यादग्निष्टोम एव संवत्सरः अनु संवत्सरे हि पशवो गर्भन्धृत्वा प्रजायन्ते अतः

संवत्सरः पशव्यस्तेन संवत्सरेणास्याभेदादयमपि पशव्यः पशुभ्यो हितो भवति अत एव सम्बद्धः ॥ ३ ॥

अथास्य प्रकारान्तरेण पशव्यत्वमाह।

**द्वादश स्तोत्राणि द्वादश शस्त्राणि तच्चतुर्विंशतिश्चतुर्विंशतिरर्द्धमासाः संवत्सरः संवत्सरं पशवोऽनु प्रजायन्ते तेन पशव्यः सम्बद्धः ॥ ४ ॥**

अग्निष्टोमे यज्ञे द्वादश स्तोत्राणि द्वादश शस्त्राणि तदुभयं मिलित्वा चतुर्विंशतिसंख्या सम्पद्यते संवत्सरश्चतुर्विंशतिरर्द्धमासात्मकः तथा सत्ययं संख्यासाम्यात् संवत्सरात्मकः, शिष्टं पूर्व्ववत् ॥ ४ ॥

अथ ब्रह्मवर्चसफलसाधनत्वेन प्रशंसति।

**अग्नौ स्तोत्रमग्नौ शस्त्रं प्रतितिष्ठति तेन ब्रह्मवर्च्चस्यः ॥ ५ ॥**

अस्य स्तोत्रमन्तिमं यज्ञायज्ञीयमग्नौ प्रतितिष्ठति तत्राग्नेयं तथास्य शस्त्रं चान्तिममाग्निमारुतं अग्नावेव प्रतितिष्ठति समाप्नोति अग्निमारुतेऽपि अग्निः स्तूयते अतस्तदुभयोपेतोऽग्निष्टोमो ब्रह्मवर्च्चस्यो भवति ब्रह्मवर्च्चसस्य तेजोविशेषरूपत्वात् अग्नेरपि तेजोविशेषसद्भावात् अस्योक्तफलसाधनत्वं ॥ ५ ॥

अथास्याग्निष्टोमस्य ज्योतिष्टोमत्वव्यपदेशः किन्निबन्धन इति प्रश्नमाक्षिप्योत्तरमाह ।

किञ्ज्योतिष्टोमस्य ज्योतिष्टोमत्वमित्याहुर्विराजꣳ सꣳस्तुतः सम्पद्यते विराड्वै छन्दसां ज्योतिः ॥६॥

अस्य ज्योतिष्टोमस्य किञ्ज्योतिष्टोमत्वं किं कारणकत्वमित्याहुर्ब्रह्मवादिनः अयं यज्ञस्त्रिवृदादिभिः संस्तुतः सन् विराजं सम्पद्यते दशाक्षरा विराडिति श्रुतेः दशसंख्या सम्पद्यत इत्यर्थः तथा सति विराजत इति विराडिति व्युत्पत्त्या छन्दसां मध्ये विराट् ज्योतिः एवं च स्तोमानां मध्ये विराट् द्वारा सम्पत्तेरयं ज्योतिष्टोम इत्युच्यत इति विराजेन दशसंख्याधिक्यक्लृप्तिस्त्वियमवगन्तव्या प्रातःसवने बहिष्पवमानस्त्रिवृदतो नवस्तोत्रीया भवन्ति आज्यस्तोत्राणि चत्वारि तानि पञ्चदशानि षष्टिस्तोत्रीया भवन्ति तदुभयस्मिन्मिलित्वा एकोनसप्तति स्तोत्रीया भवन्ति माध्यन्दिने सवनेऽपि पञ्चदश माध्यन्दिनः पवमानः पृष्ठस्तोत्राणि चत्वारि अपि सप्तदश स्तोमानि मिलित्वा अशीतिस्तोत्रीया भवन्ति तृतीयसवनेपि सप्तदश आर्भवः पवमानः एकविंशस्तोममग्निष्टोमस्तोत्रं मिलित्वा अष्टत्रिंशस्तोत्रीया भवन्ति सवनत्रयं मिलित्वा नवत्यधिकं शतस्तोत्रीया भवन्ति अतश्च दशशोभागे सति अन्ते दशावशिष्यन्ते एवं दशसंख्योपेतविराट्त्वसम्पत्तेस्तत्सम्बन्धादस्य ज्योतिष्टोमत्वं ॥६॥

अथ विदुषः फलमाह।

**ज्योतिः समानानां भवति य एवं वेद ॥ ७ ॥**

ऋज्वर्थः ।७।

अथाग्निष्टोममेव प्रकारान्तरेण प्रशंसति।

**ज्येष्ठयज्ञो वा एष यदग्निष्टोमः ॥ ८ ॥**

अग्निष्टोम इति योऽस्ति एष ज्येष्ठयज्ञः खलु देवानां ज्येष्ठः प्रजापतिर्हिरण्यगर्भः समवर्त्तताग्र इत्यादिश्रुतेः तत्सम्बन्धादस्य ज्येष्ठत्वं प्रजापतिर्वा एष यज्ञो यदग्निष्टोम इति श्रुतेः ॥ ८ ॥

अथामुमेव यज्ञं प्रजापतेः श्रेष्ठत्वसम्पादनद्वारा पुनः प्रशंसति।

**प्रजापतिः प्रजा असृजत ता अस्मै श्रैष्ठ्याय नातिष्ठन्त स एतमग्निष्टोममपश्यत्तमाहरत्ततोऽस्मै प्रजाः श्रैष्ठ्यायातिष्ठन्त ॥ ९ ॥**

पूर्वं प्रजापतिना सृष्टाः प्रजाः अस्मै स्रष्ट्रे प्रजापतये श्रैष्ठ्याय श्रेष्ठभावाय नातिष्ठन्त अमुं श्रेष्ठमिति नाज्ञासिषुः इतरत् सुज्ञानं ॥ ९ ॥

अथ विदुषः फलमाह।

**तिष्ठन्तेऽस्मै समानाः श्रैष्ठ्याय य एवं वेद ॥ १० ॥**

स्पष्टोऽर्थः ॥ १० ॥

पूर्व्वस्मान्मुखत एव त्रिवृतमसृजत तं गायत्रीछन्दोऽन्वसृज्यते-त्यादिना छन्दश्चतुष्टयस्य सृष्टिरुक्ता तत्रादितस्त्रयाणामेव सवन-त्रयसम्बन्धो दृश्यते कथन्तुरीयस्य तत्सम्बन्धइति ब्रह्मवादिनः शङ्कामुपक्षिपति ।

**यत्त्रिवृत्याङ्गर्गायत्रं प्रातःसवनं त्रैष्टुभं माध्य-न्दिनꣳ सवनञ्जागतं तृतीयसवनं क्व तर्हि तुरीयं छन्दोऽनुष्टुबिति ॥ ११ ॥**

यद्यदि तु इदानीमिति वक्ष्यमाणप्रकारेणाङ्कर्ब्रह्मवा-दिनः तेषामुक्तिप्रकारमाह गायत्रं गायत्र्या सम्बद्धं प्रातःसवनं प्रातःसवने गायत्र्या सम्बन्धो दृश्यत इत्यर्थः एवमुत्तरयोरपि योज्यं तर्हि एवं सति तुरीयच्चतुर्थमनुष्टुप् छन्दः क्व कुतः सवने सम्बध्यत इत्येवं यद्याङ्करिति समन्वयः तदा वक्ष्यमाणमुत्तरं ब्रूयादिति शेषः ॥ ११ ॥

अनुष्टुप्सम्बन्धः किमर्थं पृच्छ्यत इति तत्राह ।

**छन्दसां वा अन्ववलुप्तिं यजमानोऽन्ववलुप्यते ॥१२॥**

छन्दसां गायत्र्यादीनां चतुर्णाम्मध्ये यस्यापि छन्दसोऽव-लुप्तिं नाशमनु यजमानोऽप्यनुक्रमेणानुलुप्यते नश्यति अत उक्तः प्रश्नो युक्त इत्यर्थः ॥ १२ ॥

अथ तस्योत्तरमाह।

अष्टाक्षरा गायत्री हिङ्कारो नवम एकादशाक्षरा त्रिष्टुब्द्वादशाक्षरा जगती छन्दोभिरेवानुष्टुभमाप्नोति यजमानस्यानवलोपाय॥ १३॥

गायत्र्याः पादस्य स्वतोऽष्टावक्षराणि हिङ्कारो बहिष्पवमानस्याद्योऽक्षरः तेन सह नव सम्पद्यन्ते माध्यन्दिनस्य पवमानस्यान्त्यायां त्रिष्टुभि एकादशाक्षराणि आर्भवपवमानस्यान्त्यायां जगत्यां द्वादशाक्षराणि सहिङ्कारछन्दस्त्रयगताक्षराणि मिलित्वा द्वात्रिंशतिः सम्पद्यते अनुष्टुबपि द्वात्रिंशदक्षरा तथा सति त्रिभिरेव छन्दोभिः सहिङ्कारैरनुष्टुभमाप्नोति स्तोताऽसावनुष्टुप् स्वावयवैस्त्रिभिः सहिङ्कारैः अष्टाक्षरादिरूपैश्छन्दस्त्रयं व्याप्य तद्द्वारा सवनत्रयमथाप्नोतीत्युक्तं भवति असावाप्तिर्यजमानस्यानवलोपायाविनाशाय भवति एवन्तुरीयस्य छन्दसः सवनत्रयसम्बन्धन्तूत्तरं ब्रूयुरित्यभिप्रायः॥ १३॥

उक्तार्थविज्ञानं सङ्कोचविस्तराभ्यां प्रशंसति।

योवा अनुष्टुभꣳ सर्व्वत्रापिꣳ सवनान्यन्वायत्तां वेद सर्व्वत्रास्यापि भवत्येषा वा अनुष्टुप् सर्व्वत्रापिः सवनान्यन्वायत्ता तद्य एवं वेद सर्वत्रास्यापि भवति॥ १४॥

योवा यः कश्चिदपि पुरुषः अनुष्टुभं सर्व्वतापिं सर्व्वत्र यज्ञे व्याप्तिः तां वेद जानाति कथन्तस्या व्याप्तिरिति तामाह सवनानि त्रीण्यपि अनुक्रमेणायत्तां गायत्र्याद्यक्षरद्वारेण संख्याप्राप्तां वेद अस्य वेदितुः सर्व्वत्र आपि व्यापनं अप्रतिहतसञ्चारो भवति का सा अनुष्टुप् एषा वै छन्दोऽक्षरसमाहारसिद्धा खल्वनुष्टुप् उक्तलक्षणोपेता तद्रूप एवमित्यादेरुपसंहारार्थत्वादपुनरुक्तिः ॥ १४ ॥

अथ पूर्व्वविहितं स्तोमचतुष्टयं यज्ञनिर्व्वाहकत्वेन प्रशंसति ।

**यद्वै राजानोऽध्वानं धावयन्ति येऽश्वानां वीर्य्यवत्तमास्तान्युञ्जते त्रिवृत्पञ्चदशः सप्तदश एकविंश एते वै स्तोमानां वीर्य्यवत्तमास्तानेव युङ्क्ते स्वर्गस्य लोकस्य समष्ट्यै ॥ १५ ॥**

यद्वै यदा वा खलु राजानः संग्रामकर्त्तारः अध्वानं आजिमार्गं धावयन्ति गमयन्ति रथान् तदा ते ये अश्वानाम्मध्ये वीर्य्यवत्तमा अतिशयेन वीर्य्योपेता अश्वाः सन्ति तान् युञ्जते योजयन्ति रथेषु अयं दृष्टान्तः, एवमुद्गाता स्तोमानाम्मध्ये त्रिवृदादयोऽतिशयेन वीर्य्यवत्तमाः अतस्तानेव युङ्क्ते स्वर्गप्राप्तिसाधने यज्ञे तत्तेषां योजनं स्वर्गस्य लोकस्य समष्ट्यै सम्यक् प्राप्तये सम्पद्यते ॥ १५ ॥

एवं प्रयस्य स्तोमचतुष्टयमग्निष्टोमस्य प्रतिष्ठासाधनं विधत्ते ।

**चतुष्टोमो भवति प्रतिष्ठा वै चतुष्टोमः प्रतिष्ठित्यै ॥ १६ ॥**

अग्निष्टोमश्चतुष्टोमो भवति विहितत्रिवृदादिस्तोमचतुष्टयं निर्वर्त्य कर्त्तव्यः स चतुष्टोमः प्रतिष्ठा वै प्रतिष्ठारूपः खलु यथा पादचतुष्टयोपेतोऽश्वादिः प्रतिष्ठितो भवति तद्वदयमपीति भावः, सा चतुष्टोमक्लृप्तिः प्रतिष्ठित्यै यजमानस्य स्थैर्य्याय भवति ॥ १६ ॥

इति ताण्ड्यमहाब्राह्मणे षष्ठाध्यायस्य

तृतीयः खण्डः ।

---

अथ चतुर्थः खण्डः ।

अथोद्गातुर्व्यापारात्मकं प्रथमं कर्म्म ज्ञापनार्थं औदुम्बर्य्युच्छ्रयणान्तद्विवक्षुस्तस्योत्पत्तिमाह ।

**प्रजापतिर्देवेभ्य ऊर्ज्जं व्यभजत्तत उदुम्बरः समभवत्प्राजापत्यो वा उदुम्बरः प्राजापत्य उद्गाता यदुद्गातौदुम्बरीं प्रथमेन कर्म्मणान्वारभते स्वयैव तद्देवतयात्मानमार्त्विज्याय वृणीते ॥ १ ॥**

देवानामूर्ग्विभागे उदुम्बरोत्पत्तिस्तैत्तिरीये श्रूयते देवाना-मूर्ज्जम्व्यभजत् ततः उदुम्बर उदतिष्ठदिति यस्मादेवं तस्मादु-दुम्बरः प्राजापत्यो वै प्रजापतिदेवताकः खलु उद्गाता प्राजा-पत्यामौदुम्बरीं प्रथमेन कर्म्मणा निमित्तेनान्वारभत इति यत् स्वयैव तद्देवतया प्रजापतिनात्मानमार्त्विज्याय वृणीते वृतवान् भवति । अथ वक्ष्यमाणमन्त्राणां विनियोगं सूत्रकार आह अग्रेणौदुम्बरीङ्गत्वोदङ्मुखस्तिष्ठन्नध्वर्य्युणा सहोच्छ्रयेत् दक्षिणो-त्तराभ्यां पाणिभ्यां द्युतानस्त्वेत्यायोरिति स्वभ्रेव दध्यादवधाव जपेन्नमः समुद्रायेति ॥ १ ॥

अथ समन्त्रकमौदुम्बर्य्युच्छ्रयणं विधत्ते ।

**तामुच्छ्रयति द्युतानस्त्वा मारुत उच्छ्रयतूद्दिवꣳ स्तभानान्तरिक्षं पृण दृꣳह पृथिवीं ॥ २ ॥**

तामुच्छ्रयति ऊर्द्ध्वं स्थापयति मानार्थन्द्युतानस्त्वा मारुत इत्या-दिमन्त्रेण, मन्त्रस्यायमर्थः, हे शाखे त्वा त्वान्द्युतानो द्योतमान एतन्नामको मरुतां पुत्रो मारुतो देव उच्छ्रयतु ऊर्द्ध्वं स्थापयतु तथा दिवं द्युलोकं उत्स्तभान उपरि स्थितमपतनाय स्तम्भन-ङ्कुरु तवोच्छ्रयणेन तथान्तरिक्षन्तव स्थौल्येन पृण पूरय तव मूलेन पृथिवीं दृꣳह दृढां कुरु ॥ २ ॥

अथाध्वर्य्युणा निधीयमानायाः शाखाया उद्गातुरन्वारम्भ-मन्त्रं विधत्ते ।

तामन्वारभत आयोष्ट्वा सदने सादयाम्यवतश्छा-
यायाᳪ समुद्रस्य हृदय इति ॥ ३ ॥

हे उदुम्बरि त्वां आयोः इयागतौ यजमानस्य स्वर्गप्रापकस्य सवनत्रयगामिनो वा देवान् प्रति गच्छतो वा यज्ञस्य सदने स्थाने सादयामि तथा अवतश्छायायां रक्षकस्य यज्ञस्य छायायां सादयामि तथा समुद्रस्यान्तरात्मनोऽन्तरिक्षस्य यद्वा समभिप्रयन्त्येनमृत्विगादयइति समुद्रः सदः तस्य हृदये मध्यदेशे सादयामि इतिशब्दोमन्त्रसमाप्तिद्योतनार्थः अनेन मन्त्रेण तां शाखामन्वारभते अनुक्रमेण स्पृशेत् ॥ ३ ॥

मन्त्रगतमायुःशब्दं व्याचष्टे।

यज्ञो वा आयुस्तस्य तत्सदनं क्रियते ॥ ४ ॥

य आयुः स यज्ञो वै अत्रायुःशब्देन यज्ञोऽभिधीयत इत्यर्थः अस्य व्युत्पत्तिर्मन्त्रव्याख्यानावसरे प्रदर्शिता तत्तेन मन्त्रेण आयुःशब्दप्रयोगेण तस्य यज्ञस्यैव सदनं क्रियते ॥ ४ ॥

अथावतश्छायायामिति मन्त्रभागं व्याचष्टे।

यज्ञो वा अवति तस्य सा च्छाया क्रियते ॥५॥

योऽयं यज्ञः स खलु अवति रक्षति यजमानं अतोऽवनात् यज्ञस्यैव च्छाया कृता भवति ॥ ५ ॥

समुद्रस्येति भागस्य सदोरूपतां दर्शयति।

**मध्यतो वा आत्मनो हृदयन्तस्मान्मध्ये सदस औदुम्बरी मीयते ॥ ६ ॥**

आत्मनो यजमानस्य हृदयम्मध्यतो वै मध्ये खलु तस्मात्तदानुरूप्याय सदसोमध्यदेशे औदुम्बरी मीयते प्रक्षिप्यते। मन्त्रे समुद्रशब्दाभिधेयस्य ब्राह्मणे सदःशब्देन व्यवहारात्तस्य सदृशएवार्थो विवक्षित इत्युक्तं भवति ॥ ६ ॥

अथौदुम्बर्य्यनुमन्त्रणे योऽयं मन्त्रः नमः समुद्राय नमः समुद्रस्य चक्षुसे मामा यूनर्व्वाहासीदूर्गस्यूर्ज्जोदा ऊर्ज्जम्मे देह्यूर्ज्जम्मे धेह्यन्नम्मे देह्यन्नम्मे धेहीत्यादि मन्त्रोस्ति तत्र नमः समुद्रायेति वाक्यद्वयं व्याचष्टे।

**नमः समुद्राय नमः समुद्रस्य चक्षुस इत्याह वाग्वै समुद्रो मनः समुद्रस्य चक्षुस्ताभ्यामेव तन्नमस्करोति ॥ ७ ॥**

वाचोनिरवधिकत्वात्समुद्र इत्युच्यते, वाग्रूपसमुद्रस्य मनसः पूर्व्वरूपत्वात् समुद्रचक्षुरित्यनेन मन उच्यते, मनः पूर्व्वरूपं वागुत्तररूपमिति हि श्रुतिः कौषीतकिनः, तत्तथा सत्यमुं भागं पठन्नुद्गाता वाचो मनसश्च नमस्कारं कृतवान् भवति ॥ ७ ॥

मामा यूनर्व्वैत्यमुं भागं व्याचष्टे।

सामा यूनर्व्वोद्दासीदित्याह साम वै यूनर्व्वा साम्न एव तन्नमस्करोत्यार्त्विज्यं करिष्यन् ॥ ८ ॥

यूनर्व्वा यूनर्द्धर्व्वः पुरुषं यूनर्त्ति प्राप्नोतीति यूनर्व्वा साम वै तत्तथा सत्येतत् पाठेन साम्नएव नमस्करोति ॥ ८ ॥

आर्त्विज्यं करिष्यन्नुद्गाता एतदेव विवृणोति ।

यावा एवं साम्ने नमस्कृत्य साम्नार्त्विज्यं करोति न साम्नो हीयते नैनꣳ सामापहृते ॥ ९ ॥

यः पुमान् एवं उक्तरीत्या साम्ने नमस्कृत्य साम्ना सामगाननिमित्तेनार्त्विज्यं करोति स साम्नः सकाशान्न हीयते न वियुक्तो भवति एनं उद्गातारं साम न अपहृते न परित्यजति सामाप्यनेन न दुष्टं भवति तच्चैवं परार्थं प्रयुक्तवानिति न हिनस्तीत्यर्थः ॥ ९ ॥

न केवलमस्य सामकृतबाधाभावः किन्तु अन्यदीयनिन्दापि न प्राप्नोतीत्याह ।

य एनमनुव्याहरति स आर्तिमार्च्छति ॥ १० ॥

योऽन्यः पुमानेनमुक्तप्रकारेणार्त्विज्यकारिणमनुव्याहरति अधिक्षिपति स एवार्त्तिमधिक्षेपप्रयुक्तामार्च्छति सर्व्वतः प्राप्नोति ॥ १० ॥

अथोर्गसीत्यादि मन्त्रभागमुपादाय तत्तात्पर्य्यमाह।

**ऊर्गस्यूर्जोदा ऊर्ज्जं मे देह्यूर्ज्जं मे धेह्यन्नं मे देह्यन्नं मे धेहि प्रजापतेर्वा एतदुदरं यत्सद ऊर्गुदुम्बरो यदौदुम्बरी मध्ये सदसोमीयते मध्यत एव तत्प्रजाभ्योऽन्नमूर्जन्दधाति॥ ११॥**

मन्त्रभागस्यायमर्थः हे उदुम्बरि त्वं ऊर्गसि अन्नमसि देवानामन्नविभागे उत्पन्नत्वादत ऊर्ज्जोदा अन्नस्य दात्री भवसि, ऊर्ज्जम्मे मह्यं देहि तथाच मे मयि ऊर्ज्जन्धेहि स्थापय मे इति सुपांसुलुगित्यादिना सप्तम्याः श्योभावे रूपसिद्धिः उक्त एवार्थः अन्नम्मे देहीति शब्दान्तरेणोच्यते, सदइति यतएतत् प्रजापतेः उदरं खलु उदुम्बर इति यत्तत् ऊर्ग अन्नमेवातएव मध्यदेश उदरएव प्रजननात् अन्नसिध्यर्थमन्नं ऊर्ज्जं दधाति स्थापितवान् भवतीत्यर्थः तथा सति यदौदुम्बरी सदसोमध्ये मीयते तत् मध्ये ऊर्गस्थापनमेव प्रजानां जीवनाय तेषामुदरे अन्नं स्थापितं भवतीत्यर्थः अन्नमित्यूर्जमित्यस्य व्याख्यानं॥ ११॥

एतदेव व्यतिरेके दोषप्रदर्शनेन दृढ़यति।

**तस्माद्यत्रैषा यातयाम्ना क्रियते तत् प्रजा अशनायवो भवन्ति॥ १२॥**

तस्मान्मन्त्रेण स्थापनादन्नं दधाति यस्मादेवं अतः यत्रैषा औदुम्बरी यातयामा मन्त्रराहित्येन गतरसा सती क्रियते तत्तत्र देशे प्रजा अशनायवः क्षुधिता भवन्ति यस्मादेवं तस्मान्मन्त्रेण स्थापनादन्नं दधातीति सम्बन्धः ॥ १२ ॥

मध्यतोऽन्नं दधातीत्युक्तं किं तन्मध्यमत्र विवक्षितं कथं वा तत्रान्ननिधाने प्रजानां तृप्तिर्भवतीति तत्राह ।

**साम देवानामन्नꣳ सामन्येव तद्देवेभ्योऽन्न ऊर्ज्जन्दधाति स एव तदूर्ज्जि श्रितः प्रजाभ्य ऊर्ज्जं विभजति ॥ १३ ॥**

तस्य सामोपजीवनं प्रायच्छदिति सामविधाने उक्तत्वादन्नवत् प्रीतिकरत्वाद्वा देवानामन्नं साम तत्तथा सति सामन्येव देवानामन्नभूते सामनि ऊर्ज्जमन्नन्दधाति किमर्थं देवेभ्यः देवांस्तर्पयितुं स इति श्रित इति च लिङ्गव्यत्ययः तत्तथा स एव तदेव देवानामन्नभूतं ऊर्ज्जि अन्ने श्रितं साम प्रजाभ्य एषामर्थाय ऊर्ज्जं विभजति प्रयच्छति ॥ १३ ॥

अथौदुम्बरिप्रसङ्गात् उद्गात्रादीनां स्वस्वप्रयोगादिव्यवस्थामाह ।

**उदङ्ङासीन उद्गायत्युदीचीन्तद्दिशमूर्ज्जा भाजयति प्रत्यङ्ङासीनः प्रस्तौति प्रतीचीन्तद्दिशमूर्ज्जा**

भाजयति दक्षिणासीनः प्रतिहरति दक्षिणान्तद्दिशमूर्ज्जा भाजयति प्राञ्चोऽन्य ऋत्विज आर्त्विज्यं कुर्व्वन्ति तस्मादेषा दिशां वीर्य्यवत्तमैताꣳ हि भूयिष्ठाः प्रीणन्ति ॥ १४ ॥

योदुम्बरी पूर्व्वं गानार्थन्निर्म्मिता तस्या उदङ्ङासीनः उदग्देशे स्थित्वा उद्गाता गानभागङ्गायति तत्तेन उदीचीन्दिशं ऊर्ज्जा अन्नेन भाजयति वद्धन्नाङ्करोति एवं प्रस्तोता प्रत्यङ्ङासीनः प्रस्तौति तत्तेन प्रतीचीन्तद्दिशमूर्ज्जा भाजयति एवं दक्षिनाभिमुखः प्रतिहर्त्ता दक्षिणान्तद्दिशमूर्ज्जा भाजयति अन्ये होतादिसप्तर्त्विजः प्राञ्चः प्राङ्मुखाः आर्त्विज्यं कुर्व्वन्ति तस्माद्बहुभिः स्वाभिमुखमनुष्ठितत्वादेषा प्राची दिक् दिशामन्यासाम्मध्ये वीर्य्यवत्तमा अतिशयेन वीर्य्यवती तस्मादित्यस्य विवरणमेतां हीत्यादि ॥ १४ ॥

अत्र ब्रह्मवादिनः प्रश्नमवतारयति ।

ब्रह्मवादिनो वदन्ति कस्मात्सत्यात्प्राञ्चोऽन्य ऋत्विज आर्त्विज्यं कुर्वन्तीति विपरिक्रम्योद्गातार इति दिशामभीष्ट्यै दिशामभिप्रीत्या इति ब्रूयात्तस्मात्सर्व्वासु दिक्ष्वन्नं विद्यते सर्वा ह्यभीष्टाः प्रीताः ॥१५॥

ब्रह्मवादिनो वदन्ति कस्मात्सत्यात् कुतो हेतोरिति तत्रो-

त्तरमाह दिशामभीष्ट्यै दिशामभिप्रीत्या इति ब्रूयादित्यस्मात् सर्व्वासु दिच्चन्नं विद्यते सर्व्वा ह्यभीष्टाः प्रीता इति सर्व्वासु दिचु पूर्व्वरीत्या आर्त्विज्यकरणान्दिशामभीष्ट्यै तिसृणामपि दिशामभितो यागाय पूजनायाभिप्राप्तये वा भवति तथा दिशां सर्व्वासामभिप्रीत्यै अभिप्रीणनाय भवति एकामपि दिशमनतिहाय सम्भावनायेत्यर्थः एवमुत्तरं ब्रूयात् यस्मादेवं तस्मात् सर्व्वासु दिचु अन्नं विद्यते लभ्यत इत्यर्थः उक्तार्थस्यैवोपपादनं सर्व्वा हीति यस्मात् सर्व्वा अपि दिशः अभीष्टाश्च प्रीताश्च तस्मात्सर्व्वासु दिचु अन्नं विद्यत इति युक्तं ॥ १५ ॥

इति ताण्ड्यमहाब्राह्मणे षष्ठाध्यायस्य

चतुर्थः खण्डः।

---

अथ पञ्चमः खण्डः।

अथ समन्तकं द्रोणकलशस्य प्रोहणं विवचुस्तस्योत्पत्तिमाह।

**प्रजापतिरकामयत बहु स्यां प्रजायेयेति सोऽशोचत्तस्य शोचत आदित्यो मूर्ध्नोऽसृज्यत सोऽस्य मूर्द्धानमुदहन् स द्रोणकलशोऽभवत्तस्मिन् देवाः शुक्रमगृह्णत तां वै स आयुषार्त्तिमत्यजीवत् ॥ १ ॥**

प्रजापतिरकामयतेत्युक्तार्थं तस्य शोचतः आदित्यो मूर्द्ध्नो-ऽसृज्यत सृष्टोऽभूत् सः सृष्ट आदित्यः तस्य प्रजापतेर्मूर्द्धानं मस्तकप्रदेशं स्वोत्पत्त्यर्थं उदहन् ऊर्द्ध्वं घातितवान् सभिन्नो-मूर्द्धा द्रोणकलशोऽभवत् तस्मिन् कलशे देवाः शुक्रं शुक्लं दीप्तं सोमरसं प्रत्यगृह्णत गृहीतवन्तः स प्रजापतिः आयुषा शिरो-भङ्गात् क्षीणेनायुष्येण या आर्त्तिरभूत् तामार्त्तिमत्यजीवत् अतिक्रम्य चिरकालं जीवितवान् स्वशिरोभागकपाले आप्याय-कस्य सोमरसस्य धारणेन आर्त्तिं पर्य्यहरदित्यर्थः॥ १॥

अथोक्तार्थवेदनं प्रशंसति।

आयुषार्त्तिमतिजीवति य एवं वेद॥ २॥

योऽन्यएवमुक्तमर्थं जानाति स आयुषा नैमित्तिकायुः-क्षयेण जनिता या आर्त्तिः तामतिजीवति अतिक्रम्य शतवर्षं जीवति॥ २॥

इदानीं समन्त्रकं द्रोणकलशप्रोहणं विधत्ते।

तं प्रोहेद्वानस्पत्योसि बार्हस्पत्योऽसि प्राजाप-त्योसि प्रजापतेर्मूर्द्धास्यत्यायुपात्रमसीदमहम्मां प्राञ्चं प्रोहामि तेजसे ब्रह्मवर्चसायेति॥ ३॥

तं प्रजापतिशिरस्त उत्पन्नं कलशं वानस्पत्य इत्यादिना मन्त्रेण प्राञ्चं प्रोहेत् प्रेरयेत् एतत्प्रोहणमध्वर्य्वादिभिस्त्रिभि-

रपि कर्त्तव्यं तथाच सूत्रं कृतमसीति द्रोणकलशमालभ्य वानस्पत्योऽसीति प्रोहेयुरिति अयं मन्त्रः पूर्वं व्याख्यातः ॥ ३ ॥

अथ मन्त्रस्य प्रथमभागस्य तात्पर्य्यं व्याचष्टे ।

यदाह वानस्पत्य इति सत्येनैवैनं तत्प्रोहति ॥४॥

मन्त्रे उद्गाता वानस्पत्य इति यदाह तत्तेन एनं द्रोणकलशं सत्येनैव प्रोहति वस्तुतो द्रोणकलशस्य वनस्पतिविकारत्वात् सत्य इति बृहस्पतिर्वै देवानामुद्गाता तमेव तद्युनक्तीति एतेन मन्त्रभागेनैव प्रोहणं कृतवान् भवति ॥ ४ ॥

अथ द्वितीयभागस्य तात्पर्य्यमाह ।

यदाह बार्हस्पत्य इति बृहस्पतिर्वै देवानामुद्गाता तमेव तद्युनक्ति ॥ ५ ॥

तं बृहस्पतिमेव युनक्ति प्रेरयति ॥ ५ ॥

अथ तृतीयचतुर्थभागयोस्तात्पर्य्यमाह ।

यदाह प्राजापत्य इति प्राजापत्यो ह्येष देवतया यद्द्रोणकलशो यदाह प्रजापतेर्मूर्द्धेति प्रजापतेर्ह्येष मूर्द्ध उदहन्यत ॥ ६ ॥

द्रोणकलशस्य प्रजापतेर्मूर्द्धरूपत्वमुक्तप्रकारेण स्पष्टन्तत्-सम्बन्धादेव स प्राजापत्य इत्युच्यते ॥ ६ ॥

अथ पञ्चमस्य तात्पर्य्यमाह ।

**यदाहात्यायुपात्रमित्यति ह्येतदन्यानि पात्राणि यत् द्रोणकलशो देवपात्रं द्रोणकलशः ॥ ७ ॥**

मन्त्रे अत्यायु पात्रमिति यदाहोद्गाता तद्युनक्ति इति शेषः, तत्कथं युनक्ति इति तत्राह द्रोणकलश इति यत् पात्रमसि एतत् पात्रं अन्यानि मनुष्याणां पात्राणि अति हि अतीत्य वर्त्तते खलु अथवा मनुष्यास्तेषां पात्राण्यतीत्य वर्त्तन्त इति व्युत्पत्त्या अत्यायुपात्रत्वात् तेनान्येषामतिक्रमणं युक्तमित्यतिक्रमणमेव दर्शयति अयं द्रोणकलशो देवपात्रं देवानां पानसाधनं पात्रं अतस्तेहि सोमस्तद्देवार्थं गृह्यते तस्माद्देव-पात्रत्वात् नरपात्रातिक्रमणेनात्यायुपात्रमिति मन्त्रभागोयुक्त-इत्यर्थः ॥ ७ ॥

इति विदुषः फलमाह ।

**देवपात्री भवति य एवं वेद ॥ ८ ॥**

य उक्तार्थज्ञः स देवपात्री देवपात्रं द्रोणकलशस्तद्वान् भवति सोमयागानुष्ठाता भवतीत्यर्थः ॥ ८ ॥

अथ प्रासङ्गिकं किञ्चिदाह ।

ब्राह्मणं पात्रे न मीमाꣳसेत यं ब्राह्मणमिव मन्येत प्र देवपात्रमाप्नोति न मनुष्यपात्राच्छिद्यते ॥ ९ ॥

ब्राह्मणं पात्रे पात्रभावे अयं पात्रं भवति न वेति न मीमांसेत विचारन्न कुर्यात् किं ब्राह्मणब्रुवमात्रेण न मीमांसितव्यं, नेत्याह यं पुरुषं ब्राह्मणमिव मन्येत इव शब्दएवकारार्थः जात्या ब्राह्मणमेव यदि निश्चिनुयात् तदा तद्विषयं वृत्तविद्यादिस्वभावासद्भावन्न मीमांसेतेत्यर्थः, तथाच स्मृतिः न पृच्छेद्गोत्रचरणे न स्वाध्यायं श्रुतं तथा । हृदये कल्पयेद्देवं सर्व्वदेवमयोद्विज इति एवं यस्मिन्विचारमकृत्वा पात्रमेवेति योनिश्चयं करोति तस्य तदेव पात्रमन्वेति विद्यातपोयुक्ते यत्फलं भवति तत्तस्मिन्नपि भवतीत्यर्थः, किञ्च सपुमान् मनुष्यपात्रान्न छिद्यते मनुष्याणां पात्रं भवतीत्यर्थः ॥ ९ ॥

उक्तं द्रोणकलशप्रोहणं हविर्द्धानादधः कर्त्तव्यं तत्राचगतवागवरोधनायेति वक्ष्यति अतो वागचरसम्बन्धं वक्तुमाख्यायिकामाह ।

वाग्वै देवेभ्योऽपक्रामत्साऽपः प्राविशत्तां देवाः पुनरयाचꣳस्ता अब्रुवन्यत्पुनर्दद्याम किन्नस्ततः स्यादिति यत्कामयध्व इत्यब्रुवꣳस्ता अब्रुवन्यदेवास्मासु मनुष्या अपूतं प्रवेशयꣳस्तेनासꣳसृष्टा असामेति ॥ १० ॥

पुरा देवेभ्यः सकाशात् स्वयमात्मानं प्रकाशयन्ती वाक् अपक्रामत् आत्मानमप्रकाश्यापगताभूत् वैशब्दः श्रुत्यन्तरप्रसिद्ध्यर्थः तथाच तैत्तिरीयकं वाग्वै देवेभ्योऽपक्रामत् यज्ञायातिष्ठमानेत्यादि । सापगता अपः प्राविशत् तां वाचं पुनर्यज्ञार्थमयाचन् प्रार्थयन् ताश्च पुनरब्रुवन् किमिति यत्पुनर्दद्याम यच्छाम नोऽस्माकं ततः किं फलं स्यादिति पृष्टास्ते देवाः तर्हि यत्फलं कामयध्व इत्यब्रुवन् ताश्च पृष्टाः पुनरब्रुवन् हे देवाः अपूतमपूतादिकं अस्मासु मनुष्याः तदुपलक्षिताः सर्वे प्राणिनः प्रवेशयान् प्रवेशयेयुः लोड्बहुवचनस्येदं रूपं तेनापूतेन असंसृष्टाः संसर्गरहिताः असाम भवेम ॥ १० ॥

उक्तार्थब्रह्मविदः फलमाह ।

शुद्धा अस्मा आपः पूता भवन्ति य एवं वेद ॥११॥

स्पष्टोऽर्थः ॥ ११ ॥

अथाप्राप्ताया वाचोवनस्पतीन् प्रवेशमाह ।

सा पुनर्हृत्यक्रामत् सा वनस्पतीन् प्राविशत्तान्देवाः पुनरयाचꣳस्तान्न पुनरददुस्तानशपन् स्वेन वः किष्कुणा वज्रेण वृश्चानिति तस्माद्वनस्पतीन् स्वेन किष्कुणा वज्रेण वृश्चन्ति देवशप्ता हि ॥ १२ ॥

पुनर्हृता अद्भिः पुनर्हृता सा अत्यक्रामत् अतिक्रम्य सा वन-

स्पतीन् वृक्षान् प्राविशत् प्रविष्टान्तां देवाः इत्यादि ऋशप-न्नित्यन्तः स्पष्टः। शापप्रकारमाह वोयुष्मान् स्वेन स्वसम्बन्धिना वानस्पत्येन किष्कुणा दण्डेन युक्तेन वज्रेण परश्वादिना वृश्चान् वृश्चेयुरिति यस्मादेवन्तस्मादिदानीमपि स्वेन किष्कुणा वज्रेण वृश्चन्ति हि यस्माद्वनस्पतयो देवैः शप्ताः अत इत्यभि-प्रायः ॥ १२ ॥

इदानीमच्चसम्बन्धं वक्तुं प्रविष्टाया वाचश्चतुर्द्धा विभाग-माह।

तां वनस्पतयश्चतुर्द्धा वाचं वि न्यदधुर्दुन्दुभौ वीणा-यामक्षे तूणवे तस्मादेषा वदिष्ठैषा वल्गुतमा वाग्या वनस्पतीनां देवानाꣳ ह्येषा वागासीत् ॥ १३ ॥

तान्तेषु प्रविष्टां वाचं वनस्पतयश्चतुर्द्धा चतुःप्रकारं वि न्यदधुः विभज्य निधनमकुर्व्वन् केष्विति उच्यते दुन्दुभौ भेर्यां वीणायां वेणुनिर्म्मिततन्तुसम्बद्धायां विपञ्च्यां अक्षे रथादि-चक्रयोर्मध्यवर्त्तिनि तिर्य्यग्दण्डे तूणवे धनुषि गुणे तस्मादुक्त-पदार्थप्रवेशादेषैव वाक् वदिष्ठा अतिशयेन वक्त्री अतएषैव वल्गुतमा चारुतमा वाक् या श्रोतमनोह्लादिनीत्यर्थः, एषे-त्युक्तं केत्याह या वनस्पतीनां वनस्पतिविकाराणां दुन्दुभ्या-दीनां सम्बन्धिनी उक्तस्यैव विवरणं देवानां हीति यस्मात् दुन्दु-भ्यादिषु प्रविष्टा वाक् वदिष्ठा वल्गुतमा च अतः खलु देवानां योग्यासीत् ॥ १३ ॥

इदानीमक्षस्यवागवरोधनाय तदधः कलशप्रोहणमक्षस्यो-परि दशापवित्रस्थापनञ्च विधत्ते ।

अधोऽधोऽक्षं द्रोणकलशं प्रोहन्ति तस्या वाचोऽव-रुध्या उपर्य्युपर्य्यक्षं पवित्रं प्रयच्छन्त्युभयत एव वाचं परिगृह्णन्ति ॥ १४ ॥

अक्षमधोऽधः अक्षस्याव्यवहितेऽधःप्रदेशे द्रोणकलशं प्रोह-न्त्युद्गातारः, तच्च प्रोहणं तस्या अक्षप्रविष्टाया वाचोऽवरुध्या अवरोधनाय भवति, तथा उपर्य्युपर्य्यक्षं अक्षस्याव्यवहिते उपरि भागे पवित्रं प्रयच्छन्ति, तथा सति उभयतएव वाचम-क्षस्थां परिगृह्णन्ति स्वायत्तां कुर्व्वन्ति ॥ १४ ॥

अथाक्षस्पर्शननिन्दापूर्व्वकं तस्यास्पर्शं विधत्ते ।

यस्य कामयेतासुर्य्यमस्य यज्ञं कुर्य्यां वाचं वृञ्जी-येति द्रोणकलशं प्रोहन्वाङ्गुष्ठ्यामक्षमुपस्पृशेदसुर्य्य-मस्य यज्ञङ्करोति वाचं वृङ्क्ते योऽस्य प्रियः स्यादनुप-स्पृशन्नक्षं प्रोहेत्प्राणा वै द्रोणकलशः प्राणानेवास्य कल्पयति ॥ १५ ॥

अस्य यजमानस्य यज्ञं असुर्य्यमसुरेभ्योहितं देवानाम-प्रीतिकरं कुर्य्याम् अस्य वाचञ्च वृञ्जीय जयेयं प्रतिहतवचनं

करोमीति यस्य यस्मै यजमानाय कामयेतोद्गाता तस्मै द्रोण-कलशं प्रोहन् वाङ्भ्यामचमुपस्पृशेत् तथा सति अस्य यज्ञम सुर्य्यं करोति अस्य वाचं हङ्क्ते वर्ज्जयति अथाऽचोपस्पर्शनं तत्र निसिद्धमित्यभिप्रायः अथोक्तवैलक्षण्येन यो यजमानोऽस्योद्गातुः प्रियः स्यात्तस्योक्तदोषद्वयाभावायाचमनुपस्पृशन् प्रोहेत् तथा सति योऽयं द्रोणकलशः सः प्राणो वै प्राणाख्योऽभूत् प्रजापतेः शिरस्त उत्पन्नत्वात् अतः अनुपस्पृशन् द्रोणकलशं प्रोहन्नुद्गाता अस्य यजमानस्य प्राणानेव कल्पयति यजमाने स्थापितवान् भवति अतोऽचस्पर्शनमकृत्वा प्रोहेदिति तात्पर्य्यं। नन्वचस्पर्शा-भावेन यजमाने वा स्थापनमुचितं तदकृत्वा कथं प्राणकल्पनं विरुद्धमिति, नैषदोषः, यजमाने प्राणेन वा प्रीयते यदा च प्राणस्य तदतोव्याप्रियते तथा च तैत्तिरीयकं यत्रैतदधीते वा भाषते वा वाचि तदा प्राणो भवति वाक् तदा प्राणं रेढ़ि अथ यत्र तूष्णीं वा भवति स्वपिति वा प्राणे तदा वाग्भवति प्राण-स्तदा वाचं रेढ़ीति नत्वितरेषामिवोद्गातॄणाम्मन्त्रेण वरणा-भावात् ॥१५॥

कथमेषामार्त्विज्यकरणमिति ब्रह्मवादिनः प्रश्नमुपक्षिपति।

**यन्नित्याङ्वर्वाचान्यानृत्विजो वृणते कस्मादु-द्गातारोऽवृता आर्त्विज्यं कुर्व्वन्तीति ॥ १६ ॥**

यन्नु यद्यन्यानित्याङ्वरेव साक्षेपं यदि ब्रूयुः वचनप्रकार

मेव प्रदर्शयति वाचा इन्द्रं होत्रात् मरुतः पोत्रादित्यादि-रूपया अन्यान् होत्रादीन् ऋत्विजो वृणते, अध्वर्य्यवो वा, कस्मादित्यादि स्पष्टं ॥ १६ ॥

तेषामेवमुत्तरं ब्रूयादित्याह।

**यत् द्रोणकलशमुपसीदन्ति तेनोद्गातारो वृताः ॥ १७ ।**

यस्मादेते द्रोणकलशमुपसीदन्ति प्रोहन्ति तेन ते वृता-एवमार्त्विज्यं कुर्व्वन्ति ॥ १७ ॥

कथं द्रोणकलशेनैषां वृत्तिरिति तत्राह।

**प्राजापत्या वा उद्गातारः प्राजापत्यो द्रोणकलशो द्रोणकलश एवैनानार्त्विज्याय वृणीते ॥ १८ ॥**

यज्ञात्मकप्रजापतिसम्बन्धाद्वा प्रजापतिः सामेति श्रुतेः तत्सम्बन्धाद्वा उद्गातारः प्राजापत्याः द्रोणकलशश्च तन्मूर्द्धत उत्-पत्तेः प्राजापत्यः तथा सत्युभयोः समानसम्बन्धात्तेन तेषां वरणमिति ॥ १८ ॥

अथ द्रोणकलशस्य प्राङ्मुखप्रोहणस्यायमाशयइत्याह।

**प्राञ्च उपसीदन्ति प्राञ्चो यज्ञस्याग्रे करवा-मेति ॥ १९ ॥**

इतः पूर्व्वमेतेषामुद्गातॄणाङ्गाने प्राङ्मुखत्वासम्भवात् द्रोणकलशप्रोहणे प्राङ्मुखा एवोपसीदन्ति कया बुद्ध्येति यज्ञस्याग्रे आदौ प्रथमं कर्म्म प्राञ्चः सन्तः करवामेति। १९ ॥

अथ कलशं प्राङ्मुखः प्रोहयेत्प्राच्या दिशोऽभिजयायेत्याह।

**अनभिजिता वा एषोद्गातॄणां दिग्यत्प्राची यत् द्रोणकलशं प्राञ्चं प्रोहन्ति दिशोऽभिजित्यै ॥ २० ॥**

प्राच्या अनभिजितत्त्वमौदुम्बरे गाने उद्गातॄणां प्राङ्मुखगानाभावाभिप्रायकं स्पष्टं न तु रथादिकमश्वादयो युक्ता वहन्ति ॥ २० ॥

कथमुद्गातॄणां यज्ञे योग इति प्रश्नमवतार्य्य द्रोणकलशोपसम्पत्तिरेव तेषां योग इत्याह।

**यन्न्वित्याहुरन्तराश्वः प्रासेवौ युज्यतेऽन्तरा शम्य अनड्वान्क उद्गातॄणां योग इति यद्द्रोणकलशमुपसीदन्ति स एषां योगस्तस्माद्युक्तैरेवोपसद्यन्न ह्ययुक्तो वहति ॥ २१ ॥**

प्रासेवौ रथयुगस्य सुषिरगतोभयपार्श्वरज्जू तयोर्मध्ये अश्वो युज्यते, शम्ये शकटयुगस्योभयपार्श्वकीलके तयोर्मध्येऽनड्वान्, तथा सति यज्ञाख्ये रथे कथमुद्गातॄणां योग इति प्रश्नः, यदेते

द्रोणकलशं हविर्द्धानाच्चाधः स्थितमुपसीदन्ति सर्वैषां योग इति, तस्योत्तरं तस्माद्युक्तैरेवानन्यचित्तैरेव उपसद्यं कलशोपसदनं कर्त्तव्यं तथा सति न ह्ययुक्तोऽवहत्यय मुद्गातृवर्गः ॥ ८१ ॥

इति ताण्ड्यमहाब्राह्मणे षष्ठाध्यायस्य

पञ्चमः खण्डः ।

---

अथ षष्ठः खण्डः ।

अथ ग्राव्णामुपरि द्रोणकलशाध्यूहनं विधत्ते ।

ग्राव्णः स॑ꣳसाद्य द्रोणकलशमध्यूहन्ति विड्वै ग्रावाणोऽन्नꣳ सोमो राष्ट्रं द्रोणकलशो यद्ग्रावसु द्रोणकलशमध्यूहन्ति विश्येव तद्राष्ट्रमध्यूहन्ति ॥ १ ॥

द्रोणकलशाध्यूहनकर्त्तृभिरुद्गातृभिः प्रथममभिषवसाधनान् ग्राव्णः संसाद्य पश्चात् द्रोणकलशाध्यूहनं कर्त्तव्यं तथा सति ये ग्रावाणः सन्ति ते विड्वै बहुत्वसंख्यायोगात् तेषां विड्व्यवहारः सोमस्यान्नत्वं प्रसिद्धं यो द्रोणकलशः स राष्ट्रं राष्ट्रमिति राजेति केचिद्राज्यमित्यपरे तथा सति यद्ग्रावसु सोमरसाधारं द्रोणकलशमध्यूहन्ति तत्तेन विश्येव राष्ट्रं अन्नस्येदमध्यूहन्ति स्थापितवन्तो भवन्ति ॥ १ ॥

अथ यजमानस्य पापं कामयमान उद्गाता एवं कुर्यादित्याह ।

यं द्विष्याद्विमुखान् ग्राव्णः कृत्वेदमहममुष्यायणममुष्याः पुत्रममुष्या विशोऽमुष्मादन्नाद्यान्निरूहामीति निरूहेद्विश एवैनमन्नाद्यान्निरूहति ॥ २ ॥

उद्गाता यं यजमानं द्विष्यात् द्वेष्टि तस्मै ग्राव्णः अभिषवोपलाभिमुखान् परस्परनिवृत्तमुखान् कृत्वा इदमिदानीमहममुं द्वेष्यं यजमानं अमुमित्यत्र तन्नामनिर्द्देशात् कथममुष्यायणं अमुष्य गोत्रोत्पन्नं अमुष्याः पुत्रं अमुष्या विशः सकाशादत्राप्यमुष्या इति पञ्चम्या विशो नाम निर्द्देशात् एवमहममुं द्वेष्यं यजमानं विशोऽन्नाद्याच्च निरूहामि नाशयामि इत्येव मन्त्रमुच्चार्य्य निरूहेत् एवं कुर्व्वन्नुद्गाता विशोऽन्नाद्याच्चैनं यजमानं निरूहति ॥ २ ॥

अथ यजमानस्य भद्रं कामयमान एवं कुर्य्यादित्याह ।

योऽस्य प्रियः स्यात्सम्मुखान् ग्राव्णः कृत्वेदमहममुष्यायणममुष्याः पुत्रममुष्या विश्यमुष्मिन्नन्नाद्येऽध्यूहामीत्यध्यूहेद्विश्ये वैनमन्नाद्येऽध्यूहति ॥ ३ ॥

पूर्व्ववाक्येनैव व्याख्यातप्रायमिदं ॥ ३ ॥

द्वेष्यस्य च प्रियस्य चोभयस्य प्रयोगमनादृत्यात्मनएव श्रेयःकामयमान आह ।

अथो तदुभयमनाहत्येदमहं मां तेजसि ब्रह्म-वर्चसेऽध्यूहामीत्यध्यूहेत्तेजस्येव ब्रह्मवर्चस आत्मान-मध्यूहति ॥ ४ ॥

अथो तदुभयं द्वेष्यस्य प्रियस्य चाप्रियभूतं श्रेयस्थानाहत्ये-त्यर्थः । मामित्यनात्मनो नाम निर्दिशेत् तेजः शरीरकान्तिः ब्रह्मवर्चसं श्रुताध्ययनजन्यतेजः इतरत् सुज्ञानं ॥ ४ ॥

अथ द्वेष्यविषयं प्रयोगान्तरमाह ।

यः कामयेत विशा राष्ट्रꣳ हन्यामिति व्यूह्य ग्राव्णोऽधो द्रोणकलशꣳ सादयित्वोपाꣳशुसवनमुप-रिष्टादभिनिदध्यादिदमहममुया विशाऽदोराष्ट्रꣳ हन्मीति विशैव तद्राष्ट्रꣳ हन्ति ॥ ५ ॥

यः उद्गाता कामयेतेति किमिति परिजनेनामुं राजानं हन्यां इति स ग्रावानो व्यूह्य पृथक् पृथक् स्थापयित्वा अधः भूमावेव द्रोणकलशं सादयित्वा उपांशुसवनं उपांशुग्रहार्थं सूयते येन तं ग्रावाणं द्रोणकलशस्य उपरिष्टादभिनिदध्यात् इदमिदानीमहममुया विशा अमूभिः परिजनैः अदोराष्ट्रममुं राजानं हन्मीति अमुयादः इत्युभयत्र परिजनानां राज्ञश्च नाम गृह्णीयात्, शिष्टोऽयं कल्पः अन्यस्मिन् अपि यजमाने तद्देशराज्ञोऽप्रियस्य पापचिकीर्षायां कार्य्यइति केचित्, यज-

मानस्यैव राज्ञ इत्यपरे, तदेवं पञ्च कल्पा उपन्यस्ताः, तत्र प्रथमो नित्यप्रयोगार्थः शिष्टास्तत्तत्प्रतिपादितकामनार्था इति मन्तव्यं ॥ ५ ॥

वसवस्त्वेत्यादिभिर्मन्त्रैर्द्रोणकलशसम्मार्ज्जनं वच्यति, तत्र-त्येषु गायत्र्यादिच्छन्दःसु किञ्चिद्वेदितव्यमित्याह ।

यो वै दैवानि पवित्राणि वेद पूतोयज्ञियो भवति छन्दांसि वै दैवानि पवित्राणि तैर्द्रोणकलशं पाव-यन्ति ॥ ६ ॥

यानि दैवानि देवसम्बन्धीनि पवित्राणि शोधकानि तानि छन्दांस्येव खलु तैस्तल्लिङ्गैर्मन्त्रैरित्यर्थः द्रोणकलशं सोमरस-धारणाय पावयन्ति पावनं कर्त्तव्यमित्यर्थः ॥ ६ ॥

अथ देवपवित्राख्यच्छन्दोभिर्युक्तपावनसाधनमन्त्रानाह ।

वसवस्त्वा गायत्रेण छन्दसा पुनन्तु रुद्रास्त्वा त्रैष्टुभेन छन्दसा पुनन्त्वादित्यास्त्वा जागतेन छन्दसा पुनन्त्वेतानि वै दैवानि पवित्राणि पूतो यज्ञियो भवति यएवं वेद ॥ ७ ॥

सिद्धा मन्त्रार्थाः, सम्मृजन्त्विति मन्त्राम्नाने सिद्धे पुनन्तु इदानीं वर्णनं संमृजन्त्वित्यस्य व्याख्यानार्थमिति मन्तव्यं,

अथवा मन्त्रपाठादेव तस्मिन् सिद्धे पुनर्ह्वयति वा प्रयोक्तव्यमिति वैकल्पिकत्वबोधनार्थं मन्त्रब्राह्मणयोरप्युभयोरपि प्रमाणत्वाविशेषात् यथेन्द्रं गीर्भिर्हवामह इत्येव स्वाध्याये सिद्धे इन्द्रं गीर्भिर्हवामह इत्यनुवर्णनं हवामह इति वा प्रयोक्तव्यमित्येवमर्थमिति तद्वदिहापीति मन्तव्यं एवं जातीयकेषु विकल्पो द्रष्टव्य इति निदाने निर्णीतत्वात् ॥ ७ ॥

अपूर्व्वमेव दशापवित्रस्य शुक्लत्वं विधातुमाख्यायिकामाह ।

स्वर्भानुर्वा आसुर आदित्यन्तमसाविध्यत्तं देवा न व्यजानꣳस्तेऽत्रिमुपाधावꣳस्तस्यात्रिर्भासेन तमोपाहन्यत् प्रथममपाहन् सा कृष्णाविरभवद्यद्द्वितीयꣳ सा रजता यत्तृतीयꣳ सा लोहिनी यया वर्णमभ्यतृणत् सा शुक्लासीत् ॥ ८ ॥

पूर्व्वं स्वर्भानुर्नामकोऽसुर आदित्यं तमसान्धकारेणाविध्यदाततवान् तं सर्व्वे देवा नाज्ञासिषुः ते देवा अत्रिं महर्षिमुपाधावन्नादित्यस्यावरणान्धकारमपजहीति तस्य तमोऽत्रिर्भासेनापाहन्नपजघान तत् यत्तमोभागं प्रथममपाहन् सा कृष्णा कृष्णवर्णाविरभवत् यद्द्वितीयꣳ सा रजतवर्णा आविरभवत् यत्तृतीयꣳ सा लोहिनी लोहिताविरभवत् यया अन्त्योपादेयलिङ्गेन स्त्रीलिङ्गता येन प्रयोगेणेत्यर्थः वर्णमत्र रोहितं अभ्यतृणत् प्रकाशं चकार अत्र तृदिः प्रकाशनकर्म्मा तस्मादुपपदिका यत्र

क्ता च खनति तदपाभिन्दन्तीत्यादिषु तथा दर्शनात् सा शुक्ला मेध्यासीत् ॥ ८ ॥

इदानीं तद्विधत्ते ।

तस्माच्छुक्लं पवित्रꣳ शुक्रः सोमः स शुक्रत्वाय ॥ ९ ॥

तस्मात्तिरोहितवर्णस्यैव शुक्लावीरूपेण परिणतत्वात् शुक्लं शुक्लावीरोममयं दशापवित्रं कर्त्तव्यं तथापि सोमोऽपि शुक्रः सोमः निर्म्मलः अतः स शुक्रत्वाय शुक्लसोमानुगुण्याय भवति ॥ ९ ॥

एवं पवित्रस्य शुक्रत्वं विधाय तदेवान्वयव्यतिरेकाभ्यां द्रढ़यति ।

यं द्विष्यात्तस्यैतेषां वर्णानामपि पवित्रं कुर्य्यात्पाप्मनैवैनं तमसा विध्यति कृष्णमिव हि तमोऽस्य प्रियः स्यादासक्तिशुक्लं कुर्य्याज्ज्योतिर्वै हिरण्यं ज्योतिरेवास्मिन्दधाति ॥ १० ॥

यं यजमानमुद्गाता द्विष्यात्तस्य प्रयोगः एतेषां शुक्लव्यतिरिक्तानामन्यतमवर्णमपि पवित्रं कुर्य्यात् तथा सति कृष्णादित्रयस्यापि पापरूपत्वात पाप्मनैवैनं यजमानं तमसा विध्यति

पापभूयिष्ठं करोतीत्यर्थः कृष्णमिव हि कृष्णं तमः शुक्लव्यति-रिक्तवर्णमिव हि पापमिव हि वर्त्तते विरोधित्वसाम्यात् यश्च यजमानोऽस्योद्गातुः प्रियः स्यात्तस्य प्रयोगे पवित्रमाशक्तिशुक्लं कृष्णवर्णान्तरस्य लेशतोऽपि संसर्गाभावेन शुक्लवर्णं कुर्य्यात् हिरण्यशब्देनात्र तत्रत्यं तेजो लक्ष्यते पवित्रगतं यत्तेजः तत् ज्योतिर्वै साक्षात् ज्योतिरेव तथा सति ज्योतिरेवास्मिन् यज-माने दधाति ॥ १० ॥

अथ पवित्रस्य शुक्लवर्णत्वप्रसङ्गेन किञ्चित् पूर्वनिदानं विधत्ते।

## तस्मादात्रेयं चन्द्रेणेच्छन्त्यत्रिर्हि तस्य ज्योतिः ॥ ११ ॥

तस्मात्कारणादात्रेयं अत्रिगोत्रोत्पन्नं ब्राह्मणं चन्द्रेण हिरण्येनेच्छन्ति संयोजयितुं अनेन विधिरुन्नेयः हिरण्यमात्रे-याय ददातीत्यन्यत्र विधानात् ॥ ११ ॥

तस्मादित्युक्तं विवृणोति।

## अभ्यवद्गात्पवित्रं विगृह्णन्ति हस्तकार्य्यमेव तद्-यज्ञस्य क्रियत एतद्वा उद्गातृणाꣳ हस्तकार्य्यं यत्पवि-त्रस्य विग्रहणं ॥ १२ ॥

अत्रिर्हि तस्यादित्यज्योतिरभ्यवदत् प्रकाशितवान् अथो-द्गातृणां दशापवित्रं साधारणं विधत्ते पवित्रं शुक्लवर्णं विगृ-

र्न्ति विस्तारयेयुः तथा सति यज्ञस्योद्गातृभिः यद्धस्तेन क्रतं भवति तदेव क्रतं भवति तदेव विद्दणोति एतद्वा उद्गातॄणामिति । इतो अन्यस्याध्वर्य्वादिवदेतेषां हस्तकार्य्यस्याभावादित्यर्थः ॥१२॥

अथोक्तार्थज्ञानस्य फलमाह ।

## न हस्तवेष्यान्निर्ऋच्छति य एवं वेद ॥ १३ ॥

हस्तवेष्यान् हस्तेन व्यापारान् कर्म्मणो न निर्ऋच्छति सर्वदास्य यागदानाद्यनुष्ठानाय हस्तो व्यापारयतीत्यर्थः ॥ १३ ॥

अथोक्तप्रसारणं व्यतिरेकेण द्रढ़यति ।

## योऽपि न विगृह्णाति प्राणादेनमन्तर्यन्ति ॥१४॥

स्पष्टं ॥ १४ ॥

पवित्रप्रसारणे तत्सङ्कोचाभावाय किञ्चिद्वक्तव्यमित्याह ।

## तं ब्रूयाऽवेपमानः प्रमेष्यस इति वेपमान एव प्रमीयते ॥ १४ ॥

तं उद्गातारं पवित्रं प्रसारयन्तं ब्रूयात्किमिति उच्यते वेपमानः कम्पमानः प्रमेष्यसे नित्यमपि वेपमान एव प्रमीयते स इति तथा सम्प्रियोऽत उक्तं पवित्रविग्रहणं सूत्रकार आह, अवधूय पवित्रमुदग्दशमवाङ्गाभि वितनुयुः पवित्रन्त इति स्पर्शैक इति ॥ १५ ॥

अथोद्गातुर्धारानुमन्त्रणं समन्त्रैकदेशोपादानं विधत्ते।

**प्र शुक्रैतु देवी मनीषास्मद्रथः सुतष्टो न वाजीत्युद्गाता धारामनुमन्त्रयते ॥ १६ ॥**

मन्त्रैकदेशः पूर्व्वं व्याख्यातः, इत्यनेन मन्त्रेण शोध्यमानसोमधारामनुमन्त्रयते ॥ १६ ॥

अथानुमन्त्रणमन्त्रशेषं आयुष इत्यादिभागस्य पूर्व्वपठितस्य विकल्पपाठमाह।

**आयुषे मे पवस्व वर्चसे मे पवस्व विदुः पृथिव्यादिवो जनित्राच्छृण्वन्त्वापोधः क्षरन्तीः सोमेहोद्गायेत्याह मह्यं तेजसे ब्रह्मवर्चसायेति ॥ १७ ॥**

आयुषेत्यादिकं इहोद्गायेत्यन्तः पूर्व्ववद्देवोक्तः, पश्चाद्वैकल्पिकं मन्त्रशेषमाह मह्यं तेजसे ब्रह्मवर्च्चसायेति ॥ १७ ॥

अथ पवमानानुमन्त्रणप्रसङ्गात् पवनं स्तौति।

**एष वै सोमस्योद्गीथो यत्पवते सोमोद्गीतमेव साम गायति ॥ १८ ॥**

यत् सोमः शब्दायमानः पवते एष सोमस्योद्गीथः तथा सति सोमेनोद्गायेति ब्रुवन् यजमानः सोमोद्गीतमेव साम गायति ॥१८

अथ सोमशोधने नियममाह।

अच्छिन्नं पावयन्ति यज्ञस्यैव प्राणाꣳस्य सन्त-न्वन्ति सन्ततं पावयन्ति यज्ञस्य सन्तत्यै॥ १९॥

अच्छिन्नं धाराविच्छेदादित्येवं यथा तथा पावयन्ति तद्यज-मानस्य यज्ञस्य प्राणानाञ्च सन्तानाय सन्ततं प्रबन्धं पावयन्ति यज्ञस्य सन्तत्यै प्रबन्धाय सन्ततिः यज्ञस्य प्रारब्धस्याविच्छेदे-न समाप्तिः सम्प्रबन्ध उत्तरोत्तरं यज्ञस्य सिद्धिरिति विनि-योगः॥ १९॥

इति ताण्ड्यमहाब्राह्मणे षष्ठाध्यायस्य

षष्ठः खण्डः।

---

अथ सप्तमः खण्डः।

अथ प्रवृत्तहोमस्य यौ सूर्य्यो मा वेकुरेत्यादिकौ मन्त्रौ तयोर्द्वितीयमन्त्रसाध्यहोमं विधातुमाख्यायिकामाह।

बृहस्पतिर्वै देवानामुदगायत्तꣳ रक्षाꣳस्यजि-घाꣳसन् स य एषां लोकानामधिपतयस्तान् भागधेये-नोपाधावत्॥ १॥

बृहस्पतिर्मन्त्राभिमानी एतन्नामको देवः देवानां यज्ञे पूर्व्वमुदगायत् उद्गानमकरोत् तं तथा कुर्व्वाणं रक्षाꣳस्यजि-

घाऽशंसन् हन्तुमैच्छत् स बृहस्पतिः एषां पृथिव्यादीनां लोकानां येऽधिपतयोऽभ्यायंस्तान् भागधेयेन वक्ष्यमाणमन्त्रसाध्यहोमलक्षणेन भागधेयेनोपाधावत् अप्रीणयदित्यर्थः ॥ १ ॥

इदानीं समन्त्रकं होमं विधत्ते ।

**सूर्य्यो मा दिव्याभ्योनाष्ट्राभ्यः पातु, वायुरन्तरिक्षाभ्योऽग्निः पार्थिवाभ्यः स्वाहेति जुहोति ॥ २ ॥**

मन्त्रस्तु पूर्वमेव व्याख्यातः, उक्तमन्त्रोभागत्रयेण कर्त्तव्यः ॥२॥

अथ मन्त्रस्य तात्पर्य्यमाह ।

**एते वा एषां लोकानामधिपतयस्तान् भागधेयेनोपासरत् ॥ ३ ॥**

य एषां भूरादीनां लोकानामधिपतयः त एते वै निर्दिष्टाः सूर्य्यादयः खलु तथाहि तिस्र एव देवताः क्षित्यन्तरिक्षद्युस्थानाः अग्निर्वायुः सूर्य्य इति तान् भागधेयेन तदुचितभागप्रदानेन उपासरत् अनुसृतवान् भवति यतस्ते प्रीतारक्षःकृतोपद्रवं पर्य्याहरन् अत इदानीमप्युद्गातृभिरेतत्कर्त्तव्यमित्यभिप्रायः ॥ ३ ॥

वेदितुः फलमाह ।

**करोति वाचा वीर्य्यन्न सदस्यामार्त्तिमार्च्छति य एवं वेद ॥ ४ ॥**

न वा वीर्य्यकरणन्नाम वेदग्राह्यादिना स्वसामर्थ्यप्रकटनं ॥ ४ ॥

अथ वेकुरेत्यनेनाप्युक्तं प्रवृत्तहोमं विधातुमाख्यायिकामाह ।

**वाग्वै देवेभ्योऽपाक्रामत्तां देवा अन्वमन्त्रयन्त सा ऽब्रवीदभागास्मि भागधेयम्मेऽस्त्विति कस्ते भागधेयं कुर्य्यादित्युद्गातार इत्यब्रवीदुद्गातारो वै वाचे भागधेयं कुर्वन्ति ॥ ५ ॥**

पुरा वाग्देवता देवेभ्यः सकाशात् अपाक्रामत् मन्त्रात्मिका वाक् देवान् गुणैः प्रकाशयन्ती अपगताभूदित्यर्थः तां वाचं देवा अन्वमन्त्रयन्त अनुमन्त्रमाह्वानमकुर्व्वन् सा आहूता वागब्रवीत् किमिति अभागास्मि यथा भवतां यज्ञे भागोऽस्ति तद्वत् मह्यन्नास्ति इति तथोक्ता देवास्तर्हि ते कः भागधेयं कुर्य्यादित्यब्रुवन् सा च पुनरुद्गातार इत्यब्रवीत् तेषां तद्भागप्रदानयोग्यतोच्यते उद्गातारः खलु वाचे देव्यै भागधेयं कुर्व्वन्ति तेषामध्वर्य्वादिवद्धस्तव्यापारलक्षणक्रियाया अभावाद्वागेकव्यापारत्वाच्चेत्यभिप्रायः ॥ ५ ॥

इदानीं समन्त्रकहोमं विधत्ते ।

**तस्यै जुहुयाद् वेकुरानामासि जुष्टा देवेभ्यो न**

मो वाचे नमो वाचस्पतये देवि वाग्यत्ते वाचो मधु-
मत्तस्मिन् माधाः सरस्वत्यै स्वाहेति ॥ ६ ॥

अयम्मन्त्रः पूर्व्वं व्याख्यातः अनेन यो यः सर्पति स स जुहु-
यात् ॥ ६ ॥

मन्त्रगतयोर्वाक्सरस्वतीशब्दयोरैक्यार्थमाह ।

वाग्वै सरस्वती तामेव तन्नामधेयेनारभते ॥ ७ ॥

आलम्बते उद्गातादिकमित्यर्थः ॥ ७ ॥

अद्वेष्यस्य वाग्ध्यानात्मकप्रयोगकथनव्याजेन अद्वेष्ययजमान-
प्रयोगे वाग्ध्यानमात्रप्रयोगेण नालं किन्तु मन्त्रपाठः कर्त्तव्य
इत्याह ।

यं द्विष्यात्तस्यैतामाहुतिञ्जुहुद्वाचं मनसा ध्याये-
द्वाचमेवास्य दृङ्क्ते ॥ ८ ॥

यं यजमानं द्विष्यादुद्गाता तस्य प्रयोगे एतामाहुतिं जुहु-
द्धोमं कुर्व्वन् वाचम्मनसा ध्यायेन्मन्त्रं ब्रूते कुतः अद्वेष्यस्य प्रयोगे
मन्त्र उच्चारयितव्य इत्यभिप्रायः अत्र मन्त्रसमाम्नाये बेकुराना-
मासीति मन्त्रः प्रथमं समाम्नातः सूर्य्योमेति पश्चात् अत्र क्रम-
विपर्य्यासः किमर्थः मन्त्रेषु स्तुतिमात्रमेव विवक्षितं न क्रम इति
केचित् अपरे तु स्तुतिमात्रविवक्षायामपि क्रमविलङ्घनस्यान्या-
य्यत्वादेवं वा क्रमः स्यादिति क्रमविकल्पार्थमिति ॥ ८ ॥

अथ बहिष्पवमानार्थं प्रसर्पणं विधत्ते ।

**बहिष्पवमानꣳ सर्पन्ति स्वर्गमेव तल्लोकꣳ सर्पन्ति ॥ ९ ॥**

ये अध्वर्युप्रमुखाः बहिष्पवमानार्थं सदः सकाशाच्चात्वालं प्रति सर्पन्ति तत्तेन स्वर्गं लोकमेव प्रति सर्पन्ति यजमानस्य एतत् कर्त्तृकप्रसर्पणाभावे स्वर्गासिद्धेस्तस्य स्वर्गार्थमेवैते प्रसर्पन्ति ॥ ९॥

प्रसर्पणे किञ्चिन्नियमद्वयं विधत्ते।

**प्रह्वाणाइव सर्पन्ति प्रतिकूलमिव हीतः स्वर्गो लोकः त्वरन्त इव सर्पन्ति मृगधर्म्मा वै यज्ञो यज्ञस्य शान्त्या अप्रत्रासाय ॥ १० ॥**

बहिष्पवमानस्य स्वर्गत्वेनोपन्यासात्तदर्थं प्रसर्पणं प्रह्वाणैरिव कर्त्तव्यं, यद्यपि स्वर्गः सर्व्वान् प्रत्यविशिष्टत्वादनुकूलएव तत्तथापि मृगत्वनन्तरभावित्वात्प्रतिकूलमिवोच्यते, किञ्च त्वरन्तइव त्वरच्छब्दगतौ तथा पादप्रसारणध्वनिर्न्नोत्पद्यते तथा मृदुपदन्यासैर्गन्तव्यं यथा मृगग्राहिभिस्तद्वत् त्वरद्गमने कारणमाह यो यज्ञः स मृगधर्म्मो वै मृगस्य यः पलायनधर्म्मः स तद्धर्मयुक्तः खलु किमर्थमेवं कृतिरिति चेदुच्यते यज्ञस्य शान्त्यै शमनाय स्थैर्य्याय तदेवाह अप्रत्रासाय प्रसर्पणे हि त्रासो भवति ॥ १० ॥

अथ तत्र वाङ्नियमं तदभावे दोषं कथयन् विधत्ते।

**वाचं यच्छन्ति यज्ञमेव तद्यच्छन्ति यद्यव्यवदेयु-र्यज्ञं निर्ब्रूयुस्तस्मान्न व्यववद्यं॥ ११॥**

तदेतत् प्रसर्पकाः वाचं यच्छन्ति नियमयन्ति तत्तेन यज्ञमेव यच्छन्ति यज्ञस्य मन्त्रादिलक्षणवाक्पूर्व्वकत्वाद्वागेव यज्ञः यद्यपि व्यवहरेयुर्विविधं दुष्टं वाचं ब्रूयुस्तर्हि यज्ञमेव निर्ब्रूयुः नितरां ब्रूयुः अर्थमिति प्रकाशयेयुरित्यर्थः तस्मात्तैर्नव्यववद्यं॥ ११॥

अथाध्वर्य्युप्रभृतिब्रह्मान्तानां पञ्चर्त्विजां तत्र समारम्भणं विधत्ते।

**पञ्चर्त्विजः सꣳरब्धाः सर्पन्ति पाङ्क्तो यज्ञो यावान् यज्ञस्तमेव सन्तन्वन्ति॥ १२॥**

यजमानवर्ज्जिताः पञ्चर्त्विजः सꣳरब्धाः सम्यक् परस्परं सङ्गताः सर्पन्ति, तत्रत्यपञ्चसंख्यां स्तूयते पाङ्क्तो यज्ञः यज्ञस्य पाङ्क्तत्वं तैत्तिरीये प्रश्नमुखेन स्पष्टीकृतं, नर्चा न यजुषा पङ्क्तिराप्यते यत्किञ्च यज्ञस्य पाङ्क्तत्वमिति धानाः करम्भः परिवापः पुरोडाशः पयस्यातेन पङ्क्तिरुच्यते तेन यज्ञस्य पाङ्क्तत्वमिति। एतैरेव तु हविष्पङ्क्त्यक्षरपङ्क्तिनराशंसपङ्क्तिसवनपङ्क्तीनां प्रदर्शनेन यज्ञस्य पाङ्क्तत्वमुपवर्णितं॥ १२॥

यो वै यज्ञस्य विष्वङ्क्तिं वेदेत्यत्र समारभ्य प्रसर्पताम्मध्ये प्रस्तोतृविच्छेदे प्रयोगमाह ।

**यदि प्रस्तोतावच्छिद्यते यज्ञस्य शिरश्छिद्यते ब्रह्मणे वरन्दत्वा स एव पुनर्वर्त्तव्यश्छिन्नमेव तत्प्रति दधाति ॥ १३ ॥**

यदि प्रस्तोता अध्वर्योरन्वारम्भादवच्छिद्यते तदा यज्ञस्य शिरएव छिद्यते तस्य शिरोहि तन्मुख्यस्य प्रथमभागस्य गातृत्वात्तस्य प्रायश्चित्तार्थं ब्रह्मणे वरङ्गां दत्वा स एव ब्रह्मा पुनर्व्वर्त्तव्यो वरणीयः तत्तेन छिन्नमपि शिरः प्रति दधाति ॥ १३ ॥

अथोद्गातृवच्छेदे प्रयोगमाह ।

**यद्युद्गातावच्छिद्यते यज्ञेन यजमानो व्यृध्यतेऽदक्षिणः स यज्ञक्रतुः संस्थाप्योऽथान्य आहृत्यस्तस्मिन्देयं यावद्दास्यन् स्यात् ॥ १४ ॥**

यदि उद्गातावच्छिद्यते प्रस्तोत्रन्वारम्भणात्तदा व्यृध्येन नष्टेन यजमानो व्यृध्यते गतसमृद्धो नष्टो भवति तस्माद्यज्ञ एव क्रतुर्यज्ञक्रतुः सम्प्रवृत्तः अदक्षिणो दक्षिणाविहीनः समापनीयः अथानन्तरं अन्यस्तत्संस्थोयाग आहृत्यः पुनरनुष्ठेयः तस्मिन् पुनः कृते यज्ञे देयं दातव्यं किं द्रव्यमन्यदिति नेत्याह

यावद्धनं पूर्वस्मिन् यज्ञे दास्यन् स्यात् यजमानस्तदेव धनं तस्मिन् यज्ञे तेन देयं ॥ १४ ॥

अथ प्रतिहर्त्तृविच्छेदमाह।

**यदि प्रतिहर्त्ताविच्छिद्यते पशुभिर्यजमानो व्यध्यते पशवो वै प्रतिहर्त्ता सर्व्ववेदसन्देयं यदि सर्व्ववेदसन्न ददाति सर्व्वज्यानिञ्जीयते ॥ १५ ॥**

यदीत्यादि स्पष्टं, प्रतिहारमानभागे पशुसम्बद्धेस्तद्भागगता अपि पशव इत्युच्यते पशुनाशाभावाय सर्व्ववेदसं देयं सर्व्वमपि धनं दातव्यं यदि सर्व्वं धनं न दद्यात् तदानीं यजमानः सर्व्वज्यानिं जीयते सर्व्वपुत्रपशुधनादिरूपां हानिं हीयते अपरोधात्वर्थोऽनुवादः सर्व्वाभिः समृद्धिभिर्विहीनो भवतीत्यर्थः अत्राविच्छेदप्रकरणे एकैकाविच्छेदे प्रतिनियतप्रायश्चित्तानुष्ठानान्न कदाचित्प्रतिपत्तिः उद्गातृप्रतिहर्त्रोः सहाविच्छेदे कथमित्याशंका पूर्व्वतन्त्रेऽधिकाराध्याये प्रायश्चित्तपादे अत्रोक्त उद्गातृप्रतिहर्त्रोरविच्छेदवाक्यद्वयं विषयीकृत्य सहाविच्छेदे कथमित्याह।स्ति प्रायश्चित्तं तच्च विकल्पितमिति विचारद्वयं तयोरेव क्रमाविच्छेदे उत्तराविच्छेदः प्रबल इत्येकः सचोद्गातृसम्बन्धी चेत् सर्व्वस्वमेव दातव्यं न द्वादशशतमिति द्वितीय इति विचारद्वयं कृतं। ते चत्वारो विचाराः क्रमेणात्र निर्णयाय प्रदर्श्यन्ते। तत्र प्रथमं दर्शयति, उद्गातुः प्रतिहर्त्तुश्च सहाविच्छेदनेऽस्ति न। प्रायश्चित्त-

मुताख्यत्र तन्निमित्तविघाततः । एकैकस्यैव विच्छेदकर्त्तृत्वान्न निहन्यते । कालमात्रं तु तत्रैकंप्रायश्चित्तमतो भवेत् । ज्योतिष्टोमस्तु श्रूयते तद्यद्युद्गातावच्छिद्येत अदक्षिणो यज्ञः समाप्योऽथान्य आहृत्य तत्र तद्दद्याद्यद्दास्यन् स्यात् यदि प्रतिहर्त्ता-वच्छिद्यते सर्वस्वं दद्यादिति अस्यायमर्थः प्रातःसवनेन वहिष्पवमानेन स्तोष्यमाना ऋत्विजः शालाया वहिः प्रसर्पन्ति तदानीमेकस्य पृष्ठतोन्य इत्येवं पिपीलिकावत् पङ्क्त्याकारेण गन्तव्यं तत्र पुरतो गन्तुः कच्छं गृहीत्वैव पृष्ठतोऽन्योगच्छेत् एवं सति यदि प्रमादादुद्गाता गृहीतं कच्छं मुञ्चेत्तदा दक्षिणामदत्वा प्रक्रान्तो यज्ञः समापनीयः तं समाप्य पुनरपि स यज्ञः प्रयोक्तव्यः तस्मिन् प्रयोगे यदीप्सितं द्रव्यं तद्यात्, यदा प्रतिहर्त्ता मुञ्चेत् तदा तस्मिन्नेव प्रयोगे सर्व्वं दद्यादिति, तत्र यद्युद्गातृप्रतिहर्त्तारौ युगपत् मुञ्चेतां तदानीमुक्तं प्रायश्चित्तनिमित्तं विहन्येत, एकैककर्तृकोऽवच्छेदो निमित्तत्वेन श्रुतः, अयं तूभयकर्तृकत्वान्नैकेन व्यपदेष्टुं शक्यते, तस्माच्छ्रूयमाणस्य निमित्तस्य विहितत्वान्नास्ति प्रायश्चित्तमिति प्राप्ते ब्रूमः द्वौ ह्यत्रावच्छेदौ तयोरेकैकस्यैक एव कर्त्तेति निमित्तस्य नास्ति विघातः, कालमात्रैक्यात्तु एकत्वभ्रान्तिः तस्मान्निमित्तविघाताभावादस्ति प्रायश्चित्तं, द्वितीयं दर्शयति, समुच्चयो विकल्पो वा प्रायश्चित्तद्वयेऽग्रिमः । अदक्षिणं पूर्व्वमस्मिन् प्रयोगेऽन्यत्तु पश्चिमं । प्रयोगे पश्चिमे नास्ति निमित्तं तेन तद्द्वयं । प्राप्तमेकप्रयोगेऽतो विरुद्धत्वाद्विकल्प्यते । अदक्षिणत्वं सर्व्वस्वदानं चेति यत्प्राय-

श्चित्तद्वयन्निमित्तभेदेन श्रुतं तन्निमित्तद्वयसन्निपाते समुच्चेतव्यं यद्दक्षिणात्वसर्व्वस्वदानयोरन्योन्यविरोधः तर्हि प्रयोगभेदेन व्यवस्थापनीयं अवच्छेदयुक्ते प्रथमप्रयोगे दक्षिणा न दातव्या उत्तरप्रयोगे सर्व्वस्वं दातव्यं सत्यपि प्रयोगभेदे कर्म्मण एकत्वात् समुच्चय इति प्राप्ते ब्रूमः न ह्युत्तरप्रयोगे दक्षिणा दातव्या विच्छेदो विद्यते न च सति निमित्ते प्रायश्चित्तं युक्तं तस्मात्प्रथमप्रयोगे एव निमित्तद्वयवशात्प्रायश्चित्तद्वयं प्राप्तं तच्चान्योन्ये विरुद्धाविरुद्धत्वाद्विकल्पते। तृतीयं दर्शयति, अवच्छेदक्रमे पूर्वः प्रबलः स्यादुतोत्तरः। असंजातविरोधेन पूर्व्वेणोत्तरसेधनं। निरपेक्षोत्तरज्ञानं जायते पूर्व्वबाधया। न बाधकान्तरं तस्य तेन प्रबलमुत्तरं। उद्गातृप्रतिहर्त्तृकयोरवच्छेदयोर्य्यौगपद्ये समानबलत्वादस्तु प्रायश्चित्तयोर्व्विकल्पः यदा तु क्रमेणावच्छेदौ स्यातां तदानीमसंजातविरोधित्वेन पूर्वस्य प्रबलत्वात् श्रुतिलिङ्गादाविवोत्तरस्य प्रवृत्तिर्निरुध्यत इति चेत् मैवं श्रुतिलिङ्गादावुत्तरस्य सापेक्षत्वात् पूर्व्वेण विरोधे सत्युरस्योत्पत्तिरेव नास्ति इहतु ज्ञानद्वयमन्योन्यनिरपेक्षं वाक्यद्वयादुत्पद्यत इति नास्त्युत्पत्तिप्रबन्धे उत्पद्यमानं चोत्तरज्ञानं स्वविरुध्यस्य पूर्वज्ञानस्य बाधेनैवोत्पद्यते न तु निरपेक्षत्वस्य समानत्वात् पूर्वं ज्ञानमेवोत्तरस्य बाधकमस्त्विति चेत् न पूर्व्वज्ञानोत्पत्तिदशायामविद्यमानस्योत्तरज्ञानस्य बाध्यत्वायोगात् उत्तरकालेतु स्वयं बाधितं पूर्व्वज्ञानं कथमुत्तरस्य बाधकं भवेत् नचान्यत्किञ्चिदुत्तरस्य बाधकं पश्यामः तस्मादुत्तरकालीनाव-

च्छेदनिमित्तं प्रायश्चित्तमनुष्ठेयं । चतुर्थं दर्शयति, उद्गातुः पश्चिमे च्छेदे पुनर्यागस्य दक्षिणा । शतं द्वादशयुक्तं स्याद्यदि वा सर्ववेदसं । तद्द्वयाद्यत्पुरादिष्टमित्युक्ते शतदक्षिणा । प्रतिहर्त्तुः पुरा च्छेदात्सर्व्ववेदसबाधितं । शतदानं पूर्व्वयागे सर्व्ववेदसदक्षिणा । प्राप्तं व्युत्क्रमं प्रयोगे तु दातव्यं सर्ववेदसं । यद्युद्गाता पश्चादवच्छिद्येत तदा तस्यावच्छेदस्य प्रबलत्वेन तन्निमित्तं प्रायश्चित्तमनुष्ठेयं तच्च प्रायश्चित्तमीदृशं प्रथमप्रयोगं दक्षिणारहितमनुष्ठाय द्वितीयप्रयोगे पूर्वन्दित्सुना दक्षिणा दातव्या इति पूर्व्वं गां द्वादशाधिकं शतं तत्प्रतिहर्त्त्रवच्छेदनिमित्तसर्वस्वेन बाधितं नचोद्गात्रवच्छेदेन पश्चाद्भाविना सर्व्वस्वन्दित्सा बाध्यत इति शङ्कनीयं बाधकस्य दक्षिणान्तस्य तत्रानुक्तत्वात् यद्दित्सितं तदुत्तरप्रयोगे देयमित्येतावदेव ततोऽत्रोच्यते दित्सितञ्च सर्व्वस्वमित्युक्तं अत उत्तरकालीनोद्गात्रेऽवच्छेदनिमित्तेऽपि पुनः प्रयोगे पूर्व्वकालीनप्रतिहर्त्त्रवच्छेदप्रयुक्तं सर्व्वस्वमेव दातव्यं ॥ १५ ॥

अथ बहिष्पवमाने प्रसर्पणसमयेऽध्वर्य्योः प्रस्तरप्रतिहरणं विधत्ते ।

## अध्वर्युः प्रस्तरꣳ हरति ॥ १६ ॥

प्रस्तरोदर्भमुष्टिः ॥ १६ ॥

प्रस्तरं प्रशंसति ।

## यजमानो वै प्रस्तरो यजमानमेव तत् स्वर्गं लोकꣳ हरति ॥ १७ ॥

प्रस्तरस्य हविरासादनादिद्वारा यागसाधनत्वात् यजमानोऽपि साक्षाद्यज्ञसाधनमिति साधनत्वसाम्यात् प्रस्तरो यजमानत्वेन स्तूयते तत्तथासति बहिष्पवमानस्य स्वर्गत्वेन पूर्वं प्रतिपादितत्वात् प्रस्तरं प्रहरन् अध्वर्य्युर्य्यजमानमेव स्वर्गं लोकं प्रति हरति प्रापयति। इदमेव वाक्यं विषयीकृत्य प्रथमाध्यायस्य चतुर्थपादे प्रस्तरइति कर्म्मनामधेयं वा गुणो वा प्रस्तरस्य स्तुतिर्व्वेति त्रेधा संशय्य स्तुतिरिति सिद्धान्तितं, तथाहि, यजमानः प्रस्तरोऽत्र गुणो वा नाम वा स्तुतिः। सामानाधिकरण्येन स्यादेकस्यान्यनामता। गुणो वा यजमानस्तु कार्य्यप्रस्तरलक्षिते। अंगांगित्वाद्यभावेन पूर्व्ववन्नात्र संस्तुतिः। अर्थभेदादनामत्वं गुणश्चेद्विक्रियेत सः। यागसाधकताद्वारा विधेयप्रस्तरस्तुतिः। इदमाम्नायते यजमानः प्रस्तर इति तत्र यजमानस्य प्रस्तरशब्दो नामधेयं प्रस्तरस्य वा यजमानशब्दोनामधेयं कुतः उद्भिदा यागेनेत्यादाविव सामानाधिकरण्यादित्येकः पक्षः, गुणविधिरेष इत्यपरः पक्षः, तदापि यजमानकार्य्ये जपादौ प्रस्तरस्याचेतनस्य सामर्थ्याभावात् प्रस्तरकार्य्ये सम्यग्धारणादौ यजमानस्याशक्तत्वात् यजमानरूपो गुणो विधीयते एवं सति पश्चाच्छ्रुतस्य प्रस्तरशब्दस्य कार्य्यलक्षकत्वेन प्रथमश्रुतो यजमानशब्दो मुख्यवृत्तिर्भविष्यति न चात्र पूर्व्वन्यायेन स्तुतिः सम्भवति

अष्टाकपालद्वादशकपालयोरिव प्रस्तरयजमानयोरंशांशित्वाभावात् वायुर्वै क्षेपिष्ठा देवता ऊर्ज्जोऽवरुध्या इत्यादिवत् स्तुतिरिति चेत् न क्षिप्रत्वादिधर्म्मवत् कस्यचिदुत्कर्षस्याप्रतीतेः तस्मान्नामगुणयोरन्यतरत्वप्राप्तौ ब्रूमः गोमहिषयोरिवार्थभेदस्यात्यन्तप्रसिद्धत्वान्नामत्वन्न युक्तं गुणपक्षे त्वग्नौ प्रहरणस्य प्रस्तरविषयत्वात् यजमाने प्रहृते सति कर्म्मलोपः स्यात् तस्माद्धेषः प्रस्तरो यजमानशब्देन स्तूयते यथा सिंहो देवदत्त इत्यत्र सिंहगुणेन शौर्य्यादिनोपेतो देवदत्तः सिंहशब्देन स्तूयते तथा यजमानगुणेन यागसाधकत्वेन युक्तः प्रस्तरो यजमानशब्देन स्तूयते एवं यजमान एककपाल इत्यादिषु द्रष्टव्यं॥ १७॥

अथ प्रकारान्तरेण प्रस्तरं प्रशंसति।

**यज्ञो वै देवेभ्योऽश्वोभूत्वापाक्रामत्तं देवाः प्रस्तरेणारमयꣳस्तस्मादश्वः प्रस्तरेण सम्मृज्यमान उपावरमते यदध्वर्य्युः प्रस्तरꣳ हरति यज्ञस्य शान्त्या अप्रत्रासाय॥ १८॥**

यज्ञः खलु पूर्वं देवेभ्यः सकाशादश्वो भूत्वा अपाक्रामदपगतवान् तदा देवाः अश्वस्य घासः प्रस्तर इति मत्वा तमश्वं प्रस्तरेण प्रदर्शितेनारमयन् तस्मादिदानीमपि अश्वः प्रस्तरेण तृणमुष्टिना सम्मृज्यमान उप समीपेनारमते क्रीडति तस्माद-

ध्वर्युः प्रस्तरं हरति यज्ञस्य शान्त्या अप्रलासाय अपलापनाय च भवति ॥ १८ ॥

अथ प्रकारान्तरेण स्तौति ।

प्रजापतिः पशूनसृजत तेऽस्मात् सृष्टा अशनायन्तोऽपाक्रमꣳस्तेभ्यः प्रस्तरमन्नं प्रायच्छत्त एनमुपावर्त्तन्त तस्मादध्वर्युणा प्रस्तर ईषदिव विधूयो विधूतमिव हि तृणं पशव उपावर्त्तन्ते ॥ १९ ॥

पूर्व्वं प्रजापतिना सृष्टाः पशवः अशनायन्तो अशनमिच्छन्तः स्रष्टुः सकाशात् अपाक्रामन् अपसृत्यागच्छन् तेभ्यः प्रस्तरं दर्भमुष्टिमन्नत्वेन प्रायच्छत् ततोलब्धान्नास्ते प्रजापतिमुपावर्त्तन्त तस्मात् पशूनामन्नत्वादध्वर्य्युणा प्रस्तर ईषदिव विधूयश्चालनीयः तथा सति विधूतमिव हि तृणं ईषद्विधूतं तृणमपेक्ष्य पशवो यजमान उपावर्त्तन्ते यजमानस्य शान्त्यै पशवः सम्मुखा भवन्तीत्यर्थः ॥ १९ ॥

अथ विदुषः फलमाह ।

उपैनं पशव आवर्त्तन्ते य एवं वेद ॥ २० ॥

स्पष्टोऽर्थः ॥ २० ॥

अथ प्रस्तरं भूमौ स्थापयित्वा गानं विधत्ते ।

**प्रस्तरमासद्योद्गायेद्धविषोऽस्कन्दाय ॥ २१ ॥**

उद्गाता प्रस्तरमपि हरन् आसद्य भूमावासञ्जनं कृत्वोद्गायेत् तथा सति प्रस्तरस्य हविरासादनार्थत्वात्तदपरित्यज्यासञ्जनं हविषोऽस्कन्दायाप्रच्युत्यै भवति ॥ २१ ॥

एवमुक्तप्रकारेण गुणसद्भावेऽपि दोषोऽप्यस्तीत्याह ।

**यजमानन्तु स्वर्गाल्लोकादवगृह्णाति ॥ २२ ॥**

तुशब्दो वैलक्षण्यद्योतनार्थः तु किन्तु यजमानो वै प्रस्तर इत्युक्तत्वाद्यजमानमेव स्वर्गाल्लोकादवगृह्णाति निरुध्य भूमौ स्थापितवान् भवति ॥ २२ ॥

प्रस्तरं भूमावासञ्जयन्नुद्गाता तर्हि क उपाय इति चेत्ता-माह ।

**अष्ठीवतोपस्पृशतोद्गेयन्तेनास्य हविरस्कन्नं भवति न यजमानꣳ स्वर्गाल्लोकादवगृह्णाति ॥ २३ ॥**

अष्ठीवता जानुनोपस्पृशता तत्रासञ्जयता प्रस्तरमुद्गेयं आ-सञ्जनाद्धविषोऽस्कन्दः भूमेः उपरि स्थापनात् स्वर्गादनवग्रहश्च भवति ॥ २३ ॥

अथ बहिष्पवमानस्य स्तोत्रस्य चात्वालसम्बन्धं सार्थवाद-माह ।

**चात्वालमवेक्ष्य बहिष्पवमानꣳ स्तुवन्त्यत्र वा**

**असावादित्य आसीत्तं देवा बहिष्पवमानेन स्वर्गं लोकं महरन्यच्चात्वालमवेक्ष्य बहिष्पवमानꣳ स्तुवन्ति यजमानमेव तत् स्वर्गं लोकꣳ हरन्ति ॥ २४ ॥**

उद्गातारश्चात्वालदेशमवेक्ष्य बहिष्पवमानꣳ स्तुवन्ति तत्र स्थित्वा स्तोतव्यमित्यर्थः तत्किमर्थमित्याह पूर्व्वं अत्र चात्वालदेशे खल्वसौ दिवि दृश्यमान आदित्य आसीत् तमादित्यं देवाः बहिष्पवमानेन स्तोत्रेण स्वर्गं लोकमहरन् तथा सति यच्चात्वालावेक्षणपूर्व्वकं बहिष्पवमानस्तवनं भवति तत् यजमानस्य स्वर्गलोकहरणाय भवति ॥ २४ ॥

इति ताण्ड्यमहाब्राह्मणे षष्ठाध्यायस्य

सप्तमः खण्डः ।

---

अथ अष्टमः खण्डः ।

अथास्मिन् खण्डे बहिष्पवमानएव स्तूयते नवभिः स्तोत्रीयाभिः हिङ्कारे दशमीभिः स्तोतव्यमिति विवक्षुराह ।

**स तु वै यज्ञेन यजेतेत्याहुर्य्यस्य विराजं यज्ञमुखे दध्युरिति ॥ १ ॥**

यस्य यजमानस्य यज्ञमुखे यज्ञस्य मुखस्थानीये बहिष्पवमाने वाग्व्यापारे बहिष्पवमानस्य प्राथम्याद्यज्ञमुखत्वं तस्मि-

न्विराजं दध्युः प्रक्षिपेयुर्गायेयुरित्यर्थः स एव खलु यजमानो यज्ञेन यजेत यष्टवानित्याहुर्ब्रह्मवादिनः ॥ १ ॥

इदानीं विराट्सम्पादनद्वारेण तद्विधत्ते।

**नवभिः स्तुवन्ति हिङ्कारो दशमो दशाक्षरा विराड्विराजमेवास्य यज्ञमुखे दधति ॥ २ ॥**

नवभिः स्तोत्रीयाभिस्त्रिवृत्स्तोमगताभिः स्तुवन्ति स्तुयुरित्यर्थः तासां हिङ्कारो दशमो भवति तथा सति दशसङ्ख्या सम्पद्यते विराडपि दशाक्षरा तद्द्वारा अस्य यजमानस्य यज्ञमुखे बहिष्पवमाने विराजमेव दधति स्थापयन्त्युद्गातारः ॥ २ ॥

अथ स्तोत्रीयाणां दशसंख्यामेव प्रशंसति।

**नवभिः स्तुवन्ति नव प्राणाः प्राणैरेवैनꣳ समर्द्धयन्ति हिङ्कारो दशमस्तस्मान्नाभिरनवतृण्णा दशमी प्राणानां ॥ ३ ॥**

नवभिः स्तुवन्ति स्तुयुः नव प्राणाः सप्तशीर्षण्या द्वाववाञ्चाविति तेषान्नवसङ्ख्याः तथा सति कृत्स्नैः प्राणैरेवैनꣳ समर्द्धयन्ति यतो हिङ्कारो दशमो भवति तस्मात्प्राणानान्नवानां दशमी सती नाभिरनवतृण्णा भवति इतरप्राणवदच्छिद्रा भवति ॥ ३ ॥

अथ हिङ्कारं वियुज्य स्तौति।

**नवभिः स्तुवन्ति नवाध्वर्युः प्रातःसवने ग्रहान् गृह्णाति तानेव तत्पावयन्ति तेषां प्राणानुत्सृजन्ति ॥ ४ ॥**

यन्नवभिः स्तोत्रीयाभिः स्तुवन्ति अध्वर्युश्च प्रातःसवनेन नवग्रहान् गृह्णाति तथा सति तत्तेन स्तवनेन तानेव ग्रहान् पावयन्ति शोधयन्ति किञ्च तेषां ग्रहाणां प्राणानुत्सृजन्त्यूर्द्ध-मुखान् कल्पयन्ति ग्रहाणान्नवसंख्येयं पूर्व्वाचार्य्यैः संगृहीतं, उपांशुरन्तर्य्यामश्च वायव्यश्चेन्द्रवायवः । ततश्च मैत्रावरुणः शुक्रोमन्थी ततःपरः । तत आग्रयणो नाम ध्रुवो नवम इत्यत इति ॥ ४ ॥

अथवा बहिष्पवमानं प्रजननसाधनत्वेन स्तौति ।

**प्रजापतिर्वै हिङ्कारस्त्रियो बहिष्पवमान्यो यद्धिङ्कृत्य प्रस्तौति मिथुनमेवास्य यज्ञमुखे दधाति प्रजननाय ॥ ५ ॥**

हिङ्कारस्य प्राथम्यात् प्रजापतिरपि कृत्स्नस्यापि प्रथम इति हिङ्कारस्य प्रजापतित्वं बहिष्पवमानसम्बन्धिन्यः स्तोत्रीयाः स्त्रियः स्त्रीस्थानीयाः तथा सति यद्धिङ्कृत्वा स्तौति तेनास्य यजमानस्य यज्ञमुखे मिथुनमेव दधाति किमर्थं प्रजननाय यजमानस्यापत्याद्युत्पत्त्यर्थं ॥ ५ ॥

अथ हिङ्कारपूर्व्वकं बहिष्पवमानं स्तौति।

एष वै स्तोमस्य योगो यद्धिङ्कारो यद्धिङ्कृत्य प्रस्तौति युक्तेनैव स्तोमेन प्रस्तौति ॥ ६ ॥

हिङ्कारगानं यदस्ति एषः स्तोमयोगः तथा सति यद्धिङ्कृत्य हिङ्कारमुच्चार्य्य स्तौति तदा युक्तेनैव स्तोमेन प्रस्तौति ननु स्तोमयोगः पूर्व्वमेवोक्तः किमर्थमत्र पुनर्विधीयत इति नैषदोष अत्र हिङ्कारस्तुत्यर्थत्वात् ॥ ६ ॥

पुनर्हिङ्कारं प्रशंसति।

एष वै साम्नाᳯ रसो यद्धिङ्कारो यद्धिङ्कृत्य प्रस्तौति रसेनैवैता अभ्युद्य प्रस्तौति ॥ ७ ॥

रसः सारः साम्नामादौ प्रयुज्यमानत्वादस्य रसरूपत्वं यद्यदि हिङ्कृत्य रसरूपं हिङ्कारमुच्चार्य्य स्तौति गायति स्तोत्रीयाः रसेनैव एताः स्तोत्रीयाः त्वचा अभ्युद्याभिवन्दनं कृत्वा प्रस्तौति गायति ताः सरसाः करोतीत्यर्थः ॥ ७ ॥

बहिष्पवमानस्तोत्रीयाः सर्व्वाः समानदेवताः समानछन्दस्काश्च भवन्ति तत् स्तौति।

आरण्येभ्यो वा एतत् पशुभ्यः स्तुवन्ति यद्धि-

**पवमानमेकरूपाभिः स्तुवन्ति तस्मादेकरूपा आ-रण्याः पशवः ॥ ८ ॥**

बहिष्पवमानं स्तोत्रमेकरूपाभिः स्तोत्रीयाभिः स्तुवन्तीति यत् समानदेवताकत्वं समानच्छन्दस्कत्वञ्चैवैकरूप्यन्तासां खलु पवमानः सोमो देवता गायत्री छन्दः एतदेतेनैकरूपस्तवनेन आरण्येभ्यः पशुभ्यः एकरूपेभ्यस्तेषां लाभार्थं स्तुवन्ति तस्मात् स्तोत्रीयाणामैकरूप्यादारण्याः पशवः गोमायुर्गौर्मृगो गवय-उष्ट्रः शरभो हस्ती मर्कट इति सप्तसंख्यकाः सर्व्वे एकरूपाः एकवर्णा भवन्ति ॥ ८ ॥

अथ स्तोत्रीयाणामनावृत्तिं स्तौति ।

**पराचीभिः स्तुवन्ति तस्मात् पराञ्चः प्रजायन्ते पराञ्चो वितिष्ठन्ते ॥ ९ ॥**

पराचीभिरनावृत्ताभिः स्तुवन्ति तिसृभ्यो हिङ्करोति स पराचीभिरिति हि पूर्व्वमुक्तं तस्मात्प्राञ्चोऽधोमुखाः प्रजायन्ते सम्भवन्ति अधोमुखाः पराञ्च एव हि मनुष्या जायन्ते किञ्च पराञ्चोवितिष्ठन्ते स्वर्गादिप्राप्तौ पराङ्मुखा एव इह लोकात्पततीति निवृत्तमुखा एव प्रयतन्ते ॥ ९ ॥

बहिष्पवमानस्यापवृत्त्यभावं प्रशंसति ।

अपरिश्रिते स्तुवन्ति तस्मादपरिगृहीता आरण्याः पशवः ॥ १० ॥

परिश्रयणन्तृणपर्णादिभिरपवरणं तद्रहिते अपरिश्रिते बहिर्वेदिदेशे स्तुवन्ति तस्मादारण्याः पशवः अपरिगृहीता भवन्ति ॥ १० ॥

अथ बहिष्पवमानमन्तःशंसनद्वारेण प्रशंसति ।

बहिः स्तुवन्त्यन्तरनुशꣳसन्ति तस्माद्ग्राममाहृतैर्भुञ्जते ॥ ११ ॥

बहिर्वेदि स्तुवन्त्यन्तर्वेदि स्तुतमनुशंसन्ति होतारः सामान्यविवक्षया बहुवचनं यस्मादेवं तस्माद्ग्रामं प्रत्याहृतैर्यवव्रीह्यादिभिर्मनुष्याः भुञ्जते ॥ ११ ॥

अथ प्रसङ्गादाज्यस्तोत्राणि विषयीकृत्याह ।

ग्राम्येभ्यो वा एतत् पशुभ्यः स्तुवन्ति यदाज्यैर्नानारूपैः स्तुवन्ति तस्मान्नानारूपा ग्राम्याः पशवः ॥१२॥

नानारूपैराज्यस्तोत्रैर्नानादेवत्यैः स्तोत्रैरित्यर्थः तथाहि अग्नेयं होतुराज्यं मैत्रावरुणं मैत्रावरुणस्यैन्द्रं ब्राह्मणाच्छंसिन ऐन्द्राग्नमच्छावाकस्येति नानारूपाणि तस्मादाज्यानां वैरूप्याद्ग्राम्याः पशवो नानारूपाः तथाहि पुरुषोऽश्वो

गौरविरजोगर्दभोऽश्वतर इति सप्तापि पशवः प्रत्येकं नाना रूपाः॥ १२॥

अथ आज्यस्तोत्राणामावृत्तिं प्रशंसति।

**पुनरभ्यावर्त्तं स्तुवन्ति तस्मात्प्रेत्वर्य्यः प्रेत्य पुनरायन्ति॥ १३॥**

पुनः पुनरभ्यावृत्याभ्यावृत्य स्तुवन्ति अनेन पर्य्यायेष्टत्वमावृत्तिद्योतकेन विज्ञातं शिष्टर्चाम्पराक्कं पर्य्यायेषु प्रत्येकं चावर्त्तनत्वमित्युभयमप्युक्तं भवति तस्मात्पराक्कात् प्रेत्वर्य्यः प्रगमनशीला गावः प्रातः काले भवन्ति तस्मादभ्यावृत्तेः सद्भावाच्च प्रेत्य ग्रामार्थं गत्वा पुनरायन्ति सायंकाले, गोरपेक्षया प्रेत्वर्य्य इति स्त्रीलिङ्गता॥ १३॥

अथाज्यस्तोत्राणां परिश्रितप्रदेशसम्बन्धं प्रशंसति।

**परिश्रिते स्तुवन्ति तस्मात् परिगृहीता ग्राम्याः पशवः॥ १४॥**

आज्यैः परिश्रिते सदसि स्तुवन्ति इतरत् सुज्ञानं। अत सर्वत तत्तत् स्तुत्या तत्तद्विषयोऽवगन्तव्याः॥ १४॥

अथ बहिष्पवमानएवापक्रम्याह।

**अमुष्मै वा एतल्लोकाय स्तुवन्ति यद्बहिष्पवमा-**

**नꣳ सकृद्धिंकृताभिः पराचीभिः स्तुवन्ति सकृद्धीतो ऽसौ पराङ्लोकः ॥ १५ ॥**

बहिष्पवमानेन स्तुवन्तीति यत् एतत् अमुष्मै स्वर्गायैव स्तुवन्ति अत आदौ सकृद्धिंकृताभिः पराचीभिः स्तोत्रीयाभिः स्तुवन्ति इतो अस्माल्लोकादसौ स्वर्गो लोकः सकृद्धि नहिर्हि गम्यते पराङ् पराङ्मुखः खलु हिङ्कारस्य सकृत्त्वं स्वर्गस्य सकृत्त्वे प्रयोजकं तथा स्तोत्रीयाणां पराक्त्वं स्वर्गस्यास्माल्लोकात्परागृपत्वे ॥ १५ ॥

अथाज्यपृष्ठवैपरीत्यं दर्शयति।

**अस्मै वा एतल्लोकाय स्तुवन्ति यदाज्यैः पुनरभ्यावर्त्तꣳ स्तुवन्ति तस्मादयं लोकः पुनः पुनः प्रजायते ॥ १६ ॥**

यत् पुनरभ्यावर्त्तमाज्यैः स्तुवन्ति एतदस्मै भूर्ल्लोकाय स्तुवन्ति तस्मादभ्यावृत्त्या स्तुतत्वादयं लोकः पुनः पुनः प्रजायते अस्मिन् लोके प्राणिनः पुनः पुनर्ज्जायन्ते स्वर्गे यथा सकृदेव जायन्ते न तथात्रेत्यर्थः अस्य कर्म्मभूमित्वादित्यभिप्रायः अमुष्मा इति वाक्ये स्तुतिप्राधान्याद्बहिष्पवमानकर्म्मत्वेन निर्द्देशः अत्र तु स्तोत्रीयासमुदायस्य स्तुतिसाधनत्वविवक्षया आज्यैरिति करणत्वेन निर्द्देश इति विवेकः ॥ १६ ॥

बहिष्पवमानस्य अच्छासमुद्रमिन्दव इत्युत्तमायां अगन्नृतस्य योनिमित्यत्र य आकारोऽस्ति तं स्तौति ।

पराञ्चो वा एतेषां प्राणा भवन्तीत्याहुर्ये पराचीभिर्बहिष्पवमानीभिः स्तुवत इत्यावतीमुत्तमां गायेत्प्राणानाम्वृत्यै ॥ १७ ॥

बहिष्पवमानीभिः स्तुवत इत्याहुरिति सम्बन्धः स्तोत्रीयान्ते आ इत्युच्चारणेनावृत्तिः सूच्यते अतः प्राणाः पुनर्धृता भवन्ति ॥ १७ ॥

बहिष्पवमानस्योत्तमायां रथन्तरवर्णां गायेदिति सम्प्रयोजनमाह ।

च्यवन्ते वा एतेऽस्माल्लोकादित्याहुर्ये पराचीभिर्बहिष्पवमानीभिः स्तुवत इति रथन्तरवर्णामुत्तमाङ्गायेदियं वै रथन्तरमस्यामेव प्रतितिष्ठति ॥ १८ ॥

ये पराचीभिर्बहिष्पवमानीभिः स्तोत्रीयाभिः स्तुवते ते अस्माल्लोकात् च्यवन्त एवेत्याहुः कः परिहार इति उच्यते उत्तमां बहिष्पवमानस्यान्तिमां स्तोत्रीयां रथन्तरवर्णां रथन्तरोपेतवर्णां भकारां उद्गीथोपक्रमेण तद्वदिमां गायेत् तथा च सूत्रं रथन्तरवर्णायां चत्वार्य्यक्षराण्यभिष्टोभेद्भाभा इति शाण्डिल्योऽभइति धानञ्जय इतीति एवमपि कथं प्रच्युत्यभाव इति चेत्

तत्राह रथन्तरं साम तदिदं वै पृथिव्येव तथा सति तत् वर्ण-करणेनास्यामेव पृथिव्यां प्रतितिष्ठति ॥ १८ ॥

इति ताण्ड्यमहाब्राह्मणे षष्ठाध्यायस्य

अष्टमः खण्डः।

---

अथ नवमः खण्डः।

अथ स्तोत्राणां प्रतिपत् विचार आरभ्यते, तत्र ग्रामकामस्य प्रतिपदं विधत्ते।

**उपास्मै गायता नर इति ग्रामकामाय प्रतिपदं कुर्य्यात् ॥ १ ॥**

ग्रामार्थिने उपवतीं प्रतिपदं कुर्य्यात् प्रतिपदिति प्रथमतृच-मेव स एव स्तोत्रीय इति वोच्यते इयं प्रतिपत् यद्यपि नित्या-ग्निष्टोमप्रकरणे स्तोत्रीयासु समाम्नाता तथापि कामसम्बन्धात् तत्रैव ग्रामार्थापि भवति ततो न पृथक्कामभेदेन प्रयोगापेक्षास्ति तथा पयःसाधनके नित्याग्निहोत्रप्रयोगे पयसा पशुकामस्य जुहुयादिति पशुफलसाधनत्वं तद्वदिहापि। ननु प्रकरणादस्या-नित्यत्वावगतिः काम्यत्वं तु ग्रामकामाय प्रतिपदमिति वाक्येन अतः प्रकरणस्य दुर्बलत्वात् कथं नित्येन काम्यसिद्धिरिति, सत्यं तथापि नित्यप्रयोगार्थप्रतिपदन्तराभावेन गत्यभावाद्वाक्यादपि प्रकरणमेव प्रबलमिति मन्तव्यं, केचिदिदं तृचं काम्यप्रयोग एवेत्याहुः ॥ १ ॥

उक्तप्रतिपदि नर इत्यस्य सद्भावात् ग्रामकामायोचितेत्याह।

नरो वै देवानां ग्रामो ग्राममेवास्मा उपाकः ॥२॥

नरो मनुष्याः खलु देवानां ग्रामः अत नर इति यजमान-नरो ऋत्विज उच्यन्ते ग्राम इति निवासाश्रयः अतो देवानां यागनिष्पादनद्वारा नरो ग्रामस्तथा सति नरशब्दोपेतां उपास्मा इत्येतां प्रतिपदं युञ्जन् उद्गाता अस्मै यजमानाय ग्राममेवोपाकः उपानीयः कृतवान् भवति ॥ २ ॥

उपेति पदस्य परम्परया ग्रामार्थत्वादपि तत्कामस्येयमुचितेत्याह।

उप वा अन्नमन्नमेवास्मा उपाकः ॥ ३ ॥

अत्तुः समीपे नियतमन्नस्यावस्थानात्समीपवाचिनोपशब्देन समीपस्थमन्नमुच्यते तदपि ब्रीह्यादिरूपमन्नं ग्रामः समीप एव केदारादौ जायत इति वा पक्वमन्नं ग्रामावयवभूतेषु गृहेषु वर्त्तत इति वान्नमिति ग्रामः तथा च सति तद्युक्तप्रतिपत्प्रयोगेणास्मा अन्नमेव ग्राममेवोपाकः समीपे कृतवान् भवति ॥ ३ ॥

अथ प्रजाकामस्य प्रतिपदमाह।

उपोषु जातमप्तुरमिति प्रजाकामाय प्रतिपदं कुर्य्यात् ॥ ४ ॥

स्पष्टं ॥ ४ ॥

तत्र प्रजालिङ्गं दर्शयति ।

**उप वै प्रजा तां जातमित्येवाजीजनत् ॥ ५ ॥**

लोके जनयिता उप समीपे प्रजानां प्रजां पुत्रादिरूपां जातमित्येवं खल्वजीजनदुत्पादयति तस्माज्जातशब्दोपेता प्रजाकामस्योचितेत्यर्थः उपास्मै इति प्रतिपन्नित्यकाम्योभयार्थमित्युक्तं उपोषु जातमप्तुरमित्यादीनां स्पष्टं तत्काम्यप्रयोगार्थत्वं यथा च कल्पकारः उपोषु जातमिति प्रतिपत्तृचं प्रकृतिज्योतिष्टोमादन्यस्मिन् प्रजाकामप्रयोगे विदधाति प्रजाकामस्योपोषु जातमप्तुरमिति स्तोतीय इत्यादिना समानमितरज्ज्योतिष्टोमेनेत्यन्तेन एवमुत्तरासामपि काम्ये प्रतिपदां कल्पोऽवगन्तव्यः ॥५॥

अथ पश्वादिभेषजकामप्रयोगे प्रतिपदमाह ।

**सनः पवस्व शङ्गव इति प्रतिपदं कुर्यात् ॥ ६ ॥**

स्पष्टं ॥ ६ ॥

अत्र पशुभेषजस्याद्यः पाद उचित इत्याह ।

**याꣳ समां महादेवः पशून् हन्यात्सनः पवस्व शङ्गव इति चतुष्पदे भेषजं करोति ॥ ७ ॥**

यां समां यस्मिन् संवत्सरे सनः पवस्वेति पादे गवादिकामाय भेषजं करोति तस्मिन् हि पादे सोमं सम्बोध्य गवेशं पवस्वेति प्रार्थ्यमानत्वात् ॥ ७ ॥

अथ द्वितीयपादो द्विपदामेकशफानाञ्च भेषजप्रयोगे युक्त इत्याह।

शन्नायेति द्विपदे शमर्व्वत इत्येकशफाय ॥८॥

द्विपात् मनुष्यो जनः अर्व्वाश्च एकशफः ताभ्यां भेषजं करोतीति ॥ ८ ॥

तृतीयपादोऽपि पशुभेषजायोचित इत्याह।

विषेण व ताꣳ समामोषधयोक्ता भवन्ति याꣳ समाम्महादेवः पशून् हन्ति यच्छꣳ राजन्नोषधीभ्य इत्याहौषधीरेवास्मै स्वदयत्युभय्योऽस्मै स्वदिताः पच्यन्तेऽकृष्टपच्याश्च कृष्टपच्याश्च ॥ ६ ॥

यस्मिन् संवत्सरे महादेवः पशून् हन्ति तां समां तस्मिन् संवत्सरे सर्वा ओषधयो विषेण युक्ता भवन्ति यच्छं राजन् ओषधीभ्य इत्याहोद्गाता तदस्मै यजमानाय ओषधीरेव स्वदयति स्वादं करोति उभय्य उभयविधाः अकृष्टपच्याश्च कृष्टपच्याश्च कर्षणादिरहिता नीवारादयः तद्युक्ता व्रीह्यादयस्तास्मै यजमानाय स्वदिताः स्वादुभवाः पच्यन्ते स्वयमेव परिणता भवन्ति तासां लक्षणात् पशवः सर्व्वे निरुजा भवन्तीत्यर्थः शंराजन्निति पाठे हे राजन् सोम ओषधीभ्यः शम्भवस्वेति

प्रार्थनाप्रतीतेरोषधीनां निर्व्विषत्वात् तद्भक्षकाणां पशूनामपि भेषजप्राप्तिरुचितैव ॥ ९ ॥

अथ श्रैष्ठ्यकामाय प्रयोगे प्रतिपदमाह ।

**पवस्व वाचो अग्रिय इति प्रतिपदं कुर्य्याद्यं कामयेत समानानाꣳ श्रेष्ठः स्यादिति ॥ १० ॥**

स्पष्टोऽर्थः ॥ १० ॥

तस्यामग्रियशब्दसद्भावादेषा तस्योचितेत्याह ।

**पवस्व वाचो अग्रिय इत्यग्रमेवैनं परिणयति ॥११॥**

यतः पवस्व वाचो अग्रिय इति भागे अग्रिय इत्यस्ति अतस्तत्प्रयोगेण एनं यजमानं अग्रं पुरोभागं परिणयति परिगमयति ॥ ११ ॥

अग्रपरिणयने श्रियां कः सम्बन्ध इति तत्राह ।

**श्रीर्व्वै वाचोऽग्रꣳ श्रियवामेस्मिन् दधाति ॥१२॥**

वाचः अभिवदनस्य यदग्रं पुरोभागः स श्रीर्व्वै श्रीरेव खलु बहूनाम्मध्ये यस्य वाक् प्रथमं प्रवृत्ता स शोभते तथा सति एतत् पाठेनास्मिन्यजमाने श्रियमेव दधाति ॥ १२ ॥

बह्वर्थप्रयोगे प्रतिपदमाह ।

एते असृग्रमिन्दव इति बहुभ्यः प्रतिपदं कुर्य्यात् ॥ १३ ॥

बहवो दीक्षिता एकाहाहीनैर्य्यजन्ते तत्र एते असृग्रमिति तृचं प्रतिपदं कुर्य्यात् ॥ १३ ॥

अथ बह्वर्थप्रयोजनयोग्यतामाह ।

एत इति सर्वानेवैनानृद्धे भूत्या अभिवदति ॥१४॥

एते इति बहुवचनान्तेन सर्व्वानेवैनान् यजमानान् अभिवदति ऋद्धौ तस्य व्याख्यानं भूत्या इति। ननु एत इतीन्दव इत्यस्य विशेषणं तच्च प्रकृतान् सोमरसान् वक्ति कथं यजमानानभिवदतीति उच्यते ब्राह्मणेषु श्रुतिसामान्यमात्रेण सर्व्वत्र स्तुतिप्रवृत्तेः ॥ १४ ॥

अस्याः प्रतिपदः प्रजापतेः सृष्टिसाधनत्वेन प्राशस्त्यमाह ।

एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानिन्दव इति पितॄंस्तिरःपवित्र इति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रमभि सौभगेत्यन्याः प्रजाः ॥ १५ ॥

एत इत्यनेन पदेन प्रथमेन बुद्धिस्थेन सृष्ट्यादौ प्रजापतिः पूर्वसृष्ट्यनुरूपेण देवानसृजत तथा असृग्रमिति पदेन मनु-

ष्यान् इन्दव इति पितॄन् एतेषां पदानां देवादिसृष्ट्यनुकूलत्वं उत्तरस्मिन् ब्राह्मणे वक्ष्यामः, तिरःपवित्रमिति पदेन ग्रहानसृजत तिरःपवित्रेण शोधितेन रसेन ग्रहा गृह्यन्ते अत एतद्धि सृष्ट्यनुकूलं आशव इति पदेन स्तोत्रमसृजत अश्नुवते व्याप्नुवन्ति स्तुत्या देवानिति स्तोत्राण्याशवः तथा विश्वानीत्यनेन शस्त्रमसृजत विशन्ति देवानां हृदयानीति विश्वानि शस्त्राणि अभिसौभगेत्यन्याः प्रजा असृजत सौभगानि धनानि अभि उद्दिश्येति देवमनुष्यादीनां भोगभूता अन्या गोविलक्षणाः प्रजा असृजत ॥ १५ ॥

अग्रैत इति पदस्य सृष्टौ संगतिरित्याह ।

**यदेत इति तस्माद्यावन्त एवाग्रे देवा स्तावन्त इदानीं ॥ १६ ॥**

ननु एतच्छब्दः सर्व्वनामवाची सन्निहितपरामर्शकः देवास्त्वसन्तः विप्रकृष्टाः अथ कथमेतच्छब्देन ते परामृश्यन्त इति नायं दोषः न केवलं पुरोवर्त्तिवस्तुसन्निधिरेव सन्निधिः किन्तु बुद्धिसन्निधिरपि सन्निधिरेव तस्माद्बुद्ध्या सन्निहितत्वादेत इति पदेन परामृष्टव्या एव अतो यद्यस्मात्प्रजापतिना देवाः एत इति पदेनालोचितास्तस्माद्यावन्त एवाग्रे सृष्ट्यादौ देवाः स्थापिताः सृष्टा इत्यर्थस्तावन्त एवेदानीमपि न पुनर्म्मनुष्या एव तेभ्योऽन्ये सृज्यन्ते ॥ १६ ॥

तर्हि इदानीमपि सृष्ट्यभावे कथन्तेषां वर्त्तमानभाविकालयोः सम्बन्ध इति तत्राह।

सर्व्वान्ऋद्धिमार्ध्नुवꣳ स्थितेव ह्येषा व्याहृतिः ॥१७॥

उ शब्दो वैलक्षण्यार्थः उ किन्तु सर्व्वान् सर्वकालसम्बन्धिनीं ऋद्धिं आयुरादिलक्षणमार्ध्नुवन् समृद्धा अभवन् अतः पूर्व्वसृष्टा एव सर्व्वसमृद्धा नित्या वर्त्तन्त इत्यर्थः उक्तार्थस्योपपत्तिरुच्यते स्थितेव हीत्यादिना हि यस्मादेषा देवसृष्टिसाधना व्याहृतिः एत इत्युक्तिः स्थितेव वर्त्तते एत इत्यस्यार्थपरामर्शात् सर्वदा सन्निहिता एव हि प्रतीयन्ते ॥ १७ ॥

अथासृग्रमिति पदं मनुष्यसृष्टौ सङ्गतमित्याह।

यदसृग्रमिति तस्मान्मनुष्याः श्वः श्वः सृज्यन्ते ॥ १८ ॥

यद्यस्मादसृग्रमिति पदं सृष्ट्यभिधायकं तस्मान्मनुष्याः श्वः श्वः परस्मिन्नहनीत्येवं सर्व्वदा सृज्जन्ते ॥ १८ ॥

इन्दव इति पदं पितृसृष्टौ सङ्गतमित्याह।

यदिन्दव इतीन्दव इव हि पितरः ॥ १९ ॥

इन्दव इति पदं स्मृत्वा पितरोऽसृज्यन्त तस्मादिन्दव इव हि सोमा इव खलु पितरो भवन्ति ॥ १९ ॥

कथं तेषां सोमसाम्यं तत्राह।

**मनइव॥ २०॥**

मनसा हि केवलं सृज्यन्ते न चक्षुर्विषया भवन्ति अतो मन इवेत्युच्यते सोमनामाप्यन्नविशेषरूपत्वादन्नमयं हि सौम्य मन इति श्रुतेर्मनःसम्बन्धः यद्वा वल्यात्मकस्य सोमस्याधिदैवसोमेन चन्द्रेणाभेदात् तस्य च मनस उत्पन्नत्वात् मनःसम्बन्धः तस्मादिन्दव इति पदं पितृसृष्टौ सङ्गतमित्यर्थः॥ २०॥

उक्तार्थानुसन्धानपूर्व्वकञ्चैत इत्यस्याः प्रतिपत्करणं समृद्धिसाधनमित्याह।

**यान्ताः प्रजाः सृष्टा ऋद्धिमार्ध्नुवꣳस्तामृध्नुवन्ति येषामेवं विद्वानेतां प्रतिपदं करोति॥ २१॥**

ताः प्रजापतिना सृष्टा देवादिरूपाः प्रजा यां ऋद्धिं समृद्धिं आर्ध्नुवन् प्राप्ताः तां समृद्धिं ऋध्नुवन्ति, के प्राप्नुवन्ति तान् दर्शयति येषां यजमानानामेवं विद्वान् उक्तसृष्टिसाधनत्वं जानन् एते असृग्रमित्येतां प्रतिपदं करोति॥ २१॥

एवं कृत्स्नामृचं प्रशस्याद्यं पादमाख्यायिकामुखेन प्रशंसति।

**छन्दाꣳसि वै सोममाहरꣳस्तं गन्धर्व्वोविश्वावसुः पर्य्यमुष्णात्तेनापः प्राविशत्तं देवता अन्वैच्छꣳ-**

स्तं विष्णुरप्स्वपर्य्यपश्यत् स व्यकाङ्क्षदयन्नू ३ ना ३ इति तं पदा प्राष्फुरत्तस्मात् पृथगिन्दवोऽसृज्यन्त स देवताभ्योऽभितस्तिष्ठन्तोऽब्र्य एते असृग्रमिन्दव इति प्राब्रवीद्बहिष्पवमानेन वै यज्ञः सृज्यते यदेते असृग्रमिन्दव इति प्रस्तौति यज्ञमेव तत् सृष्टन्देवताभ्यः प्राह ॥ २२ ॥

पूर्व्वं गायत्र्यादीनि छन्दांसि द्युलोकात्सोममाहरन् तदाह्रियमाणं सोमं गन्धर्वो विश्वावसुः पर्य्यमुष्णात् परिमुषितवान् तेन परिमुषितेन सोमेनापः प्राविशत् तं प्रविष्टं देवताः सर्वाः अन्वैच्छन् अन्वेष्टुं तं विष्णुरप्सु पर्य्यपश्यत् परिदृष्टवान् स विष्णुर्व्यकाङ्क्षत् विचिकित्सत् कथमिति उच्यते अयन्नू २ ना २ इति न्विति वितर्के अयं सोमापहर्त्ता भवेन्नोवेति ततः सतमवगत्य तं पदा स्वेन प्रास्फुरत् प्रावधीत् तस्मात् पीड़ितात् गन्धर्व्वात् पृथक् प्रत्येकमिदवोऽसृज्यन्त उद्गाता अभवत् स विष्णुः सृष्टान् सोमान् अभितस्तिष्ठन्तीति यो देवताभ्यः प्राब्रवीत् किमिति एते असृग्रमिन्दव इति एते सोमाः सृज्यन्त इति तस्यार्थः ततः किमिति तत्राह यज्ञोऽग्निष्टोमो बहिष्पवमानेन वै खलु सृज्यतेऽस्य प्राथम्यात्तद्व्यतिरेकेण यज्ञाभावात्तथा सति यदेते असृग्रमिति पदं प्रस्तौति प्रस्तावभाग-

त्वेन गायति तत्तेन यज्ञमेव सृष्टं देवताभ्यः प्राहोद्गाता अतोऽवश्यमेषा प्रतिपत् कर्त्तव्येत्यभिप्रायः ॥ २२ ॥

अस्य प्रतिपत्तृचस्यान्त्यपादः यदिडापदं तत्प्रशंसति।

**व्यृद्धं वा एतदपशव्यं यत्प्रातःसवनमनिडꣳ हि यदिडामस्मभ्यꣳ संयतमित्याह प्रातःसवनमेव तदिडावत्पशुमत्करोति ॥ २३ ॥**

प्रातःसवनमिति यदस्ति एतत् व्यृद्धं वै असमृद्धं खलु अपशव्यं पशुभ्योऽहितं पशुविरोधि तदपि कुतः अनिडं हि इडा शब्दो निधनादिषु प्रातःसवने नास्ति तथा सति यदिडामस्मभ्यं संयतमप्याहोद्गाता तेन वचनेन प्रातःसवनमिडावत् कृतमेव ततश्च तत् पशुमत्करोति। इडेति गो नाम इडेरन्ते इत इत्युपक्रम्य एतानि गोनामानीति श्रुतत्वात् ॥ २३ ॥

अथ समूहार्थप्रतिपदमाह।

**दविद्युतत्यारुचेति व्राताय प्रतिपदं कुर्य्यात् ॥२४॥**

स्पष्टोऽर्थः। ननु एते असृग्रमिति बन्धुभ्यः प्रतिपदं कुर्य्यादिति विहितेन वा अलं किमर्थं पुनर्विधानमिति नैषदोषः बन्धुभ्य इत्यत्रासखीनां यजमानानां प्रतिपद्विधानात्, अत्र तु व्रातायेति सखीनामेव यजमानानां प्रतिपद्विधानात्, न हि व्रातशब्दबन्धुशब्दौ समानार्थौ बन्धुशब्दो यजमानबन्धुत्वमा-

अमपेक्षते व्रातशब्दस्तु परस्परसखिभूतयजमानसमुदायं अतो न पुनरुक्तिस्तथा च कल्पकारः पूर्व्वस्मिन् प्रयोगेषु बहूनाम-सखीनां यजमानानामेते अस्तोममिति सस्मार अत्र तु सखीनां यजमानानां दविद्युतत्यारुचेति स्तोत्रीय इति ॥ २४ ॥

उक्तप्रतिपत् व्रातप्रयोगे सङ्गतेत्याह ।

**दविद्युतत्यारुचेति वै गायत्र्या रूपं परिष्टोभन्त्येति त्रिष्टुभः क्रपेत्यनुष्टुभः सोमाः शुक्रा गवाशिर इति जगत्याः सर्वेषां वा एषा छन्दसाꣳ रूपं छन्दाꣳसीव खलु वै व्रातोपदेशा प्रतिपद्भवति स्वेनैवैनाꣳ स्तद्रू-पेण समर्द्धयति ॥ २५ ॥**

दविद्युतत्येति पादे दीप्तिवाचिपदद्वयं श्रूयते दीप्तिश्च तेजश्च तेजो वै ब्रह्मवर्च्चसं गायत्रीति श्रुतेः । अयं पादो गा-यत्र्याः रूपं परिष्टोभन्त्येत्यत्र स्तोभशब्दः श्रूयते त्रिष्टुभ्यपि स्तोभ-शब्दः अतो अयं भागस्त्रिष्टुभोरूपं क्रपेति वाङ्नाम वागनु-ष्टुबिति श्रुतेरेतत्पादमनुष्टुभो रूपं सोमाः शुक्रा इति पादे गोशब्दः श्रूयते जगत्यामपि गच्छतीति जगतीति व्युत्पत्तिः अत उभयत्र गमिधातुसाम्यादयं पादो जगत्या रूपं एवमेषा प्रति-पत् सर्वेषां हि छन्दसां रूपं छन्दांसीव उक्तानि चत्वारि छन्दां-स्येव खलु व्रातशब्दः समुदायवाची अत्रापि छन्दःसमुदायोऽस्ति

एवं सति यदेषा प्रतिपद्भवति एतान् यजमानान् तेनैव स्वेन रूपेण समर्द्धयति एषा प्रतिपत् स्वस्मिन् गायत्र्यादिछन्दोद्वारै-र्दीप्त्यादिरूपैः समृद्धान् करोतीत्यर्थः ॥ २५ ॥

पुनरेषा समृद्धिसाधनत्वेन व्रातयोग्येत्याह।

**हीना वा एत इन्द्रियेण वीर्य्येण यद्व्रात इन्द्रियं वीर्य्यं छन्दाꣳसीन्द्रियेणैवैनान्वीर्य्येण समर्द्धयति॥२६**

यत् यो व्रातोऽस्मिन् एते व्रातावयवभूताः सखायो यजमाना इन्द्रियवीर्य्याभ्यां हीना विहीना वै व्रातात्मकत्वादेव असमर्थाः खलु लोके परस्परसङ्घातानपेक्षन्ते छन्दांसि तु इन्द्रियवीर्य्यं तत्समत्वादेषा सर्वछन्दोरूपा प्रतिपदेतान् यजमानान् इन्द्रि-येण वीर्य्येण च समर्द्धयति ॥ २६ ॥

इति ताण्ड्यमहाब्राह्मणे षष्ठाध्यायस्य

नवमः खण्डः।

---

अथ दशमः खण्डः।

अथ दीक्षितानां मध्ये यः कश्चिद्दीक्षितः प्रमीयते एतत्तेषां प्रयोगे प्रतिपदमाह।

**अग्न आयूꣳषि पवस इति प्रतिपदं कुर्य्याद्येषां दीक्षितानां प्रमीयेत॥१॥**

स्पष्टम् ॥ १ ॥

अस्य तद्योग्यतामाह ।

**अपूता इव वा एते येषां दीक्षितानां प्रमीयते यदेषाग्निपावमानी प्रतिपद्भवत्यग्निरेवैनान्निष्टपति पवमानः पुनाति ॥ २ ॥**

येषां दीक्षितानां मध्ये यः कश्चित्प्रमीयते स एते सर्वेऽप्यपूता इव वै अपूता एव खलु सहाधिकारात्तथा सति यत् यद्येषाग्निपावमानी अग्निपावमानीदेवताका अग्न आयूंषीत्येषा प्रतिपद्भवति तदाग्निरेव एनान् यजमानान्निष्टपति निःशेषेण सन्तापयत्युद्यापनार्थं तान्निष्टप्तान् पवमानो देवः पुनाति शुद्धान् करोति ॥ २ ॥

तत्र आयुःशब्दोऽपि तेषामुचित इत्याह ।

**यदायूंषीत्याह यएव जीवन्ति तेष्वायुर्दधाति ॥३॥**

यद्यस्मादायूंषीति प्रत्याहोद्गाता अतो यएव जीवन्ति यजमानास्ते सर्वेष्वपि यजमानेष्वायुः शतसंवत्सरलक्षणं दधाति ॥३॥

तत्पदपाठेन दीर्घरोगिणः प्रयोगे प्रतिपदमाह ।

**आनो मित्रावरुणेति ज्योगामयाविने प्रतिपदं कुर्य्यात् ॥ ४ ॥**

स्पष्टोऽर्थः ॥ ४ ॥

अस्याः तद्योग्यतामाह ।

अपक्रान्तौ वा एतस्य प्राणापानौ यस्य ज्योगामयति प्राणापानौ मित्रावरुणौ प्राणापानावेवास्मिन्दधाति ॥ ५ ॥

यस्य यजमानस्य ज्योगामयति दीर्घरोगो भवति एतस्य प्राणापानावपक्रान्तौ प्राणापानयोर्हि साम्ये आरोग्यं भवति तथा सति यदेषा मैत्रावरुणी प्रतिपद्भवति तेन प्राणापानावेवास्मिन् आमयाविनि दधाति मित्रावरुणयोः प्राणापानयोश्च कः सम्बन्ध इत्युच्यते मैत्रमहर्वारुणी रात्रिरिति श्रुत्यन्तरात् मित्रावरुणयोरहोरात्ररूपत्वं अहरेव प्राणो रात्रिरपान इति श्रुत्यन्तरात्तयोः प्राणापानात्मकत्वं एवं परम्परया मित्रावरुणौ प्राणापानौ अतस्तद्युक्ता प्रतिपत्तस्योचितेत्यर्थः ॥ ५ ॥

अनृताभिशस्तस्य प्रतिपदमाह ।

अपघ्नन् पवते मृधोपसोमो अराव्ण इत्यनृतमभिशस्यमानाय प्रतिपदं कुर्य्यात् ॥ ६ ॥

स्पष्टं ॥ ६ ॥

कथमनेन स्तोत्रेण यजमानस्याभिशंसनमपहतं भवतीत्यताह ।

अरावाणो वा एते येऽनृतमभिशꣳसन्ति तानेवा-स्मादपहन्ति ॥ ७ ॥

अनृताभिशंसका एवारावाणो अरावतः अरावूः अपघ्नन् पवते मधोपसोम इति श्रूयमाणप्रतिपत्तित्वं प्रयुञ्जान उद्गाता अस्माद्यजमानात् तानेवारातीनेवापहन्ति ॥ ७ ॥

तृतीयपादोऽपि तस्यानुगुण इत्याह ।

गच्छन्निन्द्रस्य निष्कृतमिति पूतमेवैनं यज्ञिय-मिन्द्रस्य निष्कृतं गमयति ॥ ८ ॥

अस्मिन् पादे इन्द्रस्य निष्कृतं संस्कृतस्थानं गच्छन् परावत इति श्रूयते अतोऽभिशंसनात् पूतं यज्ञियं यज्ञार्हं एनं यजमाननमेव निष्कृतमिन्द्रस्य स्थानं गमयत्युद्गाता ॥ ८ ॥

अथ क्षत्रियस्य प्रयोगे प्रतिपदमाह ।

वृषा पवस्व धारयेति राजन्याय प्रतिपदं कुर्य्यात् वृषा वै राजन्यो वृषाणमेवैनं करोति ॥ ९ ॥

राजन्याय अभिषिक्तक्षत्रियाय यजमानाय अत वृषेति श्रूयते राजन्योऽपि अभिमतवर्षणाद्वृषैव अत एतत्प्रयोगेनैनं वृषाणं करोति ॥ ९ ॥

अथ द्वितीयपादस्यानुकूलतामाह ।

**मरुत्वते च मत्सर इति मरुतो वै देवानां विशो विशमेवास्मा अनु नियुनक्त्यनपक्रामुकास्माद्विड्भवति॥ १०॥**

अस्मिन् पादे मरुच्छब्दः श्रूयते मरुतश्च देवानां विशः तथा सति तत् पाठेन विशमेवास्मै यजमानायानुनियुनक्ति अनुक्रमेण नियोजयति तेनास्माद्यजमानाद्विट् जातिरनपक्रामुका अनपक्रमणशीला भवति॥ १०॥

तृतीयपादस्यानुकूलतामाह।

**विश्वा दधान ओजसेत्योजसैवास्मै वीर्य्येण विशं परस्तात्परिगृह्णात्यनपक्रामुकास्माद्विड्भवति॥११॥**

अत्रौजसेति पदं भवति तद्वीर्य्यमभिधत्ते अतस्तत्पाठेनोजसैव वीर्य्येण विशमस्मै यजमानाय पुरस्तात्परिगृह्णाति गतमन्यत्, पूर्वमनपक्रमणमभिमुखप्राप्त्यर्थमत्र तु प्राप्ताया विशो परित्यागार्थमित्यनपक्रामयोर्भेदः॥ ११॥

अथ राष्ट्रकामयमानस्य प्रतिपदमाह।

**पवस्वेन्दो वृषासुत इति प्रतिपदं कुर्य्याद्यः कामयेत जने म ऋध्येतेति॥ १२॥**

जने जनपदे मे मह्यं ऋध्येत ऋद्धिः स्यादिति सुज्ञानमन्यत्॥ १२॥

किमत्र लिङ्गन्तदाह।

**क्षधीनो यशसो जनइति जनतायामेवास्मा ऋध्यते॥ १३॥**

अत्र जने जनसम्भूहतो यशसो यशः क्षधीति श्रूयते एतत् समृद्धिः लिङ्गं तथा सति जनतायां जनसमूहे असौ यजमानाय ऋध्यते समृद्धिर्भवति ॥ १३ ॥

द्वियजमानके प्रयोगे प्रतिपदमाह।

**युवꣳ हि स्थः स्वः पती इति द्वाभ्यां प्रतिपदं कुर्य्यात्समावद्भाजावेवैनौ यज्ञस्य करोत्युनौ यज्ञयशसेनार्पयति॥ १४॥**

अत्रेन्द्रः सोमश्चोतौ श्रूयेते अत एतत्प्रतिपत्करणेन यज्ञस्य समावद्भाजौ समानफलभागिनौ करोति यजमानावुद्गाता किञ्चोभौ यज्ञयशसेन यज्ञोपि स्तूयते तेन यशसा स्वर्गलक्षणेनार्पयति तत्र स्वर्गतीति श्रुतत्वात् इत्यभिप्रायः ॥ १४ ॥

अथ वृष्टिकामाय प्रतिपदमाह।

**प्रास्य धारा अक्षरन्निति वृष्टिकामाय प्रतिपदं कुर्य्यात्॥ १५॥**

स्पष्टं ॥ १५ ॥

अत्र वृष्टिलिङ्गं दर्शयति ।

**प्रास्य धारा अक्षरन्निति दिवो वृष्टिञ्च्यावयति वृष्णः सुतस्यौजस इत्यन्तरिक्षात् ॥ १६ ॥**

प्रास्येति पादे धाराक्षरणलिङ्गात् द्युलोकसकाशाद्वृष्टिञ्च्यावयत्युद्गाता द्वितीयपादे वृष्णइति वर्षणलिङ्गात् द्युलोकादागतां वृष्टिमन्तरिक्षात् च्यावयति ॥ १६ ॥

तृतीयपादे स्थितिहेतुरित्याह ।

**देवाꣳ अनु प्रभूषत इत्यस्मिन् लोके प्रतिष्ठापयति ॥ १७ ॥**

अत्र पादे देवां अनु प्रभूषत इति वा प्रभवति इति वा सोमस्य कीर्त्तनमस्ति तच्च देवानां पूजनं भूर्लोके एकोचितमिति अस्मिँल्लोके प्रतिष्ठायुक्तं ॥ १७ ॥

अथ पुनरोजस इति पदं वृष्टिलिङ्गमित्याह ।

**ओजसा वा एतद्वीर्य्येण प्रदीयते यदप्रत्तं भवति यद्वृष्णः सुतस्यौजस इत्याहौजसैवास्मै वीर्य्येण दिवो वृष्टिं प्रयच्छति ॥ १८ ॥**

लोके यदप्रत्तं आदायाप्रदत्तं भवति धनं एतदोजसा वीर्य्येण खलु प्रदीयते ओजसेत्यस्य व्याख्यानं वीर्य्येणेति

तस्माद्यद्दृष्ण: सुतस्यौजस इत्याद्योद्गाता तेनौजसैव वीर्य्येण स्व-प्रयोगे सामर्थ्यादस्मै यजमानाय दिवो वृष्टिं प्रयच्छति ॥ १८ ॥

वैरिगोकामस्य प्रयोगे प्रतिपदमाह।

**तया पवस्व धारया यया गाव इहागमञ्जन्यास उप नो गृहमिति प्रतिपदं कुर्य्याद्यः कामयेतोप मा जन्या गावो नमेयुर्विन्देत मे जन्यागा राष्ट्रमिति यदेषा प्रतिपद्भवत्युपैनञ्जन्यागावो नमन्ति विन्दतेऽस्य जन्यागा राष्ट्रं ॥ १९ ॥**

उक्तं कृत्स्नमपि फलं कृत्स्नयैवर्चा प्रतीयत इत्यभिप्रायेण कृत्स्नात्मक् प्रतीकत्वेनोपात्ता अत्र जनशब्दः शत्रुजनसंवादी जन्यास्तत्सम्बन्धिनो गावो मे नमेयुः प्राप्नुयुरिति उपनयता गाः मे राष्ट्रं विन्देतेति च यो यजमानः कामयेत तस्मै तया पवस्वेत्येतत्प्रतिपदं कुर्य्यात् अत्र हि जन्या गाव इह नो गृह-मागमन्निति श्रूयते जन्यस्य कृत्स्नमपि राष्ट्रं गृहं अत उक्त-फलसिद्धौ एतल्लिङ्गं एवं सति यद्यत्नस्य यजमानस्यैषा प्रतिप-द्भवति उपैनमित्यादिसिद्धप्रायं इति।

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १६ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे षष्ठाध्यायस्य दशमः खण्डः ।

षष्ठाध्यायः समाप्तिमगमत् ।

---

# सप्तमोऽध्यायः ।

अथ प्रथमः खण्डः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥
अग्निष्टोमविधिस्तोमस्तुतिप्रासङ्गिकाः परे ।
उक्ताः प्रतिपदः काम्याः स्युर्बहिष्पवमानगाः ॥

अथ बहिष्पवमानादीनां सामानि स्तुतिप्रकारांश्च विधीयन्ते, गायत्र्यां प्रातःसवने स्तोत्राणीति स्थितं तस्य गायत्रसाम्नः स्तुतिप्रकारं संस्तुतिक्रमाह ।

इमे वै लोका गायत्रं त्र्यावृद्गेयन्त्रयो ह्यीमे लोका यत्त्र्यावृद्गायत्येभिरेवैनं लोकैः सम्मिमीते ॥ १ ॥

यद्गायत्रं सामास्ति तदिमे लोकाः वै भूरादित्रयो लोकाः खलु अतस्त्र्यावृद्गेयं आवृदिति गानक्रियाविशेषणं आवृतो गीतिखण्डाः तिस्र आवृतो यस्मिन् तत्त्र्यावृत्तद्यथा भवति तथा गेयं तस्य आवृत्प्रकारं सूत्रकार आह पावमानायेन्दावा २ इत्येकावृदभिदेवां इया इत्यपरा चात इत्यपरा इति एतत्त्र्यावृत्त्वं प्रस्तावव्यतिरिक्तभागाभिप्रायं गायत्रस्य लोक-

सामापेच्य त्र्याहत्त्वं विहितं तेषां कथं त्रैविध्यमिति तदुच्यते त्रयो ह्रीमे इत्यादिना एवं सति यद्यदि त्र्याहन्नायति गायत्रं एभिस्त्रिभिर्लोकैः एतत् यजमानं सम्मिमीते समानं क्तवान् भवति ॥ १ ॥

अथोक्ते सामनि अवनर्द्दनं विधत्ते ।

## द्विरवनर्द्देद्धिं कुर्य्यात् तृतीयं ॥ २ ॥

द्विरवनर्द्दनं कुर्य्यात् हिङ्कुर्य्यादुत्तमायामावृतः पूर्व्वं तेन तृतीयमेवावनर्द्धं भवति अवनर्द्दनस्वरूपं सूत्रकारो बहुधा विकल्पितवान् यद्यथा पूर्वा वावनर्द्दा इति धानञ्जय्य इति अस्यायमर्थः आवर्गौ इति खण्डौ त्र्यवनर्द्दौ अवनर्द्दनीयौ अव-स्वरेदित्यर्थः पूर्वखण्डयोरन्त्याक्षरमुच्चैःकृत्वा नीचैरवस्थापये-दित्यर्थः तथैव हि सावित्र्यं साम गीयते मध्यमायामावृति द्वौ स्तोभौ कुर्य्यात्तावत्रनर्द्धाविति गौतमः अस्यायमर्थः मध्यमे गीति-भागे तदन्त्यस्वरसदृशौ द्वौ स्तोभौ कुर्य्यात् तौ च द्विरवनर्द्दनी-याविति गौतम इति तावेव गानेन दर्शयति अभिदेवां इया १२१२ इति अत्र द्वावाकारावन्त्याक्षरसदृशौ प्रत्येकमवनर्द्दिता-वित्यर्थः सर्वत्रौकाराविति के स्तोभधर्म्मत्वादिति सर्व्वास्वपि ऋक्षु सावित्रीयोनिं दृष्ट्वा ओकारावेव मध्यमगीतिखण्डे स्तोभौ कुर्य्यात् न पुनस्तदन्त्याक्षरसदृशावित्यर्थः कुतः स्तोभधर्म्मत्वात् योऽभिदृष्टः स्तोभोऽन्यत्र प्रवर्त्तत इति स्तोभानां धर्मोऽयं तदेत-न्निराकरोति यथर्क्षमाचार्य्यास्तदृक्सदृशदृष्टान्तात् स्तोभा-

नैकान्त्याच्चेति अस्यायमर्थः मध्यमे गीतिखण्डे यादृशमन्त्यमार्चिकाक्षरं तत्सदृशौ स्तोभौ कार्य्यावित्याचार्य्याः कुतस्तत्रैवर्कशलिङ्गयोरार्चिकाक्षररूपयोरेव स्तोभयोर्योनौ दर्शनात् तथाहि धियोयोनः प्रचोदयादिति मध्यमे गीतिखण्डे षष्ठः स्वरऽँकारोऽन्त्यः तत्सदृशावोकारावेव तत्र स्तोभौ विवक्षितौ तत्रार्थादोकारत्वं संजातं अतः सर्वत्रान्त्याक्षरसदृशावेव स्तोभौ कुर्य्यादिति किञ्च सावित्र्यामोकारयोर्न स्तोभत्वैकान्त्यमस्ति एकान्तेन स्तोभाविति निश्चेतुन्न शक्यावित्यर्थः त्रिरवनर्द्देदिति ऋगक्षरस्यैवावनर्द्दनविधानोपपत्तेर्न स्तोभत्वे किञ्चित् प्रमाणमस्तीति यावत् तेन स्तोभधर्मत्वादित्यसिद्धो हेतुरित्यभिप्रायः ॥ २ ॥

अथोक्तवैलक्षण्येन हिंकाराभावेन मुख्यावनर्दतयकरणे दोषमाह ।

यत्त्रिरवनर्दत्यति तद्गायत्रꣳ रेचयति ॥ ३ ॥

यत् यदि हिंकारेण विनैव त्रिरवनर्दति तेन गायत्रमतिरेचयति द्वौ स्तोभौ कुर्य्यात्तावावनर्द्दाविति पक्षस्य नूनं ब्राह्मणमनुकूलं दृश्यत इति बोद्धव्यं ॥ ३ ॥

गायत्रसाम्नः प्रतिहारो नास्ति हिंकार एव तत्स्थानीयः इत्याह ।

यो वै गायत्रेणाप्रतिहृतेनोद्गायत्यप्रतिष्ठानो भवति हिंकारो वै गायत्रस्य प्रतिहारः ॥ ४ ॥

यो वै गायत्रेण प्रतिहाररहितेनोद्गायति सोऽप्रतिष्ठानः प्रतिष्ठारहितो भवति ॥ ४ ॥

अतो हिंकारस्तत्स्थानीयो द्रष्टव्यस्तस्य मानसत्वमाह ।

## स मनसा ध्येयः प्रतिहृतेन गायत्रेणोद्गायति प्रतितिष्ठति ॥ ५ ॥

स हिंकारो मनसा ध्येयः उच्चारणीयः प्रतिहर्त्रा शेषं स्पष्टं । अत्र सूत्रं ऊर्द्ध्वं रेतस्याया ह्यचरं शिष्ट्वा हिङ्कारं ब्रूयाद्-ब्रुम् आर इति तं रेतस्यायां प्रतिहर्त्ता मनसा ध्यायेन्न परास्विति गौतमः परास्वेवेति धानञ्जय्यशाण्डिल्याविति ऊर्द्ध्वं रेतस्याया इत्यादेरयमर्थः बहिष्पवमानस्य प्रथमा रेतस्या तदूर्ध्वामुत्तरास्वेव ह्यचरं शिष्ट्वा हिङ्कारं ब्रूयात् कुतः षड्विंशब्राह्मणे रेतस्याया हिङ्कारनिषेधादिति अनन्तरं ब्राह्मणं यो वै गायत्रेणाप्रतिहृतेनोद्गायतीत्यादि समनसा ध्येय इत्यन्तं हिङ्कारस्य मनसा ध्यानं विधत्ते रेतस्यायामेव तं हिङ्कारं प्रतिहर्त्ता मनसा ध्यायेत् न परासु इति यो वै गायत्रेणाप्रतिहृतेनोद्गायतीति प्रतिहारभक्तिलोपो मनसा ध्यानस्य निमित्तत्वेनावगम्यते तद्भक्तिलोपश्च रेतस्यायामेव नान्यत्रेति तत्रैव तु ध्यानमिति गौतमो मन्यते परास्वेवेत्यादेरयमर्थः परास्वेव मनसा ध्यानं न रेतस्यायां कुतः न प्रतिहारलोपो निमित्तं किं तु प्रतिहर्त्तुः प्रतिहारवचने प्राप्ते तं विहायोद्गातुः प्रतिहार-

वचनं निमित्तं तथाहि यो वै उद्गाता गायत्रेण प्रतिहर्त्ता अप्रतिहृतेन स्वयमेव प्रतिहारं कृत्वा गायति सोऽप्रतिष्ठः स्यादिति ब्राह्मणार्थः ततश्चोद्गातुः प्रतिहारवचनमुत्तराखेवेति तत्रैव ध्यानमिति धानञ्जय्यशाण्डिल्यौ मन्येते इति ॥ ५ ॥

अथ प्रातःसवनस्य मन्द्रस्वरत्वाद्बहिष्पवमानस्य कृत्स्नस्यापि तत्प्राप्तौ प्रथममध्यमोत्तमास्वृचः प्रथममध्यमोत्तमस्वराः क्रमेण कर्त्तव्या इति विधित्सुराह ।

## यो वा एभ्यो लोकेभ्यो गायत्रं गायति नैभ्यो लोकेभ्य आवृश्चत इम एनं लोका ऊर्ज्जाभिसंवसते ॥ ६ ॥

गायत्रस्य लोकत्रयात्मकत्वमुक्तं यः खलूद्गाता एभ्य स्त्रिभ्यो लोकेभ्य उपादाय गायत्रं गायति स एव इतो लोकेभ्यो नावृश्चते न विच्छिद्यते किं तु इमे लोका एनमूर्ज्जान्नेनाभिसंवसते समाच्छादयन्ति ॥ ६ ॥

कथमेभ्यो लोकेभ्यो गायत्रं गीतं भवति तथा दर्शयति ।

## मन्द्रमिवाग्र आददीताथ तारतरमथ तारतमन्त्वदेभ्यो लोकेभ्यो ऽगासीत् ॥ ७ ॥

संग्रहेण तावच्चतुर्व्विधः स्वरः उपांशु मन्द्रो मध्यम उत्तम इति समीपगैः श्रोतुमयोग्या उपांशुमन्द्रादयस्त्रयोऽपि तद्योग्याः

तेऽप्युत्तरोत्तरमुच्चभूता भवन्ति तेष्वग्रे प्रथममन्द्रमिव ईषदुच्चैरिवाददीत उपक्रमेण अथ मध्यभागे तारतरं ब्रूयात् पूर्व्वस्मादप्यधिकमुच्चैर्ब्रूयादथ तारतमन्ततोऽप्यन्त्यभागेऽत्यन्तमुच्चैर्ब्रूयात् तत्तेन एभ्यो लोकेभ्योऽगासीद्गायति छन्दसि लुङ्लङ्लिट इति वर्त्तमाने लट् ॥ ७ ॥

अथ गायत्रसाम्नोनिरुक्तगाने दोषं सङ्कीर्त्याऽनिरुक्तगानं विधत्ते।

**अनिरुक्तङ्गेयमेतद्वै गायत्रस्य क्रूरं यन्निरुक्तं यदनिरुक्तं गायति क्रूरमेवास्य परिहरति ॥ ८ ॥**

अनिरुक्तमव्याकृताक्षरङ्गेयं निरुक्तं गानं यदस्ति एतदेव खलु गायत्रस्य क्रूरं गानं तस्माद्यद्यदि अनिरुक्तं गायति अस्य गायत्रस्य क्रूरमेव परिहरति परिवर्ज्जयति ॥ ८ ॥

अथास्य मध्ये अनवानव्यतिरेकेण दोषसंकीर्त्तनं विधत्ते।

**प्राणो गायत्रन्न व्यवान्यात्प्राणस्याविच्छेदाय यदि व्यवानिति प्रमायुको भवति यदि न व्यवानिति सर्वमायुरेति ॥ ९ ॥**

गायत्रे सामनि नवस्तोत्रीयाः प्राणाश्च सप्तशीर्षण्या द्वावर्वाञ्चौ तत्र नव्यवान्यत् गायत्रमध्ये निश्वासं न कुर्य्यात् द्वावेतान्न कुर्य्यात् सुव्यक्तमन्यत् ॥ ९ ॥

अथ निःश्वासेन विना गानसमापनाशक्तस्याह ।

**यदि व्यवान्यान्मध्यत ऋचो व्यवान्यात्प्राणो वै गायत्रं प्राणः स्वरः प्राणमेव तन्मध्यत आत्मन्दधाति स सर्वमायुरेति ॥ १० ॥**

यद्यनवानं गातुमशक्तः सन् व्यवान्यात् तर्हि ऋङ्मध्ये व्यवान्यात् तत्र मध्ये व्यवानं श्रूयते गायत्रं प्राणः स्वरोऽपि तन्निष्पाद्यत्वात् प्राणएव स्वरम्मध्ये कुर्व्वन्नुद्गाता प्राणमेव यजमानस्यात्मनि दधाति स्थापयति सर्व्वमायुरेति ॥ १० ॥

अथ कामभेदे निधनान्याह ।

**इडां पशुकामाय निधनं कुर्य्यात्स्वः स्वर्गकामाय यशोब्रह्मवर्च्चसकामायायुरामयाविने हꣳसीत्यभिचरते ॥ ११ ॥**

उत्तमश्चाकारो गायत्रस्य निधनन्तस्य स्थाने यत् कामयते तस्य प्रयोगे तदानुगुण्येन तत्तन्निधनं कुर्य्यात् सर्व्वत्र चतुर्थीश्रुतेः यजमानफलान्येतानि नित्ये क्रियमाणानि तत्तत् फलं क्रतुफलव्यतिरेकेण साधयतीति केचित् पशुकामादियज्ञेष्वपीत्यपरे ॥ ११ ॥

अथैतानि स्तौति ।

**एते वै गायत्रस्य दोहाः ॥ १२ ॥**

दुह्यन्ते एभिरिति दोहाः एतदपेक्षया निधनानि एत इति पुंलिङ्गत्वेन निर्दिष्टाः ॥ १२ ॥

वेदितुरप्येतत्फलं भवतीत्याह ।

**ब्रह्मवर्च्चसी पशुमान् भवति य एवं वेद ॥ १३ ॥**

उक्तफलद्वयमितरेषामप्युपलक्षणं अत्र श्रुतानि सर्वाण्यवाप्नोति ॥ १३ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तमाध्यायस्य
प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

तदेवमुक्तो बहिष्पवमानः, अथाज्यस्तोत्राणां देवता विवदुराख्यायिकामाह ।

**प्रजापतिर्देवेभ्य आत्मानं यज्ञं कृत्वा प्रायच्छत्तेऽन्योन्यस्मा अग्राय नातिष्ठन्त तानब्रवीदाजिमस्मिन्नितेति त आजिमायन्यदाजिमाय७ंस्तदाज्यानामाज्यत्वं ॥ १ ॥**

पूर्वं प्रजापतिर्देवेभ्यः इन्द्रादिभ्यो भोगार्थमात्मानं यज्ञमग्निष्टोमं कृत्वा प्रायच्छत् ते देवा अन्योन्यस्मै अग्राय प्रथमभोगाय नातिष्ठन्त न समजानन् तद्दृष्ट्वा प्रजापतिस्तान् देवानेवमब्रवीत् अस्मिन्नग्रभाग एतान् कुर्व्वन्नितेति आजिं मर्य्यादामितो गच्छतेति तद्देवाजिमायन् अगमयन् यद्यस्मादाजिमान् तत्तस्मादाज्यानामाज्यत्वं आजिमानेवाज्यस्तोत्रमरचय दित्यर्थः ॥ १ ॥

इदानीमाज्यस्तोत्राणां देवताकल्पनमाह ।

**स इन्द्रोऽवेदग्निर्वा इदमग्र उज्जेष्यतीति सोऽब्रवीद्यतरोनाविदमग्र उज्जयात्तन्नौ सहेति सोऽग्निरग्र उदजयदथ मित्रावरुणावथेन्द्रोऽथैषैकाहोचानुज्जिताबीत्सइन्द्रोऽग्निमब्रवीद्यत्सहावोचावहीयन्नौ तदिति सैषैन्द्राग्न्यध्यर्द्धमग्नेस्तोत्रमध्यर्द्धमिन्द्रस्य ॥ २ ॥**

स इन्द्र अवेत् अजानत् अग्नेरेवेदं धावनं अग्रे इतरेभ्यः पूर्व्वं उज्जेष्यतीति एवं विदित्वा स इन्द्रः अग्निमब्रवीत् नावावयोर्म्मध्ये यतरोऽपि इदमग्र उज्जयात् पूर्व्वमुत्कृष्टं जयेत् तत्फलं नावावयोः सह भवत्विति अग्निरपि तथास्त्वित्यङ्गीकृतवान् इति शेषः अथ सोऽग्निरग्रे इतरेभ्यः पूर्व्वमाजिमुदजयत् अथ पश्चान्मित्रावरुणावथेन्द्रः उज्जयत्क्रमेणैव तेषामाज्यानि भवन्तीत्यभिप्रायः अग्न आयाहि वीतय इत्याग्नेयं होतुराज्यं मा-

नोमित्रावरुणेति मैत्रावरुणमित्रावरुणस्य आयाहि सुषमाहित इत्यैन्द्रं ब्राह्मणाच्छंसिनः एवं चतुर्णामाज्यानां मध्ये त्रीण्युज्जितानि अथैषा अच्छावाकस्यैका होता केनचिदनुज्जितासीत् मुख्यव्यतिरिक्तानामृत्विजामार्त्विज्यं होतेति व्यपदिश्यते अनुज्जितविषये स इन्द्रः अग्निमब्रवीत् यद्यस्मात् सह फलं समानं इत्यवोचावहि उक्तवन्तौ आवां तत्तस्मादियं होता नौ आवयोः स्यादित्यथैवास्त्विति सोऽप्यङ्गीकृतवानिति शेषः सैषोभयार्था होता ऐन्द्राग्नीन्द्राग्निदेवताका इन्द्राग्नी आगतं सुतमित्यच्छावाकस्याज्यं तथा सति अध्यर्द्धमर्द्धाधिकमग्नौ स्तोत्रं भवति एतत्कृत्स्नाभिप्रायं प्रथममेकं चतुर्थमर्द्धमित्यग्नेरध्यर्द्धं स्तोत्रं तथा इन्द्रस्याप्यध्यर्द्धं ब्रह्मसामैकं चतुर्थे द्वितीयमर्द्धमित्यर्द्धं ॥ २ ॥

उक्तविभागं संख्यायानुवदति ।

**चत्वारि सन्ति षट् देवत्यानि ॥ ३ ॥**

पूर्वोक्तानि चत्वारि वाक्यानि षड्देवत्यानि भवन्ति अग्निर्मित्रावरुणौ इन्द्र इति चतस्रो देवताः पुनश्च द्वाविन्द्राग्नी इति षड्देवत्यत्वं तदिदं स्तौति ॥ ३ ॥

आज्यानां षड्देवतात्वं प्रशंसति ।

**षड्धा विहितो यज्ञो यावान्यज्ञस्तमेवारभते ॥४॥**

उक्थ्यषोडशिनोरन्यतमान्तर्भावेन षट्प्रकारः विहितः खलु अतस्तद्दैवत्याज्यस्य प्रातःसवनप्रयोगेण यज्ञो ज्योतिष्टोमो यत्परिमाणोऽस्ति तमेव तं सर्व्वमपि यज्ञमारभते आरब्धवान् भवति ॥ ४ ॥

उक्तदेवतानानात्वमाज्यस्य जामित्वसाधनेन स्तौति ।

**सर्व्वाणि स्वाराण्याज्यानि तज्जामि नानादेवत्यैः स्तुवन्त्यजामितायै ॥ ५ ॥**

सर्व्वाण्यप्याज्यानि गायत्रत्वात् स्वाराणि स्वरैरेव वक्तुं प्राप्तानि अतस्तज्जामि अतिरेकोऽयं जाम्यतिरेकनामेति निरुक्तं यद्वा तन्द्रीकरणं अतो नानादेवत्यैस्तृचैः स्तुवन्ति उक्तदोषाभावाय ॥ ५ ॥

अथाज्यानामभ्यावृत्तगानं स्तौति ।

**ग्राम्येभ्यो वा एतत्पशुभ्यः स्तुवन्ति यदाज्यैः पुनरभ्यावर्त्तं स्तुवन्ति तस्मात्पराञ्चः प्राज्यन्ते प्रत्यञ्चः प्रजायन्ते तस्मादु प्रेत्य पुनरायन्ति ॥ ६ ॥**

यदाज्यैः स्तुवन्ति एतदेतेन सवनेन ग्राम्येभ्यः एव पशुभ्यस्तल्लाभार्थमेव स्तुवन्ति तस्मात्पराक्त्वस्य प्रत्यक्त्वस्य च विद्यमानत्वात्पराञ्चः प्राज्यन्ते प्रसिच्यन्ते प्रत्यञ्चः प्रतिमुखाः प्रजायन्ते

तस्माद्देवाभ्यावर्त्तस्तवनादेव पशवः प्रातःसञ्चरन्ति प्रेत्य सायं पुनरायन्ति ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तमाध्यायस्य
द्वितीयः खण्डः।

---

अथ तृतीयः खण्डः।

प्रातःसवनमुक्त्वा माध्यन्दिनं सवनं विवक्षुर्माध्यन्दिनम्पवमानं स्तौति।

एतावता वाव माध्यन्दिनꣳ सवनं पुपुवे ॥ १ ॥

एतावता वक्ष्यमाणानामाज्यानां परिमाणेन पदार्थैनैव कृत्स्नमपि माध्यन्दिनं पवमानं पुपुवे पूयते एतावतेत्यनेन पावकद्रव्यपरिमाणं तद्योग्यं द्रव्यञ्च सामान्येन निर्द्दिष्टं भवति ॥ १ ॥

एतावतेत्युक्तमेव विशदयति।

त्रिभिश्च छन्दोभिः पञ्चभिश्च सामभिः ॥ २ ॥

त्रिभिर्गायत्रीत्रिष्टुब्बार्हतैर्बृहतीभिश्च सामभिश्च गायत्री मह्रीयव रौरव यौधाजय औशनसंज्ञैः पञ्चभिश्च ॥ २ ॥

किमेतावता भवतीत्याह।

यन्माध्यन्दिनेन पवमानेन स्तुवन्ति माध्यन्दिनमेव तत्सवनं पावयन्ति ॥ ३ ॥

यन्माध्यन्दिनं पवमानं स्तुवन्ति तत्तेन माध्यन्दिनं सवनं पावयन्ति पवमानस्तवनेन स्तुवन्तमपि त्रिष्टुवन्तीत्यर्थः सवनेन पूतं भवतीत्यर्थः ॥ ३ ॥

पवमानस्तवनेन सवनं पूतं भवतीत्युक्तं तदुभयोः पवमानसवनयोः साम्नात्मवैषम्यमाह ।

## एतावन्ति वाव सर्व्वाणि सामानि यावन्ति माध्यन्दिने पवमाने ॥ ४ ॥

यावन्ति माध्यन्दिने पवमाने सामानि सन्ति एतावन्त्येव खलु तत्सवनगतानि सामान्यपि ॥ ४ ॥

येषु पवमानेषु सामसु सवनान्यन्तर्भवन्ति तान्याह ।

## गायत्रन्निधनवदनिधनमैडं ॥ ५ ॥

गायत्रं साम प्रसिद्धं निधनवदिति बहिर्निधनमृगच्चरतो बहिर्भूतनिधनं यथा आमहीयवं अनिधनं बहिर्भूतं निधनरहितं यथा यौधाजयौशने ऐडं इडानिधनं यथा रौरवमिति एवं मैत्रावरुणपृष्ठं वामदेव्यं गायत्रीछन्दस्कत्वात् ॥ ५ ॥

होतुः पृष्ठं रथन्तरं बहिर्निधनं नौधसं ब्रह्मसाम निधनकाले यमैडमच्छावाकपृष्ठमिति पुनरुपसंहरति ।

यन्माध्यन्दिनेन पवमानेन स्तुवन्ति सर्वैरेव तत्-सामभिः स्तुवन्ति ॥ ६ ॥

स्पष्टोऽर्थः ॥ ६ ॥

अथ गायत्र्यां गायत्रं साम प्रशंसनद्वारेण विधत्ते।

आत्मा वै यज्ञस्य पवमानोमुखं गायत्री प्राणो गायत्रं यद्गायत्र्यां गायत्रेण स्तुवन्ति मुखत एव तत्प्राणान्दधति ॥ ७ ॥

यज्ञस्याग्निष्टोमस्य पवमान एवात्मा स्वरूपं तत् स्तुतिरूपत्वात् माध्यन्दिनपवमानोऽप्यात्मा तस्य मुखं गायत्री प्रथमप्रयोज्यत्वात् तत्राश्रितत्वाद्गायत्रं प्राणः एवञ्च सति ये गायत्रेण स्तुवन्तीति यत् तत्तेन मुखतएव तत्प्राणान्दधति ॥ ७ ॥

त्रिभिश्छन्दोभिरित्युक्तं तत् छन्दस्त्रयं प्रशंसति।

प्राणापाना वा एतानि छन्दांसि प्राणो गायत्री व्यानो बृहत्यपानस्त्रिष्टुब्यदेतैश्छन्दोभिः स्तुवन्ति प्राणापानानामविच्छेदाय ॥ ८ ॥

तानि त्रीणि छन्दांसि प्राणापाना वै अपानशब्देन व्यानापानावुच्येते देहान्तर्वर्त्तित्वसाम्यात् तदपेक्षयैव प्राणापाना इति बहुवचनं कः किं छन्दोरूप इति विभज्य दर्शयति प्राण-

दृत्यादिना एक एव मुख्यः शरीरधारकः प्राणवायुर्बहिर्वृत्ति-रुच्छ्वासाख्यः प्राण उच्यते स गायत्रीस्थानीयः व्यानः प्राणा-पानयोर्विधारकः स बृहत्या अपानो बहिर्वृत्तेरन्तःप्रवेशको निःश्वासाख्यस्त्रिष्टुभः शेषं स्पष्टं ॥ ८ ॥

तदेतच्छन्दस्त्रयं प्रकारान्तरेण प्रशंसति।

**इमे वै लोका एतानि छन्दाꣳस्ययमेव गायत्र्ययं मध्यमो बृहत्यसावुत्तमस्त्रिष्टुब्यदेतैश्छन्दोभिः सꣳ-हितैः स्तुवन्त्येषां लोकानामविच्छेदाय ॥ ९ ॥**

अयं भूर्लोकएव गायत्री लोकेषु छन्दःसु चानयोः प्राथम्या-दुक्तरूपत्वमेवमुत्तरत्रापि द्रष्टव्यं संहितैरिति छन्दोऽन्तरानन्त-र्हितैरित्यर्थः शिष्टं स्पष्टं ॥ ९ ॥

संहितैः स्तुवन्तीत्युक्तं तद्व्यतिरेके दोषमाह।

**यदन्यच्छन्दोऽन्तरा व्यवेयादिमां लोकान्विच्छि-न्द्यात् ॥ १० ॥**

यद्यदि अन्यस्त्रिभ्यः उक्तेभ्योऽन्यच्छन्दः अन्तरा त्रयाणामु-क्तानां छन्दसां मध्ये व्यवेयाद्व्यवहितं कुर्यात् तेनेमान् भूरा-दिलोकान्विच्छिन्द्यात् परस्परोपकार्य्योपकारकभावरहितान् कु-र्य्यादित्यर्थः ॥ १० ॥

एवं छन्दः प्रशस्य सामानि प्रशंसति।

**गायत्रेण स्तुत्वा निधनवता स्तुवन्तीयं वै गायत्र्यस्यामेव तदायतनं क्रियते॥ ११॥**

उच्चात इत्यादिषु गायत्रीषु गायत्रसाम्ना स्तुत्वा तास्वेव गायत्रीषु निधनवता आमहीयवेन साम्ना स्तुयुस्तथा सति एतास्वृक्षु या गायत्र्यस्ति सा इयं वै भूरेव तत्तेन गायत्रीषु आयतनरूपं निधनवदामहीयवगानेनास्यां भूमावेवायतनं क्रियते यजमानाय॥ ११॥

एतदेव व्यतिरेकनिन्दया स्तौति।

**यदनिधनेनाग्रे स्तुयुरनायतनो यजमानः स्यात्॥१२**

अग्रे बहिष्पवमानस्यादौ यद्यपि गायत्रमन्तरेण निधनवता निधनवदामहीयवव्यतिरिक्तेन केनचित्साम्ना स्तुयुरनायतनो यजमानः स्यात् तस्मान्निधनवदामहीयवेनाग्रे स्तोतव्यं॥ १२॥

पुनस्तदेव प्रशंसति।

**निधनवता स्तुवन्ति वीर्य्यं वै गायत्री वीर्य्यं निधनं वीर्य्येणैव तद्वीर्यꣳ समर्द्धयति॥ १३॥**

गायत्रीषु उच्चात इत्यादिषु निधनवता बर्हिर्निधनेनामहीयवेन स्तुवन्ति गायत्री इतरच्छन्दोभिरशक्यस्य सोमाहरणस्य

कर्तीति वीर्य्यमेव निधनमपि वीर्य्यं आयतनवानिह वीर्य्यं करोति तथा सति तत्तेन गायत्रीषु निधनवत् प्रयोगेण पूर्व्वं विद्यमानं वीर्य्यं वीर्य्यान्तरेणैव समर्द्धयति उक्ते गायत्रीषु गायत्रमामहीयवं च सामनी ॥ १३ ॥

अथ वृहतीषु पुनानः सोमेत्यादिषु रौरवं तावत् विदधाति।

## ऐडेन बृहतीमारभन्ते ॥ १४ ॥

ऐडेन इडानिधनेन रौरवेण साम्ना बृहतीच्छन्द आरभन्ते गृह्णाति ॥ १४ ॥

अथ तत्प्रशंसति।

## पशवो वा इडा पशवो बृहती पशुष्वेव तत्पशून्दधाति ॥ १५ ॥

इडेरन्ते इत्यादि गोपर्य्यायेष्विडायाः पशुरूपत्वादिडा वै मानवी घृतपदी इडायास्त्वापदे इडायास्पदं घृतवदित्यादिषु गोरूपेण स्तुतेरिडेति पशवः खलु बृहत्यप्ययम्मध्यमो बृहतीत्युक्तत्वादन्तरिक्षस्थानीया अन्तरिक्षे पशवः सञ्चरन्तीति पशव इत्युच्यते शिष्टं स्पष्टं ॥ १५ ॥

अथ बृहतीष्वेव यौधाजयं विधित्सुस्तां स्तौति।

## बृहत्यां भूयिष्ठानि सामानि भवन्ति ॥ १६ ॥

एकाहानीनशतेषु माध्यन्दिने पवमाने बृहत्यां हि भूयिष्ठानि सामानि भवन्ति अतो भूयिष्ठवीर्य्या बृहती ॥ १६ ॥

इदानीं बृहतीषु यौधाजयं विदधाति ।

**तत्रापि त्रिणिधनं * ॥ १७ ॥**

तेषु भूयिष्ठवीर्य्येषु सामसु त्रिणिधनं निधनत्रयोपेतं यौधाजयं ज्योतिष्टोमे द्वितीयं भवतीति तद्विधिरवगन्तव्यः ननु पूर्वं गायत्रं निधनवदनिधनमित्यत्र यौधाजयमनिधनशब्देन व्यवहारः इदानीन्तु त्रिणिधनमित्युच्यते अतो व्याहतमिति नैतदस्ति पूर्वं यौधाजयं वहिर्न्निधनाभावादनिधनमित्युक्तं इह तु षासीत्येकं निधनं १ हासीत्यपरं २ ग्यायाया ३ इत्युत्तममिति निधनत्रयसद्भावात्त्रिणिधनमित्युक्तं ॥ १७ ॥

अथ तत् प्रशंसति ।

**अबलिष्ठ इववा अयम्मध्यमो लोकस्तस्यैव तदायतनं क्रियते ॥ १८ ॥**

मध्यमोऽन्तरिक्षलोकः अबलिष्ठइव वै अत्यन्तमप्रबलइव प्रतिभाति इतरलोकद्वयवदनाश्रयत्वात् तस्यैवाबलिष्ठस्यैवान्तरिक्षस्य तत्तदानीं यदा यौधाजये त्रिणिधनं प्रयुज्यते तदायतनं क्रियते कृतं भवति केचिदवरिष्ट इवेत्यभिधीयते ॥ १८ ॥

तदेव पुनः प्रशंसति ।

---

* त्रिनिधनमिति दन्त्यमध्यः पाठः पुस्तकान्तरे वर्त्तते ।

त्रिणिधनं भवति त्रीणि सवनानां छिद्राणि तानि तेनापि धीयन्ते ॥ १९ ॥

कतमानि छिद्राणीति पवमानदेवतास्तुतयः तानि छिद्राणि अथाप्यन्तरेण पवमानं आवृत्तीनि च हविर्भिः प्रचरन्ति तानि छिद्राणीति । अयमर्थः पवमानव्यतिरिक्तानि स्तोत्राणि यजनीयदेवतास्तुतिरूपाणि नैवं पवमान इति तयः पवमानाः सवनानां छिद्राणि अथाप्यन्तरेण पवमानमित्यादिना प्रकारान्तरेण सवनछिद्राण्युच्यन्ते तस्यायमर्थः आवृत्तिस्तोत्राणि निरन्तरा भवन्ति पवमानेभ्यः परं पुरस्तादावृत्तिस्तोत्रेभ्योहविर्भिः प्रचरन्ति यथा सवनीयैः पुरोडाशैर्द्विदेवत्यैर्ग्रहैः सवनीयमुखीयैर्ऋतुयाजैरिति प्रातःसवने चरन्ति दधिघर्मोपांशुपुरोडाशेन सवनमुखीयैः पुरोडाशैः सवनमुखीयैर्मरुत्वत्ग्रहेणेति माध्यन्दिने पशुङ्गैः सवनमुखीयैः पुरोडाशैः सवनमुखीयैः सावित्रग्रहेण सौम्यचरुणा पत्नीवत् ग्रहेणेति तृतीयसवन इत्येवमपि सवनछिद्राणीति ॥ १९ ॥

प्रकारान्तरेण स्तौति ।

त्रिणिधनं भवति त्रय इमे लोका एष्वेव लोकेषु प्रतितिष्ठति ॥ २० ॥

स्पष्टोऽर्थः ॥ २० ॥

उक्तं त्रिणिधनं प्रतिष्ठाहेतुरिति तद्व्यतिरेकेण अप्रतिष्ठितत्वसंकीर्त्तनेन प्रशंसति।

**त्रिणिधनं भवत्येतेन वै माध्यन्दिनꣳ सवनं प्रतिष्ठितं यत्त्रिणिधनं यत्त्रिणिधनन्न स्यादप्रतिष्ठितम्माध्यन्दिनꣳ सवनꣳ स्यात्॥ २१॥**

त्रिणिधनं प्रतिष्ठाहेतुरिति पूर्वमुक्तं शिष्टं सुज्ञानं॥ २१॥

इदानीं निधनगताक्षरसङ्ख्ययापि स्तौति।

**द्व्यक्षराणि निधनानि भवन्ति द्विपाद्यजमानो यजमानमेव यज्ञे पशुषु प्रतिष्ठापयति॥ २२॥**

निधनेष्वक्षरद्वयं यजमानोऽपि द्विपात् उभयोरपि प्रतिष्ठारूपत्वान्निधनप्रयोगेण यजमानमेव यज्ञे पशुषु च प्रतिष्ठापयति॥ २२॥

तदेवं रौरवयौधाजये उत्क्रोशनमाह।

**अनिधनमन्ततो भवति स्वर्गस्य लोकस्यानतिपादाय॥ २३॥**

अनिधनन्निधनहीनमौशनमन्ततो भवति तच्च स्वर्गस्य लोकस्यानतिपादायानाशाय भवति न कदाचिद्यजमानं स्वर्गाय युज्यत इत्यर्थः॥ २३॥

व्यतिरेके बाधमाह।

यन्निधनवत्स्याद्यजमानं स्वर्गात् लोकान्निर्हन्यात्॥ २४॥

अन्ततो यदि निधनवत् साम भवेत् स्वर्गात् लोकान्निर्हन्यात् निधनं हि प्रतिष्ठा प्रतिष्ठायामतीव पश्वन्नादिसमृद्धिः अतः क्रतुफलेन स्वर्गं प्राप्नोप्यन्ततोनिधनप्रयोगात् प्रतिष्ठा पश्वन्नाद्यर्थं स्वर्गादिकमेव लोकं यजमानः पुनरागच्छेदित्यभिप्रायः ॥२४॥

अनिधनमन्ततो भवतीत्युक्तं अतिधनमौशनमनुवदति स्तुत्यर्थं।

स्वारं भवति॥ २५॥

अन्त्यस्वरेण स्वरितेन यत्सामाप्यते तत्स्वारं सर्व्वत्र तावत् चत्वारएव सामान्ताः स्वारो निधनमिडावागिति अत अन्त्यमचरं स्वरयित्वा समापितं ह्यायिकारस्य द्वयमपि रूढ्या स्वरइति व्यपदिश्यते अत ह्याईकारप्रसंगादुक्तार्थनिश्चयः ॥ २५॥

स्वरं प्रशंसति।

स्वरेण वै देवेभ्योऽन्ततोऽन्नाद्यं प्रदीयते स्वरेणैव तद्देवेभ्योऽन्ततोऽन्नाद्यं प्रयच्छति॥ २६॥

अन्ततो मन्त्राणां स्वाहान्ते स्वरितभूते देवेभ्योऽन्नाद्यं हविः प्रदीयते तत्तस्मात्तेन स्वरप्रयोगेण देवेभ्योऽन्ततः सामान्ते अन्नाद्यं प्रयच्छति दत्तवान् भवति ॥ २६॥

माध्यन्दिनपवमानगतानामाद्यन्तसामनी स्तोतुमनुवदति।

गायत्रं पुरस्ताद्भवति स्वारमन्ततः ॥ २७ ॥

स्पष्टोऽर्थः ॥ २७ ॥

अथ स्तौति ।

प्राणो वै गायत्रं प्राणः स्वरः प्राणानेव तदुभयतो दधाति तस्मादुभयतः प्राणाः पशवः ॥ २८ ॥

गायत्रस्य प्राणरूपत्वं गायत्र्याः प्राथम्येन मुखजन्यत्वेन तद्रूपत्वं पूर्व्वमेवोक्तं स्वरस्यापि प्राणनिरोधमन्तरेणानुत्पत्तेः प्राणत्वं तत्तेन प्राणानेवोभयत आद्यन्तयोरुपर्य्यधस्च दधाति तस्मात्पशव उभयतः प्राणा उपर्य्यूर्द्ध्ववृत्तिः प्राणः अधस्तात् अधोवृत्तिरपान इत्युभयतः प्राणाः पशवः ॥ २८ ॥

पुनः प्रशंसति ।

यद्गायत्रं पुरस्ताद्भवति स्वारमन्ततः प्राणैरेव प्रैत्यपाने प्रतितिष्ठति ॥ २९ ॥

पुरस्ताद्गायत्रस्य करणात्पुरोगमनहेतुना प्राणेन प्रैति प्रगच्छति अन्तःप्रतिष्ठायां स्वरस्य करणात् प्रतिष्ठाहेतुना अपानेन प्रतितिष्ठति ॥ २९ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तमाध्यायस्य
तृतीयः खण्डः ।

अथ चतुर्थः खण्डः ।

अथास्मिन् खण्डे बृहत्याख्यं मध्यमं छन्दः स्तूयते आदौ तावत्स्वर्ग्यत्वेन दक्षिणा योज्येति प्रशंसति ।

**एतद् वै यज्ञस्य स्वर्ग्यं यन्माध्यन्दिनꣳ सवनम्माध्यन्दिनस्य पवमानः पवमानस्य बृहती यद्बृहत्याः स्तोत्रे दक्षिणा दीयन्ते स्वर्गस्यैव तल्लोकस्यायतने दीयन्ते ॥ १ ॥**

माध्यन्दिनं सवनं यदस्ति एतद्वै एतदेव यज्ञस्यावयवेषु मध्ये स्वर्ग्यं यदि एवं तन्माध्यन्दिनसवनस्यावयवेषु मध्ये माध्यन्दिनः पवमानः स्वर्ग्यः तद्वच्छन्दसां मध्ये बृहती स्वर्ग्या तथा सति यद्यदि बृहत्याः स्तोत्रे रौरवयौधाजययोर्गानसमये दक्षिणा दीयन्ते यजमानैः सिद्धमन्यत् अनेन माध्यन्दिनपवमानस्य मध्ये दक्षिणा दातव्येत्युक्तं तच्चासन्नेषु नाराशंसेषु दक्षिणा दातव्येत्यनेन सह विकल्पते यद्वा बृहत्याः स्तोत्रे निवृत्ते दक्षिणा देयेति व्याख्येयं यथोक्तेन सह विरोधो न भवति ॥ १ ॥

अथ प्रकारान्तरेण तां प्रशंसति ।

**देवा वै छन्दाꣳस्यब्रुवन्युष्माभिः स्वर्गं लोकमयामेति ते गायत्रीं प्रायुञ्जत तया न व्याप्नुवꣳस्त्रिष्टुभं**

प्रायुञ्जत तया न व्याप्नुवञ्जगतीं प्रायुञ्जत तया न व्याप्नुवन्ननुष्टुभं प्रायुञ्जत तयाल्पकादि न व्याप्नुवꣳस्त आसान्दिशाꣳ रसान् प्रवृह्य चत्वार्य्यक्षराण्युपादधुः सा बृहत्यभवत्तयेमान् लोकान् व्याप्नुवन् ॥ २ ॥

ते देवा गायत्रीं प्रायुञ्जत लोकव्याप्त्यर्थं प्रयुक्तवन्तः तया न व्याप्नुवन् लोकान् एवं त्रिष्टुभं जगतीं च प्रयुज्य ताभ्यां न व्याप्नुवन् ततोऽनुष्टुभं प्रायुञ्जत तयाल्पकादि न देशान् व्याप्नुवन् ते पश्चात् अस्यामेव वीर्य्यमाधाय व्याप्नुयामेति बुद्ध्वा आसाम्मुख्यदिशां रसान् प्रवृह्य उद्धृत्य चत्वार्य्यक्षराणि कृत्वा अनुष्टुभ्युपादधुः सा अक्षरचतुष्टयोपेता अनुष्टुप् बृहत्यभवत् तया इमान् भूरादिलोकान् व्याप्नुवन् ॥ २ ॥

अथ बृहत्या बृहत्त्वं उक्तव्याप्तिप्रवृत्तिनिमित्तकमित्याह।

बृहती मर्य्या ययेमान् लोकान् व्यापामेति तद्बृहत्या बृहत्त्वं ॥ ३ ॥

हे मर्य्याः मर्त्त्याः बृहत्येषा ययेमान् लोकान् व्यापाम व्याप्ताः स्म इति तस्माद्बृहत्या बृहत्त्वं महत्त्वं ॥ ३ ॥

पशुरूपाक्षरचतुष्टयसम्बन्धादपि बृहती स्वस्तोत्रे दक्षिणायोग्येत्याह।

पशून्वा अस्यान्तानुपादधुः पशवो वै बृहती यद् बृहत्याः स्तोत्रे दक्षिणा दीयन्ते स्व एव तदायतने दीयन्ते ॥ ४ ॥

तान् तानि दिशां सारभूतानि चत्वार्य्यक्षराणि पशून् वै पशुरूपाण्येवास्यां बृहत्यां येनाक्षरोपाधानेन बृहती भवति तस्यामुपादधुः तस्माद्बृहती पशवएव तस्याः स्तोत्रे दक्षिणा-दानं स्वकीयएवायतने दत्तं स्यात् ॥ ४ ॥

अथ बृहतीत्वं प्रश्नप्रतिवचनरूपेण प्रशंसति ।

यन्निवत्याहुरन्यानि छन्दांꣳसि वर्षीयाꣳसि कस्माद्बृहत्युच्यत इत्येषा हीमान् लोकान् व्याप्नोन्नान्यच्छन्दः किञ्चन यानि सप्तचतुरुत्तराणि छन्दाꣳसि तानि बृहतीमभिसम्पद्यन्ते तस्माद् बृहत्युच्यते ॥५॥

अन्यानि पङ्क्तिप्रभृतीनि छन्दांसि वर्षीयांसि चतुरुत्तराणि बह्वक्षराणि तानि परित्यज्य कथमेषा बृहत्युच्यत इति यथा ब्रह्मवादिन आहुस्तत्रेदमुत्तरं एषेत्यादि तच्च स्पष्टं किञ्चैतानि सप्तचतुरुत्तराणि गायत्र्यादीनि जगत्यन्तानि छन्दांसि सन्ति तानि बृहतीमभिसम्पद्यन्ते कथं उच्यते एका गायत्री जगती चैका तयोरक्षराणि मिलित्वा द्वासप्तति र्भवन्ति तानि द्वेधा विभागे सति षट्त्रिंशदक्षरात्मिके द्वे बृहत्यौ भवतः एवमुष्णिक्

त्रिष्टुभौ द्वे बृहत्यौ तथानुष्टुप्पङ्क्ती द्वे बृहत्यौ स्वयञ्च बृहतीति एवं सर्वाण्यपि छन्दांसि बृहतीमभिसम्पद्यन्ते अतो बृहतीत्युच्यत इति प्रशंसा ॥ ५ ॥

अथ माध्यन्दिने बृहत्यस्तित्वविषये ब्रह्मवादिन आक्षेपमवतारयति ।

यन्नित्याङ्गर्गायत्रं प्रातःसवनं त्रैष्टुभम्माध्यन्दिनᳬ सवनञ्जागतं तृतीयसवनङ्कस्माद् बृहत्या मध्यन्दिने स्तुवन्तीति ॥ ६ ॥

स्पष्टोऽर्थः ॥ ६ ॥

तस्योत्तरमाह ।

बहिष्पवमानेन वै देवा आदित्यᳬ स्वर्गं लोकमहरन् स नाध्रियत तं बृहत्या मध्यन्दिने स्तम्भुवᳬ स्तस्माद् बृहत्या मध्यन्दिने स्तुवन्त्यादित्यᳬ ह्येषा मध्यन्दिने दाधार ॥ ७ ॥

पूर्वं देवाः बहिष्पवमानेनादित्यं स्वर्गं लोकमहरन्नगमयन् सनाध्रियत तेन पवमानेन तत्र धृतो नाभूत् तम्मध्यन्दिने पवमाने बृहत्याः स्तोत्रेण स्तम्भुवन् अधः प्रच्युतितः स्तम्भितवन्तः यस्मादेवं तस्मान्मध्यन्दिने स्तुवन्ति हि यस्मादेषा मध्यन्दिने

दाधारादित्यमित्येतदुत्तरं एतावता बृहत्या मध्यन्दिने प्रसङ्ग-मुक्तं ॥ ७ ॥

कथं माध्यन्दिनसवनस्य त्रैष्टुभत्वप्राप्तिरिति तत्प्रकारमाह ।

**यैरु कैश्च छन्दोभिर्म्मध्यन्दिने स्तुवन्ति तानि त्रिष्टभमभिसम्पद्यन्ते तस्मात्त्रिष्टभो नयन्ति माध्यन्दिनात्सवनात् ॥ ८ ॥**

उ शब्दोऽप्यर्थे यैः कैश्चापि छन्दोभिर्म्मध्यन्दिने सवने माध्यन्दिनपवमाने पृष्ठेषु चतुर्षु स्तुवन्ति तानि त्रिष्टुभो न गच्छन्ति समवेतानि छन्दांसि त्रिष्टुभमभिसम्पन्ते तस्मात् माध्यन्दिनात् सवनात् त्रिष्टुभः सकाशान्नयन्ति त्रिष्टुप् सम्पत्तिप्रकारं छन्दसामित्युन्नेतव्यं कथम्माध्यन्दिने पवमाने उच्चात इति गायत्रे तृचे गायत्र्यामहीयवे द्वे सामनी गातव्ये तदर्थं तृचस्य त्रिरावृत्तत्रा षट् गायत्र्यो भवन्ति तथा मैत्रावरुणे पृष्ठे कया न इति गायत्रतृचोत्पन्ने वामदेव्यसप्तदशस्तोमत्वात् सप्तदश गायत्र्यस्ताः संहतास्त्रयोविंशति गायत्र्यो भवन्ति पुनश्च पवमाने पुनान इति बार्हते तृचे रौरवयौधाजयसामद्वयार्थं द्विरावृत्तैः षट् बृहत्यो भवन्ति तथा होतुः पृष्ठे अभित्वा शूरेति प्रगाथे ककुबुत्तराकारं गानात् प्रथमे पर्य्याये प्रथमविष्टावात्तिस्रो बृहत्यः इतरयोः पर्य्याययोरेकैकेति मिलित्वा पञ्च बृहत्यः शिष्टा द्वादशककुभः स्युः यद्वा रथन्तरमकृत्वा त्वामिद्धीति बृहत्साम-

पञ्चेपि पञ्चैव वृहत्यो द्वादशककुभः स्युः तथा ब्राह्मणाच्छंसिनः पृष्ठेऽपि तच्चोदस्समिति प्रगाथे नौधसः प्रयोगे सप्तदशस्तोमत्वात् सप्तदश वृहत्यः एवमच्छावाकपृष्ठे तरोभिरिति प्रगाथे कालेये सप्तदश बृहत्य इति द्वयोर्मेलने चतुस्त्रिंशद्भवन्ति पूर्व्वोक्तैः षड्भिः पञ्चभिश्च मिलित्वा सर्वाः पञ्चचत्वारिंशद्बृहत्यः पूर्व्वोक्तरथन्तरबृहतोऽन्यतरस्मिन् प्रयोगे अवशिष्टा द्वादशककुभस्त्रयोविंशतिषु गायत्रीषु मध्ये चतसृभिर्गायत्रीभिर्मिलित्वा द्वादशबृहत्यो भवन्ति तन्मेलनमेवं स्वत एकैकस्याः ककुभोऽष्टाविंशत्यक्षराणि गायत्र्याश्चैकस्मिन् पादे अष्टावक्षराणि तानि मिलित्वा षड्विंशदक्षरैरेका बृहती सम्पद्यते एवं द्वादशबृहत्योऽपि योजनीयाः तदेवं पञ्चचत्वारिंशद्बृहतीभिः सप्तपञ्चाशद्बृहत्यो भवन्ति एता अवशिष्टैकोनविंशतिः गायत्रीणां सप्तपञ्चाशत्पादैर्मिलित्वा तावत् संख्याकास्त्रिष्टुभः स्युः पवमाने प्रतुद्रवेति तृचे अशने तिस्रः सिद्धा तिस्रस्त्रिष्टुभ इति माध्यन्दिनसवनगतानि सर्व्वाणि छन्दांसीत्यष्टषष्टिस्त्रिष्टुभो भवन्ति अयं त्रिष्टुप् सम्पत्तिप्रकारो भगवता कात्यायनेनोपग्रन्थे दर्शितः तद्यथा येरु कैश्च छन्दोभिरिति षष्टिस्त्रिष्टुभः आसां सिद्धिस्त्रयोविंशति गायत्र्यः पञ्चचत्वारिंशतं बृहत्यो द्वादश ककुभश्चतसृभिर्गायत्रीभिस्ता बृहत्यस्ताः सप्तपञ्चाशतं तावन्त्यक्षराणि गायत्र्यस्तैस्त्रिष्टुभस्त्रिष्वाश्वाशने इतीति ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तमाध्यायस्य

चतुर्थः खण्डः ।

अथ पञ्चमः खण्डः ।

अस्मिन् खण्डे गायत्र्यतिरिक्तानि चत्वारि सामानि स्तूयन्ते क्रमेण, तत्रादावामहीयवं स्तौति ।

**प्रजापतिरकामयत बहु स्यां प्रजायेयेति स शोचन्नमहीयमानोऽतिष्ठत्स एतदामहीयवमपश्यत्तेनेमाः प्रजा असृजत ताः सृष्टा अमहीयन्त यदमहीयन्त तस्मादामहीयवं ॥ १ ॥**

पूर्वं प्रजापतिरेकाकी सन् अकामयत बहु स्यां प्रजायेयेति स तस्यामवस्थायां स्वव्यतिरिक्तस्य कस्यचिदभावादमहीयमानः अपूज्यमानः शोचन् अतिष्ठत् स प्रजोत्पत्त्युपायत्वेनैतदामहीयवन्नाम सामापश्यत् तेन प्रयुक्तेन साम्ना इमा देवमनुष्यादिरूपाः प्रजा असृजत ताः सृष्टाः प्रजा अमहीयन्त अपूज्यन्त स्वाभिः प्रजाभिः यदमहीयन्त येन साम्ना सृष्टास्तस्मादामहीयवमिति शब्दसामान्येन स्तुतिः अमहीयुना प्रजापतिना दृष्टत्वात् आमहीयवमिति तन्नाम सम्पन्नमित्यर्थः ॥ १ ॥

अथोक्तसाम्नः स्तोत्रे इति निधनं प्रजापतेः ऐश्वर्यसाधनत्वेन प्रशंसति ।

**ता अस्मात्सृष्टा अपाक्रामꣳस्तासान्दिविसङ्घूया-**

दद इति प्राणानादत्त ता एनं प्राणेष्वात्तेषु पुनरुपावर्त्तन्त ताभ्य उग्रꣳ शर्म्म महिश्रव इति पुनः प्राणान् प्रायच्छत्ता अस्मादुदेवाऽयोधꣳस्तासाꣳ स्तौष इति मन्यूनवाष्टणात्ततो वै तस्मै ताः श्रैष्ठ्यायातिष्ठन्त ॥२॥

ताः सृष्टाः प्रजाः अस्मात् स्रष्टुः सकाशात् अपाक्रामन्नपागच्छन् स प्रजापतिस्तासामपगतानां प्राणान् दिविसदिति पादेनादत्त आत्तवान् ताः स्वीयेषु प्राणेषु चक्षुरादिषु आत्तेषु प्रजापतिना स्वीकृतेषु पुनरेनमुपावर्त्तन्त उपागमन् ताभ्यः उपावृत्ताभ्यः उग्रं शर्म्मेति पादेन पुनः प्राणान् प्रायच्छत् ता लब्धप्राणाः अस्मात्पूर्व्वं प्राणापहारात्कारणादुदयोधन्नेव उन्मुखा एवायुध्यन्त केचिदस्मा इति पठन्ति अस्मा एनं प्रजापतिमुद्दिश्येति अस्यार्थः स प्रजापतिरेषां प्राणापहारजन्योमन्युः सञ्जात इति बुध्वा स्तौष इति स्तुतिप्रकाशेन निधनेन तासामन्यूनवाश्टणात् निकृष्टं हिंसितवान् ततः खलु कारणात् मन्यूपगमादस्मै प्रजापतये श्रैष्ठ्यायातिष्ठन्त समजानत ॥ २ ॥

अथ विदुषः फलमाह।

तिष्ठन्तेऽस्मै समानाः श्रैष्ठ्याय य एवं वेद ॥ ३ ॥

स्पष्टोऽर्थः ॥ ३ ॥

पुनस्तदेव प्रशंसति।

प्रजानाञ्च वा एषा सृष्टिः पापवसीयसञ्च विधृतिर्य्यदामहीयवं ॥ ४ ॥

यदेतत् आमहीयवमिति एषां प्रजानाञ्च सृष्टिर्वै सृष्टिकर्त्तृसृष्टिसाधनभूता च सृष्टेः स्त्रीलिङ्गमपेक्ष्य एषेति साम्नः स्त्रीलिङ्गनिर्द्देशः किञ्च आमहीयवमेव पापवसीयसञ्च पापस्य पुण्यस्य च विधृतिः विधरणी विवेचनीत्यर्थः ॥ ४ ॥

अथ विदुषः फलं।

विधृतिः पापवसीयसो भवति य एवं वेद ॥ ५ ॥

स्पष्टं ॥ ५ ॥

एवमामहीयवं प्रशस्य रौरवयौधाजयौशनानि प्रशंसितुमाख्यायिकामाह।

देवा वै यशस्कामाः सत्त्रमासताग्निरिन्द्रो वायुर्मखस्तेऽब्रुवन्यन्नो यश ऋच्छात्तन्नः सहासदिति तेषाम्मखं यश आर्च्छत्तदादायापाक्रामत्तदस्य प्रासहादित्सन्त तं पर्य्ययतन्त स्वधनुः प्रतिष्टभ्यातिष्ठत्तस्य धनुरार्त्निरूर्द्ध्वापतित्वा शिरोऽच्छिनत्स प्रवर्ग्योऽभवद्यज्ञो वै मखो यत् प्रवर्ग्यं प्रवृञ्जन्ति यज्ञस्यैव तच्छिरः प्रतिदधति ॥ ६ ॥

पूर्व्वमग्न्यादयश्चत्वारो देवा यशोऽर्थं सत्रमासत तस्मिन् समये ते देवा एवमब्रुवन् यद्यशो नोऽस्माकम्मध्ये प्रथमं ऋच्छात् प्राप्नुयात्तद्यशः नो अस्माकं सह साधारणमासन्नवत्विति समयं कृत्वा सत्रमासत तेषाम्मध्ये मखो दैवं यश आर्च्छत् प्राप्नोत् स तद्यश आदायापाक्रामत् अस्यापगतस्य तद्यशः प्रासहा प्रसह्येन वलात्कारेणादित्सन्त तदर्थन्तं पर्य्ययतन्त परितो युध्यन् स धन्वी धनुः प्रतिष्टभ्य शिर आततज्यं कृत्वा अतिष्ठत् तस्य धनुर्ज्यां वल्मीका भूमावुत्पतिता अखादन्त ततो धनुरार्त्निर्धनुषः कोटिः ऊर्द्धापतित्वा तस्य मखस्य शिरोऽच्छिनत् । उपदीकानां धनुर्ज्याच्छेदः शाखान्तरतोऽवगन्तव्यः तथाहि तैत्तिरीयकं स धनुः प्रतिष्टभ्यातिष्ठत्ता उपदीका अब्रुवन् वरं वृणीमहै अथ वरमिमं रन्धयाम यत्र क्व च खानां तदपोऽभितृणदामेति तस्मादुपदीकाद्यत क्व च खनन्ति तदपोऽभितृन्दन्ति वरे वृते ह्यासां तस्य ज्यामप्यादन् तस्य धनुर्व्विप्रमाणं शिर उदवर्त्तयदिति । सतच्छिरः प्रवर्ग्योऽभवत् यज्ञो वै मख उच्यते यत् प्रवर्ग्यं प्रवृञ्जन्ति यजमानस्य तत्तेन यज्ञस्य छिन्नं शिरः प्रतिदधति स तत् कुर्व्वन्ति एतत् प्रासङ्गिकं अयमर्थः सर्व्वोऽप्यध्वर्य्युब्राह्मणे स्पष्टमाम्नायते देवा वै सत्रमासत ऋद्धिपरिमितं यशस्कामास्तेऽब्रुवन्यन्नः प्रथमं यश ऋच्छात् सर्व्वेषां नस्तत्सहासदित्यादिना ॥ ६ ॥

अथ रौरवं स्तूयते ।

तद्देवा यशो व्यभजन्त तस्याग्नीरौरवं प्रावृहत ॥ ७ ॥

तद्यशो देवा व्यभजन्त तस्याग्नी रौरवं प्रावृहतेति तद्यशो देवा व्यभजन्त तस्य विभक्तस्य रौरवं भागं अग्निः पृथक् चकार ॥ ७ ॥

एतावता किं यशोलब्धमित्यत आह ।

तद्वै स पशुवीर्य्यं प्रावृहत पशवो वै रौरवं ॥८॥

तत्तेन रौरवविभागेनैव सोऽग्निः पशुवीर्य्यं पशुलक्षणं सामर्थ्यमेव प्रावृहत तदपि कुत इत्याह रौरवं साम पशवः खलु तत्र पशुवाचकेडानिधनोपेतत्वादित्यभिप्रायः ॥ ८ ॥

पशुमान् भवति य एवं वेद ॥ ९ ॥

विदुषः स्तुतिः ॥ ९ ॥

अथ रौरवस्याग्निसम्बन्धं दर्शयति ।

अग्निर्वै रूरस्तस्यैतद्रौरवं ॥ १० ॥

रूरू इति शब्दायमानो दहतीति रूरोऽग्निस्तत्सम्बन्धाद्रौरवं साम ॥ १० ॥

प्रकारान्तरेण रौरवसंज्ञां विब्रुवन् स्तौति ।

असुरा वै देवान् पर्य्ययतन्त ततएतावग्नीरूरो

विष्वञ्चौ स्तोभावपश्यत्ताभ्यामेनान् प्रत्यौषत्ते प्रत्युष्यमाणा अरवन्त यदरवन्त तस्माद्रौरवं ॥ ११ ॥

पूर्वं हि देवानसुराः पर्य्ययतन्त परितोऽयुध्यन्त ततोऽग्नेः एतौ क्रूरौ विष्वञ्चौ सर्व्वतो व्याप्तौ ऊहो २ ऊवाऽग्यया औ ३ होवा इति द्वौ स्तोभावपश्यत्ताभ्यामेनान् प्रत्यौषत् दहत् ते प्रत्युष्यमाणा अरवन्त शब्दमकुर्व्वन् यदरवन्त तत्तस्माद्रौरवनाम सम्पन्नं रुरुरवयोरुभयत रेफसाम्यात् क्रूरसम्बन्धात् रवसम्बन्धाच्च रौरवमिति नाम भवति ॥ ११ ॥

इन्द्रस्य यौधाजयाख्ययशः सम्बन्धमाह।

अथेन्द्रो यौधाजयं प्राहरत तद्वै स वज्रं प्राहरत वज्रोवै यौधाजयं ॥ १२ ॥

अथेत्यानन्तर्य्यार्थे इन्द्रो यौधाजयं यौध्यान् अजयन्त वज्रभावकल्पनमेवं वज्रस्यैव परिकुर्व्वद्भिः तेन तत्कार्य्यसिद्धेः यौधाजयस्य वज्रकारणत्वमेव वज्रं वाक् इत्यनेनोच्यते ॥ १२ ॥

अथ विदुषः फलमाह।

वज्रं भ्रातृव्याय प्रहरति यएवं वेद ॥ १३ ॥

स्पष्टोऽर्थः ॥ १३ ॥

अथ निर्व्वचनद्वारा तदेव प्रशंसति।

**इन्द्रो वै युधाजित्तस्यैतद्यौधाजयं ॥ १४ ॥**

युधा युद्धेन शत्रून् जयतीन्द्रएव युधाजित् तस्य सम्बन्धि तत् साम यौधाजयं ॥ १४ ॥

अथ निर्व्वचनान्तरप्रदर्शनेन प्रशंसति।

**युधा मर्य्या अजैष्मेति तस्माद्यौधाजयं ॥ १५ ॥**

हेमर्य्याः मर्त्याः युधा अजैष्म असुरानिति इन्द्रोऽब्रवीदिति शेषः तस्माद्युधाजयस्य हेतुत्वात् यौधाजयमिति नाम सम्पन्नमिति स्तुतिः ॥ १५ ॥

अथ वायोरौशनसम्बन्धमाह।

**अथ वायुरौशनं प्राष्टृत ॥ १६ ॥**

स्पष्टं ॥ १६ ॥

औशनस्वीकारएव प्राणाख्यवीर्य्यस्वीकार इत्याह।

**तद्वै स प्राणवीर्य्यं प्राष्टृत प्राणावा औशनं ॥१७॥**

औशनसामभागपृथक्करण एव प्राणाख्यस्य वीर्य्यस्य पृथक्कारः तत्र हेतुः औशनं साम प्राणाः खलु तस्मिन् स्वरनिधनसद्भावात् स्वरस्य प्राणनिरोधमन्तरेणोच्चारणानुपपत्तेः ॥ १७ ॥

विदुषः स्तुतिः।

सर्व्वमायुरेति य एवं वेद ॥ १८ ॥

स्पष्टोऽर्थः ॥ १८ ॥

औशनसंज्ञान्निर्व्वक्ति ।

वायुर्वा उशᳬंस्तस्यैतदौशनं ॥ १९ ॥

उशन् वशकान्ताविल्यस्य कर्म्मणि रूपं काम्यते सर्व्वैः प्राण-रूपत्वेनेत्युशन् वायुरेव तस्य सम्बन्धित्वादौशनमिति साम्नो नाम सम्पन्नं ॥ १९ ॥

उशन् सम्बन्धादौशनमित्युक्ता उशनसः सम्बन्धादौशन-माह ।

उशना वै काव्योऽसुराणां पुरोहित आसीत्तं देवाः कामदुघाभिरुपामन्त्रयन्त तस्मा एतान्यौश-नानि प्रायच्छन् कामदुघा वा औशनानि ॥ २० ॥

पूर्व्वं उशनानामकवेः पुत्रः असुराणां विरोचनादीनां पुरो-हित आसीत् तं देवाः कामदुग्धाभिर्गोभिरुपामन्त्रयन्त कथन्ता-भिरनुमन्त्रणं तत्राह अस्मै उशनसे एतान्यौशनानि सामानि कामधेनुसदृशानि प्रायच्छन् तेषां कामधुक्त्वप्रसिद्धिरुच्यते कामदुघा इत्यादिना ॥ २० ॥

अथ विदुषः स्तुतिः ।

कामदुघा एनमुपतिष्ठन्ते य एवं वेद ॥ २१ ॥

य एवं जानाति एवं कामदुघागाव उपतिष्ठन्ते समीपं प्राप्नुवन्ति दोहनशीलबहुगोयुक्तो भवतीत्यर्थः ॥ २१ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तमाध्यायस्य
पञ्चमः खण्डः ।

---

अथ षष्ठः खण्डः ।

एवं माध्यन्दिनं पवमानमुक्त्वा बृहद्रथन्तरं विवक्षुः प्रजापतेर्मनसि बृहतः प्रादुर्भावमाह ।

प्रजापतिरकामयत बहु स्यां प्रजायेयेति सतूष्णीं मनसा ध्यायत्तस्य यन्मनस्यासीत्तद्बृहत्समभवत् ॥ १ ॥

बहुभावाय प्रकर्षोत्पत्तिं कामयमानः स प्रजापतिस्तूष्णीन्निर्व्यापारम्मनसाग्र्येण यत् अचिन्तयत् तस्य ध्यातुर्मनसि यदासीत् तद्बृहत्साम समभवत् सम्भूतं सामत्वेन परिणतमित्यर्थः ॥१

अथान्तःस्थितगर्भस्य प्रजननार्थं प्रजापतेर्ध्यानमाह ।

स आदीधीत गर्भो वै मेऽयमन्तर्हितस्तं वाचा प्रजनया इति ॥ २ ॥

स प्रजापतिरादधीत आध्यायत् ध्यानप्रकार उच्यते मे

अन्तः अयं गर्भो निहितः तं खलु गर्भं वाचा साधनेन प्रजननाय उत्पादयामीति ॥ २ ॥

अथ वाक्सृष्टिमाह।

**स वाचं व्यसृजत सा वाग्रथन्तरमन्वपद्यत ॥ ३ ॥**

स ध्यायन् प्रजापतिर्वाचं व्यसृजत सा च सृष्टा वाक् रथन्तरमनु रथन्तरसामानु सृज्य पश्चादपद्यतागच्छत् उत्पन्नासीत् ॥ ३ ॥

अथ वाक्सम्बन्धेन रथन्तरशब्दं निर्वक्ति।

**रथम्मर्य्याः क्षेप्नातारीदिति तद्रथन्तरस्य रथन्तरत्वं ॥ ४ ॥**

हेमर्य्याः मर्त्याः रथन्तरवद्देवानां वाहनभूतां वाचमिदं साम क्षेप्ना क्षितभावेनातारीत् अगच्छदिति इन्द्रोऽब्रवीत् तत्तेन रथन्तरस्य रथन्तरत्वमायातं इन्द्रस्योक्तप्रकारकवचनमेव तच्छब्दप्रवृत्तिनिमित्तभूतमित्यर्थः ॥ ४ ॥

अथ बृहत उत्पत्तिं सनिर्व्वचनान्दर्शयति।

**ततो बृहदनु प्राजायत बृहन्मर्य्या इदꣳ स ज्योगन्तरभूदिति तद्बृहतो बृहत्त्वं ॥ ५ ॥**

ततो रथन्तरसृष्टेरनु पश्चाद् बृहत्साम प्राजायत सलिङ्गव्य-

त्यय: तदिदं बृहत्साम हैमर्य्याः ज्योक् चिरकालं रथन्तरोत्प-त्त्यनन्तरकालपर्य्यन्तमतः प्रजापतेर्मनसि अभूत् स्थितमासी-दिति यत् इन्द्रोऽब्रवीत् तद्बृहत्साम्नो बृहत्त्वं सम्पन्नं ॥ ५ ॥

अथ बृहत्प्रजापतेर्ज्यैष्ठपुत्रत्वेन प्रशंसति ।

## यथा वै पुत्रो ज्येष्ठ एवं बृहत्प्रजापतेः ॥ ६ ॥

यथा ज्येष्ठपुत्रो मनुष्याणां एवं बृहत्प्रजापतेर्ज्यैष्ठपुत्रस्था-नीयं भवति ॥ ६ ॥

ननु रथन्तरात्पश्चाद् बृहदुत्पन्नं कथं ज्येष्ठपुत्रत्वमस्येति तत्राह ।

## ज्येष्ठब्राह्मणं वा एतत् ॥ ७ ॥

ज्येष्ठं प्रथमं ब्राह्मणं यस्य बृहत एतत् ज्येष्ठब्राह्मणं तथाहि रथन्तरसृष्टिप्रकाशकात्सवाचं व्यसृजत सा वाग्रथन्तरमन्वपद्यत तद्रथन्तरं मर्य्या इत्यादिकाद्ब्राह्मणात्प्रथमं बृहत्सामप्रकाशकं तस्य यन्मनस्यासीत्तद्बृहत् समभवदिति ब्राह्मणं पूर्व्वभावि-त्वात् ज्येष्ठं अतः पश्चादुत्पन्नस्यापि बृहतो रथन्तरादपि ज्येष्ठ-पुत्रत्वं युक्तं ॥ ७ ॥

अथ विदुषः फलं ।

## प्रज्यैष्ठ्यमाप्नोति य एवं वेद ॥ ८ ॥

स्पष्टोऽर्थः ॥ ८ ॥

एवं बृहतो ज्येष्ठत्वं सिद्धं कथं रथन्तरस्य पूर्व्वप्रयोगप्राप्ति-रिति कश्चिद् ब्रह्मवादिनां प्रश्नमवतारयति।

**यन्निवत्याङ्कर्बृहत्पूर्व्वं प्रजापतौ समभवत्कस्माद्रथ-न्तरं पूर्व्वं योगमानश इति ॥ ९ ॥**

यद्यदि नु अथ इति एवं वक्ष्यमाणप्रकारेणाङ्कर्ब्रह्मवा-दिनः इति शब्दनिर्द्दिष्टमर्थं विवृणोति बृहत्साम पूर्व्वं प्रजापतौ सम्भूतं कस्मात्कारणाद्रथन्तरं सामोभयसामसु अहःसु पृष्ठ्यः षडहादिषु सर्व्वेषु पृष्ठ्येषु पूर्व्वं योगमानश इति प्रयोगं प्रा-प्नोति ॥ ९ ॥

तस्य परिहारमाह।

**बृहदेव पूर्वꣳ समभवद्रथन्तरन्तु पूर्वꣳ सृष्ट्या-सृजत तस्मात् पूर्वं योगमानशे ॥ १० ॥**

यद्यपि बृहदेव पूर्व्वं प्रजापतेर्मनसि समभवत् न पितुर्विशे-षोऽस्ति रथन्तरं पूर्व्वं सृष्ट्या उत्पत्त्या असृजत सृष्टमभूत् तस्मा-दिति तस्यैवोपसंहारः ॥ १० ॥

अथ ज्योगामयाविनः प्रयोगे उभे अपि कार्य्ये इति विव-क्षुराह।

**तयोः समानन्निधनमासीत्तस्मिन्नातिष्ठेतान्ते आ-**

**जिमैतां तयोर्हसिति बृहत्प्राणमुदजयदसिति रथन्तरमपानमभिसमवेष्टत ॥ ११ ॥**

पूर्वं द्वयोर्बृहद्रथन्तरयोः समानं निधनमासीत् तस्मिन्नेकस्मिन्निधने नातिष्ठेतां न समजानतां ममैवेदम् ममैवेदमिति कलहमकुरुतां तदर्थं ते सामनी आजिं संग्रामं मम ऐतां समगच्छतां तयोर्मध्ये बृहत् स्वेन निधनेन हसित्यनेन प्राणमुदजयत् जितवत् रथन्तरं तु स्वेन असिति निधनेनापानमनन्तरमभिसमवेष्टत समावृणोत् अनेनोभयतानुगतं सकारमेव पूर्वन्निधनमुभयोरासीदिति मन्तव्यं ॥ ११ ॥

ज्योगामयाविने ते उभे विदधाति।

**प्राणापानौ वै बृहद्रथन्तरे ज्योगामयाविन उभे कुर्यादपक्रान्तौ वा एतस्य प्राणापानौ यस्य ज्योगामयति प्राणापानावेवास्मिन्दधाति ॥ १२ ॥**

हसिति निधनस्य प्राणमुदजयद्धेतुत्वात्तन्निधनं बृहत्सामापि प्राण एव अपानसंवेष्टनहेतुत्वादसिति निधनस्य तद्युक्तं रथन्तरमपानं तथा सति यस्य ज्योगामय इति एतस्य प्राणापानौ अपक्रान्तौ खलु अतस्तस्य प्रयोगे उभे बृहद्रथन्तरे कुर्यात् तेनास्मिन् रोगिणि प्राणापानावेव दधाति पुनः स्थापयति माध्यन्दिने पवमाने बृहतीषु रथन्तरं कार्यं बृहत्सामपृष्ठं कार्यमिति तयोर्व्यवस्था ॥ १२ ॥

अथ बृहद्रथन्तरप्रसङ्गात्तद्विषयं कञ्चित्प्रश्नमुपक्षिपति ।

**यन्निरुक्त्याङ्गरूभे बृहद्रथन्तरे वर्हिर्निधने कस्माद् बृहद्वर्हिर्निधनानि भजतेऽन्तर्निधनानि रथन्तरमिति ॥ १३ ॥**

इस् अस् इति बृहद्रथन्तरयोरुभयोर्व्वर्हिर्निधनत्वात् कथं बार्हतेष्वहःसु श्यैतादीनि वर्हिर्निधनानि प्रयुज्यन्ते रथन्तरेष्वन्तर्निधनानि प्रयुज्यन्ते ॥ १३ ॥

रथन्तरेष्वन्तर्निधनानि नौधसादीनि यदि विरुद्धमित्याचिक्षेपुस्तेषामुत्तरं ।

**प्राणो बृहत्तस्माद्वर्हिर्निधनानि भजते वर्हिर्हि प्राणोऽपानो रथन्तरं तस्मादन्तर्निधनानि भजतेऽन्तर्ह्यपानः ॥ १४ ॥**

बृहतः प्राणरूपत्वाद्वर्हिर्निधनभाक्त्वं युक्तं तत्र हेत्वभिधानं वर्हिर्हि प्राण इति रथन्तरं त्वपान एव तस्मादन्तर्वर्त्यपानरूपत्वादन्तर्निधनभाक्त्वं तस्मादित्यस्य विवरणमन्तर्ह्यपान इति ॥ १४ ॥

निधनवैषम्ये हेत्वन्तरमाह ।

**महाद्वौ वै बृहद्रथन्तरे निधनेन समर्प्ये ॥१५॥**

बह्वाश्रयत्वाद् बृहद्रथन्तरे महावृक्षत्वेन निरूप्येते अतस्ते निधनेन विषमेण समर्थ्ये सङ्गमयितव्ये ॥ १५ ॥

निधनसाम्ये दोषमाह।

**यद्वै महावृक्षौ समृच्छेते वज्र तत्र विभग्नं प्रभग्नꣳ शेते ॥ १६ ॥**

यद्यत्र खलु महावृक्षौ समृच्छेते तत्र वज्रशाखास्कन्धादिकं परस्परसंघर्षणाद्विभग्नं प्रभग्नं च सञ्च्छेते भूमौ वैषम्ये तु नोक्तदोष इत्यर्थः ॥ १६ ॥

अथ बृहद्रथन्तरयोरन्यतरप्रयोगेऽप्यन्यतरस्यापि फलसिद्ध्यर्थं तयोर्द्वयोर्माहात्म्यं मनसा ज्ञातव्यमित्याह।

**ऐरं वै बृहदैडꣳ रथन्तरमन्नो वै बृहद्वाग्रथन्तरꣳ साम वै बृहदृग्रथन्तरं प्राणो वै बृहदपानो रथन्तरमसौ वै लोको बृहदयꣳ रथन्तरमेतानि मनसान्वीक्ष्योद्गायेत् क्लृप्ताभ्यामेवाभ्यामुद्गायति ॥ १७ ॥**

यद्बृहत्साम तदैरं वै इरा अन्नं तत् सम्बन्धि तत्साधनमित्यर्थः यद्रथन्तरं तदैडं वै पशुसाधनं खलु शिष्टं सुज्ञानं, एतानीरादिरूपाणि एतयोः सम्बन्धीनि मनसान्वीक्ष्य सम्भाव्य पश्चादेते उद्गायेत् एवं कुर्वन् उद्गाता अन्यतरप्रयोगेऽपि क्लृप्ताभ्यां

प्रयुक्ताभ्यामुभाभ्यामुद्गायति उभयोरुद्गाने यत् फलं तदन्यतरेणापि लभत इत्यर्थः एतेषां मनसान्वीक्षणस्यान्यतरप्रयोगेऽपि कर्त्तव्यत्वं सूत्रकारोऽप्याह बृहता रथन्तरेण वा स्तोष्यमाणः प्राक् स्तोमयोगाद्दश व्याहृतीर्मनसा ध्यायेद्दैरमैडमितीति ॥१७॥

इति ताण्ड्यमहाब्राह्मणे सप्तमाध्यायस्य

षष्ठः खण्डः ।

---

अथ सप्तमः खण्डः ।

बृहद्रथन्तरयोः स्तुतिप्रकारं समुच्चित्य दर्शयति ।

**पशवो वै बृहद्रथन्तरे अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौत्यष्टाशफास्तत्पशूनवरुन्धे ॥ १ ॥**

बृहद्रथन्तरे उभे अपि पशवो वै तयोरनुष्ठानात् सिद्धेः अत उभयोः प्रथमाया ऋचः अभित्वा त्वामिद्धीत्यनयोर्ऋचोरित्यर्थः अष्टाक्षरेणादितः अष्टाक्षरैः प्रस्तौति प्रस्तावभागं गायेत् अष्टाक्षरसंख्या ऋगक्षरमात्रविषया न स्तोभादिविशिष्टविषया अभित्वाशूरनोनुमो वा इति रथन्तरे औ हो ईत्वामिद्धि हवामहा३ए इति बृहतीति विभागसंक्लृनाष्टाक्षरप्रस्तावेनाष्टाशफान् पशून् प्राप्नोति यजमानः ॥ १ ॥

अथोत्तरयोर्ऋचोः प्रस्तावभागमाह ।

**द्यक्षरेणोत्तरयोर्ऋचोः प्रस्तौति द्विपाद्यजमा-नो यजमानमेव यज्ञे पशुषु प्रतिष्ठापयति ॥ २ ॥**

रथन्तरस्योत्तरयोर्ऋचोः ईशानमस्य जगतः न जातो न जनिष्यते इत्यनयोर्ऋचोः ईशो वा न जीवेति द्यक्षरेण प्रस्ताव-भागं गायेत् तथा च बृहति औ हाई तु वा२ से औहोई महा२ ए इति द्यक्षरेण प्रस्तौति द्यक्षरस्योक्ताष्टाक्षरं मिलित्वा प्रशस्यते यजमानोऽपि द्विपात् तमेव यज्ञे यज्ञफलभूतेषु पशुषु प्रतिष्ठापयति प्रस्तोता ॥ २ ॥

अथ प्रस्तावमुक्त्वा रथन्तरस्य प्रतिहारभागनियममाह ।

**पञ्चाक्षरेण रथन्तरस्य प्रतिहरति पाङ्क्ताꣳस्तत्पशूनवरुन्धे ॥ ३ ॥**

आ ईशानमा२ ३ ईन्द्रा३ इति प्रथमायां न जातो ना२ ३ जा३ इति मध्यमायां गव्यन्नस्वा२ ३हा३इत्युत्तमायामिति रथ-न्तरस्य तिसृष्वपि प्रतिहारनियमात्तेन पञ्चाक्षरप्रतिहारेण पाङ्क्तानवयवगतपञ्चसंख्यायोगेन पंक्तिसम्बन्धान् पशूनवरुन्धे यज-मानः रोमाणि त्वङ्मांसास्थिमज्जेति पशूनां पञ्चावयवाश्च-त्वारः पादा आत्मा चेति वा ॥ ३ ॥

अथ बृहतः प्रतिहारभागमाह ।

चतुरक्षरेण बृहतः प्रतिहरति चतुष्पदस्तत्पशून-वरुन्धे ॥ ४ ॥

बृहतः प्रथमायां त्वां काष्ठा ४ औ होवा इति मध्यमायां महस्तवा २ ४ औहो वा इति उत्तमायां सत्रावाजा २ ४ औहो वा इति ॥ ४ ॥

अथ बृहद्रथन्तरयोः ककुबुत्तरागानं विदधाति ।

न वै बृहन्न रथन्तरमेकञ्छन्दो यच्छत्ततः ककु-भावुत्तरे उपादधुस्तस्माद्बृहती प्रथमा ककुभावु-त्तरे तस्माद्बृहद्रथन्तरे एकर्च्चेन कुर्व्वन्ति न हि ते एकञ्छन्दोऽयच्छत् ॥ ५ ॥

बार्हते प्रगाथे बृहद्रथन्तरे गीयेते तत्र पूर्वा बृहती उत्तरा विष्टारपङ्क्तिः एवञ्च सत्युक्ते प्रगाथे एकां बृहतीं द्वे ककुभे च सम्पादयितुमाह बृहत्साम रथन्तरं वा एकं छन्दो न खल्वय-च्छत् नियन्तुन्न शक्नोत् ततः कारणात् उत्तरे ऋचौ ककुभौ सम्पाद्य उपादधुः पूर्वे ऋचः यत् यस्मादेवं तस्मादिदानीन्तनै-रपि बृहती प्रथमा कार्या ककुभावुत्तरे तत्प्रकार एवं बृहती तत एव सिद्धा तस्याश्चतुर्थं पादं पुनरावर्त्त्य विष्टावपंक्त्योश्च पादद्वयं मिलित्वा एकाङ्ककुभङ्कुर्य्यात् तस्या एव द्वितीयपादं पुनरावर्त्त्य अवशिष्टपाददद्वयेनान्याङ्ककुभमिति तस्मादेव बृह-

इत्यन्तरे एकर्चं नैकच्छन्दस्केन कुर्व्वन्ति तस्मादित्युक्तविवरणं ॥५॥

न हि त इत्यादि बृहद्गाने कञ्चिद्विशेषमाह।

नव बृहतो रोहान् रोहति नव प्राणाः प्राणाने-
वावरुन्धे ॥ ६ ॥

बृहतः साम्नः नव रोहान् आरोहणानि उच्चायानारोहति आरोहत् प्राणानां नवत्वमसकृदुक्तं सङ्घासाम्यात् नव प्राणान् यजमान आत्मनि तद्दधाति ॥ ६ ॥

अथ तृचे तान् विभज्य दर्शयति।

त्रीन् प्रथमायाꣳ रोहति भूतं भवद्भविष्यत्तानेवावरुन्धे त्रीन् मध्यमायाꣳ रोहत्यात्मानं प्रजां पशूꣳस्तानेवावरुन्धे त्रीनुत्तमायाꣳ रोहति त्रय इमे लोका एष्वेव लोकेषु प्रतितिष्ठति ॥ ७ ॥

प्रथमायामृचि त्रीन् रोहति द्वितीयायां तृतीयायाञ्च त्रीनिति नव रोहाः स्युः प्रथमायां रोहत्रयेण भूतवर्त्तमानभविष्यत्कालीनाभोगाः सन्ति तानेव यजमानोऽवरुन्धे शिष्टं सुगमं ॥ ७ ॥

उक्तार्थवेदनपूर्व्वकारोहणफलमाह।

सर्वान् कामानवरुन्धे य एवं विद्वान् बृहतो रोहान्रोहति ॥ ८ ॥

स्पष्टोऽर्थः ॥ ८ ॥

रथन्तरे उद्गातृप्रस्तोतृभागयोर्म्मध्ये व्यवधानायोद्गातुः कश्चिद्व्यवधानं विधत्ते ।

वज्रेण वा एतत्प्रस्तोतोद्गातारमभिप्रवर्त्तयति यद्रथन्तरं प्रस्तौति समुद्रमन्तर्द्धायोद्गायेद्वागित्यादेयं वाग्वै समुद्रः समुद्रमेवान्तर्दधात्यहिꣳसायै ॥ ९ ॥

प्रस्तोता रथन्तरं तत्प्रस्तावभागं प्रस्तौतीति यत् एतद्वज्रेणैव प्रस्तोता उद्गाता च प्रवर्त्तयति प्रेरयति, अतस्तत्परिहाराय समुद्रमन्तर्द्धाय व्यवधायोद्गायेदुद्गाता समुद्रस्यान्तर्धातुमशक्यत्वात् तदुपाय उच्यते वागिति वागेवेदं इत्यादेयं मनस्याधानं कर्त्तव्यं ध्यातव्यमित्यर्थः । वाचः समुद्रस्य च कः प्रसङ्ग इत्यताह यः समुद्रः सवाग्वै स मुद्रवत् सर्व्वपदार्थानां स्वान्तर्निधानाद्वाक् समुद्र इत्युच्यते तया च वाङ्निधानेन समुद्रमेवान्तर्निहितवान् भवत्यहिंसायै ॥ ९ ॥

अथोक्तदोषपरिहाराय तत्र कश्चिद्विशेषमाह ।

वलवद्गेयं वज्रमेव प्रवृत्तं प्रत्युद्गृह्णाति ॥१०॥

बलवदिति स्पष्टाक्षरमुद्गाता गातव्यं तथा सत्यस्य दौर्बल्याभावात्प्रस्तावरूपं वज्रमेवोद्गृह्णाति ऊर्द्ध्वमेव स्तम्नाति ॥ १० ॥

तत्रैवोपायान्तरमाह ।

**वल्वला कुर्व्वता गेयमभिलोभयतेव वज्रमेवाभिलोभयति ॥ ११ ॥**

वल्वला कुर्व्वता गेयं स्तोभवता गेयं अभिलोभयता इवेति अभिलोभनं हिंसनं वज्रमभिलोभयामीति ध्यायता गेयमित्यर्थः तथा सति वज्रमेवाभिलोभयति हिनस्ति ॥ ११ ॥

रथन्तरगाने नियमविशेषमाह ।

**क्षिप्रङ्गेयꣳ स्वर्गस्य लोकस्य समष्ट्यै ॥ १२ ॥**

क्षिप्रमविलम्बेन गातव्यं तच्च स्वर्गस्याविलम्बेन समष्ट्यै संप्राप्त्यै भवति ॥ १२ ॥

अत्रैव नियमविशेषमाह ।

**देवरथो वै रथन्तरमक्षरेणाक्षरेण प्रतिष्ठापयतोङ्गेयमरेणारेण हि रथः प्रतितिष्ठति ॥ १३ ॥**

रथन्तरं साम देवानां वै रथः तदक्षरेणाक्षरेण प्रतिष्ठापयतोङ्गेयं हि यस्माद्रथः अरेणारेण रथाङ्गस्य शङ्कवो नेम्याधारभूताः अराः प्रत्यरं हि रथः प्रतितिष्ठति ॥ १३ ॥

अथ तस्य भूस्पर्शं गानं विधत्ते।

**यो वै देवरथमनन्वालभ्यातिष्ठत्यवास्मात्पद्यत इयं वै देवरथ इमामालभ्योद्गायेन्नास्मादवपद्यते ॥ १४ ॥**

यो हि देवरथं रथन्तरमन्वालभ्यालम्भनं स्पर्शनमकृत्वा आतिष्ठत्यारोहति सोऽस्माद्देवरथादवपद्यते अधःपतति यथा लौकिकरथमनवलम्ब्य आरोहन्नवपद्यते तद्वत् अतस्तदवलम्बनस्य क उपाय इत्युच्यते इयं पृथिव्येव हि देवरथः इयं वै लोको रथन्तरमित्युक्तत्वात्तस्मादिमामालभ्योद्गेयं ॥ १४ ॥

पुनस्तत्रैव कञ्चिन्नियममाह।

**ईश्वरं वै रथन्तरमुद्गातुश्चक्षुः प्रमथितोः प्रस्तूयमाने सम्मीलेत्स्वर्दृशं प्रतिवीक्षेत नैनञ्चक्षुर्जहाति ॥ १५ ॥**

रथन्तरं साम स्तूयमानं उद्गातुश्चक्षुः प्रमथितोः प्रमथितुं ईश्वरं वै समर्थं खलु अतस्तस्मिन् प्रस्तूयमाने चक्षुः सम्मीलेत् मुकुलितं कुर्य्यात् पुनः स्वर्दृशं स्वर्दृशमिति पदं गीयमानं प्रतिवीक्षेतावलोकयेत् एवं सति एनमुद्गातारं चक्षुर्न जहाति नान्धो भवति ॥ १५ ॥

रथन्तराश्रयभूतायामृच्यध्ययनप्राप्तं तस्युष इति पदं निन्दित्वा प्रकारान्तरेण पठितव्यमित्याह।

प्रजननं वै रथन्तरं यत्तस्थुष इत्याह स्थायुकोऽस्मा-दुर्वाग्भवत्यपि प्रजननꣳ हन्त्यस्थुष इति वक्तव्यꣳ सुस्थुष इति वा स्थायुकोऽस्मादुर्वाग्भवति न प्रजनन-मपि हन्ति ॥ १६ ॥

रथन्तरं साम प्रजननस्यापत्याद्युत्पादनस्य हेतुत्वात् स्वय-मपि प्रजननमेव तथा च यद्भूयदि तस्थुष इत्याहोद्गाता न हि तस्य वाग्रथन्तरात्मिका स्थायुका स्थितिस्वभावा भवति न प्रस्तुता अतएव प्रजननमुद्गातुः प्रजाद्युत्पादनसामर्थ्यमपि हन्ति कथं तस्य परिहार इति तत्राह अस्थुष इति वक्तव्यं तथोक्ते वाचा-मस्थायुकदोषः परिहृतो भवति अथ वा सुस्थुष इति वक्तव्यं तेनास्य रथन्तररूपाया वाचः शोभनस्थायुकत्वं भवति प्रजनन-मपि नापहन्ति अयमभिप्रायः तस्थुष इत्युक्तेरुद्गातुः रथन्तर-रूपा वाक् प्रस्तुता भवति रथन्तरगानस्य फलरूपं प्रजननमपि सुस्थुष इत्युक्तौ सुशब्दश्रवणात् प्रजननक्षयाभावेन सुप्रजननं भवति ॥ १६ ॥

अथ रथन्तरगानात्पूर्वं व्यस्ते गोष्वित्ययं मन्त्रो जप्तव्य इति विधित्सुराह ।

पृष्ठानि वा असृज्यन्त तैर्देवाः स्वर्गं लोकमायꣳ-स्तेषाꣳ रथन्तरम्महिम्ना नाशक्नोदुत्पतितुं ॥ १७ ॥

पूर्वं देवा रथन्तरादीनि षट् पृष्ठानि सृष्ट्वा रथन्तरव्यतिरिक्तैरितरैः प्रयुक्तैः सह स्वर्गं लोकमायन् तेषां मध्ये रथन्तरपृष्ठं महिम्ना प्रवृद्धेन माहात्म्येन निमित्तेन तत्र तत्र विप्रकीर्णत्वेनेत्यर्थः तेनोत्पतदपि रथन्तरं स्वर्गं गन्तुं नाशक्नोत् ॥ १७ ॥

इदानीं स्वर्गसाधनत्वेन विदधाति।

**तस्य वशिष्ठो महिम्नो विनिधाय तेन स्तुत्वा स्वर्गं लोकमैत्तान् संभृत्योद्गायेत् ॥ १८ ॥**

तस्य रथन्तरस्य महिम्नो माहात्म्यानि विप्रकीर्णानि विनिधाय विशेषेणैकत्र स्थाप्य तेन स्तुत्वा वशिष्ठः स्वर्गं लोकमैदगच्छत् तस्मात्तन्महिम्नः संभृत्योद्गेयमितीतरैरपि ॥ १८ ॥

अथ गातव्यं संभृतमहिमानं मन्त्रं दर्शयति।

**यस्ते गोषु महिमा यस्ते अप्सु रथे वा ते स्तनयित्नौ य उ ते यस्ते अग्नौ महिमा तेन सम्भव रथन्तर द्रविणवत् न एधि ॥ १९ ॥**

अस्यायमर्थः हे रथन्तर योयो महिमा ते तव सम्बन्धी गवादिषु अग्न्यन्तेषु विप्रकीर्णो वर्त्तते तेन सर्व्वेण सम्भव समर्द्धति प्रवृद्धं भव तथा भूतं सत् द्रविणवत् बहुद्रविणोपेतं सत् नोऽस्मदर्थं एधि भव समागच्छ वा ॥ १९ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तमाध्यायस्य

सप्तमः खण्डः।

अथ अष्टमः खण्डः ।

अथाष्टमनवमयोर्व्वामदेव्यं स्तूयते तत्रादौ निर्व्वचनद्वारा तत्प्रशंसति ।

**अपो वा ऋत्व्यमार्च्छंस्तासां वायुः पृष्ठे व्यवर्त्तत ततो वसु वामं समभवत्तस्मिन् मित्रावरुणौ पर्य्यपश्यतां तावब्रूतां वामं मर्य्या इदं देवेष्वाजनीति तस्माद्वामदेव्यं ॥ १ ॥**

ऋत्विजः ऋतुसंबन्धि प्रजननसामर्थ्यं अपः उदकानि खल्वार्च्छंदगच्छत् तासां प्राप्तर्त्विजानामपां वायुः पृष्ठे देशे व्यवर्त्तत अनुप्रवृत्तोऽभूत् ततः अङ्गरः सकाशात् वामं वमनीयं वसु धनं समभवत् तत्सम्भूतं धनं मित्रावरुणौ पर्य्यपश्यतां दृष्टवन्तौ दृष्ट्वा च तावब्रूतां किमिति उच्यते हे मर्य्याः वाममिदं धनं सामलक्षणं देवेष्वाजनि उदभूदिति तस्मादेवं ताभ्यामुक्तत्वाद्वामदेव्यमिति तन्नाम सम्पन्नं ॥ १ ॥

अथोत्पन्नं वामदेव्यं सर्व्वदेवतासम्बन्धद्वारेण प्रशंसति ।

**तत्परिगृह्णन्तावब्रूतामिदमविदावेदन्नौमाभ्यर्त्तिद्वमिति तत्प्रजापतिरब्रवीन् मद्वा एतदध्यजनि मम वा एतदिति तदग्निरब्रीवीन्मां वा एतदन्नजनि मम**

वा एतदिति तदिन्द्रोऽब्रवीच्छ्रेष्ठस्था वा एतदहं वः श्रेष्ठोऽस्मि मम वा एतदिति तद्विश्वे देवा अब्रुवन्नस्मद्देवत्यं वा एतद्यदङ्गिरोऽधि समभूदस्माकं वा एतदिति तत्प्रजापतिरब्रवीत्सर्वेषान्न इदमस्तु सर्वं इदमुपजीवामेति तत्पृष्ठेषु न्यदधुः सर्वदेवत्यं वै वामदेव्यं ॥ २ ॥

तत् वसु परिगृह्णन्तौ मित्रावरुणौ अब्रूतां इदं वसुविदाव आवां लब्धवन्तौ स्वः अतः इन्द्रं नौ आवाभ्यामेव अतो हे देवाः अभ्यर्त्तिद्भ्वं नो अतिवाधध्वं इत्यब्रूतां एवमुक्ते तद्वसु प्रजापतिरब्रवीत् एतद्वसु मदधि मत्तोऽजनि प्रादुरभूत् अतो ममैव खल्वेतदिति तदेव धनं प्रत्यग्निरेवाब्रवीत् एतद्वसु मामनु खल्वजनि अग्नेरापः इति श्रुतेः अग्न्यनन्तरमापः उत्पन्नाः ताभ्योऽस्योत्पन्नत्वादित्यभिप्रायः ममैवैतदिति तथा तद्धनमिन्द्रोऽब्रवीत् एतद्धनं श्रेष्ठस्था वै श्रेष्ठे तिष्ठतीति श्रेष्ठस्था तिष्ठतेः सर्वधातुभ्योऽसुन्नित्यसुन् प्रत्ययः व्यत्ययेन पुंलिङ्गता श्रेष्ठविषयं ह्येतद्वामदेव्यं अहञ्च वो युष्माकम्मध्ये श्रेष्ठोऽस्मि अतो ममैवैतदिति तदेव धनं विश्वे देवा अपां सर्व्वदेवत्यत्वात् ततोत्पन्नं धनमस्मद्देवत्यं अतो अस्माकमेवेत्युक्तवान् एवं वसुविषयं विवदमानेषु सत्सु प्रजापतिरब्रवीत् इदं धनन्नः सर्वेषां अस्तु अतः सर्व्वमिदं साधनं उपजीवामेति

एवमुक्ते तद्वामदेव्यं धनं पृष्ठेषु रथन्तरादिषु न्यदधुः देवाः अत इदं वामदेव्यं सर्व्वदेवत्यं वै ॥ २ ॥

एतदेव विभज्य दर्शयितुमादौ प्रजापतेर्भागं दर्शयति ।

यत्कवतीषु तेन प्राजापत्यं को हि प्रजापतिर्यद-निरुक्तासु तेन प्राजापत्यमनिरुक्तो हि प्रजापतिः ॥३॥

यत् कवतीषु कशब्दोपेतासु कया न इत्यादिषु तिसृषु गायति तेन तत्साम प्राजापत्यं उक्तस्यैव समर्थनं कोहीति यः प्रजापतिः स कोहि कशब्दवाच्यः खलु कोऽहं स्यामिति को ह वै नाम प्रजापतिरिति तैत्तिरीयकं तथा अनिरुक्तासु असष्टदेवता-विशेषासूक्तास्वेवर्च्चु गीयते अतोऽप्येतत्प्राजापत्यं तत् समर्थितं अनिरुक्तो हि प्रजापतिरनिरुक्तत्वं सर्व्वरूपत्वेनावशिष्टविशेष-रूपत्वाभिप्रायं ॥ ३ ॥

अग्नेर्भागं दर्शयति ।

यद्गायत्रीषु तेनाग्नेयं गायत्रछन्दा ह्यग्निः ॥ ४ ॥

यत् कयान इत्यादिषु गायत्रीषु गीयते तेन तदाग्नेयं भवति ॥ ४ ॥

यत् पृष्ठेषु न्यदधुस्तेनैन्द्रꣳ सर्व्वाणि हि पृष्ठानी-न्द्रस्य निष्केवल्यानि ॥ ५ ॥

यद्यस्माद्वामदेव्यं पृष्ठेषु न्यदधुः तेनैतदैन्द्रं भवति कुत इत्याह सर्वाणि हि पृष्ठानि चत्वारि इन्द्रस्य निष्केवल्यानि असाधारणानि ॥ ५ ॥

अथास्य मित्रावरुणयोर्भागमाह ।

**यन्मैत्रावरुणोऽनुशꣳसति तेन मैत्रावरुणं ॥६॥**

यद्यस्मात् मैत्रावरुणदेवत्यशस्त्रे वामदेव्यमनुशंसति तेन मैत्रावरुणमिति तेन वामदेव्यं अग्नेर्गायत्र्यभवदिति श्रुतेः ॥६॥

अथेन्द्रस्य भागं दर्शयति अथैतस्य वैश्वदेवत्वमाह ।

**यद्बहुदेवत्यमुत्तमं पदं तेन वैश्वदेवं सर्वेष्वेव रूपेषु प्रतितिष्ठति ॥ ७ ॥**

यद्यस्मादुत्तमं पदं वामदेव्यटचस्यान्तिमं शतं भवा सूतय इत्येतत् पदं बहुदेवत्यं तेन तद्वैश्वदेवं अत इत्यमुक्तरीत्या सर्वेष्वेव रूपेषु सर्वदेवतासम्बन्धिषु प्रतितिष्ठति प्रतिष्ठितं भवति ॥७॥

अथ वामदेव्याद्द्रयन्तरादिसृष्टिं विवक्षुस्तत्साधनत्वेन वामदेव्ययोनिभूतां गायत्रीमुपदिशन्नाह ।

**प्रजापतिर्वा एतां गायत्रीं योनिमपश्यत् स आदीधीतास्माद्योनेः पृष्ठानि सृजा इति ॥ ८ ॥**

प्रजापतिः खलु एतां कयान इतीमां गायत्रीं योनिं वाम-

देव्यस्य योनिभूतामपश्यत् दृष्ट्वा च स प्रजापतिरादीधीताध्यायत् किमिति अस्माद्गायत्रीरूपाद्योनेः पृष्ठानि बहूपि सृजे इति सृजानीति ॥ ८ ॥

अथोक्तसाधनाद्रथन्तरसृष्टिमाह ।

**स रथन्तरमसृजत तद्रथस्य घोषोऽन्वसृज्यत ॥९॥**

स प्रजापतिः गायत्र्या उत्पन्नाद्वामदेव्याद्वा रथन्तरं पृष्ठं प्रथममसृजत तत् पृष्ठमनु रथस्य घोषोऽन्वसृज्यत नचानर्थकोऽयं रथघोषसृष्ट्युपन्यास इति मन्तव्यं सप्रयोजनत्वात् तथा हि रथन्तरमनुसृत्योत्पन्नत्वात् पृष्ठस्य प्रथमेऽहनि रथन्तरं रथघोषेणोपाकुर्व्वन्ति वामदेव्ययोने रथन्तरपृष्ठोत्पत्तिप्रकार इत्थं ज्ञातव्यः रथन्तरस्य बार्हतप्रगाथो योनिस्तत्र प्रथमायां त्रयो गायत्र्याः पादाः एकश्च जागतः द्वितीयायां विष्टारपङ्क्तौ द्वौ गायत्रौ पादौ द्वौ च जागतौ अतो वामदेव्याधारायामृचि गायत्रीपादसङ्घात्वाद्गायत्र्यामुत्पन्नमित्युच्यते साम्नः साम्नोत्पत्तिपक्षेऽपि स्तोत्रियद्वारा पूर्व्वोक्तएव सम्बन्धः ॥ ९ ॥

अथ बृहद्वैरूपयोर्गायत्रीयोनेः सकाशात् सृष्टिमाह ।

**स बृहदसृजत तत् स्तनयित्नोर्घोषोऽन्वसृज्यत स वैरूपमसृजत तद्वा तस्य घोषोऽन्वसृज्यत ॥ १० ॥**

बृहद्वैरूपयोरपि बार्हतप्रगाथाभ्यामेवोत्पत्तेस्तयोः पूर्व्ववद्गा-

यत्रीपादसद्भावाद्गायत्र्या एवोत्पत्तिस्तनयित्नुघोषेण बृहतः स्तुत्यशक्यत्वात्तत्समानेन दुन्दुभिघोषेणोपाकरणं तथा वा तद्घोषस्य रूपानन्तरं सृष्टत्वादुपवाजयमाना वैरूपेण स्तुवीरनुपवाज्यमाना वा ॥ १० ॥

अथोक्तसाधनाद्वैराजसृष्टिमाह।

## स वैराजमसृजत तदग्नेर्घोषोऽन्वसृज्यत ॥११॥

राजगानासम्भवादग्निमन्थनघोषएव तत्र घोषः वैराजस्य गायत्रीसम्बन्धः एवं वैराजस्य प्रथमापि वा सोममिन्द्रमन्नू उत्वेति त्रिंशदक्षरा उत्तरे तयस्त्रिंशदक्षरेति टचस्य षण्णवतिं अक्षराणि तास्ततस्रो गायत्र्यः सम्पद्यन्ते अतस्तस्य तत उत्पत्तिः ॥११॥

अथ ततः शाक्करसृष्टिमाह।

## स शक्करीरसृजत तदपाङ्घोषोऽन्वसृज्यत ॥१२॥

शक्करीशब्दस्य स्त्रीलिङ्गत्वात्तच्छन्दपरामर्शाय शक्करीसाध्यं पृष्ठं सामैवानु पश्चाद्भवां घोष इति व्याख्येयं अपां घोषेण सह शाक्करस्योत्पन्नत्वात्तदाश्रयमहानाम्नी गानसाधिका अप उपनिदधुः ध्वनिसम्बन्धस्तु यो यः साम गायति स स उदकघोषं आतयतीत्येवं ज्ञातव्यः गायत्र्या अस्योत्पत्त्युपचारः प्रायशो महानाम्नीषु उपसर्गाव्यतिरिक्तासु शिक्षाशचीनामित्यादिषु गायत्रीपादानां प्रायशः सम्भवादुपपद्यते ॥ १२ ॥

अथ ततो रैवतोत्पत्तिमाह।

स रेवतीरसृजत तद्वैवतं घोषोऽन्वसृज्यत॥ १३॥

नन्वत्र रेवतीनामैव सृष्टिराम्नायते उत्तरं वारवन्तीयमेव वारवन्तीनां स्तोत्रीयासु विधास्यति सूत्रकारेणापि वारवन्तीयस्य स्तोत्रे धेनुः सम्वासयेयुरित्याह नैष दोषः अत्र रेवतीवारवन्तीययोर्विकल्पमेके ब्रुवते अन्ये तु रेवतीशब्देन स्तोत्रीया उच्यन्त इत्याहुः निदानञ्च षष्ठेऽहनि रेवतीषु वारवन्तीयं पृष्ठं भवतीति रेवतीनां गायत्रीत्वात्ततो रैवतसृष्टिसम्बन्धः॥ १३॥

उक्तमर्थं संग्रहेण दर्शयति।

एतैर्वा एतानि सह घोषैरसृज्यन्त॥ १४॥

एतैर्वा उक्तैः खलु घोषैः रथादिसम्बन्धिभिः सहैतानि रथन्तरादीन्यसृज्यन्तेति घोषाणां सह सृष्टिप्रयोजनं पूर्व्वमुक्तं॥ १४

उक्तार्थवेदनफलमाह।

सर्व्वेऽस्मिन् घोषाः सर्व्वाः पुण्यावाचो वदन्ति य एवं वेद॥ १५॥

अस्मिन् वेदितरि एनं विषयीकृत्येत्यर्थः सर्व्वाः पुण्या इत्युक्तस्य विवरणं पुण्यावाच एनमुच्चरन्तीत्यर्थः॥ १५॥

इति ताण्ड्यमहाब्राह्मणे सप्तमाध्यायस्य
अष्टमः खण्डः।

अथ नवमः खण्डः ।

अथोक्तसम्बन्धमपेक्ष्य पृष्ठानां वामदेव्यपुत्रत्वेन तदेव प्रशंसति ।

**पिता वै वामदेव्यं पुत्राः पृष्ठानि ॥ १ ॥**

स्पष्टं ॥ १ ॥

कुत इति तदुपपादयति ।

**एतस्माद्वा एतानि योनेरसृज्यन्त ॥ २ ॥**

एतस्माद्वामदेव्ययोनेः सकाशात् भवन्त्येवं ॥ २ ॥

किं तत इत्याह ।

**तस्मात् पृष्ठानां स्तोत्रं वामदेव्येनानुष्टुवन्ति शान्त्यै ॥ ३ ॥**

यस्मादेवं तस्मात् षण्णामपि पृष्ठानां स्तोत्रं वामदेव्येन स्तुवन्ति पृष्ठस्तोत्रवैगुण्यनिबन्धनाया अशान्तेरपनयनाय ॥ ३ ॥

एवमपि शान्तिः कथमिति तत्राह ।

**यद्वि पुत्रोऽशान्तं चरति पिता तच्छमयति ॥४॥**

एवं लोकसिद्धत्वात् स्पष्टं ॥ ४ ॥

अथ वामदेव्यमन्तरिक्षस्थानीयत्वञ्चाह ।

अयं वै लोको मध्यमो वामदेव्यमेतस्माद्वा इमौ लोकौ विष्वञ्चावसृज्येतां बृहच्च रथन्तरञ्च ॥ ५ ॥

इयं वामदेव्यमयं मध्यमो लोकोऽन्तरिक्षं खलु एतस्मादन्तरिक्षाद्विष्वञ्चौ अभितोऽतो विद्यमानावयं च भूर्लोकोऽसौ द्युलोकस्त्वासृज्येतां यद्बृहच्च रथन्तरं चास्ति ॥ ५ ॥

अस्त्वेवं तयाणां लोकतयात्मकत्वं कथमनेन वामदेव्यस्य स्तुतिरिति तत्राह ।

यद्रथन्तरेण स्तुवन्ति ये रथन्तराः पशवोऽन्तरीक्षन्त उपश्रयन्ति यद् बृहता स्तुवन्ति ये वार्हताः पशवोऽन्तरीक्षन्त उपश्रयन्ति ते वामदेव्यस्य स्तोत्रेणावरुद्धाः ॥ ६ ॥

यदि रथन्तरेण स्तुवन्ति ये राथन्तराः पशवः सन्ति ते सर्वेऽप्यन्तरिक्षमुपश्रयन्ति एवं बृहत् स्तुत्वापि वार्हताश्च पशवोऽन्तरिक्षमेवोपश्रयन्ति बृहद्रथन्तरयोरुभयोरपि पशुहेतुत्वात्तदुभयफलभूताः पशवोऽप्यन्तरिक्षमेवोपश्रयन्ति एवमेकैकस्तोत्रप्रयोगे वामदेव्यस्य स्तोत्रप्रयोगे तु उभयेऽपि पशवोऽवरुद्धाः स्युः यद्वा यदुभयविधपशूनामन्तरिक्षाश्रयणं तदन्तरिक्षरूपवामदेव्यस्तुतिप्रसादाल्लभ्यमित्यर्थः ॥ ६ ॥

अथ वामदेव्यगाननियममाह ।

**ध्रुवश्चासीनो वामदेव्येनोद्गायेत्पशूनामुप हृत्यै ॥ ७ ॥**

ध्रुवोनिश्चल आसीन उपविष्टः नियमगानं पशूनां सञ्चरतां पुनरुपावर्त्तनाय भवति ॥ ७ ॥

अथ वेदितुः फलमाह ।

**उपैनं पशव आवर्त्तन्ते यएवं वेद ॥ ८ ॥**

सुस्पष्टं ॥ ८ ॥

अथ ध्रुव आसीनोगायेदित्युक्तमेव नियमं वाक्यद्वयेन प्रपञ्चयति ।

**अन्तरिक्षं वै वामदेव्यमधून्वतेवोद्गेयमधूतमिव ह्यन्तरिक्षं पशवो वै वामदेव्यमहिंसते वोद्गेयं पशूनामहिंसायै ॥ ६ ॥**

अधून्वतेव अङ्गान्यकम्पतेव अहिंसतेव अङ्गान्यपीडतेव सुज्ञानमन्यत् ॥ ६ ॥

अथ वामदेव्यगाने प्रकारविशेषविषयं ब्रह्मवादिनः प्रश्नं तदुत्तरञ्चावतारयति ।

**कथमिव वामदेव्यं गेयमित्याहुः ॥ १० ॥**

वामदेव्यं कथं केन प्रकारेण गेयमित्यस्येत्याङ्करित्यभिज्ञानामुत्तरं ॥ १० ॥

इतिशब्दोक्तेन प्रकारविशेषं दर्शयति ।

## यथांकुली पुत्रान् सन्दश्यासम्भिन्दती हरति यथा वातोऽप्सु शनैर्वाति ॥ ११ ॥

यथा अंकुली मार्ज्जारी स्वपुत्रान् सन्दश्यासम्भेदं कुर्व्वती हरति यथा वा वायुः पर्व्वताग्रादिवैलक्षण्येनाप्सु शनैर्वात्येवङ्गेयमिति ॥ ११ ॥

अथ नियमान्तरमाह ।

## स्वधूर्वामदेव्यङ्गेयं ॥ १२ ॥

अत्र धूरिति प्रकार उच्यते स्वैवानन्यसाधारणी धूर्य्यस्तिः स्वधूः तथा वामदेव्यं गेयं ॥ १२ ॥

अथोक्तप्रकारेण गानफलमाह ।

## यो वै स्वधूर्वामदेव्यङ्गायति स्वधूर्भवति ॥ १३ ॥

अनन्याधीतो भवतीत्यर्थः ॥ १३ ॥

स्वधूरित्येतद्विष्टणोति ।

## यात्यस्यान्यो नियानेन नान्यस्य नियानेन याति ॥ १४ ॥

अस्योद्गातुर्नियानेन निगमनेन मार्गेणान्य उद्गाता याति नायमन्यस्य नियानेन मार्गेण याति ॥ १४ ॥

स्वधूर्गेयमित्युक्तं तत् विवृणोति ।

**न बृहतो न रथन्तरस्यानुरूपङ्गेयꣳ स्वेनैवायतनेन गेयमायतनवान् भवति ॥ १५ ॥**

बृहतो रथन्तरस्य न यदनुरूपं अनुकूलं तेनैव तन्न गेयं किन्तु वामदेव्यस्य यत् स्वमायतनं नियता गीति स्तस्यां गानमेवास्य रूपे स्थितिः य एवं गायति सोऽयायतनवान् भवति अथ वामदेव्यं स्वस्तोत्रियाणामनिरुक्तत्वस्य पूर्वमुक्तत्वात् स्वयमप्यनिरुक्तं भवति ॥ १५ ॥

तद्रूपत्वं स्तोतुकाम आह ।

**देवा वै पशून् व्यभजन्त ते रुद्रमन्तरायꣳस्तान्वामदेव्यस्य स्तोत्र उपेक्षते ॥ १६ ॥**

पूर्वं देवाः प्रजापतिना सृष्टान् पशून् व्यभजन्त परस्परं विभागमकुर्व्वन् ते विभजमानाः विभागात् रुद्रमन्तरायन्नन्तरितवन्तः तान् वामदेव्यस्य स्तोत्रे क्रियमाणान् उपेक्षते उपेत्य पश्यति पशून् घातुकामो रुद्रः ॥ १६ ॥

उक्तदोषपरिहाराय तस्यानिरुक्ततामाह ।

**अनिरुक्ताङ्गेयं ॥ १७ ॥**

तस्मादिदानीन्तनैरपि अनिरुक्तं देवतायाः फलस्य वा कस्यचिन्निर्वचनमकृत्वा वामदेव्यं गातव्यं अनिरुक्तककवतीव्यतिरिक्तास्वेतन्न गातव्यमित्यर्थः ॥ १७ ॥

उक्तवैपरीत्ये दोषमाह।

**यन्निराह रुद्राय पशूनपि दधाति रुद्रस्ताꣳ समां पशून् घातुको भवति ॥ १८ ॥**

यद्यपि हि निराह निर्ब्रूते तां समान्तस्मिन् संवत्सरे रुद्राय पशूनपि दधाति स्थापितवान् भवति स रुद्रः तां समां पशून् घातुको भवति तस्मात् कवतीष्वेव गातव्यमिति तस्य स्तुतिः ॥ १८ ॥

अथ पशुकामस्य निरुक्तमपि स्तोत्रियान्तरं वामदेव्यस्य ग्राह्यमित्याह।

**रेवतीषु वामदेव्येन पशुकामः स्तुवीत ॥ १९ ॥**

रेवतीर्न इत्याद्या रेवत्यः ॥ १९ ॥

अथ तासां गोसम्बन्धमाह।

**आपो वै रेवत्यः पशवो वामदेव्यमद्भ्य एवास्मै पशून् प्रजनयति ॥ २० ॥**

अद्भ्योधान्यादिसमृद्धि स्तद्द्वारा रयिर्द्धनं भवतीति रेवत्य आपः वामदेव्यस्यान्तरिक्षरूपत्वात् पशुसम्बन्धः पूर्व्वमुक्तः तथा सति रेवतीषु वामदेव्यगानेनाङ्गिरः समुद्रात् पशूनेवास्मै यजमानाय प्रजनयति ॥ २० ॥

अथोक्तप्रयोगे किञ्चिद्दोषमाह।

अनवर्त्तिः पशुतो भवति प्रजा त्वस्य मीलितेव भवति ॥ २१ ॥

अवर्त्तिर्द्दारिद्र्यन्तद्राहित्यमनवर्त्तिः पशुतः पशुभिरनवर्त्तिरदरिद्रो भवति यदि तथापि अस्य प्रजा पुत्रादिलक्षणा मीलितेव सङ्कुचितेव भवति रेवतीनामुदकरूपत्वात् बहूदकप्रदेशे प्रजासमृद्ध्यभावादित्यभिप्रायः ॥ २१ ॥

उक्तदोषपरिहाराय कवतीभ्य एव निर्व्वक्तव्यमित्याह।

कवतीभ्यो ह्येति प्रजापतेः ॥ २२ ॥

हि यस्मात् पूर्व्वस्मिन् दोषोऽस्ति, अतः कशब्दवाच्यप्रजापतेः सम्बन्धिनीभ्यः कवतीभ्य एति एतव्यं वामदेव्यं यद्वा उक्तदोषपरिहाराय कवतीभ्यो वामदेव्यमिति हीत्यनुवादः ॥ २२ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तमाध्यायस्य

नवमः खण्डः।

---

अथ दशमः खण्डः ।

उक्तं सर्वेषु पृष्ठेषु द्वितीयन्नियमेन मैत्रावरुणसामेति अधुना रथन्तरपृष्ठेनौधसं कार्य्यं बृहत् पृष्ठे श्यैतमिति विवक्षुराह ।

**इमौ वै लोकौ सहास्तान्तौ वियन्तावब्रूतां विवाहं विवहावहै सह नावस्त्विति ॥ १ ॥**

पूर्व्वमिमौ भूर्लोकद्युलोकौ सहास्तां तौ पश्चाद्वियुज्यमानौ इत्यब्रूतां किमिति विवाहं विवधं पृथग्वहनं विवहावहै करवावहै आख्यातगतो विवाहशब्दोऽनुवादः परस्परोपकार्य्योपकारकभावं करवावहा इत्यर्थः तदेवाह सह नावस्त्विति यदेकेन लब्धं तदुभयोरस्त्वित्युक्त्वा तथा कुरुतामित्यर्थः ॥ १ ॥

अथ विवाहप्रकारं दर्शयति ।

**तयोरयममुष्मै श्यैतं प्रायच्छन्नौधसमसावस्मै ॥२॥**

तयोर्म्मध्ये अयं भूर्लोकोऽमुष्मै द्युलोकाय स्वस्वभूतं श्यैतं साम प्रायच्छत्तथाऽसौ द्युलोकोऽस्मै भूर्लोकाय नौधसं प्रायच्छत् ॥ २ ॥

ततः किञ्जातमित्यताह ।

**तत एनयोर्न्निधने विपर्य्यक्रामतां देवविवाहो वै श्यैतनौधसे ॥ ३ ॥**

ततः परस्परविवाहादेतयोः श्यैतनौधसयोर्निधने विपर्यं-क्रामतां विपरिवृत्त्या श्रयतां व्यत्यस्ते अभूतामित्यर्थः श्यैतनौधसे सामनीयं परस्परं विवाहं कृतवती असौ देवविवाहो देवेभ्यः कृतो विवाहः खलु अतो नातिक्रमणीयदृत्यर्थः ॥ ३ ॥

अथोक्तार्थवेदनफलमाह।

प्रवसीयाᳪसं विवाहमाप्नोति य एवं वेद ॥ ४ ॥

प्राप्नोतीति सम्बन्धः ॥ ४ ॥

अथ रथन्तरबृहतोरन्यतरस्यापि प्रयोगे लोकत्वयप्राप्ति-फलं वक्तुमुभयोः प्रयोगेन क्लृप्तिं दर्शयति।

इतो वा इमे लोका ऊर्द्धाः कल्पमानायन्त्यमुतो-र्वाञ्चः कल्पमाना आयन्ति ॥ ५ ॥

रथन्तरं पृष्ठं कुर्वते यजमानाय इतोऽस्माल्लोकादारभ्य ऊर्द्धाः उपर्य्युपरि वर्त्तमानाः भूरादिलोकाः कल्पमानाः स्वं स्वं भोगं प्रयच्छन्तो यन्ति तथा बृहत् पृष्ठं कुर्व्वतोऽमुतः स्वर्गा-दारभ्य स्वं स्वं भोगं कल्पमानाः अर्वाञ्चः अवाङ्मुखा आयन्ति तयोऽपि लोकाः ॥ ५ ॥

तयोरन्यतरानुष्ठानेऽपि लोकत्वयात् क्लृप्तिं दर्शयति।

यद्रथन्तरेण स्तुवन्तीमं लोकं तेन युनक्त्यन्तरिक्षं

वामदेव्येन नौधसेनामुं यद् बृहता स्तुवन्त्यमुं लोकं तेन युनक्त्यन्तरिक्षं वामदेव्येन श्यैतेनेमं ॥ ६ ॥

यत् रथन्तरेण स्तुवन्त्युद्गातारः तेन इमं भूर्लोकं युनक्ति भोगसाधनत्वेन यजमानः तस्य तल्लोकरूपत्वात् वामदेव्येनान्तरिक्षलोकं युनक्ति तल्लोकभोगं प्राप्नोति तेन यजमानः अयं वै लोको मध्यमो वामदेव्यमित्युक्तत्वात् नौधसेनामुं लोकं युनक्ति यजमानः एवं बृहत् पृष्ठविषयेऽपि व्याख्येयं ॥ ६ ॥

अथोक्तार्थवेदनफलं दर्शयति ।

क्लृप्तानिमान् लोकानुपास्ते य एवं वेद ॥ ७ ॥

स्व स्व भोगभरितान् लोकानाप्नोतीत्यर्थः ॥ ७ ॥

पूर्व्वत्र नौधसेनामुं श्यैतेनेममिति यदुक्तं तत्स्पष्टं दर्शयति ।

बृहद्रथन्तरे वै श्यैतनौधसे यद्रथन्तराय नौधसं प्रति प्रयुञ्जन्ति बृहदेवास्मै तत्प्रति प्रयुञ्जन्ति बृहद्ध्येतत्परोक्षं यन्नौधसं यद् बृहते श्यैतं प्रति प्रयुञ्जन्ति रथन्तरमेवास्मै तत्प्रति प्रयुञ्जन्ति रथन्तरꣳ ह्येतत्परोक्षं यच्छ्यैतं ॥ ८ ॥

अल्पान्तरमिति बृहतोऽल्पत्वेन पूर्व्वनिपातनाद्रथन्तरं वै

श्यैतं बृहद्वै नौधसमिति क्रमोऽवगन्तव्यः अयाग्निर्मूर्द्धा भुवो यज्ञस्य हविषो याज्यानुवाक्ये इत्युक्ते अग्निर्मूर्द्धेत्येषानुवाकानुवाक्या भुवो यज्ञस्येत्येषा याज्याः तद्वदत्रापि एवं सति अनेन रथन्तरबृहतोः श्यैतनौधसरूपत्वप्रतिपादनेन श्यैतनौधसयोर्द्युलोकभूर्लोकयोः सम्बन्ध उक्तो भवति यद्येनं रथन्तराय नौधसं साम प्रति प्रयुञ्जन्ति प्रतिनिधित्वेन योजयन्ति तत्तेनास्मै रथन्तराय बृहदेव प्रतिप्रयुञ्जन्ति रथन्तरप्रयोगपक्षे बृहद्रूपनौधसप्रयोगेण बृहद्रथन्तरे उभे अपि प्रयुक्ते भवतः उक्तस्य नौधसस्य बृहत्त्वसमर्थनं बृहद्धेतदित्यादि एवमुक्तवैपरीत्येनोत्तरवाक्यं व्याख्येयं ॥ ८ ॥

उक्तार्थवेदनपूर्व्वकं प्रयोगं प्रशंसति।

उभाभ्यां बृहद्रथन्तराभ्यां स्तुते य एवं वेद ॥९॥

य एवं विद्वान् बृहता वा रथन्तरेण स्तुते उभाभ्यामपि स्तुतवान् भवति ॥ ९ ॥

अथ नित्यमपि नौधसं कामनाभेदेन ब्रह्मवर्च्चसफलार्थमपि विधित्सुराह।

देवा वै ब्रह्म व्यभजन्त तान्नोधाः काक्षीवत आगच्छत्तेऽब्रुवन्नृषिर्न आगॅंस्तस्मै ब्रह्म ददामेति तस्मा एतत् साम प्रायच्छन्यन्नोधसे प्रायच्छॅंस्तस्मान्नौधसं ब्रह्म वै नौधसं ॥ १० ॥

पूर्वन्देवा ब्रह्म सामलक्षणं वेदभागं व्यभजन्त मह्यमयं मह्यमयमिति विभज्य लब्धवन्तः तान्विभज्यमानान्नोधा ऋषिः काक्षीवतः कक्षीवत्पुत्रः आगच्छत् ते देवा अब्रुवन् किमिति ऋषि नोऽस्मानागन्नगात् तस्मै नोधसे ब्रह्म साममागं किञ्चिद्ददामेति एवमुक्त्वा तस्मै एतत् साम प्रायच्छन् यन्नोधसे प्रायच्छन् तस्मात्तत्सम्बन्धादेतत्साम नौधसमभवत् अतोऽस्य ब्रह्मभागरूपत्वादेतत् ब्रह्मसाम खलु ॥ १० ॥

अथ ब्रह्मवर्चसायैतद्विधत्ते ।

**ब्रह्मवर्चसकाम एतेन स्तुवीत ब्रह्मवर्चसी भवति ॥ ११ ॥**

स्पष्टं ॥ ११ ॥

नौधसमुक्त्वा श्यैतं विधास्यामीति प्रतिजानीते ।

**अथैतत् श्यैतं ॥ १२ ॥**

वक्ष्यतीति वाक्यशेषः ॥ १२ ॥

अथ नित्यमपि श्यैतमभिसन्धिभेदेन पशुकामप्रयोगार्थमपि विधित्सुस्तस्य पशुसम्बन्धं दर्शयति ।

**प्रजापतिः पशूनसृजत तेऽस्मात् सृष्टा अपाक्रामंस्तानेतेन साम्नाभिव्याहरत्तेऽस्मा अतिष्ठन्त ते-**

श्येत्या अभवन् यच्छ्येत्या अभवꣳस्तस्माच्छ्यैतं पशवो वै श्यैतं ॥ १३ ॥

पूर्व्वं प्रजापतिना सृष्टाः पशवस्तस्मै भोगायानवकल्पमाना-स्ततोऽपाक्रामन् तानेतेन श्यैतेन साम्ना अभिव्याहरत् आभि-मुख्येनाह्वयत् तस्योत्तमे पादे ऊम् इति पशुघोषानुकरणस्य विद्यमानत्वात्ते आहृता अस्मै प्रजापतये भोगायातिष्ठन्त समजानत अतस्ते श्यैता अभवन् श्येतशब्दश्च श्यायतेर्गतिकर्म-णोऽश्नातेर्व्याप्तिकर्म्मण उत्पन्नः अतः श्येत्याः श्येतव्या अभवन्नि-त्यर्थः अतस्तद्धेतुत्वेन श्येतत्वं सामान्याच्चरयकारमादौ सम्बन्धः श्यैतमिति प्रयुक्तं ब्राह्मणे अतः पश्वाह्वानसाधनत्वात् श्यैतं पशव एव ॥ १३ ॥

अथ पशुकामाय विधत्ते ।

पशुकाम एतेन स्तुवीत पशुमान् भवति ॥ १४ ॥

स्पष्टं ॥ १४ ॥

अथ श्यैतस्यान्त्यपादे ऊंमा इत्येतस्य विद्यमानत्वात् प्रजानां वृद्धिसाधनमेतत्सामेति प्रशंसति ।

प्रजापतिः प्रजा असृजत ताः सृष्टा अशोचꣳस्ताः श्यैतेन हुंमा इत्यभ्यजिघ्रत्ततो वै ताः समैधन्त समेध-न्ते ताꣳ समां प्रजा यत्रैवं विद्वाञ्छ्यैतेनोद्गायति ॥१५

पूर्व्वं प्रजापतिना सृष्टाः प्रजाः अनभिरद्धा अशोचन् ताः प्रजाः श्यैतेन तत्र श्येता ॐ मा इत्यनेनाभिजिघ्रत् शिर आघ्रातवान् ततः खलु ताः समैधन्त सम्यगवर्द्धन्त अतो यत्रैवमुक्तार्थाभिज्ञः श्यैतेनोद्गायति तां समां तस्मिन् संवत्सरे प्रजा समेधन्ते सम्यग्वर्द्धन्ते ॥ १५ ॥

अथ उद्गाता श्यैतेनोद्गायति प्रजासम्वर्द्धको भवतीति तद्दर्शयति ।

**एष वै यजमानस्य प्रजापतिर्यदुद्गाता यच्छ्यैतेन हिङ्करोति प्रजापतिरेव भूत्वा प्रजा अभिजिघ्रति ॥ १६ ॥**

स्पष्टोऽर्थः ॥ १६ ॥

तत्रत्यवसुन्निधनं प्रशंसति ।

**वसुनिधनं भवति पशवो वै वसु पशुष्वेव प्रतितिष्ठति ॥ १७ ॥**

पशूनां निवाससाधनत्वेन धनरूपत्वं प्रसिद्धं अतस्तत्प्रयोगेण पशुषु प्रतिष्ठितो भवति यजमानः ।

वेदार्थस्य प्रकाशेन तमोहार्द्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १७ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे सप्तमाध्यायस्य दशमः खण्डः।

सप्तमाध्यायः समाप्तिमगमत्।

---

# अष्टमोऽध्यायः ।

अथ प्रथमः खण्डः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥

उक्तो माध्यन्दिनस्तस्मिंश्च पवमानस्य सप्तमे वरुणहोता-दीनाञ्च पृष्ठानि तीण्युक्तानि यथाक्रमं तस्मिन् ब्रह्मसामानि काम्यानि कालेयतः आर्भवं यज्ञायज्ञीयमुक्थानि प्रवच्यन्तेऽधुनाष्टमे श्यैतनौधसे उभे अपि नित्य एवाग्निष्टोमे विकल्पेन प्रयुज्यमाने अभिसन्धिभेदात्काम्ये अपि भवत इत्युक्तं अथाभिचारप्रयोगार्थं ब्रह्मसाम विदधाति ।

**आष्कारणिधनं काण्वं वषट्कारणिधनमभिचरणीयस्य ब्रह्मसाम कुर्य्यादभिनिधनम्माध्यन्दिने पवमाने ॥ १ ॥**

अभिचरणीयस्याभिचारसम्बन्धिनस्तत्प्रयोजनस्य यागस्य ब्रह्मसाम ब्राह्मणाच्छंसिनः साम वषट्कारनिधनं कुर्य्यात् अभित्वा पूर्व्वपीतय इत्यत्र ब्रह्मसाम कार्य्यं तत्र उपानिधनमस्ति

तत् स्थाने वाषाडिति निधनं कुर्य्यादित्यर्थः पवमाने तु माध्यन्दिने बृहतीषु मध्यमायामभिनिधनं कार्य्यं औ हो हो हा ई आ ई ही ज न् साः आ २३४ भी इति अत्र कल्पा अथातो ब्रह्मसामिका क्लृप्ती श्यैतनौधसौ ब्रह्मसामानावभिचरतः श्यैतस्य प्रतिपत्तथा आज्यानि च पुनानः सोम धारयेति रौरवमेकस्यामभिनिधनं काखमेकस्यां वैश्रवसमेकस्यामुद्वत्प्राजापत्यं वा यौधजयन्तिस्तु वषट्कारनिधनं ब्रह्मसामैष ब्रह्मा य ऋत्विज इति कालेयमभिचरणीया विष्टुतयः समानमितरं ज्योतिष्टोमेनेति ॥ १ ॥

अथोभे सामनी प्रशंसति ।

देवेषुर्वा एषा यद्वषट्कारोऽभीति वा इन्द्रो वृत्राय वज्रं प्राहरदभीत्येवास्मै वज्रं प्रहृत्य देवेष्वावषट्कारेण विध्यति ॥ २ ॥

वषट्कार इति यत् एषा देवेषुर्वै देवसम्बन्धी वाण एव इषुशब्दापेक्षयैषेति स्त्रीलिङ्गता तथा अभीत्युक्त्वा खलु वृत्राय तद्वधार्थं वज्रमिन्द्रः प्राहरत् अभीत्यस्याभिमुख्य इत्यर्थः तेन शत्रोरभिमुखं गच्छतीत्यर्थः सूच्यते अतस्तदुभयोः प्रयोगेन भीत्येवास्मै स्वविरोधिने वज्रं प्रहृत्य देववाणरूपेण विध्यति तं विरोधिनं केवलनिधनयोरप्रयोगात्तदाधारयोः साम्नोरेव प्रयोग इति मन्तव्यं ॥ २ ॥

अथ पशुकामप्रयोगे ब्रह्मसामार्थं त्रैककुभं विदधाति ।

**त्रैककुभं पशुकामाय ब्रह्मसाम कुर्य्यात् त्वमङ्ग-प्रश॒ꣳसिष इत्येतासु ॥ ३ ॥**

त्वमङ्ग इत्येतास्वृत्पन्नं त्रैककुभाख्यं साम पश्वर्थिप्रयोगे ब्राह्मणाच्छꣳसिसाम कार्य्यं ॥ ३ ॥

अथ विहितं साम निर्वचनद्वारा प्रशंसति ।

**इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत्तेषां त्रय उदशिष्यन्त रायो वाजो बृहद्गिरिः पृथुरश्मिस्तेऽब्रुवन् को नः पुत्रान् भरिष्यतीत्यहमितीन्द्रोऽब्रवीत्ताꣳस्त्रिककुब्धिनिधायाचरत्स एतत्सामापश्यद्यत्त्रिककुबपश्यत्तस्मात्त्रैककुभं ॥ ४ ॥**

पूर्व्वमिन्द्रो यतीन् वेदविरुद्धनियमोपेतान् यतीन् तान् शालावृकेभ्योऽरण्यश्वभ्यः प्रायच्छत् वधार्थं तेषां मध्ये रायो वाज प्रभृतयस्त्रय उदशिष्यन्त तेभ्यः उद्गताः शिष्टा अभवन् ते चासतिका एवं अब्रुवन् को महान्नोऽस्मान् पुत्रान् पुत्रवद्रक्षणीयान् कृत्वा भरिष्यतीति तदिन्द्रोऽहं रक्षिष्यामीत्यब्रवीत् तानवशिष्टांस्त्रिककुप् व्युच्छ्रितप्रदेश आसन् स्वककुप्सु व्यधिनिधायाचरत् स तदेतत्सामापश्यत् यत्त्रिककुप् सन्नपश्यत्तस्मादेतत् संज्ञकमभवत् अस्यास्तत् ॥ ४ ॥

कथं तेषां जीवनकल्पनमिति तत्राह ।

**स आत्मानमेव पुनरुपाधावत्त्वमङ्ग प्रशꣳसिषो देवः शविष्ठमर्त्यन्नत्वदन्योमघवन्नस्ति च मर्डितेन्द्र ब्रवीमिते वच इति स एतेन च प्रगाथेनैतेन साम्ना सहस्रं पशूनसृजत तानेभ्यः प्रायच्छत्ते प्रत्यतिष्ठन् ॥५॥**

स इन्द्रः स्वव्यतिरिक्तस्य एतेषां प्रतिष्ठानात् वहिः कस्यचिदप्यभावादात्मानमेव पुनरूपाधावत् त्वमङ्गेति प्रगाथेन अयमुत्तरग्रन्थे एवास्माभिर्व्याख्यातः स एवमात्मानमेव प्रशस्य एतेनोक्तेन प्रगाथेन एतेन त्रैककुभेन साम्ना च पशुसहस्रमसृजत तान् सृष्टानिन्द्रेण लब्ध्वा ते प्रतिष्ठिता अभवन् ॥ ५ ॥

एवमस्य साम्नः पशुरूपप्रतिष्ठासाधनत्वं समर्थ्योऽक्तकामनायोग्यत्वाभिधानद्वारेणोपसंहरति ।

**यः पशुकामः स्याद्यः प्रतिष्ठाकाम एतस्मिन् प्रगाथ एतेन साम्ना स्तुवीत प्रसहस्रं पशूनाप्नोति प्रतितिष्ठति ॥ ६ ॥**

ननु केवलं उपक्रमे पशुकामनैव चोदिता उपसंहारे तु प्रतिष्ठापि चोद्यते अतः कथन्तयोरविरोधः निर्णयस्योपक्रमोपसंहारैकवाक्यताधीनत्वादिति नायं विरोधः तैर्वाक्यादौ भर-

यस्यैव प्रार्थ्यमानत्वात् पश्वादिद्वारमन्तरेण केवलप्रतिष्ठाया अभावात् पशुरूपप्रतिष्ठैकैवोक्तेति बोद्धव्या निगदव्याख्यानमेतत् ॥ ६ ॥

तदेव पुनः प्रशंसति ।

**त्रिवीर्य्यं वा एतत्साम वीन्द्रियमैन्द्र्यृक्च ऐन्द्रꣳ सामैन्द्रेति निधनमिन्द्रियएव वीर्य्ये प्रतितिष्ठति ॥७॥**

एतत्त्रैककुभं साम त्रिवीर्य्यं वै वीर्य्यत्रयोपेतं खलु तदेव विविच्य दर्शयति ऋचोऽप्यैन्द्र्यः सामाप्यैन्द्रं निधनमप्यैन्द्रमिति अतस्त्रीन्द्रियं य एतेन स्तूयात् स इन्द्रिय एव तस्य विवरणं वीर्यं इति तत्र प्रतिष्ठितो भवति ॥ ७ ॥

अथ दीर्घरोगिणः प्रयोगे ब्रह्मसाम विदधाति ।

**त्रैशोकं ज्योगामयाविने ब्रह्मसाम कुर्य्यात् ॥८॥**

स्पष्टोऽर्थः ॥ ८ ॥

अथ शब्दनिर्व्वचनद्वारेण तत्प्रशंसति ।

**इमे वै लोकाः सहासꣳस्तेऽशोचꣳस्तेषामिन्द्र एतेन साम्ना शुचमपहन्यत्त्रयाणां शोचतामपाहꣳस्तस्मात्त्रैशोकं ॥ ९ ॥**

पूर्व्वमिमे भूरादिलोकाः सहैकस्मिन्नवस्थाने अतिष्ठन् ते इति

हविर्लाभदृष्टिप्रदानादिपरस्परोपकारादिभावेनाशोचन् तेषां शुचं दुःखं एतेन त्रैशोकेन साम्ना अपाहन् यद्यस्माच्छोचतां त्रयाणां शोकमपाहन् तस्मात् शोकत्रयापनोदेन त्रैशोकसंज्ञामलभत ॥ ९ ॥

अथापगतानां शुचामन्यत्र प्राप्तिं दर्शयति।

**यामस्मादपाहन् सा पुंश्चलीं प्राविशद्यामन्तरिक्षात्सा क्लीवं याममुष्मात्सैनस्विनं ॥ १० ॥**

यां शुचमिन्द्रोऽस्माद्भूर्लोकादपाहन् सा पुंश्चलीं अन्यान् पुरुषान् प्रति चलन्तीं व्यभिचारिणीमित्यर्थः एवमुत्तरत्रापि योज्यं क्लीवः षण्डः एनस्वी महापातकदोषग्रस्तः ॥ १० ॥

अथैतेषु धनादीच्छामन्वयव्यतिरेकाभ्यां प्रसङ्गान्निन्दति।

**तस्मात्तेषान्नाशैतव्या य एषामाशामेति तस्माएव शुचोऽपभजते ॥ ११ ॥**

तस्मात्प्राप्तशोकत्वात्तेषामाशा पुंश्चल्यादीनां सम्बन्धिनी धनादीच्छा नैतव्या न प्राप्तव्या यस्तु मोहादाशां प्राप्नोति तस्मा एव शुचः तामेव शुचमपभजते कष्टं प्राप्नोति ॥ ११ ॥

अथ प्रकृतेऽसङ्गत्वं दर्शयन्नुपसंहरति।

**शुचा वा एष विद्धो यस्य ज्योगामयति यत्त्रै-**

**शोकं ब्रह्मसाम भवति शुचमेवास्मादपघ्नन्ति ॥ १२ ॥**

यस्य यजमानस्य चिरकालो रोगः प्राप्नोति एष शुचा विद्धो ऽपहतः खलु, अनेन विध्यर्थवादगतयोगामयशोकयोर्वैयधिकरण्यं परिहृतं भवति, शिष्टं स्पष्टं ॥ १२ ॥

तत्रत्यनिधनमप्युक्तविषयेऽनुकूलमित्याह ।

**दिवेति निधनमुपयन्ति व्युष्टिर्वै दिवा व्येवास्मै वासयति ॥ १३ ॥**

तत्र साम्नि दिवेति निधमुपयन्ति इह गातारः सा दिवा व्युष्टिर्वै उच्छीविवासे विवासस्तमोऽपवर्ज्जनं प्रकाश इत्यर्थः अतस्तत्प्रयोगेन अस्मै ज्योगामयाविने आमयाख्यं तमो विवासयति परिहरत्येव ॥ १३ ॥

इति ताण्ड्यमहाब्राह्मणे अष्टमाध्यायस्य
प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

अथ प्रतिष्ठार्थिनः प्रयोगे ब्रह्मसाम विधत्ते ।

**आष्कारणिधनं काण्वं प्रतिष्ठाकामाय ब्रह्मसाम कुर्य्यात् ॥ १ ॥**

आष्टुतिकरणमुच्चारणमाध्कारः तन्निधनोपेतं काण्वं काण्वेन दृष्टं ब्रह्मसाम तच्चोदस्मन्तीष्वहमित्यादिषु कुर्य्यात् ॥ १ ॥

अथ निधनद्वारैतत्प्रशंसति ।

**कण्वो वा एतत्सामर्त्ते निधनमपश्यत् स न प्रत्यतिष्ठत्स वृषदंशस्याषिति ह्रुवत उपाशृणोत्स तदेव निधनमपश्यत्ततो वै स प्रत्यतिष्ठद्यदेतत्साम भवति प्रतिष्ठित्यै ॥ २ ॥**

कण्वः पूर्व्वमेव तत्साम निधनरहितं केवलमपश्यत् सनिधनस्य प्रतिष्ठारूपत्वात्तदभावेनाप्रतिष्ठितोऽभूत् स किन्निधनं प्रतिष्ठासाधनत्वेन करवाणीति चिन्तयन् तदा वृषदंशस्य मार्जारस्य आषिति ह्रुवतः शब्दमुपाशृणोत् स एतदेवोपश्रयणन्निधनं भविष्यतीत्यवगत्य तदेव प्रयुक्तवान् ततश्च प्रतिष्ठितोऽभूत् अतो यत्साम एतन्निधनकं भवेत् तच्च प्रतिष्ठित्यै भवति ॥ २ ॥

अप्रजार्थिनः प्रयोगे ब्रह्मसाम विदधाति ।

**वसिष्ठस्य जनित्रं प्रजाकामाय ब्रह्मसाम कुर्य्यात् ॥ ३ ॥**

तच्चोदस्ममित्यादि वसिष्ठस्य जनित्रं ॥ ३ ॥

अस्य प्रजासम्बन्धमाह ।

**वसिष्ठो वा एतत्पुत्रहतः सामापश्यत्स प्रजया पशुभिः प्राजायत यदेतत्साम भवति प्रजात्यै ॥ ४ ॥**

पूर्वं हतपुत्रो वसिष्ठः प्रजात्यर्थमेतत्सामापश्यत्तदेव प्रयुज्य प्रजापशुसमृद्धोऽभूत् अतः प्रजार्थिभिरेतत्कर्त्तव्यं ॥ ४ ॥

स्वर्गार्थिनः प्रयोगे ब्रह्मसामाह।

**आथर्वणं लोककामाय ब्रह्मसाम कुर्य्यात् ॥५॥**

अत्र यद्यपि लोकसामान्यं श्रूयते तथापि अर्थवादे अमर्त्त्यं लोकमिति विशेषश्रुतेरत्रापि स एवेति निश्चयः अत कल्पः लोककामस्य नौधसस्य स्थाने आथर्वणं ब्रह्मसामोद्यत्योर्विष्टुतयः समानमितरत् ज्योतिष्टोमेनेति ॥ ५ ॥

एतत्साम प्रशंसति।

**अथर्वाणो वा एतल्लोककामाः सामापश्यꣳस्तेनामर्त्यं लोकमपश्यन् यदेतत्साम भवति स्वर्गस्य लोकस्य प्रजात्यै ॥ ६ ॥**

एतत्सामापश्यन्निति सम्बन्धः अमर्त्त्यं दिव्यं लोकं स्वर्गमित्यर्थः यदेतदित्यादिरुपसंहारः ॥ ६ ॥

भ्रातृव्यवतो यजमानस्य तदपमानार्थप्रयोगे ब्रह्मसाम विदधाति।

**अभीवर्त्तं भ्रातृव्यवते ब्रह्मसाम कुर्य्यात् ॥ ७ ॥**

स्पष्टं ॥ ७ ॥

अथैतन्निर्वचनद्वारा प्रशंसति ।

**अभीवर्त्तेन वै देवा असुरानभ्यवर्त्तन्त यदभी-वर्त्तो ब्रह्मसाम भवति भ्रातृव्यस्याभिवृत्त्यै ॥ ८ ॥**

देवानामसुरवधार्थं अभिमुखावर्त्तनसाधनत्वादेतस्मामाभी-वर्त्तमभवत् सुज्ञानमितरत् ॥ ८ ॥

यज्ञविभ्रष्टाय ब्रह्मसाम विधत्ते ।

**आयन्तीयं यज्ञविभ्रष्टाय ब्रह्मसाम कुर्य्यात् ॥ ६ ॥**

औद्गातावच्छेदसोमापहृतविक्तसामातिपवनादिक्रतुविलो-पनिमित्तं यस्य जायते सयज्ञविभ्रष्टः तस्यैतत्प्रायश्चित्तं ॥ ६ ॥

श्रीणातेः पाकार्थात् आयन्तीयमित्यर्थान्निर्वचनमिति विवक्षुराह ।

**प्रजापतिरुषसमध्यैत् स्वां दुहितरं तस्य रेतः परापतत्तदस्यांन्यषिच्यत तदश्रीणादिदं मे मादुष-दिति तत्सदकरोत्पशूनेव ॥ १० ॥**

पूर्व्वं प्रजापतिः स्वदुहितरमेवोषसमभ्यैदध्यगच्छत् तस्य रेतः

परापतत् तदस्यां पृथिव्यान्निषिच्य च तदश्रीणात् अपचत् केनाभिप्रायेण मादुषदिति दुष्टम्माभूदिति तत्पक्वं रेतः सदकरोत् तदेव विष्टणोति पश्रूनकरोदिति एतत् श्रायन्तीयमभवदिति शेषः ॥ १० ॥

एवं प्रशस्य प्रकृतमुपसंहरति ।

**यच्छ्रायन्तीयं ब्रह्मसाम भवति श्रीणाति चैवैनꣳ सच्च करोति ॥ ११ ॥**

यद्यस्य प्रयोगे एतद्ब्रह्मसाम भवति तत एनं यज्ञविस्रष्टं श्रीणाति पचति शुद्धं करोति ततः सच्च यज्ञसाधकञ्च करोति ॥११

इति ताण्ड्यमहाब्राह्मणे अष्टमाध्यायस्य

द्वितीयः खण्डः ।

---

अथ तृतीयः खण्डः ।

उक्ताः कामनाभेदेन ब्रह्मसामविशेषाः अथास्मिन् खण्डे कालेयं स्तूयते तत्र तावत्कालेयन्नामनिर्व्वचनेन प्रशंसति ।

**देवाश्च वा असुराश्चैषु लोकेष्वस्पर्द्धन्त ते देवाः प्रजापतिमुपाधावꣳस्तेभ्य एतत्साम प्रायच्छदेतेनैनान् कालयिष्यद्ध्वमिति तेनैनानेभ्यो लोकेभ्योऽकालयन्त यदकालयन्त तस्मात्कालेयं ॥ १ ॥**

पूर्वं देवाश्चासुराश्च एतेषां लोकानामाधिपत्याय असर्द्धन्त अस्माकमेव भूयासुरस्माकमेवेति तेषु मध्ये देवाः स्वपितरं प्रजापतिमनुप्राप्ताः तेभ्य एषामाधिपत्याय एतत्साम प्रायच्छत् किमिति एतेन साम्ना एनानसुरान् कालयिष्यध्वं अपनयथेति सुद्धानमन्यत् ॥ १ ॥

विदुषः फलमाह ।

**एभ्यो वै लोकेभ्यो भ्रातृव्यं कालयते य एवं वेद॥२**

य एवमवगच्छति सोऽपि स्ववैरिणं लोकत्रयान्निःसारयति ॥ २ ॥

अथास्य स्तोत्रियगततरोभिरिति पादद्वारेण एतत्साम प्रशंसति ।

**स्तोमो वै देवेषु तरो नामासीद्यज्ञोऽसुरेषु विदद्वसुस्ते देवास्तरोभिर्वो विदद्वसुमिति स्तोमेन यज्ञमसुराणामवृञ्जत ॥ ३ ॥**

पूर्वं देवेषु तरोनाम सोम आसीत् असुरेषु विदद्वसुमिति नाम यज्ञ आसीत् एवं सति तरोभिर्वो विदद्वसुमिति पादेन देवाः स्तोमसाधनमसुराणां यज्ञमवृञ्जत अवर्जयत् अच्छिन्दन्नित्यर्थः यद्यप्यन्यार्थावेतौ तथापि श्रुतिसामान्यमात्रेण च स्तुतिर्द्रष्टव्या ॥ ३ ॥

अथ विदुषः फलमाह।

स्तोमेन यज्ञं भ्रातृव्यस्य वृङ्क्ते य एवं वेद ॥ ४ ॥

स्पष्टोऽर्थः ॥ ४ ॥

एतत्साम तृतीयसवनस्य सन्ततिरूपमिति प्रशंसति।

साध्या वै नाम देवा आसꣳस्तेऽवच्छिद्य तृतीयसवनम्माध्यन्दिनेन सवनेन सह स्वर्गं लोकमायꣳस्तद्देवाः कालेयेन समतन्वन्यत्कालेयं भवति तृतीयसवनस्य सन्तत्यै ॥ ५ ॥

पूर्वं साध्या नाम देवा आसन् ते तृतीयसवनमवच्छिद्यानतुष्ठाय माध्यन्दिनेन सवनेन सह तदनुष्ठानात् ते स्वर्गमायन् अगच्छन् ते देवा अतः साध्यास्तृतीयसवनस्य विच्छेदमवगत्य कालेयेन साम्ना समतन्वन् तत्सवनमविच्छिन्नमकुर्वन् अतस्तृतीयसवनाविच्छेदायैतद्भवतीति स्तुतिः ॥ ५ ॥

अथ तृतीयसवनकालेययोः कः सम्बन्ध इति तं दर्शयति।

विदद्वसु वै तृतीयसवनं यत्तरोभिर्वो विदद्वसुमिति प्रस्तौति तृतीयसवनमेव तदभ्यति वदति ॥ ६ ॥

तृतीयसवनं विदद्वसु वै लब्धधनं खलु तस्मिन् हि सम्पूर्णक्रतुसमाप्तेर्वस्वादिलक्षणफललाभात् अतः कालेये यत्तरोभि-

र्वौ विद्वद्वसुमिति पठत्युद्गाता तत्तेन तृतीयसवनमेवाभिलक्ष्याति वदति अतीति धात्वर्थानुवादः ॥ ६ ॥

अथैतत्साम सर्वपृष्ठस्वरूपत्वेन प्रशंसति ।

**सर्व्वाणि वै रूपाणि कालेयं यत्पदप्रस्तावन्तेन राथन्तरं यद्बृहतो रोहान् रोहति तेन वार्हतं यत् स्तोभवान् प्रतिहारस्तेन वार्हतं यद्द्रवदिडन्तेन राथन्तरꣳ सर्वेष्वेव रूपेषु प्रतितिष्ठति ॥ ७ ॥**

यत्कालेयमस्ति तद्रथन्तरबृहतोरुभयोरपि पानिपादप्रस्तावादिलक्षणानि रूपाणि सन्ति तान्येव खलु तेषां तस्मिन्विद्यमानत्वात् तथा हि यत्पदप्रस्तावं भवति पादान्ते प्रस्तावभागपरिसमाप्तिर्भवति तेन राथन्तरं रूपं रथन्तरस्य पादप्रस्तावः पूर्व्वमुक्तस्तथा यद्बृहतस्त्रीन्रोहान्रोहति तेन वार्हतमपि रूपं तत्रापि बृहत्पृष्ठेऽपि रोहत्रयस्योक्तत्वात् यत्कालेयस्य प्रतिहारस्तोभवान् तेन वार्हतं रूपं तथाहि कालेये ऊ वा ई भ रौ वा ३ ४ ३ औ ३ ४ वा इति प्रतिहारस्तोभवान् बृहत्यपि त्वां काष्ठा ३ ४ औ हो वा इति तत्र स्तोभो विद्यते अतस्तद्रूपत्वं युक्तं तथा हो ५ ईडा इति कालेयं द्रवदिडं कालेयं भवति अतो राथन्तरं रूपं तथा हि निदानं द्रवदिडारथन्तरपृष्ठेति ऊर्द्धैडा बृहत्पृष्ठ इति वैरूपशाक्करयोरथन्तरकार्य्यत्वात् वैराजरैवतयोश्च बृहत्कार्य्यत्वात् कारण-

भूतोभयरूपत्वप्रतिपादनं अत इदं कालेयं सर्वेष्वेव षण्णां पृष्ठानां रूपेषु प्रतितिष्ठति ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे अष्टमाध्यायस्य

तृतीयः खण्डः ।

---

अथ चतुर्थः खण्डः ।

उक्तम्माध्यन्दिनं सवनं अथ तृतीयसवनस्यादौ गायत्रीसवनं विवक्षुराख्यायिकामाह ।

साध्या वै नाम देवा आसꣳस्ते सर्वेण यज्ञेन सह स्वर्गं लोकमायꣳस्ते देवाश्छन्दाꣳस्यब्रुवन्सोममाहरतेति ते जगतीं प्राहिण्वन्त्सा त्रीण्यक्षराणि हित्वैकाक्षरा भूत्वागच्छत्त्रिष्टुभं प्राहिण्वन् सैकमक्षरꣳ हित्वा त्र्यक्षरा भूत्वागच्छद्गायत्रीं प्राहिण्वꣳश्चतुरक्षराणि वै तर्हि छन्दाꣳस्यासन् सा तानि चाक्षराणि हरन्त्यागच्छदष्टाक्षरा भूत्वा त्रीणि च सवनानि हस्ताभ्यां द्वे सवने दन्तैर्दꣳष्ट्वा तृतीयसवनं तस्माद्द्वे अꣳशुमती सवने धीतं तृतीयसवनं दन्तैर्हि तद्दꣳष्ट्रा धयन्त्यहरत्तस्य ये ह्रियमाणस्याꣳशवः परा-

पतꣳस्ते पूतीका अभवन् यानि पुष्पाण्यवाशीयन्त तान्यर्ज्जुनानि यत्प्राप्रोथत्ते प्रप्रोथास्तस्मात्तृतीयसवन आभिरमवनयन्ति यमेव तं गावः सोममदन्ति तस्य तꣳ रसमवनयन्ति ससोमत्वाय ॥ १ ॥

पूर्वं साध्याख्या देवा आसन् ते सर्वेण यज्ञेन सोपकरणेन सोमादिसाधनमादायैव स्वर्गं लोकमायन्नगमन् ते प्रसिद्धाः वस्वादयो देवाः आदौ स्वर्गसाधनयज्ञार्थसोमाहरणाय छन्दांसि गायत्र्यादीनि यूयं सोमं द्युलोकात् आहरतेत्युक्तवान् तान्यपि तथैवाङ्गीचक्रुरिति शेषः तथोक्तास्ते जगतीं प्राहिण्वन्नप्रेरयन् सा तत्रत्यैः सोमपालैः सह युद्ध्वा त्रीण्यक्षराणि हित्वा एकाक्षरा भूत्वा पुनर्देवानागच्छत् चतुरुत्तराणि वै तर्हि छन्दांसि वक्ष्यति तदभिप्रायकमिदं पुनस्ते त्रिष्टुभं प्राहिण्वन् सापि पूर्ववत् सोमपालेष्वेकमक्षरं हित्वा त्र्यक्षरा भूत्वा पुनरागच्छत् ते पुनर्गायत्रीं प्राहिण्वन् च्छन्दांसि सर्वाणि चतुरुत्तराण्यासन् अतः सा गायत्री द्युलोके सोमरक्षकैः कृशानुप्रभृतिभिर्जितानि जगतीत्रिष्टुभोश्चतुरक्षराणि हरन्ती अष्टाक्षरा भूत्वा आगच्छत् पुनः किं कुर्वत्यागच्छदित्युच्यते त्रीणि च सवनानि सवनत्रयपर्य्याप्तानि सोमद्रव्याण्यादायेति तद्विविच्योच्यते हस्ताभ्यां द्वे सवने धृत्वा दन्तैः तृतीयसवनं दंष्ट्वागच्छत् यस्मादेवं तस्माद्धस्ताभ्यां धृते द्वे सवने प्रातर्म्माध्यन्दिनसवनयोर्ग्य सोमद्रव्ये पीडाभावात् अंशुमती अभूतां तृतीयसवनं धीतं पीत-

सारभूतं तत्र हेतुमाह दन्तैर्हि तद्द्रव्यं दष्ट्वा धयन्ती पिबन्ती अहरत् ह्रियमाणस्य सोमस्य पतिताः अंशवः पूतीका अभवन् तस्य सोमस्य यानि पुष्पाण्यवाशीयन्त अवशादितानि प्रस्रष्टान्यासन् शदेः पाश्रेत्यादिना शीयादेशः तान्यर्ज्जुनानि हरिततर्णानि अभवन् यत् प्राप्रोथत् अधनुताङ्गानि प्रप्रोथाख्या ओषधय आसन् तस्मात्सोमाभावे पूतीकादीनां प्रतिनिधित्वेन स्वीकर्त्तव्यतामभिधातुं प्रासङ्गिकानामेषां उपन्यासः तस्माद्भूतत्वात्तृतीयसवने आशिरं दधिपयोद्रव्यमवनयन्ति यमेव तं सोममोषधीनां सारं गावोऽदन्ति भक्षयन्ति तस्य सोमस्य तं रसं अवनयन्ति आशिरावनयने हेतुः ससोमत्वाय सरसत्वाय ॥ १ ॥

एवं गायत्रीं प्रशस्येदानीं सवनसम्बन्धमाह।

ते त्रिष्टुब्जगत्यौ गायत्रीमब्रूतामुप त्वायावेति साब्रवीत् किं मे ततः स्यादिति यत्कामय स इत्यब्रूताꣳ साब्रवीन्मम सर्व्वं प्रातःसवनमहमुत्तरे सवने प्रणयानीति तस्माद्गायत्रं प्रातःसवनं गायत्र्युत्तरे सवने प्रणयति ॥ २ ॥

ते गायत्र्यपहृताक्षरचतुष्टये त्रिष्टुप्जगत्यौ गायत्रीमब्रूतां किमिति त्वा त्वां उपायावेति उपगच्छावेति सा पुनरब्रवीत् मे मह्यं ततो युष्मदुपगमनात्किं फलं स्यादिति ते पुनरब्रूतां तर्हि यत् फलं कामय स इति सा ते प्रत्यब्रवीत् किमिति उच्यते

मम तावत् प्रथमं प्रातःसवनं अहमुत्तरेऽपि सवने प्रणायानि प्रापयानीति ते तथाऽस्त्वित्यङ्गीचक्रतुरिति शेषः यस्मादेवं तस्मात् पूर्वं गायत्रं प्रातःसवनं उत्तरे अपि सवने गायत्री प्रणयति अयमर्थस्तैत्तिरीयके कद्रूश्च वै सुपर्णी चेत्यनुवाके प्रतिपादितः ॥ २ ॥

अथ तयोर्गायत्रीप्राप्तिप्रकारं दर्शयति।

**तां त्रिष्टुप् त्रिभिरक्षरैरुपैत्सैकादशाक्षरा भूत्वा प्राजायत तां जगत्येकेनाक्षरेणोपैत्सा द्वादशाक्षरा भूत्वा प्राजायत ॥ ३ ॥**

तां गायत्रीं त्रिष्टुववशिष्टैस्त्रिभिरक्षरैरुपैत् अन्तः प्राविशत् ततो गायत्र्या अष्टाक्षरेण सह एकादशाक्षरा भूत्वा प्राजायत प्रकृष्टाभूत् तथैकाक्षरा जगत्यपि गायत्रीसंयुक्ता द्वादशाक्षरा प्राजायत ॥ ३ ॥

अथ गायत्र्याः सर्व्वछन्दोव्याप्तिरुक्तार्थनिबन्धनेत्याह।

**तस्मादाहुर्गायत्री वाव सर्वाणि छन्दांसि गायत्री ह्येतान् पोषान् पुष्यन्त्यैदिति ॥ ४ ॥**

तस्मात्त्रिष्टुब्जगत्योः स्वरूपप्रदानादसाधारणसोमापहरणाच्च गायत्री वाव गायत्र्येव सर्वाणि छन्दांसि गायत्री हि

एतान् प्रागुक्तैकादशाक्षरद्वादशाक्षररूपात्मनः पोषान् पुष्यन्ती प्राप्नुवन्ती एतद्यज्ञमगच्छत् तदेवं तृतीयसवने गायत्रं कर्त्तव्यमिति प्रतिपादितं ॥ ४ ॥

अथार्भवपवमानगतानि गायत्रसंहितादिसामानि विधास्यन्नादौ स्वादिष्टयेति तृचं गायत्रसंहितायाधारभूतं सस्तुतिकं विदधाति ।

इन्द्रस्तृतीयसवनाद्बीभत्समान उदक्रामत्तद्देवाः स्वादिष्टयेत्यस्वदयन्मदिष्टयेति मद्वदकुर्वन् पवस्व सोम धारयेत्यपावयन्निन्द्राय पातवे सुत इति ततो वै तदिन्द्र उपावर्त्तत यत् स्वादिष्टया मदिष्टयेति प्रस्तौति तृतीयसवनस्य सेन्द्रत्वाय ॥ ५ ॥

पूर्व्वमिन्द्रस्तृतीयसवनात् पीतत्वेन गतसाराद्बीभत्समानः अयोग्यत्वेनापेक्षमाण उदक्रामदुद्गतवान् तत्सवनं देवाः स्वादिष्टयेति स्वादुतमवाचिना पदेनास्वदयन् स्वादमकुर्व्वन् मदिष्टयेति द्वितीयपदेन मद्वत्तुष्टिमदकुर्व्वन् पवस्व सोमधारयेति द्वितीयपादेनापावयन् पूतमकुर्व्वन् एवं सवनं तद्योग्यं सम्पाद्य इन्द्राय पातवे सुत इति पादेनैन्द्रमुपावर्त्तयन्निति शेषः तत्र पादे तत इन्द्राय पातवे पातुमिति इन्द्रस्य पानाय श्रवणात्तस्मार्हतामवगत्येन्द्रः तत्सवनमुपावर्त्तते अभिमुखमगच्छत् शिष्टं सुज्ञानं ॥५॥

अथ असुरपशुविनाशकत्वद्वारेणैतत्प्रशंसति ।

स्वादिष्टा वै देवेषु पशव आसन् मदिष्टा असुरेषु ते देवाः स्वादिष्टया मदिष्टयेति पशूनसुराणामवृञ्जत ॥ ६ ॥

पूर्वं स्वादिष्टाः पशवो देवेष्वासन् मदिष्टा असुरेषु तत्तद्भागस्यैव तैस्तैः प्रयुक्तत्वात् तदा देवास्विदित्वा असुराणां प्रात्युपायं स्वादिष्टया मदिष्टयेति पादं पठित्वा तानपि स्वयमलभन्त अतस्तेषां पशूनवृञ्जतेत्युच्यते ॥ ६ ॥

विदुषः फलमाह ।

पशून् भ्रातृव्यस्य वृङ्क्ते य एवं वेद ॥ ७ ॥

स्पष्टोऽर्थः ॥ ७ ॥

अथोक्ते च तृचे संहितमपि विधत्ते ।

तासु सꣳहितं ॥ ८ ॥

गेयमिति शेषः ॥ ८ ॥

अथैतदन्वर्थनामत्वेन प्रशंसति ।

साध्या वै नाम देवा आसꣳस्तेऽवद्धिद्य तृतीयसवनम्माध्यन्दिनेन सवनेन सह स्वर्गं लोकमायꣳ

स्तद्देवाः सꣳहितेन समदधुर्य्यत्समदधुस्तस्मात्सꣳ-हितं ॥ ९ ॥

सन्धानहेतुत्वात्संहितमिति नामाभूत्, शिष्टं कालेयार्थव-द्योज्यं ॥ ९ ॥

अथैतन्माध्यन्दिनसवनान्तेन कालेयेन सह स्तौति ।

कालेयं पुरस्ताद्भवति सꣳहितमुपरिष्टादेताभ्याꣳ हि तृतीयसवनꣳ सन्तायते ॥ १० ॥

कालेयस्य पूर्व्वं तृतीयसवनं सन्तत्यर्थमुक्तं अस्यापि तदर्थ-त्वमिदानीमुच्यते अत उभयोर्म्मिलित्वा माध्यन्दिनतृतीयसव-नयोः सन्तानसाधकत्वं ॥ १० ॥

अथ कालेयवदस्यापि सर्व्वपृष्ठत्वमिति स्तौति ।

सर्वाणि वै रूपाणि सꣳहितं यत्पदप्रस्तावन्तेन राथन्तरं यद्बृहतो रोहान्रोहति तेन वार्हतं यत्पद-निधनन्तेन राथन्तरꣳ सर्व्वेष्वेव रूपेषु प्रतितिष्ठति ॥ ११ ॥

उक्तमिदं पूर्वं ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे अष्टमाध्यायस्य

चतुर्थः खण्डः ।

अथ पञ्चमः खण्डः ।

अथ सफपौष्कले विधातुं तयोश्छन्दसी विदधाति ।

**उष्णिक्ककुभावेते भवतः ॥ १ ॥**

अत्राप्यभ्यर्हितमित्युष्णिक्शब्दस्य पूर्व्वनिपातः अतः पवस्व मधुमत्तमइन्द्रमच्छ सुताइत्येते ककुबुष्णिहौ भवत इत्यर्थः ॥१॥

अथैतत् स्तौति ।

**उष्णिक्ककुब्भ्यां वा इन्द्रो वृत्राय वज्रं प्राहरत्ककुभि पराक्रमतोष्णिहा प्राहरत्तस्मात् ककुभो मध्यमं पदं भूयिष्ठाक्षरं पराक्रमण्ं हि तदभि समौद्ध्रत्त्वादुष्णिहउत्तमं पदं भूयिष्ठाक्षरं पुरो गुरुरिव हि वज्रः ॥ २ ॥**

उष्णिक्ककुब्भ्यां खलु पूर्वमिन्द्रो वृत्रवधार्थं वज्रं प्राक्षिपत तद्विभज्य दर्शयति ककुभि पराक्रमत शत्रोरभिमुखं लङ्घितवान् तत उष्णिहा छन्दसा प्राहरत् वज्रं यस्मादेवं कृतवान् तस्मात् ककुभच्छन्दसो मध्यमं पदं पादो भूयिष्ठाक्षरं प्रकृतद्वादशाक्षरो भवति मध्यमाश्च ककुविति हि ककुभो लक्षणं पराक्रमणसाधने पवस्व मधुमत्तम इति ककुभि मध्यमपादे द्वादशाक्षराणि सन्ति तदक्षराधिक्यमेव खलु पराक्रमणं अभि-

तः उभे प्राप्ते समौहत् अष्टाक्षरौ पादौ सम्यगवहत् तद्वा तत् ककुभ्छन्दः इन्द्रस्य पराक्रमणं खल्वभिसमौहत् अभिसमवहत् अतो मध्यमपादाधिक्यं युक्तमेव तस्मादेव वज्रप्रहरणसाधनत्वादेव उष्णिहं उत्तमं पदं भूयिष्ठाक्षरमष्टाक्षरपादद्वयापेक्षया अधिकाक्षरमुष्णिक् त्रिपदान्तो द्वादश इति हि लक्षणं वज्रोऽपि पुरो गुरुरिवाग्रभागे स्थूल इव खलु वज्रः ॥ २ ॥

उक्तार्थस्य फलकथनं ।

वज्रं भ्रातृव्याय प्रहरति य एवं वेद ॥ ३ ॥

स्पष्टं ॥ ३ ॥

पुनस्ते प्रशंसति ।

नासिके वा एते यज्ञस्य यदुष्णिक्ककुभौ तस्मात् समानं छन्दः सती नानायज्ञं वहतस्तस्मात् समानाया नासिकायाः सत्या नाना प्राणावुच्चरतः ॥ ४ ॥

यस्मादेते छन्दसी यज्ञस्य नासिके तस्मात्समानमेकं छन्दः सती सत्यौ नाना पृथक्भूते एव ते यज्ञं वहतः यस्मादेवमभूत् तस्मादिदानीमपि लोके समानाया एकस्या एव नासिकायाः सत्याः सकाशाद्दिवसभेदेन प्राणावुच्छ्वासौ नाना पृथगेवोच्चरत उद्गच्छतः ॥ ४ ॥

अथ प्रासङ्गिकमनयोर्नियमविशेषमाह ।

प्राणा वा उष्णिक्ककुभौ तस्मात्ताभ्यान्न वषट्कुर्वन्ति यद्वषट्कुर्य्युः प्राणानग्नौ प्रदध्युः ॥ ५ ॥

स्पष्टोऽर्थः ॥ ५ ॥

पूर्वत्रानयोः प्राणोद्गमनसाधननासिकात्वेनोक्तं इदानीं सामद्वयं विधत्ते ।

तासु सफं विफमिव वै तृतीयसवनं तृतीयसवनस्य सफत्वायाथैतत्पौष्कलमेतेन वै प्रजापतिः पुष्कलान् पशूनसृजत तेषु रूपमदधाद्यदेतत्साम भवति पशुष्वेव रूपं दधाति ॥ ६ ॥

पौष्कलं कुर्व्वन् एतेन वै पुष्कलान् समग्रान् पशूनसृजत तेष्वेव सृष्टेषु पुनरेतेनैव रूपेण अपत्योत्पादनलक्षणां पुष्टिं अदधात् स्थापितवान् एवं पशुपौष्कल्यहेतुत्वात् पुष्कलमिति निर्व्वचनद्वारा स्तुतिः ॥ ६ ॥

अथ श्यावाश्वान्धीगवे उभे अपि सामनी विधित्सुस्तयोरुभयोः समानं स्तोत्रियं प्रशंसति ।

पुरोजिती वो अन्धस इति पद्या चाक्षर्य्या च विराजौ भवतः पद्यया वै देवाः स्वर्गं लोकमायन्नक्षर्यया ऋषयो नु प्राज़ानन्यदेते पद्या चाक्षर्य्या च विराजौ भवतः स्वर्गस्य लोकस्य प्रज्ञात्यै ॥ ७ ॥

अस्मिन् तृचे प्रथमानुष्टुबुत्तरे गायत्र्यौ एवं सति पद्या पादैः सम्पन्ना अक्षर्य्या च अक्षरपरिगणनया सम्पन्ना च द्वे विराजौ भवतः दशाक्षरा विराडिति श्रुतेः विराजि दशसंख्यासद्भावादत्रापि मिलित्वा दशपादानां सम्भवात् तृचस्य मिलित्वा अशीत्यक्षराणि तानि विराट् संख्यया विभक्तानि समान्येव भवन्ति इति पद्याक्षर्य्या च विराजौ भवत इत्युक्तं यद्वा प्रथमायामृचि दशपदानि सन्ति ततः पद्या विराट् ऋचाक्षर्य्या विराडिति विज्ञेयं अस्त्वेवं किं ततः स्यादिति चेदतो भवतीत्याह पूर्वं पद्यया हि विराजा देवाः स्वर्गं लोकमायन् पदस्याक्रमणसाधनत्वादेतदुचितं अक्षर्य्यया तु विराजा च ऋषयः अनुक्रमेण स्वर्गं प्राजानन् अक्षरविराट् प्रयोगेण यज्ञं तद्द्वारा तत्फलभूतं स्वर्गं चेति क्रमः अत इदानीन्तनैरपि पद्या चाक्षर्य्या च विराजौ कर्त्तव्ये भवतः किमर्थं स्वर्गस्य प्रज्ञात्यै परिज्ञानाय॥ ७॥

अथास्मिन् तृचे प्रथमम् श्यावाश्वं विधत्ते।

**तासु श्यावाश्वं॥ ८॥**

स्पष्टं॥ ८॥

तासु पुरोजितीव इत्याद्यासु तिसृषु ऋक्षु एतत्प्रशंसति।

**श्यावाश्वमार्चनानसꣳ सत्रमासीनं धन्वोदवहन् स एतत्सामापश्यत्तेन वृष्टिमसृजत ततो वै स प्रत्यतिष्ठत्ततो गातुमविन्दत गातुविद्वा एतत्साम॥ ९॥**

आर्च्चनानसं अर्च्चनानसः पुत्रं श्यावाश्वमृषिं सत्रमासीनमितरे सत्रिणः क्रोधात् धन्व निरुदकप्रदेशं उदवहन् उदगमयन् स तृषार्त्तः सन् एतत्सामापश्यत् स वृष्टिमसृजत ततः खलु वृष्ट्यां सत्यां सस्योत्पत्तौ पृथिव्यां प्रत्यतिष्ठत् ततोगातुं यज्ञानुष्ठानमार्गमविन्दत इत्थं गातुविन्मार्गलम्भनं खल्वेतत्साम मार्गलिप्सुना श्यावाश्वेन दृष्टत्वादपि श्यावाश्वमभूदिति ज्ञातव्यं ॥ ६ ॥

अथ विदुषः फलमाह ।

विन्दते गातुं प्रतितिष्ठत्येतेन तुष्टुवानः ॥ १० ॥

एतेन साम्ना तुष्टुवानोऽपि यजमानः गातुं लौकिकवैदिकविधियं मार्गं विन्दते प्रतितिष्ठति ॥ १० ॥

अथैतत्सामगतं स्तोभद्वयं प्रशंसति ।

इन्द्रस्तृतीयसवनाद्बीभत्समान उदक्रामत्तं देवाः श्यावाश्वेनैहायि एहियेत्यन्वह्वयं स उपावर्त्तत यदेतत्साम भवति तृतीयसवनस्य सेन्द्रत्वाय ॥ ११ ॥

ऋजीषदोषदुष्टत्वेनापगतमिन्द्रं देवाः पूर्व्वं श्यावाश्वेन साम्ना एहायि एहियो इत्याह्वयन् एहीत्यस्य विकारः एहा २ इ एवमाहूतः सवनं प्रत्युपागच्छत् इतरत्सुज्ञानं ॥ ११ ॥

अथान्धीगवं विधत्ते ।

अथैतद्दाम्बीगवमन्धीगुर्वी एतत्पशुकामः साम्ना-पश्यत्तेन सहस्रं पशूनसृजत यदेतत्साम भवति पशूनां पुष्ट्यै मध्ये निधनमैडम्भवत्येतेन वै तृतीय-सवनं प्रतिष्ठितं यन्मध्ये निधनमैडन्न स्यादप्रतिष्ठितं तृतीयसवनꣳ स्यात् ॥ १२॥

अथ श्यावाश्वेवं प्रतिष्ठितं यन्मध्ये निधनमैडमिति ऐडं इडासम्बन्धि मध्ये निधनमेतत्साम कर्त्तव्यं किं ततस्तत्राह एतेन खलु मध्ये निधनेन तृतीयसवनं हि प्रतिष्ठितं निधनं हि प्रतिष्ठा तन्मध्ये भवति तेन प्रतिष्ठासिद्धिः तथा इह मध्येन हि प्रति-पुरुषाद्दृढ़ाः सन्तः प्रतितिष्ठन्ति भूमौ इडाशब्दः पशुवाची पशु-वश्च प्रतिष्ठाहेतुरिति इडानिधनत्वादपि तृतीयसवनं प्रतिष्ठितं अतएवास्य साम्नः पशुपोषहेतुत्वं उक्तमर्थं व्यतिरेकेण दृढ़यति यन्मध्ये निधनमैडन्न स्यादिति स्पष्टं ॥ १२ ॥

अथ मध्ये निधनमेव पुनः प्रशंसति ।

दशाक्षरं मध्यतो निधनमुपयन्ति दशाक्षरा वि-राड्विराज्येव प्रतितिष्ठति ॥ १३ ॥

अपः ध्वानं स्वर्थिष्टना २३४५ इति दशाक्षरनिधनं साम मध्यत उपयन्ति स्तोतारः विराडपि दशाक्षरा तेन विराज्येव यजमानः प्रतितिष्ठति ॥ १३ ॥

अथ काव्यं साम विदधाति।

**अभिप्रियाणि पवत इति काव्यं प्राजापत्यꣳ साम॥ १४॥**

अभिप्रियाणीति तृचे गीयमानं काव्यं कविना भार्गवेन दृष्टं प्राजापत्यं साम भवति अनिरुक्तासु ऋक्षु गीयमानत्वात् इदं प्राजापत्यं यथा वामदेव्यं कयान इत्यनुक्तासु गीयमानं तद्वत्॥ १४॥

अथैतत् स्तौति।

**प्रजा वै प्रियाणि पशवः प्रियाणि प्रजायामेव पशुषु प्रतितिष्ठति॥ १५॥**

लोके प्रजा पशवः प्रियाणि अत्रापि प्रियाणीति श्रुतत्वात् तत्प्रयोगेन प्रजायां पशुषु च प्रतिष्ठितो भवति यजमानः॥१५॥

अथौशनकावे सह स्तौति।

**रश्मी वा एतौ यज्ञस्य यदौशनकावे देवकोशो वा एष यज्ञमभिसमुब्जितो यदेते अन्ततो भवतो यज्ञस्यारिष्ट्यै॥ १६॥**

यदौशनकावे एतौ यज्ञस्य रश्मी वै बन्धनरज्जू रश्मिशब्दा-पेक्षया एताविति पुंलिङ्गनिर्देशः यदेते उक्ते सामनी अन्ततो

भवतः एष यज्ञमभिसमुज्जितः यज्ञमुद्दिश्य देवकोशोदेवानां निधानागारं खलु समुज्जितः तच्च यज्ञस्यारिष्ट्यै अहिंसायै भवति ॥ १६ ॥

इति ताण्ड्यमहाब्राह्मणे अष्टमाध्यायस्य

पञ्चमः खण्डः।

---

अथ षष्ठः खण्डः।

उक्त आर्भवः पवमानः अथ यज्ञायज्ञीयं विधातुं तदुत्पत्तिमाह।

**देवा वै ब्रह्म व्यभजन्त तस्य योरसोऽत्यरिच्यत तद्यज्ञायज्ञीयमभवत् ॥ १ ॥**

पूर्वं देवाः ब्रह्म वेदराशिं व्यभजन्त ममायं भागो ममायं भाग इति विभागमकुर्व्वन् तस्य विभज्यमानस्य ब्रह्मणोरसोऽत्यरिच्यत तद्यज्ञायज्ञीयं सामाभवत् ॥ १ ॥

अथैतद्विधत्ते।

**ब्रह्मणो वा एष रसो यद्यज्ञायज्ञीयं यद्यज्ञायज्ञीयेन स्तुवन्ति ब्रह्मण एव रसे यज्ञं प्रतिष्ठापयन्ति ॥ २ ॥**

अत एतद् यज्ञायज्ञीयं ब्रह्मणो रसः खलु शिष्टं स्पष्टं यद्यपि यच्छब्दयोगादनुवादत्वं तथाप्यपूर्वत्वाद्विधिरेवाभ्युपगन्तव्यः ॥२॥

अथैतन्निर्वचनद्वारा प्रशंसति ।

**योनिर्वै यज्ञायज्ञीयमेतस्माद्वै योनेः प्रजापतिर्यज्ञमसृजत यद्यज्ञं यज्ञमसृजत तस्माद्यज्ञायज्ञीयं ॥ ३ ॥**

एतत् यज्ञायज्ञीयं साम योनिर्वै उत्पत्तिहेतुः तदेव साधयति एतस्मात् खलु यज्ञायज्ञीयाद्योनेः प्रजापतिर्यज्ञमसृजत, यज्ञमिति जात्यभिप्रायेणैकवचनं यद्यस्मादेतस्मात् साम्नो यज्ञं यज्ञं वीप्सया सर्वोऽपि यज्ञः परिगृह्यते कृत्स्नं यज्ञजातमसृजत तस्माद्यज्ञयज्ञसम्बन्धाद्यज्ञायज्ञीयमिति नामास्य सम्पन्नं ॥३॥

अथैतत्साममप्रयुक्तं प्रशंसति ।

**तस्माद्वा एतेन पुरा ब्राह्मणा बहिष्पवमानमस्तोषत योनेर्यज्ञं प्रतनवा महा इति यज्ञात्ततः स्तुवन्ति योनौ यज्ञं प्रतिष्ठापयन्ति ॥ ४ ॥**

तस्मादेव कारणात् पुरा ब्राह्मणाः अनुष्ठातारः यज्ञस्यादिभूतं बहिष्पवमानं अस्तोषत स्तोत्रं अकुर्वत कया बुद्ध्या योने-

रेतस्य साम्नः सकाशाद्यज्ञं प्रतनवा मह्या इति बुद्ध्या अतोऽयस्य योनित्वं सिद्धं अतो यद्यप्यन्ततः स्तुवन्ति योनावेव यज्ञं समापयन्तीति ॥ ४ ॥

अथैतत्सर्वयज्ञात्मकत्वेन प्रशंसति।

**असुरेषु वै सर्वो यज्ञ आसीत्ते देवा यज्ञायज्ञीयमपश्यᳪस्तेषां यज्ञायज्ञावो अग्नय इत्यग्निहोत्रमवृञ्जत गिरा गिरा च दक्षस इति दर्शपूर्णमासौ प्रप्रवयममृतञ्जातवेदसमिति चातुर्मास्यानि प्रियम्मित्रन्नशᳪसिषमिति सौम्यमध्वरं ॥ ५ ॥**

पूर्वमसुरेष्वेव सर्वो यज्ञ अग्निहोत्रादिचतुर्भेदभिन्नः सर्वो यज्ञ आसीत् न देवेषु ते देवाः स्वाधीनकरणोपायत्वेन यज्ञायज्ञीयमपश्यन् दृष्ट्वा च तेषां सम्बन्ध्यग्निहोत्रमवृञ्जत यज्ञायज्ञाव इति पादेन अत्राग्नय इति श्रूयमाणत्वात् अग्निहोत्रवर्जनस्यायमुचितः अग्निहोत्रं तेभ्यः सकाशाद्वियुज्य स्वयमलभतेत्यर्थः यद्वा क्रमोऽत्र सम्बन्धहेतुः अग्निहोत्रदर्शपूर्णमासौ चातुर्मास्यानि सौम्याध्वर इति क्रमः अतस्तत्राग्निहोत्रप्राथम्यात् स्तोत्रीयायामपि यज्ञायज्ञा इत्यस्य प्रथमपादत्वात्तेन तद्वर्जनमुचितं एवमुत्तरत्रापि तत्तत्स्थानत्वानुक्रमाद्वा सम्बन्ध्येवाव गन्तव्यः द्वितीयपादे दक्षस इति दकारः श्रूयते अतो दर्शपूर्णमासौ प्रावृञ्जत तृतीयपादे प्रकर्षवाचि प्रशब्दः श्रूयते अतस्तेना-

क्षयसुकृतफलानि चातुर्मास्यान्यवृञ्जत चातुर्मास्यानामक्षय-सुकृतसाधनत्वं अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीति श्रुतिः प्रियम्मित्रन्नेति चतुर्थपादे प्रियशब्दः श्रूयते सोमयागश्च देवानामतिशयेन प्रियः अतस्तेन पादेन सौम्याध्वरमवृञ्जत ॥५॥

अथैतत् स्तोत्रीयगतपदवीप्साद्वारेण प्रशंसति ।

**यज्ञावो अग्नये गिरा च दक्षसे प्रवयममृतञ्जात-वेदसम्प्रियम्मित्रं नशꣳसिषमिति वै तर्हि छन्दाꣳ-स्यासꣳस्ते देवा अभ्यारम्भमभिनिवर्त्यं छन्दोभिर्य-ज्ञमसुराणामवृञ्जत ॥ ६ ॥**

पूर्वमसुराणां यज्ञे विनापि वीप्सया यज्ञावो अग्नये गिरा च दक्षसे प्रवयमिति खलु छन्दाꣳसि छन्दोऽवयवभूताः पादाः अक्षराणि वा आसन् ते देवा एतदवगत्याभ्यारम्भमभ्यस्य पदं ते देवाहमभिनिवर्त्तेत्र अरिभ्यः सकाशात् यज्ञं छन्दोभिः प्रावृञ्जत ॥ ६ ॥

अथ वेदितुः फलमाह ।

**छन्दोभिर्यज्ञं भ्रातृव्यस्य वृङ्क्ते य एवं वेद ॥७॥**

स्पष्टं ॥ ७ ॥

अत्र गिरागिरेति पादे गकारमकृत्वा दूरा दूरेति पठि-तव्यमिति विवक्षुराह ।

एतद्ध स्म वा आह कूशाम्बः स्वायवो ब्राह्मा लातव्यः कंस्विदद्य शिशुमारी यज्ञपथेऽप्यस्ता गरिष्यति ॥ ८ ॥

एतद्धस्माह वक्ष्यमाणमिदमुवाच खलु आहेत्यस्य भूतकालसम्बन्धज्ञापनार्थं स्मेति प्रयोगः क आह कूशाम्ब एतन्नामा आचार्य्यः स्वायवः स्वायोः पुत्रः ब्राह्मा स्मृतादिना परिदृष्टः लातव्यः एतद्गोत्रसम्बन्धकथनं एतदिति उक्तमर्थं विवृणोति अद्यास्मिन् दिने कंस्वित् कं वा शिशुं शिशुमारी यज्ञपथेऽप्यस्ता प्रक्षिप्ता सती गरिष्यतीति ॥ ८ ॥

का शिशुमारी कथं गरिष्यतीति तदुभयं दर्शयति ।

एषा वै शिशुमारी यज्ञपथेऽप्यस्ता यज्ञायज्ञीयं यद्गिरागिरेत्याहात्मानं तदुद्गातागिरति ॥ ९ ॥

यज्ञायज्ञीयं सामेति यत् एषैव शिशुमारी शिशुवत्प्रयोगानभिज्ञानां घातिनी यज्ञपथे यज्ञस्य मार्गे औद्गात्ररूपे अप्यस्ता अभिप्राप्ता तथा सति यत् गिरा गिरेति ब्रूयादुद्गाता तेनात्मानमेव गिरति ॥ ९ ॥

कः परिहार इति तमाह ।

ऐरङ्कृत्वोद्गेयमिरायां यज्ञं प्रतिष्ठापयत्यप्रमायुक उद्गाता भवति ॥ १० ॥

ऐरं इरासम्बन्धं कृत्वा गेयं गिरा गिरेत्यधीतमपि इरा

दूरेति कृत्वा गातव्यमित्यर्थः तेन यद्गिराया भूमावेव प्रतिष्ठापयतीति अत उद्गातुरपि मरणदोषो नास्ति इदमेव वाक्यं विषयीकृत्य नवमस्य प्रथमपादे अध्ययनगतो गिराशब्दः ब्राह्मणविहित इराशब्दस्य विकल्पेन प्रयोगे प्रयोक्तव्यौ उत इराशब्द एवेति, न विकल्प इराशब्दएव प्रयोक्तव्य इति सिद्धान्तितं, सोऽपि इराशब्दो न गातव्यो गातव्यो वेति विचार्य्य गातव्य एवेति सिद्धान्तितं, तद्विचारद्वयं अत्रार्थनिर्णयाय प्रदर्श्यते तत्र प्रथमं दर्शयति, इरा गिरा विकल्पः स्यादुतेरैवा विशेषतः। आद्ये मैवं बाधपूर्वमिरायाविहितत्वतः। ज्योतिष्टोमे श्रूयते यज्ञायज्ञीयेन स्तुवीतेति यज्ञायज्ञेत्यनेन शब्देन युक्तायामृच्युत्पन्नं साम यज्ञायज्ञीयं तस्यामृचि गिराशब्दः पठ्यते यज्ञायज्ञावो अग्नये गिरा गिरा च दक्षस इति तत्र सामगा योनिगानमधीयानाः सहैव गकारेण गायन्ति गा इरा गिरा इति, ब्राह्मणे तु गकारलोपपूर्वकमाकारयकारादिकं गानं विधीयते ऐरं कृत्वोद्गेयमिति गिराशब्दे गकारलोपादि भवति इरायाः सम्बन्धि गानमैरं तादृशं कृत्वा प्रयोगकाल उद्गानं कर्त्तव्यमित्यर्थः, तत्र योनिगानब्राह्मणयोः समानबलत्वेन विशेषाभावात् विकल्पेन प्रयोक्तव्यमिति प्राप्ते ब्रूमः, न गिरागिरेति ब्रूयात् यद्गिरागिरेति ब्रूयादात्मानमेव तदुद्गाता गिरेदिति गकारसहितगाने बाधमुक्त्वा गकाररहितं इरापदं गेयत्वेन विधीयते तत्तदादेरिकारस्य गानार्थमाकारो यकार इकारश्चेति त्रीन् वर्णान् प्रयुज्यते तत्र

वा ईरा इत्येव मन्तव्यं; अथ द्वितीयं दर्शयति, इरा पद-न्नगेयं स्यान्नेयं वा गीत्यनुक्तितः। न गेयं गीयमानस्य स्थाने जाते प्रगीयते, ब्राह्मणेन विहित इराशब्दो न गातव्यः कुतः ऐरमिति शब्देन गीतेरनुक्तत्वात् पाणिनीयेन विमुक्ता-दिभ्योऽणिति सूत्रेणेराशब्दादण् प्रत्ययो मत्वर्थीयो विहितः तथा सति इरापदोपेतं कृत्वेत्येतावानेवार्थो भवति यदि प्रगी-तेरापदसम्बन्धस्तर्हि तेन विवक्ष्येत तदानीमाकारो यकार इकारोरेफ आकारस्येत्येतैः पञ्चभिर्वर्णैं निष्पन्नमाईरारूपं गीयमानेराशब्दप्रातिपदिकं भवति तादृशात् प्रातिपदिकात् पाणिनीयेन वृद्धाच्छ इति सूत्रेण प्रत्ययान्तरेण प्रत्ययान्तरे सति आ ईरीतं कृत्वेति ब्राह्मणपाठो भवेत् तस्मान्न गेयमिति प्राप्ते ब्रूमः गीयमानस्य गिरापदस्थान इरापदं विधीयत इति पदमात्रस्य बाधः गानं तु न बाध्यते किञ्च विमुक्तादिसूत्रेण कृण् प्रत्ययेऽपि पूर्वस्मात् मतौ छः सूक्तसाम्नोरिति सूत्रात्मा-मानुवृत्तेरैरं सामेत्यर्थो भवति सामत्वञ्च गीतिसाध्यं तदा तु तस्य विकार इत्यस्मिन्नर्थे अण् प्रत्ययः तदानीं गिराया विकार इति विग्रहे यथोक्तं गानं लभ्यते तस्माद्गातव्यं ॥ १० ॥

अथैतस्य स्तोत्रीयात्तृतीयपादे प्रप्रवयमित्येतस्मिन् प्रप्रेत्येवं निन्दित्वा प्रप्रीं वयमिति पठितव्यमित्याह।

**वैश्वानरे वा एतदुद्गातात्मानं प्रदधाति यत्प्र-**

**प्रवय मित्याह प्रप्रीं वयमिति वक्तव्यं वैश्वानरमेव परिक्रामति ॥ ११ ॥**

अस्याग्नेयत्वादेतदेतेनोद्गातात्मानं वैश्वानरे अग्नौ प्रदधाति प्रक्षिपति यद्येतत् प्रप्रवयमित्याह ब्रूयात् अताग्नौ प्रक्षेपवाचिनः प्रशब्दस्य सद्भावात्तत्परिहार उच्यते प्रप्रीं वयमिति वक्तव्यं तत्र परीत्यक्षरद्वयसद्भावात् वैश्वानरमेव परि अतीत्य क्रामतीति अतो नोक्तदोष इत्यर्थः ॥ ११ ॥

प्रियमिन्तन्वेति चतुर्थपादेन शब्दं परित्यज्य प्रकारान्तरद्वयेन पठितव्य इत्याह ।

**यो वै निह्नुवानं छन्द उपैति पापीयानुज्जगिवान् भवत्येतद्वै निह्नुवानं छन्दोयन्न शंसिषमिति नु शꣳसिषमिति वक्तव्यꣳ सुशꣳसिषमिति वा न निह्नुवानं छन्द उपैति वसीयानुज्जगिवान् भवति ॥ १२ ॥**

य उद्गाता निह्नवानं क्रियमाणं कर्म्म निह्नवानं छन्दः निह्नववाचिपादोपेतत्वात् छन्दोऽपि निह्नवानं तदुपैति प्राप्नोति स उद्गमिष्यन् उद्गाता पापीयान् भवति किं तन्निह्नवानं छन्द इति तद्दर्शयति न शंसिषमिति यत् तदेव निह्नवानं छन्दः शंसन् स्तुवन् अप्युद्गाता नुशंसिषमिति ब्रूते अतोऽस्य निह्नवरूपत्वं अतोऽनुशंसिषमिति वक्तव्यं नु इत्येतस्य

इदानीन्तनकालवाचित्वात् नापक्ष्ववदोषः यद्वा सुषंसिषमिति वक्तव्यं तथा सति नोक्तदोषवच्छन्दःप्राप्तिः अतउज्जगिवानुन्नाता वसीयान् प्रशस्यो भवति ॥ १२ ॥

अथ वाक्प्रकारनिधनं यज्ञायज्ञीयं तच्च न स्वरूपेण प्रयोज्यात् किन्तु प्रथमाक्षरं प्रयोक्तव्यमित्याह ।

**यस्य वै यज्ञा वागन्ता भवन्ति वाचश्छिद्रेण स्रवन्त्येते वै यज्ञा वागन्ता ये यज्ञायज्ञीयान्ता एतद्वाचश्छिद्रं यदनृतं यदग्निष्टोमयाज्यनृतमाह तदन्वस्य यज्ञः स्रवत्यक्षरेणान्ततः प्रतिष्ठाप्यमक्षरेणैव यज्ञस्य छिद्रमपिदधाति ॥ १३ ॥**

यस्य यजमानस्य यज्ञा वागन्ता वागिति निधनान्ता भवन्ति ते वाचश्छिद्रेण व्यवधानेन स्रवन्ति निष्फला भवन्ति वागन्तानन्यान् दर्शयति एते खलु यज्ञा वागन्ता ये यज्ञाः यज्ञायज्ञीयस्तोत्रान्ताः स्युः कथमस्य वाचः छिद्रत्वसम्भव इति तदुपपादयति यदनृतं एतदेव वाचः छिद्रन्तदपि कथमत्र सम्भवतीति तदत्र सम्भावयति यद्यदि अग्निष्टोमयाजी अनृतमाह ब्रूते तदनृतच्छिद्रमनु अस्य यजमानस्य यज्ञः स्रवति गलितो भवति तस्य परिहार उच्यते अन्ततो अग्निष्टोमसामान्ते अक्षरेण वागित्यक्षरद्वयेन वा इत्याद्याक्षरेणैव प्रतिष्ठाप्यं समाप-

नीयमेतन्नाम तथा सत्येकेनैवाक्षरेणैव यज्ञस्य छिद्रमनृतवदन-नृतवदनुरूपं अपिदधात्युद्गाता ॥ १३ ॥

उक्तैकाक्षरस्तुत्यन्तरमाह ।

## विराजो वा एतद्रूपं यदक्षरं विराज्येवान्ततः प्रतितिष्ठति ॥ १४ ॥

यदक्षरमस्ति एतद्विराजो अन्नस्य रूपं खल्वस्तीति अक्षरं विराडित्यन्ननाम विराज इति व्युत्पत्त्या अन्नं विराडिति श्रुतिश्च तस्मादन्नस्य रूपं स्वयमसा लोके व्याप्तं भवति ततो अक्षरं विराजो रूपमित्युच्यते अतोऽक्षरमन्ते सम्पादनेन स यज्ञोऽन्ततो विराज्येव प्रतिष्ठितो भवति ॥ १४ ॥

इति ताण्ड्यमहाब्राह्मणे अष्टमाध्यायस्य

षष्ठः खण्डः ।

---

अथ सप्तमः खण्डः ।

अथास्य प्रथमस्तोत्रीयायां सवनानि त्रीण्यपि छन्दांस्यव-रोहेण सम्पाद्य प्रशंसति ।

## इतो वै प्रातरूर्ध्वानि छन्दांꣳसि युज्यन्तेऽमुतो-ऽर्वाञ्चि यज्ञायज्ञीयस्य स्तोत्रे युज्यन्ते यज्ञावो अग्नये

गिरा च दक्षम इति द्वादशाक्षरं प्रवयमक्तं जातवेदसमित्येकादशाक्षरं प्रियम्मिवन्न मण्ंसिषमित्यष्टाक्षरं ॥ १ ॥

प्रातःसवने इतो गायत्रमारभ्य ऊर्ध्वानि छन्दांसि त्रिष्टुबादीनि युज्यन्ते प्रयुज्यन्ते तृतीयसवनान्ते यज्ञायज्ञीयस्तोत्रे तु अमुतो जागतादर्वाञ्चि अवरोहक्रमाणि छन्दांसि युज्यन्ते तत्कथमिति स्वयमेव प्रदर्शयति आदितः पादद्वयेनाहृत्तान्यक्षराणि विहाय द्वादशाक्षराणि तज्जागतं छन्दः एवमुत्तरयोरपि द्रष्टव्यं ॥ १ ॥

अथोक्तछन्दस्त्रयमेकीकृत्यानुष्टुभं सम्पाद्य प्रशंसति।

अनुष्टुभमुत्तमाण् सम्पादयतीयं वा अनुष्टुबस्यामेव प्रतितिष्ठति ॥ २ ॥

उक्तप्रकारेण पादचतुष्टयाक्षरपरिगणनायामेकत्रिंशदक्षराणि भवन्ति, न वा एकेनाक्षराणि छन्दांसि वियन्तीति शास्त्रादनुष्टुप्छन्दो भवति ततश्च कथं प्राशस्त्यमिति तद्दर्शयति एषानुष्टुबियं वै भूरेव खलु अनुष्टुभः समसंख्याकृपपादचतुष्टयसद्भावात्प्रतिष्ठात्मिका भूमिरपि सर्वेषां प्रतिष्ठा अतस्तद्रूपत्वेन स्तुतिः अतोऽनया स्तुवन् यजमानोऽस्यामेव भूमौ प्रतिष्ठितो भवति ॥ २ ॥

अथ सम्पादितमेवानुष्टुभं द्वेधा प्रशंसति ।

**वाग्वा अनुष्टुब्वाच्येव प्रतितिष्ठति ज्यैष्ठ्यं वा अनुष्टुब्ज्यैष्ठ्य एव प्रतितिष्ठति ॥ ३ ॥**

उक्तप्रकारेणैव सर्ववागात्मिकानां जगतीत्रिष्टुब्गायत्रीणामनुष्टुबन्तःपातित्वादनुष्टुब्वागिति उच्यते अतएव हेतोरनुष्टुभो ज्येष्ठत्वमपि श्रिष्टं स्पष्टं ॥ ३ ॥

अथ यज्ञायज्ञीयस्य गानं प्रश्नोत्तराभ्यां दर्शयति ।

**कथमिव यज्ञायज्ञीयङ्गेयमित्याहुर्य्यथाऽनड्वान् प्रस्रावयमाण इत्थमिव चेत्थमिव चेति ॥ ४ ॥**

कथमिव यज्ञायज्ञीयं साम गेयमिति गानप्रकारविषयं प्रश्नं कुर्वन्ति ब्रह्मवादिनः तत्रेदमुत्तरमभिज्ञा आहुः कथं यथानड्वान् प्रस्रावयमाणः मूत्रधारां सततं वक्रां भूमौ पातयमानः इत्थमिव पृथक् पृथक् प्रकारमनृजु कुर्वन्नेति तद्वत् गेयमित्याहुः इतिशब्द अभिज्ञोत्तरसमाप्तिद्योतनार्थः ॥ ४ ॥

इत्थमिव चेत्थमिवेत्युक्तं विवृणोति ।

**वैश्वानरं वा एतदुद्गातानु प्रसीदन्नेतीत्याहुर्य्यद्यज्ञायज्ञीयस्यर्च्चं संप्रत्याहेति परिक्रामतेवोद्गेयं वैश्वानमेव परिक्रामति ॥ ५ ॥**

यद्यदि यज्ञायज्ञीयस्य स्तोत्रीयामृचं सम्प्रतीदानीमाह्वाधीतेनैव पाठेन ऋजुनैवाद्गोद्गाता एतदेतेन वैश्वानरमेवानु आनुकूल्येन प्रसीदन् प्रकर्षेण सन्निधिं गच्छन्नेव एतीत्याङ्कः तच्च गमनन्दाहाय भवति अतस्तत्परिहाराय परिक्रामते च अध्ययनपाठमतिक्रम्य ब्राह्मणोक्तप्रकारेणेतरेभ्यो विलक्षणमितस्ततः क्रामतेवोद्गेयं तेन वैश्वानरमेव परिक्रामति अग्निसन्निकर्षमप्राप्यैव लम्भयति ॥ ५ ॥

अथैतच्छिरः प्रावृत्य गातव्यमिति सार्थवादं विदधाति ।

वैश्वानरे वा एतदध्वर्युः सदस्यानभिसृजति यद्यज्ञायज्ञीयस्य स्तोत्रमुपावर्त्तयति प्रावृतेनोद्गेयं वैश्वानरेणानभिदाहाय ॥ ६ ॥

यज्ञायज्ञीयस्य स्तोत्रमुद्गातॄनुपावर्त्तयति प्रेरयति अस्युर्जमुजिवागसर्जेत्यादिनोपावर्त्तध्वमिति ह्यध्वर्युः स्तोत्रमुपाकरोति एतदेतेन स्तोत्रोपाकरणरूपेण वैश्वानरेणैव खलु अध्वर्युः सदस्यानभिसृजति अभिसंयोजयति अतस्तत्परिहाराय प्रावृतेन वेष्टितेन वस्त्रेणोद्गातव्यं तच्च प्रावरणं अग्न्यनभिदाहाय भवति ॥ ६ ॥

प्रावरणे किञ्चिद्विशेषमाह ।

न ह तु वै पितरः प्रावृतञ्जानन्ति यज्ञायज्ञीयस्य

वै स्तोत्रे पितरो यथायथं जिज्ञासन्त आकर्णाभ्यां प्रावृत्यन्त्तदेव प्रावृतन्तदप्रावृतञ्जानन्ति पितरो न वैश्वानरो हिनस्ति ॥ ७ ॥

तृचद्वयो वैलच्चण्यार्थः पितरो यज्ञान्विताः स्वस्वसम्बन्धिन ऋत्विजो जिज्ञासमानाः प्रावृतं प्रकर्षेणापिहितशिरसं न हि जानन्ति नैवाधिगच्छन्ति तेषां यज्ञसम्बन्धिऋत्विजाञ्च जिज्ञासा यज्ञायज्ञीयस्येत्यादिनोच्यते यथायथं स्व स्व वंशमनतिक्रम्येत्यर्थः अतः पितृणां ज्ञानार्थमग्नेरदाहार्थञ्च आकर्णाभ्यां कर्णपर्य्यन्तं प्रावृत्यं प्रावरणं कर्त्तव्यं अत्राभिविधावाकारः मर्य्यादायामित्येके तथाचापस्तम्बः सकर्णप्रावृता अकर्णप्रावृता वा स्तुवत इति एवङ्कृते तदेव प्रावृतमप्रावृतञ्च भवति अतः पितरोऽपि जानन्ति वैश्वानरो न हिनस्ति ॥ ७ ॥

अथ पत्नीकर्त्तृकं अपामुपसर्ज्जनं अपि वैश्वानरात्मकं यज्ञायज्ञीयशान्त्यर्थमिति स्तौति ।

अपः पश्चात् पत्न्य उपसृजन्ति वैश्वानरमेव तच्छमयन्त्यापोहि शान्तिः ॥ ८ ॥

पत्न्यः पश्चाद्गार्हपत्यायतनं अप उपसृजन्ति तेन वैश्वानरमेव शमयन्ति अपां शान्तिरूपत्वं प्रसिद्धं ॥ ८ ॥

न केवलमनेन शान्तिः क्रियते किन्तु प्रजननहेतुरप्येवमिति स्तौति।

**अथो रेत एव तस्मिन्त्सिञ्चन्त्यापोहि रेतः॥ ९॥**

अपां रेतस्त्वन्तमद्भिरभिषिञ्चन्ति रेतो वै आप इति तैत्तिरीयादिषु प्रसिद्धं॥ ९॥

अत्रैव विशेषमाह।

**दक्षिणानूरूनभिषिञ्चन्ति दक्षिणतोहि रेतः सिच्यते॥ १०॥**

अर्थस्तु स्पष्ट एव, एतदेव दक्षिणतो रेतःसेकस्य भूलमिति ज्ञातव्यं॥ १०॥

अथोरुसेचनार्थं अंशुकसङ्कोचमाह।

**महदिव प्रत्यूह्यम्मन एवास्य तज्जनयन्ति॥ ११॥**

महदिव अत्यन्तं प्रत्यूह्यं संहतस्य विवरणं कार्य्यं वस्त्रस्यापोहनं कार्य्यमित्यर्थः तथाच तैत्तिरीयकं नग्नं कृत्वोरुमुपप्रवर्त्तयन्तीति तत्तेन निर्लज्जमत्यन्तं वस्त्रप्रत्यूहनेनास्य ऊरुमध्यस्यापितोदकस्य रेतःसेकस्थानीयस्य तत्स्थानीयमुदकमित्यर्थः मन एव जनयन्ति मनस्विनं पुत्रमुत्पादयन्तीत्यर्थः जनयन्तीति प्रयोगबहुत्वापेक्षया बहुवचनं॥ ११॥

अथाध्वर्युभिः कारयितव्यमुद्गातृकर्तृकं पत्नीसंख्यापनं विधत्ते ।

**उद्गाता पत्नीः संख्यापयन्ति रेतोधेयाय ॥ १२ ॥**

प्रजापतिर्वा उद्गातेत्युक्तं अतोऽध्वर्युभिः क्रियमाणमुद्गातृ संख्यापनं रेतोधेयाय पत्नीषु रेतोधारणाय भवति अपः पश्चात् पत्न्य उपसृजन्तीत्यारभ्योद्गाता पत्नीः संख्यापयन्ति रेतोधेयाये-त्यन्तस्यार्थस्तैत्तिरीयके वाक्यव्यत्यासेनेष्ट्वा पत्नीमुद्गाता संख्या-पयति प्रजापतिर्वा एष उद्गाता प्रजानां प्रजननाय उप-प्रवर्त्तयति रेत एव तस्मिन्त् पूर्णोपप्रवर्त्तयत्पूरणा हि रेतः सिच्यत इत्यादिना प्रतिपादितः अत्र ह्युद्गातुर्हिंकारसमये पत्न्यवलोकनार्थं अध्वर्युः प्रैषं करोति ॥ १२ ॥

अत्र पत्नीसंख्यापनमाह ।

**हिङ्कारं प्रति संख्यापयन्ति हिङ्कृताद्धि रेतो धीयत ॥ १३ ॥**

यज्ञायज्ञीयस्य तिसृणामपि स्तोत्रीयाणामादौ यदा उद्गा-तारो हिंकुर्वन्ति तस्मिन् काले प्रतिसंख्यापयन्तीत्यर्थः हिंकृत-रेतोधानस्यैतदेव ज्ञापकं अतापस्तम्बः हिङ्कृत्य वाग्यतः स्त्रिय-मुपेयाद्व्याहरेद्वेति ॥ १३ ॥

संख्यापनस्य त्रिवारं विधत्ते ।

आतृतीयाया: संख्यापयन्ति त्रिष्टद्धि रेत: ॥१४॥

तृतीयास्तोत्रीयापर्य्यन्तं हिङ्कारं प्रत्युद्गाता संख्यापयन्त्यध्व-र्य्यव: शरीरेन्द्रियान्त:करणरूपेण तत्त्रिवृद्धि रेत इत्युक्तं ॥१४॥

इति ताण्ड्यमहाब्राह्मणे अष्टमाध्यायस्य

सप्तम: खण्ड: ।

---

अथ अष्टम: खण्ड: ।

उक्तोऽग्निष्टोम: अथ तस्यैव संस्थाभेदेऽस्योक्थस्य स्तोत्राणि विधातुमाख्यायिकामाह ।

देवा वा अग्निष्टोममभिजित्योक्थानि नाशक्नुव-न्नभिजेतुं तेऽग्निमब्रुवꣳस्त्वया मुखेनेदञ्जयामेति सो-ऽब्रवीत् किम्मे तत: स्यादिति यत्कामयस इत्यब्रुवन् सोऽब्रवीन्मद्देवत्यान्युक्थानि प्रणयानिति ॥ १ ॥

देवा वा अग्निष्टोममभिजित्योक्थानि नाशक्नुवन् अशक्तास्ते अग्निं त्वया मुखेन पुरोगन्त्रा इदमुक्था स्तोत्रजपविषयमसुर-संग्रामं जयामेत्यब्रुवन् एवमुक्तोऽग्निस्ततो जयात् मे किं फलं स्यादित्यब्रवीत् ते च देवास्तर्हि यत् फलं कामयस इति अब्रु-

वन् सोऽग्निः मद्देवत्यासु स्तोत्रीयासु उक्थानि स्तोत्राणि प्रणयान् प्रणयेयुरित्यब्रवीन् तथाङ्गीचक्रुरिति शेषः ॥ १ ॥

इदानीं उक्थस्तोत्रीयास्वाग्नेयत्वं विधत्ते।

**तस्मादाग्नेयीषूक्थानि प्रणयन्ति ॥ २ ॥**

तस्मादग्निना कृतत्वात् अत्रापूर्वार्थत्वात् प्रणयेयुरिति विधिरवगन्तव्यः ॥ २ ॥

अथ तत्स्तोत्रीयाणां गायत्रीछन्दस्त्वं विधत्ते।

**तस्मादु गायत्रीषु गायत्रछन्दा ह्यग्निः ॥ ३ ॥**

तस्मादु अग्निना कृतत्वादेव तर्ह्यस्वाग्नेयीषु उक्थानां स्तवनं गायत्रत्वस्य कः सम्बन्ध इति उच्यते गायत्रछन्दा ह्यग्निरिति प्रजापतेर्मुखात् सहोत्पन्नत्वादग्नेर्गायत्र्यभवदित्युक्तत्वाच्चाग्निर्गायत्रछन्दोऽभिमानी आग्नेयस्य कृतत्वादाग्नेयछन्दसोऽपि सम्बन्ध इत्यर्थः ॥ ३ ॥

अथोक्तानि साकमश्वेन विधित्सुः तत्साम निर्वचनद्वारा प्रशंसति।

**तेऽग्निम्मुखं कृत्वा साकमश्वेनाभ्यक्रामन् यत्साकमश्वेनाभ्यक्रामꣳस्तस्मात् साकमश्वं ॥ ४ ॥**

ते देवाः अग्निमेव मुखं पुरोगामिनं कृत्वा अश्वेनाश्व-

रूपेणाग्निना साकं सार्द्धं अभ्यक्रामन् शत्रूनत्यक्रामयन् यस्मा-
देवमकुर्व्वन् तस्मात्साकमश्वमिति तत् साम्नोनाम सम्पन्नं ॥ ४ ॥

इदानीं तत्साम विधत्ते।

**तस्मात्साकमश्वेनोक्थानि प्रणयन्त्येतेन हि ता-
न्यग्रेऽभ्यजयन् ॥ ५ ॥**

तस्मादित्यादि स्पष्टं तान्यचरसम्बन्धीन्युक्थान्येतेन साम्ना-
भ्यजयन्नित्येतस्मादित्यस्य विवरणं एतद्धि साकमश्वमेत्तृषु ब्रुवाणि
त इत्यादिष्वाग्नेयीषु गायत्रीषु क्रियते सर्वेषु स्तोत्रेषु स्वसमान-
देवत्यानि शस्त्राणि भवन्ति ॥ ५ ॥

उक्थेषु तु स्तोत्रीयानुरूपेभ्योऽनन्तरमन्या अन्या देवताः
कथं शस्यन्त इति तत्समाधत्ते तत्रैन्द्रावरुणत्वलक्षणं देवतावै-
लक्षण्यं परिहरति।

**स इन्द्रोऽब्रवीत्कश्चाहञ्चेदमन्ववैष्याव इत्यह-
ञ्चेति वरुणस्तं वरुणोऽन्वतिष्ठदिन्द्र आहरत्तस्मादै-
न्द्रावारुणमनुशस्यते ॥ ६ ॥**

देवानां मध्ये स इन्द्र एवमब्रवीत् किमित्युच्यते कश्च को देवः
अहं चेन्द्रः इदं संग्राममुक्थजयार्थमनुक्रमेण अवैष्यावः अव-
गमिष्याव इति अहं च त्वं चान्ववैष्याव इति वरुणोऽब्रवीत्
तमिन्द्रं वरुणः अनु पश्चात् सहायत्वेनातिष्ठत् इन्द्रस्तु स्वयमेवा-

हरत् आनयत् उक्थानि यस्मादेवं तस्मादैन्द्रावारुणमिन्द्रवरुणदेवताकं सूक्तं उक्थस्तुतमनुशस्यते अतो वैलक्षण्यमित्यर्थः॥ ६॥

एवमैन्द्राबार्हस्पत्यमैन्द्रावैष्णवयोरपि उक्थस्तोत्रस्यावैलक्षण्यमिन्द्रेण प्रार्थितत्वादेवेत्याह।

स एवाब्रवीत्कस्त्वाहं चेदमन्ववैष्याव इत्यहञ्चेति बृहस्पतिस्तं बृहस्पतिरन्वतिष्ठदिन्द्र आहरत् तस्मादैन्द्राबार्हस्पत्यमनुशस्यते। स एवाब्रवीत्कस्त्वाहं चेदमन्ववैष्याव इत्यहञ्चेति विष्णुस्तं विष्णुरन्वतिष्ठदिन्द्र आहरत्तस्मादैन्द्रावैष्णवमनुशस्यते॥ ७॥

पूर्व्ववद्योज्यं, अयमर्थस्तैत्तिरीयके समाम्नायते ते देवा असुरा मैत्रावरुणस्योक्थमस्वयन्त सोऽब्रवीदिन्द्रः कस्त्वाहं चेमानि तेऽसुरान्वैस्याव इत्यहं चेत्यब्रवीद्वरुण इत्यादिना॥ ७॥

अथ नित्यानामेवोक्थानामभिप्रायभेदात् पशुकामनार्थत्वमप्यस्तीत्याह।

पशून् वा एभ्यस्तानाहरत्पशवो वा उक्थानि पशुकाम उक्थेन स्तुवीत पशुमान् भवति॥ ८॥

एभ्योऽसुरेभ्यः सकाशात्तान्युक्थान्याहरत् एतान् पशूनेव

खल्वाहरत् कथमुक्थान्येव पशव इति तदुच्यते पशवो वा इति अतः पशुकाम उक्थेन स्तुवीत स्तौति चेत् पशुमान् भवत्येव तेषामुक्थरूपेण स्थितत्वादित्यभिप्रायः ॥ ८ ॥

एवं साकमश्वमुक्थमुक्त्वा सौभरं द्वितीयमुक्थं विधित्सुराह ।

**बृहता वा इन्द्रो वृत्राय वज्रं प्राहरत्तस्य तेजः परापतत्तत्सौभरमभवत् ॥ ९ ॥**

पूर्वमिन्द्रो वृत्रवधार्थं बृहता साम्ना वज्रं प्राहरत् तस्य पतितं तेजः सौभरं सामाभवत् ॥ ९ ॥

अथ सौभरप्रसङ्गादतिरात्रेऽपि ब्राह्मणाच्छंसिन उक्थं सौभरमेव कार्य्यमिति विवक्षुः रथन्तरपृष्ठे तावदतिरात्रस्य स्तुतिमाह ।

**जामि वा एतद्यज्ञे क्रियत इत्याहुर्यद्रथन्तरं पृष्ठꣳ रथन्तरꣳ सन्धिर्नान्तरा बृहता स्तुवन्तीति यत् सौभरेण स्तुवन्ति बृहतैव तदन्तरा स्तुवन्ति बृहतो ह्येतत्तेजो यत्सौभरं ॥ १० ॥**

पृष्ठे सन्धिस्तोत्रे च रथन्तरस्य करणादन्तरा मध्ये बृहतैव स्तुवन्ति तज्जामित्वदोषपरिहाराय भवति कथं बृहता स्तुतं भवति सौभरादिति तदुच्यते बृहतो ह्येतदित्यादिना ॥ १० ॥

यद्येवं अजामितायै सौभरं क्रियते सर्व्वत्र रथन्तरपृष्ठे स्याद्बृहत्पृष्ठे तु अतिरात्रे किं मध्यममुक्थं स्यादित्याशङ्क्य तत्रापि सौभरमेवेत्याह।

**यदि बृहत्सामातिरात्रः स्यात्सौभरमुक्थानां ब्रह्मसाम कार्य्यं बृहदेव तत्तेजसा समर्द्धयति ॥ ११ ॥**

यद्यतिरात्रे बृहत्साम स्यात्तस्मिन् पक्षे उक्थानां मध्ये ब्रह्मसाम ब्राह्मणाच्छंसिन उक्थं सौभरं कार्य्यं तथा कृते बृहदेव साम स्वतेजोरूपं सौभरमेव स्वकीयेन तेजसा समर्द्धयति ॥११॥

एवं बृहत्सामपक्षे सौभरं ब्रह्मसामास्तु रथन्तरपक्षे किं ब्रह्मसाम भवेदित्याकाङ्क्षायां तत्रापीदमेव सौभरं कर्त्तव्यमित्युक्तवन्तीति यत् सौभरेण स्तुवन्ति बृहता स्तुवन्ति बृहतो ह्येतत्तेजोयत् सौभरमित्याह।

**यदि रथन्तरसाम्ना सौभरं कुर्य्यादजामितायै ॥ १२ ॥**

जामि वा इत्यादिनैवोक्तमित्यर्थः ॥ १२ ॥

अथ नित्यप्रयोगार्थमपि सौभरं तद्व्यतिरेकेण स्वर्गप्रतिष्ठार्थयोः प्रयोगयोरपि भवतीत्याह।

**देवानां वै स्वर्गं लोकं यन्तां दिशोव्लीयन्त ताः सौभ-**

रेणो इत्युदस्तभ्नुवꣳस्ततो वै ता अदृꣳहन्त ततः प्रत्यतिष्ठꣳस्ततः स्वर्गं लोकं प्राजानन्यः स्वर्गकामः स्याद्यः प्रतिष्ठाकामः सौभरेण स्तुवीत प्रस्वर्गं लोकं जानाति प्रतितिष्ठति ॥ १३ ॥

पूर्व्वं स्वर्गं गच्छतां देवानां सप्तम्यर्थे षष्ठी देवेषु स्वर्गं यत्सु सत्सु दिशो लीयन्त शिथिला आसन् तादिशो देवाः सौभरेण सौभरसम्बन्धिना ऊ इति निधनेन उत् स्तम्भुवन् उपरि स्तम्भितवन्तः ततः स्तम्भनात्स्वयमपि प्रतिष्ठिता आसन् तत एव स्वर्गं लोकं प्राजानन् स्वाधीनं चक्रुः अत उभयकामः सौभरेण स्तुवीत स्पष्टमन्यत् अस्य फलार्थविधानेनैव नित्यप्रयोगेऽप्येतद्विहितं भवतीत्यभ्युपगन्तव्यं ॥ १३ ॥

अस्य ऊ इति निधनभेदेन यथा स्वर्गार्थत्वमुक्तं तथा ऊर्गिति निधनभेदेनास्यान्वार्थत्वमपि विवक्षुराह ।

प्रजापतिः प्रजा असृजत ताः सृष्टा आशनायꣳस्ताभ्यः सौभरेणोर्गित्यन्नं प्रायच्छत्ततो वै ताः समैधन्त ॥ १४ ॥

पूर्व्वं प्रजापतिना सृष्टाः प्रजाः यत् आशनायन्नशनमैच्छन् ताभ्यः सौभरेण साम्ना ऊर्गित्यन्नं प्रायच्छन् ततः खलु ताः समृद्धा अभवन् ॥ १४ ॥

इदानीं विधत्ते ।

समेधन्ते ताᳪं समां प्रजा यत्रैवं विद्वान् सौभरेणोद्गायति ॥ १५ ॥

यत् यस्मिन् संवत्सरे यस्य यजमानस्य प्रयोगे एवमूर्गिति निधनमन्नद्वारा समृद्धिसाधनमिति विद्वान् सौभरेणोर्ङ्निधनेनोद्गायति तां समां तस्मिन् संवत्सरे तस्य यजमानस्य प्रजा अन्नेन समेधन्ते ॥ १५ ॥

अथैतत्सामनिर्वचनद्वारा प्रशंसति ।

ता अब्रुवन्सुभृतन्नोऽभार्षीरिति तस्मात्सौभरं ॥ १६ ॥

ता अन्नेन समृद्धाः प्रजाः प्रजापतिं यस्मान्नोऽस्मान् सुभृतं अभार्षीत् भृतवानित्यब्रुवीत तस्मात् सौभरमिति नाम सम्पन्नं ॥ १६ ॥

प्रजापतिर्य्यदन्नं ताभ्यः प्रायच्छत्तद्वृष्टिद्वारेत्याह ।

वृष्टिं वा अभ्यस्तां प्रायच्छदन्नमेव ॥ १७ ॥

यदन्नमेव प्रायच्छत् प्रजापतिस्तां वृष्टिमेव प्रायच्छद्वृष्टिशब्दापेक्षया तच्छब्दस्य स्त्रीलिङ्गता ॥ १७ ॥

एवमेतत् पृथक् पृथक् फलसाधनत्वेन विहितं समुच्चित्याह ।

**यो वृष्टिकामः स्यादयोऽन्नाद्यकामोयः स्वर्गकामः सौभरेण स्तुवीत ॥ १८ ॥**

स्पष्टोऽर्थः ॥ १८ ॥

अथ वृष्टिं वा आभ्यस्तां प्रायच्छदित्यनेन सूचितस्य वृष्ट्यर्थ-प्रयोगस्य निधनं पूर्वविहितस्वर्गान्नसाधननिधनेनापि निर्द्दिश्य तस्मिन्नेव सामानि कामनाभेदेन व्यवस्थापयति ।

**हीषिति वृष्टिकामाय निधनं कुर्य्यादूर्गित्यन्नाद्य-कामायो इति स्वर्गकामाय ॥ १९ ॥**

हीषित्येतद्वृष्ट्यनुकरणरूपत्वात्तत्कामाय उचितं ऊर्गित्येत-त्सावादन्ननाम ऊ इत्येतदूर्द्ध्वगमनस्य सादृश्यात्स्वर्गायोचितं ॥१९

एवमस्य बहुफलसाधनत्वमुचितं कोऽस्य विशेषस्तं दर्शयति ।

**सर्व्वे वै कामाः सौभरꣳ सर्व्वेष्वेव कामेषु प्रति-तिष्ठति ॥ २० ॥**

सर्वे कामा हि सर्वकामसाधनं सौभरमित्यर्थः; तत्र त्वामि-ध्यवितारं ववृमहे इति श्रूयते सर्वैः कामैरवितारमिन्द्रं ववृमहे प्रार्थयाम इति तस्यार्थः अतोऽस्य सर्वकामार्थत्वं यो वृष्टि-कामः स्यादयोऽन्नाद्यकाम इत्यादिवाक्यद्वयं विषयीकृत्य पूर्वतन्त्रे द्वितीयस्य द्वितीयान्ते किं सौभरफलात् फलान्तरप्रतिपादकानि

हीषित्यादीनि वाक्यानि उत सौभरफलानामेव व्यवस्थापकानीति विचार्य्य सौभरफलस्यैव व्यवस्थापकानीति सिद्धान्तितं तन्न्यायोऽत्र संगृह्य प्रदर्श्यते, वृष्ट्यन्नस्वर्गकामानां सौभरस्तोत्रमुदितं। निधनान्यपि हीषूर्गू इति वृष्ट्यादिकामिनां। फलान्तरं किं वृष्ट्यादि हीषादीनामुतोदिते। सौभरे फलसंभिन्ने निधनं विनियम्यते फलान्तरं चतुर्थ्योक्तं वृष्टिकामाय हीषिति। सौभरस्य फलं हीषित्युक्त्या वृष्टिर्विवर्द्धते। नोऽस्य वृष्ट्यन्नकामानामन्यत्वं प्रत्यभिज्ञया। नियमेऽपि चतुर्थ्येषा तादर्थ्यादुपपद्यते। यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः सौभरेण स्तुवीत सर्वे वै कामाः सौभरमिति समाम्नायः पुनः समाम्नातं हीषिति वृष्टिकामाय निधनं कुर्य्यादूर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामायेति सौभरं नाम सामविशेषः निधनं नाम पञ्चभिः सप्तभिर्भागैरुपेतस्य साम्नोऽन्त्योभागः तस्मिन्निधने हीषादयो विशेषाः सौभरसामसाध्यस्तोत्रफलेभ्यो वृष्ट्यादिभ्योऽन्यानि वृष्ट्यादिफलान्यानयितुं विधीयन्ते कुतः हीषादिविधिवाक्ये वृष्टिकामायेत्यादिना चतुर्थीश्रवणात् चतुर्थीति तादर्थ्यं ब्रुवन्तीति हीषादीनां वृष्ट्यादिकामपुरुषशेषत्वं गमयति तच्छेषत्वं च पुरुषाभिलषितफलसाधनत्वे सत्युपपद्यते ततः सौभरस्य हीषिति निधनविशेषणस्य च फलभूते द्वे वृष्टी भवतः तदुभयमेलनान्महती वृष्टिस्येति प्राप्ते ब्रूमः सौभरविधौ यो वृष्ट्यादिकामः स एव हीषादिविधौ प्रत्यभिधौ प्रत्यभिज्ञायते ततः सौभरस्य फलभूता ये वृष्ट्यादयस्त एव हीषादिवाक्येष्वनूद्यन्त इति न

फलान्तरं ग्रथोच्यते नूतनफलाभावाद्धीषादीनां वचनानां शाखाध्ययनादेव सौभरप्राप्तत्वादनर्थकोऽयं विधिरिति तन्न फलत्रयकामानां त्रयाणामनियमेन हीषादिमध्ये यस्य कस्यचिन्निधनस्य प्राप्तौ विधिनियमार्थत्वात्तदर्थन्तु फलान्तराभावेऽपीति सौभरवाक्योक्तवृष्ट्यादिफलसाधने सौभरे हीषादीनां नियम्यमानत्वादुपपद्यते तस्मादयं निधनविशेषनियमो न विधिः ॥२०॥

एवं द्वितीयमुक्थमभिधायाथ तृतीयं विदधाति।

अथैतन्नार्म्मेधं ॥ २१ ॥

अथ सौभरानन्तरमेतद्विधीयमानं नार्म्मेधं साम कार्य्यमिति शेषः ॥ २१ ॥

अस्य प्रवृत्तिनिमित्तं प्रदर्शयन् प्रतिष्ठासाधनत्वमाह।

नृमेधमाङ्गिरसꣳ सत्रमासीनꣳ श्वभिरभ्याह्वयन् सोऽग्निमुपाधावत्पाहि नो अग्न एकयेति तं वै श्वानरः पर्य्युदतिष्ठत्ततो वै समप्रत्यतिष्ठत्ततोगातुमविन्दत ॥ २२ ॥

अङ्गिरसः पुत्रं नृमेधानामानं सत्रानुष्ठायिनमितरे सत्रमासीना ऋत्विजः श्वभिर्हन्तुमभ्याह्वयन् सोऽग्निं पाहि नो इत्यृचा प्रगाथेन वा उपाधावत् पूर्व्वमन्त्रपिभिः सत्रं यद्दृष्टेन

मन्त्रेणोपाधावत् प्रार्थयत् तं रक्षितुं मन्त्रदेवताग्निः पर्य्युदतिष्ठत् प्रादुरभूत् सोऽग्निरनेन साम्नेन्द्रमुपाधावेति प्राब्रवीदिति शेषः ततः स नृमेधा एतेन साम्ना प्रत्यतिष्ठत् ततोगातुं सन्तारख्यं श्रेयोमार्गमविन्दत ॥ २२ ॥

तत इदानीन्तनैरपि प्रतिष्ठार्थिभिरेतत्कर्त्तव्यमित्याह ।

**गातुविद्वा एतत्साम विन्दते गातुं प्रतितिष्ठत्येतेन तुष्टुवानः ॥ २३ ॥**

एतत्साम नृमेधसः प्रतिष्ठामार्गसाधनत्वाद्गातुविद्वै मार्गलम्भकं खलु अत एतेन तुष्टुवानोऽपि गातुं मार्गं विन्दते प्रतितिष्ठति च ॥ २३ ॥

अथास्येतरवैलक्षण्येन नानाछन्दस्त्वमाह ।

**विच्छन्दस ऋचो भवन्त्यहोरात्रयो रूपं ॥ २४॥**

तस्मिन्नाम्मेधे विछन्दसोनानाछन्दोयुक्ता ऋचो भवन्ति कार्य्या इत्यर्थसेतद्विछन्दसत्वदहोरात्रयोरूपे अपि विलक्षणे अतस्तद्रूपसादृश्यं ॥ २४ ॥

कुतोऽहोरात्रयोरूपक्लृप्तिस्तत्राह ।

**नैव ह्येतदह्नोरूपं न रात्रेर्य्यदुक्थानां ॥ २५ ॥**

यदुक्थानां रूपमस्ति एतन्नाह्नोऽपि रूपं न रात्रेरपि

कृतस्तृतीयसवनस्याग्निष्टोमेनैव समाप्तेः पर्य्यायाणाञ्च रात्रेरूपत्वादन्तराले स्थितानामुक्थानामन्यतरस्मिन्नप्यननुप्रवेशात् ॥ २५ ॥

उक्तं विच्छन्दस्त्वं दर्शयति ।

## ककुभ्प्रथमाथोष्णिगथ पुरउष्णिगनुष्टुप्तेनानुष्टुभो नयन्त्यच्छावाकसाम्नः ॥ २६ ॥

अधीहीन्द्रगिर्वण इत्येषा ककुम्मध्यमपादस्य द्वादशाक्षरत्वान्मध्यमश्चेत्ककुबिति तल्लक्षणं अतोष्णिक् त्रिपदान्त्यो द्वादशक इति तल्लक्षणं अथ पुरउष्णिगनुष्टुप् प्रायुञ्जन्ति हरी इषिरस्येत्येषा प्रथमपादस्य द्वादशाक्षरत्वात् आद्यश्चेत् पुरउष्णिगिति तल्लक्षणं ननु पुरउष्णिगष्टाविंशत्यक्षरा अनुष्टुप् द्वात्रिंशदक्षरा कथमनयोः सामानाधिकरण्यमिति निदानकारएवैतत्समाधत्ते पुरउष्णिक् तृतीया दाशतय्यान्तां बह्वृचा अधीयन्ते युञ्जन्ति हरी इषिरस्य गाथ यौरोरथउरुयुग इन्द्रवाहावचा युञ्जन्ति तत्र वयं चत्वार्य्यक्षराण्युपाहरामः सुवर्विदेति सा अनुष्टुप् दृष्टत्यपरिष्टात् ज्योतिरिति तेनानुष्टुप् सम्पादनेन अच्छावाकसाम्नः सम्बन्धिन्या अनुष्टुभो न यन्ति नोपगच्छन्ति आनुष्टुभो ह्यच्छावाकं सर्वं गायते प्रातःसवने अच्छावाको एनावो अग्निमव सा इत्यनुष्टुभानुवचनं प्रतिपद्यते उन्नीयमानं सूक्तं चतस्रानुष्टुभं प्रत्यस्मै पिपीषत इति अच्छावाकस्यानुष्टुप् सम्बन्ध एत-

रेयके श्रूयते अयास्य यच्छन्द आसीदनुष्टुप्तोमुदतमभ्युदौहद-च्छावाकीयामभीति ॥ २६ ॥

इति ताण्ड्यमहाब्राह्मणे अष्टमाध्यायस्य

अष्टमः खण्डः ।

---

अथ नवमः खण्डः ।

साकमश्वं सौभरं नार्मेधमिति त्रीण्युक्थानि उद्वंशीय-माष्टादंष्ट्रयोरन्यतरद्वा अच्छावाकसाम करिष्यते हारिवर्णन्तु ब्रह्मसाम्नि सौभरेण विकल्पः अत्र कल्पकारः अथात उक्थानि तस्यैव सत आष्टादंष्ट्राछावाकसाम्न इत्युपक्रम्य साकमश्वं हारि-वर्णमाष्टादंष्ट्रमित्युक्थानीत्युक्तवान् तत्र ब्रह्मसामाह ।

हारिवर्णं भवति ॥ १ ॥

ब्रह्मसामेति शेषः ॥ १ ॥

एतत्प्रशंसति ।

असुरा वा एषु लोकेष्वासंस्तान्देवा हरिश्रिय-मित्यस्माल्लोकात्प्राणुदन्त विराजमोत्यन्तरिक्षाद्दि-वेदिव इत्यमुष्मात् ॥ २ ॥

तं ते मदमित्यौर्णाद्वेऽचे हारिवर्णास्त्र्यचभूते तिसृणामष्ट-

स्तोमन्ते क्रमेण हरिश्रियं विराजसि दिवेदिव इति श्रूयते तैस्त्रिभिरंशैः पूर्वं देवा भूरादिलोकत्रयेषु स्वामित्वेन वर्त्तमानानसुरान् अंशक्रमेणाप्राणुदन्त स्पष्टमन्यत् ॥ २ ॥

अथोक्तार्थवेदनफलमाह ।

**तद्य एवम्वेदैभ्यो लोकेभ्यो भ्रातृव्यं प्रणुद्येमान् लोकानभ्यारोहति ॥ ३ ॥**

एवं स्तोत्रीयैस्त्रिभिः पदैर्लोकत्रयाद्देवकर्तृकमसुरापनोदनञ्जानाति सोऽप्येभ्यो लोकेभ्यो भ्रातृव्यं स्वशत्रुं प्रणुद्यापसार्य्य इमान् चित्यन्तरिक्षद्युलोकानाभिमुख्येनारोहति ॥ ३ ॥

अथ प्रकारान्तरेण प्रशंसति ।

**हरिवर्णो वा एतत्पशुकामः सामापश्यत्तेन सहस्रं पशूनसृजत यदेतत्साम भवति पशूनां पुष्टै ॥ ४ ॥**

निगदव्याख्यानमेतत् अनेन हरिवर्णेन दृष्टत्वाद्धरिवर्णमित्यस्य प्रवृत्तिनिमित्तमित्युक्तं भवति ॥ ४ ॥

पशुभिर्दृष्टैनेतत्प्रशस्य रक्षोपहतिसाधनत्वेनापि प्रशंसति ।

**अङ्गिरसः स्वर्गं लोकं यतो रक्षाꣳस्यन्वसचन्त तान्येतेन हरिवर्णोऽपाहन्न यदेतत्साम भवति रक्षसामपहत्यै ॥ ५ ॥**

पूर्वं स्वर्गं लोकं यतो गच्छतोऽङ्गिरसः रक्षांस्यन्वसचन्त अन्वगच्छन्त तानि पक्षांसि हरिवर्ण एतेन साम्ना अपाहन्त विनाशितवान् अत इदानीन्तनैरप्येतद्रक्षसामपहत्यै भवति ॥५॥

अथोद्वंशीयमक्षावाकसाम्नः सामविधित्सुस्तदुत्पत्तिं दर्शयति।

पृष्ठानि वा असृज्यन्त तेषां यत्तेजो रसोऽत्यरिच्यत तद्देवाः समभरꣳस्तदुद्वꣳशीयमभवत्॥ ६ ॥

पूर्वं प्रजापतिना पृष्ठानि रथन्तरादिरैवतन्तानि सृष्टान्यभवंस्तेषां सृज्यमानानां यत्तेजः सामर्थ्यङ्कोर्थः योरसः सारोंऽशः अत्यरिच्यत अतिरिक्तोऽभूत् तदतिरिक्तं सर्वपृष्ठसम्बन्धितेजः समभरन्नेकीचक्रुः तदेकीभूतन्तेज उद्वꣳशीयन्नामाभवत् ॥६॥

अथास्य सर्वपृष्ठतेजोरूपत्वेन प्रशस्तत्वं तत्पूर्वतनैः स्तोतृभिर्गीतिप्रयोगाविषयत्वेन समर्थयते।

सर्वेषां वा एतत् पृष्ठानां तेजो यदुद्वꣳशीयं तस्माद्वा एतत्पुरा सजाताय नाक्रन् पापवसीयसो विधृत्यै॥ ७॥

उद्वंशीयमिति यदस्ति एतदुक्तरीत्या सर्वेषां पृष्ठानां तेजः खलु तस्मादेव कारणादेतत्साम पुरा सजाताय ज्ञाताय यजमानाय नाक्रन् नाकुर्युः किमर्थं पापपुण्ययोरसाङ्कर्य्याय यस्मा-

दुद्दंशीयं करोति स वसीयान् भवत्येव अतस्तथायं ज्ञातीनां भवेदिति वृद्धेरभिप्रायः ॥ ७ ॥

अथ सजाताप्रयोगनिमित्तं प्राशस्त्यमस्य दर्शयति।

**एषह्येव पृष्ठैस्तुष्टुवानो य उद्वंशीयेन स्तुते ॥८॥**

उद्वंशीयस्तुतैः सर्वैः पृष्ठैः रथन्तरादिभिरपि स्तुतवान् भवतीत्यर्थः अतोऽस्य प्राशस्त्यं ॥ ८ ॥

अस्य सर्वपृष्ठस्तेजोरूपत्वं प्रतिज्ञातं तत् कथमित्याशङ्क्य तेषां रूपाण्यत्र सन्तीत्याह।

**सर्व्वाणि वै रूपाण्युद्वंशीयं ॥ ९ ॥**

यानि रथन्तरादीनां रूपाणि सन्ति सर्वाण्येवोद्वंशीयं तेषां समुदायात्मकमेतदित्यर्थः ॥ ९ ॥

रथन्तररूपं तावद्दर्शयति।

**गायन्ति त्वा गायत्रिण एति रथन्तरस्य रूपमेति हि रथन्तरं ॥ १० ॥**

गायन्ति त्वा गायत्रिणः इत्याकारान्तोऽत्र प्रस्तावभागः एतद्रथन्तरस्य रूपं तथाहि आ इति हि रथन्तरं रथन्तरस्य योनावभि त्वा पुरेत्यत्र आभित्वेति हि गायन्ति अत उभयोराकारसादृश्यात्तद्रूपत्वं ॥ १० ॥

बृहतोरूपमत्र दर्शयति।

## आदिर्बृहत ऊर्द्धमिव हि बृहत्॥ ११॥

आदिः उद्वंशीयस्याद्याचरमुकारः तद्बृहतो रूपं तथा हि यद्बृहत् सामास्ति तदूर्द्धमिव उपरि वर्त्तते असौ वै लोको बृहदिति पूर्वमुक्तत्वात्॥ ११॥

अथ वैरूपस्य रूपं दर्शयति।

## परिष्टोभो वैरूपस्य परिष्टुभं हि वैरूपं॥ १२॥

परिष्टोभः स्तोभानां प्रसारो बहुस्तोभत्वं स्तोत्रं उद्वंशीये दृश्यते स वैरूपस्य वैरूपमपि बहुस्तोभानां प्रसारो बहुस्तोभत्वं स्तोत्रं उद्वंशीये दृश्यते स वैरूपस्य वैरूपमपि बहुस्तोभत्वं अतस्तद्रूपं॥ १२॥

वैराजस्य रूपं दर्शयति।

## अनुतोदो वैराजस्यानुतुन्नं हि वैराजं॥ १३॥

अनुतोदोऽभ्यासः स च उद्वंशीये दृश्यते तथा हि उद्वंशमिव येमिर इत्ययं पादो द्विरभ्यस्तः स च वैराजस्य रूपं वैराजमप्यनुतुन्न भवति तथा हि वैराजं पिबा सोममिन्द्रेत्येतत् उदनुत्वादनुत्वेति अनुतोदयुक्तं भवति॥ १३॥

अथ शाक्वररैवतयोः स्वरूपमत्र दर्शयति।

**अर्द्धेडा शक्करीणामतिस्वारो रैवतीनां ॥ १४ ॥**

उविति याऽर्द्धेडा दृश्यते अध्यर्द्धेडा शक्करीषु विद्यते तथा अत विद्यमानोऽतिस्वारो रैवतीनां रूपं ॥ १४ ॥

अथार्द्धेडातिस्वारौ स्तौति।

**अर्द्धेडया वै देवा असुरानवहत्यातिस्वारेण स्वर्गं लोकमारोहन् ॥ १५ ॥**

पूर्व्वं अर्द्धेडया खलु असुरान् स्वर्गगमनविरोधिनो अवहत्य अतिस्वारेण स्वर्गं लोकमारोहन् अर्द्धेडाया असुरहननहेतुत्वं शास्त्रगम्यमेव अतिस्वारस्य तु ऊर्द्धारोहात्मकत्वात् स्वर्गारोहणहेतुत्वं ॥ १५ ॥

उक्तार्थञ्च प्रशंसति।

**तद्य एवं वेदार्द्धेडयैव भ्रातृव्यमवहत्यातिस्वारेण स्वर्गं लोकमारोहति ॥ १६ ॥**

स्पष्टोऽर्थः ॥ १६ ॥

प्रकारान्तरेण प्रशंसति।

**अर्द्धेडया वै पूर्व्वं यज्ञꣳ सꣳस्थापयन्त्यतिस्वारेणोत्तरमारभन्ते ॥ १७ ॥**

उवित्यस्य अर्द्धेडायाः अतिस्वारात् पूर्व्वभावित्वात् प्रयोक्तारः पूर्व्वहत्तमुक्थसंस्थं यज्ञं संस्थापयन्ति समापयन्ति उत्तरेणातिस्वारप्रयोगेण ऊर्द्ध्वरोहात्मकेन उत्तरमुपरितनं यज्ञं षोडशिनमारभन्ते आरम्भवन्तो भवन्ति ननु उवित्यधीयते अर्द्धेडयेति ब्राह्मणे श्रूयते कथमविरोध इति न विरोधः अध्ययने उप् उपा इति तत्र तत्राधीयन्ते तत्तत्स्थाने ब्राह्मणे क्रमेण अर्द्धेडा इडा अध्यर्द्धेडेति व्यवहारदर्शनात् तथैव प्रयोगकाले उवित्यस्य स्थाने इडिति उपेत्यस्य स्थाने इडेति उपा इत्यस्य स्थाने इट् इडेति प्रयुञ्जते ॥ १७ ॥

उक्तार्थवेदनं प्रशंसति ।

## उपैनमुत्तरोयज्ञो नमति य एवं वेद ॥ १८ ॥

स्पष्टोऽर्थः ॥ १८ ॥

अथैतत्साम पशुसाधनत्वेन प्रशंसति ।

## पाङ्क्तं वा एतत्साम पाङ्क्तो यज्ञः पाङ्क्ताः पशवो यज्ञ एव पशुषु प्रतितिष्ठति ॥ १९ ॥

उद्वंशमिवेत्यस्य चतुर्थपादस्य द्विरभ्यस्तत्वेन पादपञ्चकोपेतत्वादेतत्साम पाङ्क्तं अस्तु पाङ्क्तं किं तत इत्यत आह पाङ्क्तो यज्ञः अग्निहोत्रदर्शपूर्णमासचातुर्म्मास्यपशुसोमभेदेन पञ्चविधत्वाद्यज्ञोऽपि पाङ्क्तः वहिष्पवङ्क्त्याचारपङ्क्त्यादिकामे तैत्तिरेयब्राह्म-

णोदाहरणेन पूर्व्वत्र प्रदर्शितं ततश्च किमिति तत्राह पाङ्क्ताः पशवः पशूनां पाङ्क्तत्वं लोमत्वङ्मांसास्थिमज्जाख्यैः पञ्चावयवै-रुपेतत्वात् एवं सति पाङ्क्तोद्दंशीयसाम पांक्तो यज्ञे पशुषु च प्रतिष्ठितो भवति ॥ १६ ॥

अथ समृद्धिकामयमानस्य आष्टादंष्ट्रयोरन्यतरदच्छावाक-साम कर्त्तव्यमाह ।

आष्टादंष्ट्रे ऋद्धिकामाय कुर्य्यात् ॥ २० ॥

ऋद्धिर्म्मे स्यादिति कामयित्रे अनयोरन्यतरदिच्छया कुर्य्यात् ॥ २० ॥

अथैते प्रशंसति ।

अष्टादंष्ट्रो वैरूपोऽपुत्रोऽप्रजा अजीर्य्यत्स इमान् लोकान्विचिच्छिदिवां अमन्यत स एते जरसि सा-मनी अपश्यत्तयोरप्रयोगादबिभेत् सोऽब्रवीदभवद्योमे सामभ्यां स्तवाता इति ॥ २१ ॥

वैरूपो विरूपस्य पुत्रोऽष्टादंष्ट्रोनाम ऋषिः अपुत्रः कोऽर्थः अप्रजाः प्रजा सन्ततिः तद्रहितः सन् अजीर्य्यत् जीर्णोऽभूत् स इमान् लोकान् सन्तत्यभावेन विछिदिवान् लिटः क्वसोपां विछिन्न-वान् अमन्यत स ऋषिः लोकविच्छेदाय जरसि जरावस्थायां एते सामनी अपश्यत्ताभ्यां प्राजायतेतिशेषः स ऋषिः परमनयोः

साम्नोरप्रयोगाज्जीर्णे इमे ते सामनी अपश्यत् अत अनयोः वर्त्तनाय अन्याननुष्ठातॄन् प्रयोजयितुं च शक्नोमि अतोऽनयोश्चितः परमयोगे भविष्यतीति अबिभेत् भीतवान् एवं भीतः सः सर्वेषामनयोः प्रवृत्त्यर्थं एवमब्रवीत् यः कोऽपि मे साम्भ्यां मत्संवन्धिभ्यां स्तवातै स्तुयात् स ऋद्धवत् ऋध्नुयादिति ऋद्धिफलसंकीर्त्तने सति तदर्थिनः प्रवर्त्तिष्यन्त इत्यभिप्रायः ॥२१॥

अतः समृद्ध्यर्थिभिरेते प्रयोक्तव्ये इत्युपसंहरति।

ऋषेर्वा एतत्प्राशोद्भूतं यदाष्टादंष्ट्रे भवत ऋध्या एव ॥ २२ ॥

ऋषेः अष्टादंष्ट्रस्य प्राशोद्भूतं प्राशया पुत्रादिलक्षणया प्रकर्षेच्छया उद्भूतं एतत्सामद्वयं अतो यद्यदि आष्टादंष्ट्रे भवतः तर्हि ते समृद्ध्या एव भवतः ॥ २२ ॥

इति ताण्ड्यमहाब्राह्मणे अष्टमाध्यायस्य

नवमः खण्डः।

---

अथ दशमः खण्डः।

अथ वृद्धिकामनाप्रसङ्गादस्मिन् खण्डे कामनाभेदेन उक्थानि विधास्यति तत्र प्रथमं ब्रह्मवर्चसकामायाह।

गायत्रीषु ब्रह्मवर्च्चसकामायोक्थानि प्रणयेयु-

गायत्रां ब्रह्मसामानुष्टुभ्यक्षावाकसाम सैषा गायत्री सम्पद्यते ॥ १ ॥

गायत्रीषु ऋक्षु उक्थानि प्रणयेयुः उपाकुर्वेरन् ब्रह्मवर्चसकामाय नित्यार्थो एव एन्द्यास्वेत्याद्यास्तिस्रो गायत्र्यः सौभराश्रयभूताः काम्यार्थी अभिभवेयुः तथा गायत्र्यां गायत्रीछन्दसि गायत्रीष्वित्यर्थः तास्वेवेन्द्रासि वीरस्तूरित्यादिषु सौभरं ब्रह्म साम कार्य्यं तथा अनुष्टुप्छन्दस्कासु इन्द्रं विश्वा अवीवृधन्नित्याद्यासु नाभेधमच्छावाकसाम कार्य्यं सैषानुष्टुप् गायत्री सम्पद्यते तत्सम्पत्तिप्रकार इत्थं द्रष्टव्यः उक्थान्येकविंशस्तोमानि तत्र तिस्रष्विति तिसृभिरनुष्टुब्भिश्चतस्रो गायत्र्यो भवन्त्येकविंशत्यनुष्टुब्भिरष्टाविंशति गायत्र्यः सम्पद्यन्ते शिष्टास्तु स्वतएव गायत्र्यः ॥ १ ॥

अस्त्वेवं किं तत इति तत्राह।

तेजो ब्रह्मवर्च्चसं गायत्री तेज एव ब्रह्मवर्च्चसमवरुन्धे ॥ २ ॥

ब्रह्मवर्च्चसं नाम तेजोविशेषः गायत्र्यास्त्वाग्नेयत्वात् गायत्र्येव ब्रह्मवर्च्चसं तेजः अथवा गायत्रीजपाद्ब्रह्मवर्च्चसाभिवृद्धिः श्रुतिस्मृतिपुराणादिषु प्रसिद्धा अतस्तत्प्रयोक्ता ब्रह्मवर्च्चसलक्षणं तेजोऽवरुन्धे ॥ २ ॥

अथ पशुकामस्याह ।

**गायत्रीषु पशुकामायोक्थानि प्रणयेयुरुष्णिहि ब्रह्मसामानुष्टुभ्यच्छावाकसाम सैषोष्णिक्सम्पद्यते ॥३॥**

गायत्रीषु नित्यास्वेवोक्थानि प्रणयेयुरुष्णिहि उष्णिक्-च्छन्दस्कास्वृक्षु तं ते मदं गृणीमसीत्यादिषु सौभरं ब्रह्मसाम कर्त्तव्यं अनुष्टुभ्यच्छावाकसाम पूर्ववदेव सैषा गायत्र्यनुष्टुप् सम्पत्ता उष्णिग्भवति सप्तगायत्र्याः षडुष्णिहो भवन्त्येव एकविंशतिस्तोम-त्वादेकविंशतिगायत्रीभिराद्योक्थगाभिरष्टादशोष्णिहः सम्प-द्यन्ते अच्छावाकसाम्नि तु सप्त सप्तानुष्टुभोऽष्टावष्टावुष्णिहो भवन्तीति एकविंशत्यनुष्टुब्भिस्तु विंशतिरुष्णिहः सम्पद्यन्त इत्युष्णिक्सम्पत्तिः ॥ ३ ॥

उष्णिक्सम्पत्तेः प्रयोजनमाह ।

**पशवो वा उष्णिक् पशूनेवावरुन्धे ॥ ४ ॥**

भूयिष्ठपश्वङ्गागाहि पशवो भवन्ति उष्णिगपि पश्चाङ्गाग-स्यान्त्यपादद्वादशाक्षरोपेतत्वात्ताद्दशी अत उष्णिक् पशव इत्यु-च्यते स्पष्टमन्यत् ॥ ४ ॥

अथ पुरुषकामायाह ।

**गायत्रीषु पुरुषकामायोक्थानि प्रणयेयुः ककुभि ब्रह्मसामानुष्टुभ्यच्छावाकसाम सैषा ककुप् सम्पद्यते ॥ ५ ॥**

नित्यास्वेव गायत्रीषु च्छन्दःप्रणयनं ककुप्सु नित्यास्वेव वयमुत्वामपूर्व्येत्यादिषु ब्रह्मसामसौभरं अनुष्टुभ्यच्छावाकसाम पूर्ववदेव सैषा उष्णिगेव मध्यपादद्वादशाक्षरा चेत्ककुबुच्यते अत उष्णिक् ककुभो स्तोत्रीयागताक्षरसंख्यावैषम्याभावादुष्णिक्सम्पत्तिरेव ककुप्सम्पत्तिः ॥ ५ ॥

तत्फलमाह ।

**पुरुषो वै ककुप् पुरुषानेवावरुन्धे ॥ ६ ॥**

पुरुषस्य मध्यभागस्थौल्यात् ककुभश्चोक्तप्रकारेण मध्यभागाधिक्यात्तत्साम्येन पुरुषः ककुबुच्यते अतस्तत्प्रयोगेण पुरुषानेवावरुन्धे ॥ ६ ॥

अथान्नाद्यकामायाह ।

**विराट्स्वन्नाद्यकामायोक्थानि प्रणयेयुरुष्णिहि ब्रह्मसामानुष्टुभ्यच्छावाकसाम सैषा विराट् सम्पद्यते ॥ ७ ॥**

विराट्स्वापः पुनन्तुर्म्मिणीमदीदेदित्यादिषु त्रिपात्सु साकमश्वेनोक्थानि प्रणयेयुरुपक्रमेरन् उष्णिहि उष्णिक्छन्दस्कासु तं ते मदमित्यादिषु सौभरं ब्रह्मसाम कुर्युः अनुष्टुभि नार्म्मेधमच्छावाकसाम पूर्ववदेव सैषा उष्णिगनुष्टुप् विराट् सम्पद्यते उक्थान्येकविंशस्तोमानीत्युक्तं अत एकविंशत्वेण-

इत्यावत्य एवानुष्टुभस्त्रिपदाया विराजस्त्रिंशदक्षरत्वात् द्वयेनो-नावुष्णिहः अक्षरद्वयाधिकात्स्वराडनुष्टुभस्य प्रत्येकं द्वे द्वे उष्णि-गनुष्टुभौ मिलित्वा द्वे द्वे विराजौ भवत इत्येवं विराट्त्वस-म्पत्तिः ॥ ७ ॥

अस्त्वेवं किन्तत इत्याह।

**अन्नं विराडन्नाद्यमेवावरुन्धे ॥ ८ ॥**

अन्नस्य दशेन्द्रियतृप्तिहेतुत्वादन्नं विराडित्युच्यते विराट्सु अपि दशसंख्यासद्भावात्तथा च मन्त्रवर्णः सन्दामाहे दशत-यस्य धासेर्द्विर्यत्पञ्च विभ्रतो यत्पञ्चेति यद्वा लोके अन्नसमृद्ध एव विराजतीत्यन्नं विराडित्युच्यते स्पष्टमन्यत् ॥ ८ ॥

अथ ज्यैष्ठ्यकामायोक्थान्याह।

**अक्षरपङ्क्तिषु ज्यैष्ठ्यकामायोक्थानि प्रणयेयु-रुष्णिहि ब्रह्मसामानुष्टुभ्यच्छावाकसाम सैषानुष्टुप् सम्पद्यते ॥ ९ ॥**

अक्षरपङ्क्तिषु पञ्चाक्षरात्मकपञ्चपादोपेतास्वग्ने तमद्येत्यादिषु ज्यैष्ठ्यकामाय साकमश्वेनोक्थानि प्रणयेयुरुष्णिह्यनुष्टप्सु च सौभरनामैधौ ब्रह्माच्छावाकसामनी पूर्ववत् कर्त्तव्ये अक्षरपङ्क्तिषु उष्णिक्सम्पत्त्या अनुष्टुभौ कर्त्तव्ये अत्राक्षरपङ्क्तीनामुष्णिक्त्वा-श्चानुष्टुप्त्वसम्पादनमित्थं ज्ञातव्यं अक्षरपङ्क्तिषु अग्ने तमद्येत्या-

दिषु आद्यन्त्ये अग्ने तमद्येभिर्न अर्कैः इत्येते प्रत्येकं पञ्चविंशत्यक्षरे मध्यमा अध्याह्यग्न इत्येषा प्रथमे पादे त्र्यक्षरस्य विभज्य परिगणनायां षड्विंशदक्षरा भवति तथा सति कृत्स्नस्य स्तोमस्य एकविंशत्वात् स्तोत्रीयास्तिस्रोऽपि प्रत्येकं सप्त सप्त भवन्ति तत्राद्यन्तयोः स्तोत्रीययोः सप्तवारावृत्तयोस्तु मिलित्वा पञ्चविंशत्यक्षरात्मकं चतुर्दशपदपङ्क्त्यो भवन्ति तत्राद्यन्तयोः स्तोत्रीययोः तासामक्षराणि परिगणितानि पञ्चविंशदधिकत्रिशतानि भवन्ति तानि च द्वात्रिंशदक्षरेण विभक्तानि दशानुष्टुभो भवन्ति त्रिंशदक्षराणि शिष्यन्ते तथा मध्यमायाः षड्विंशत्यक्षराया अधाग्ना इत्यस्याः सप्त मध्यावृत्तायाः द्व्यशीत्यधिकशताक्षराणि स्युः तेषामपि द्वात्रिंशदक्षरविभागे सति पञ्चानुष्टुभः स्युः द्वाविंशदक्षराणि शिष्यन्ते तानि पूर्वशिष्टैस्त्रिंशदक्षरैः सह एकानुष्टुप् कृत्वा विंशति शिष्यन्ते तथा सौभरस्य ब्रह्मसाम्न उक्थस्यैकविंशस्तोमत्वादेकविंशत्युष्णिहो भवन्ति तासु मध्ये षोडशोष्णिहश्चतुर्दशानुष्टुभः स्युः शिष्टासु पञ्चसु उष्णिक्चत्वारिंशदधिकशताक्षराणि चतस्रोऽनुष्टुभो भूत्वा द्वादश शिष्यन्ते तान्यक्षरपंक्त्यवशिष्टैः विंशत्यक्षरैः सहैकानुष्टुप् सम्पद्यत इत्येवं पंक्त्युष्णिहोरनुष्टुप्त्वसम्पत्तिः ॥ ९ ॥

अनुष्टुप्सम्पत्तेः फलमाह ।

ज्यैष्ठ्यं वा अनुष्टुब् ज्यैष्ठ्यमेवावरुन्धे ॥ १० ॥

ज्यैष्ठस्य प्रजापतेश्छन्दस्त्वादनुष्टुभो ज्यैष्ठ्यत्वं यद्वा साहिङ्काराया गायत्र्यास्त्रिष्टुप्जगत्योः स्वस्वपादाक्षरसंख्याद्वारेणानुष्टुभ्यन्तःप्रवेशादनुष्टुभो ज्यैष्ठ्यत्वं अयमर्थोऽष्टाक्षरा गायत्री हिङ्कारो नवम इत्युपक्रम्य छन्दोभिरेवानुष्टुभमाप्नोतीत्येवमेवोक्तः।

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥ १०॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरवुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे अष्टमाध्यायस्य दशमः खण्डः।

अष्टमाध्यायः समाप्तिमगमत्।

---

# नवमोऽध्यायः ।

अथ प्रथमः खण्डः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥
ब्राह्मणाख्यंसिनः काम्यसामाद्युक्थान्तमष्टमे ।
वर्णितं नवमे ह्यस्मिन्नतिरात्रादिरुच्यते ॥

तत्र प्रथमखण्डे ससन्धिसामानस्त्रयोरात्रिपर्य्यायाः संग्रहेण प्रदर्श्यन्ते द्वितीये त एव विव्रियन्ते तत्रादौ रात्रिपर्य्यायान् विधित्सुराह ।

**देवा वा उक्थान्यभिजित्य रात्रिन्नाशक्नुवन्नभिजेतुन्तेऽसुरान्रात्रिन्तमःप्रविष्टान्नानुव्यपश्यꣳस्त एतमनष्टुप्शिरसं प्रगाथमपश्यन् विराजं ज्योतिस्तान् विराजा ज्योतिषानुपश्यन्तोऽनुष्टुभा वज्रेण रात्रेर्निराघ्नन् ॥ १ ॥**

देवाः पूर्वमसुरेभ्यः सकाशादुक्थान्यभिजित्य रात्र रात्रिपर्य्यायानभिजेतुन्नाशक्नुवन् ते देवाः तमः तमोरूपां रात्रिं प्रवि-

ष्टानसुरान्नानुव्यपश्यन् अनुगम्य विविच्य द्रष्टुन्नाशक्नुवन् ते देवाः असुरदर्शनोपायत्वेनानुष्टुप्शिरस्कमनुष्टुबुपक्रमगायत्रीद्वयात्मकं पान्तमा इति प्रगाथमपश्यन्नतु वार्हताः प्रगाथा इति प्रसिद्धं कथं गायत्र्याः प्रगाथत्वमिति नैवन्नियमः अत ह्युत्तरभूते गायत्र्यौ पुतद्दतमित्यादिके अनुष्टुपप्रकारं सूयेते अथ प्रग्रथनसम्भवादयमपि गायत्रतृचः अनुष्टुप्सम्पत्तेः प्रगाथ इत्युच्यते तथा च निदानं अनुष्टुभा अपि प्रगाथा भवन्तीत्येके अनुष्टुप् प्रथमा गायत्र्या उत्तरे यथा पुरोजिती वो अन्धस आत्वा रथं यथोतये त्रिशोवो अतिथिं पान्तमावो अन्धस इतीति तथा अयं प्रगाथ एव विराडाख्यं ज्योतिः अतः प्रगाथदर्शनमेव विराड्रूपज्योतिर्दर्शनं यद्यप्यसौ न विराट्छन्दस्कः तथापि पुरोजितीवो अन्धस इत्यत पद्या चाचर्य्याच विराजौ भवत इति पूर्वं प्रतिपादितत्वात् तद्वत् एकस्या अनुष्टुभो द्वयोरेव गायत्र्योः पादानां परिगणने दशसंख्यासद्भावात् यथा विराडित्युच्यते अतएव तमःप्रविष्टानामसुराणां विराजनसाधनत्वात् ज्योतिष्ट्वनुपचर्य्य विराजं ज्योतिरपश्यदित्युक्तं तानसुरान् विराजा ज्योतिषा अनुक्रमेण दृष्टा अनुष्टुभा वज्रेण रात्रेः सकाशान्निराघ्नन् निरगमयन्नाघ्नि वाग्वज्र इति श्रुत्यन्तराद्वाचो वज्ररूपत्वं वागनुष्टुविति श्रुतेश्चानुष्टुभो वाग्रूपत्वमित्यनुष्टुभो वज्रत्वव्यपदेशः ॥ १ ॥

अत इदानीन्तनैरपि अयं प्रगाथःकर्त्तव्य इति विदधाति।

**यदेषोऽनुष्टुप्शिराः प्रगाथो भवति विराजैव ज्योतिषानुपश्यन्ननुष्टुभा वज्रेण रात्रेर्भातृव्यन्निर्हन्ति ॥ २ ॥**

व्याख्यातप्रायमेतत् ॥ २ ॥

रात्रेर्निरघ्नन्निति सामान्येनोक्तं विवृण्वन् पर्य्यायशब्दं निर्वक्ति ।

**तान् समन्तं पर्य्यायं प्राणुदन्त यत् पर्य्यायं प्राणुदन्त तत्पर्य्यायाणां पर्य्यायत्वं ॥ ३ ॥**

यद्यस्मात् समन्तं रात्रेः सर्व्वतः पर्य्यायं यत्रयत्रासुराः परा-भूतास्तिष्ठन्ति तत्तं देशं परीत्य परीत्य प्राणुदन्त प्रणोदन-मकुर्व्वन् तत्पर्य्यायाणां पर्य्यायत्वं सम्पन्नं ॥ ३ ॥

प्रगाथमपश्यन्नित्युक्तं तस्य प्रथमपर्य्यायगतस्य प्रग्रथनप्रकार-माह ।

**प्रथमानि पदानि पुनरादीनि भवन्ति प्रथमस्य पर्य्यायस्य ॥ ४ ॥**

प्रथमपर्य्यायस्य प्रथमानि पदानि गायत्र्योरुत्तरयोः ऋचोः प्रथमपादगतानि पदानि पुरादीनि पुनरादीयन्तेऽभ्यस्यन्त इति पुनरादीनि तादृशानि भवन्ति पुत्रहतं पुरुष्टुतमिति द्विरा-वर्त्तयेदित्यर्थः ॥ ४ ॥

उक्तनियमविधिसिद्ध्यर्थं देवैः पूर्वमनुष्ठितमिति दर्शयति।

**प्रथमैर्हि पदैः पुनरादाय प्रथमरात्रात्प्राणुदन्त॥५॥**

यतो देवाः पूर्व्वमसुराः प्राणोदनं प्रगाथगतं प्रथमपदानि पुनरादाय प्रथमरात्रादकुर्व्वन् अतः इदानीन्तनैरप्येवं कर्त्तव्यं॥५॥

अथास्य प्रस्तावभागमाह।

**पान्तमावो अन्धस इति प्रस्तौति॥६॥**

स्पष्टं॥६॥

एतत्प्रशंसति।

**अहर्वै पान्तमन्धोरात्रिरह्नैव तद्रात्रिमारभन्ते॥७॥**

अतस्तु सामान्येन स्तुतिः क्रियते पाति रक्षत्यालोकेनेति पान्तमहः अन्धीकरणादन्धोरात्रिः एवं सति पान्तमिति क्रमेण युञ्जन्ति तत्तेनाह्नैव रात्रिमारभन्त उपक्रमन्ते॥७॥

प्रगाथं विधाय तत्र साम विधत्ते।

**तासु वैतहव्यं॥८॥**

कर्त्तव्यमिति शेषः॥८॥

अथैतस्य प्रवृत्तिनिमित्तं दर्शयन्नवगतिप्रतिष्ठयोर्हेतुत्वेन प्रशंसति।

वीतहव्यः श्रायसो ज्योग्निरुद्ध एतत्सामापश्य-त्सोऽवगच्छत्प्रत्यतिष्ठदवगच्छति प्रतितिष्ठत्येतेन तुष्टुवानः ॥ ९ ॥

श्रायसः श्रेयसः पुत्रो वीतहव्यो नाम ऋषिः देविका-शिंशपादित्वाद्धार्षसत्वश्रेयसाभादिति श्रेयःशब्दस्यादेराकारः ज्योक् चिरकालं निरुद्धः शत्रुभिर्निरोधं प्रापितः तन्निर्गमनायैत-त्साम दृष्टवान् सचानेनावगच्छत् अवगतोऽभूत् अन्यत् स्पष्टं ॥ ९॥

अस्य साम्नो यदोको इति निधनं तत् प्रशंसति ।

तमइव वा एते प्रविशन्ति ये रात्रिमुपयन्ति य-दोको निधनꣳ रात्रेर्मुखे भवति प्रज्ञात्यै ॥ १० ॥

ये रात्रिं रात्रिपर्यायान् उपयन्ति प्रजुञ्जत उद्गातारः एते तम इव प्रविशन्ति खलु रात्रौ तमःसद्भावात् अतो रात्रेः प्रथमे पर्य्याये ओकोनिधनप्रयोगः प्रज्ञात्यै अनुष्ठेयपदार्थज्ञानाय भवति ॥ १० ॥

कथमस्य प्रज्ञातिहेतुत्वमित्याशङ्क्य तल्लोकप्रसिद्धिबलेन समर्थयति ।

यदा वै पुरुषः स्वमोक आगच्छति सर्वन्तर्हि प्रजानाति सर्वमस्मै दिवा भवति ॥ ११ ॥

यदा कश्चित् पुरुषः दूरमध्वानं गत्वा स्वमोकः स्वकीयं सद्म पुनरागच्छति प्राप्नोति स्वचित्तं सर्व्वं धनादिकं तर्हि तदा प्रजानाति तदेवोच्यते घस्मै सर्व्वं दिवा भवति प्रकाशितं भवतीत्यर्थः ॥ ११ ॥

एवं संग्रहेण प्रथमपर्य्यायं विधायाथ मध्यमं पर्य्यायं विधातुमाह ।

**ते मध्यमं पर्यायमश्रयन्त तेषामौर्द्धसद्मनेन वाचमवृञ्जत ॥ १२ ॥**

ते प्रथमेन पर्य्यायेण पूर्वरात्रात् प्रनुन्ना असुरा मध्यमं पर्य्यायमश्रयन्त आश्रयन् तेषां वाचमौर्द्धसद्मनेन साम्ना अवृञ्जत अवर्ज्जयत् ॥ १२ ॥

उक्तार्थस्य फलमाह ।

**वाचं भ्रातृव्यस्य वृङ्क्ते य एवं वेद ॥ १३ ॥**

स्पष्टोऽर्थः ॥ १३ ॥

अत्र त्रिणिधनं विधत्ते ।

**त्रिणिधनं भवति ॥ १४ ॥**

सुवृक्तिभिर्नृमादनं भरेषु वा १ इति निधनत्रयं ॥ १४ ॥

उक्तन्निधनत्रयं माध्यन्दिनसवनसाम्येन प्रशंसति ।

यथा वा अह्नो माध्यन्दिनं सवनं त्रिणिधनायतनमेवमेष रात्रेर्म्मध्यमः पर्य्यायस्त्रिणिधनायतनः सलोमत्वाय ॥ १५ ॥

अह्न एकाहसाध्यस्य ज्योतिष्टोमस्य माध्यन्दिनं सवनं यथा त्रिणिधनायतनं निधनत्रयसद्भावेनायतनत्रयोपेतं माध्यन्दिनसवने यौधाजये पुनान इत्यत्र सासीत्येकं हासीति द्वितीयं स्वाया इति तृतीयं इति हि निधनत्रयं तत्र प्रदर्शितं एवमेष रात्रेर्मध्यमः पर्य्यायस्त्रिणिधनायतनः तत्र प्रथमं त्रिणिधनत्वं सलोमत्वायानुलोम्याय ॥ १५ ॥

अथ साम्नां स्तोत्रीयास्तु अयं त इत्यादिषूक्तयोरनुष्टुप्त्वाय मध्यमपादावृत्तिपूर्वं देवैस्तथा कृतत्वात् कर्त्तव्येति विधित्सुराह ।

मध्यमानि पदानि पुनरादीनि भवन्ति मध्यमस्य पर्य्यायस्य मध्यमैर्हि पदैः पुनरादायम्मध्यमरात्रात्प्राणुदन्त ॥ १६ ॥

इदं वाक्यद्वयं प्रथमपर्य्यायवाक्यद्वयेनैवोक्तप्रायं ॥ १६ ॥

अथोत्तमं पर्य्यायमाह ।

त उत्तमं पर्य्यायमस्रयन्त तेषां हृतस्रुगन्निधनेन पशूनहरन्त पशवो वै हृतस्रुतः ॥ १७ ॥

घृतं पयः चरन्तीति पशव एव घृतच्युतः अतएतन्निधनेनासुराणां पशुवर्जनं युक्तं ॥ १७ ॥

उक्तार्थवेदितुः प्रशंसा ।

## पशून् भ्रातृव्यस्य वृङ्क्ते य एवं वेद ॥ १८ ॥

इदं ह्यन्विलत माधुच्छन्दसं सामोत्तरस्मिन्विधास्यते ॥१८॥

ततः स्तोत्रीयास्तूत्तरयोरनुमायान्त्यपादावृत्तिं देवैः क्षतत्वात्कर्त्तव्यत्वेन विधत्ते ।

## उत्तमानि पदानि पुनरादीनि भवन्त्युत्तमस्य पर्य्यायस्योत्तमैर्हि पदैः पुनरादायमुत्तमरात्रात्प्राणुदन्त ॥ १९ ॥

स्पष्टं, अत्र त्रिष्वपि रात्रिपर्य्यायेषु होतुः सामान्येवोक्तानि मैत्रावरुणादीनि सामानि उत्तरस्मिन् खण्डे निर्द्देशक्रमादेवावगन्तव्यानि ॥ १९ ॥

एवं पर्य्यायत्रयमुक्त्वा सन्धिस्तोत्रस्य विधिमुन्नयति ।

## तान् सन्धिनाभिपलायन्त ॥ २० ॥

तान् त्रिभ्यो रात्रिभागेभ्योऽपगत्याहोरात्रयोर्य्यः सन्धिरस्ति तमाश्रितान् सन्धिना सन्धिस्तोत्रेणाभिपलायन्त अन्तर्णीतणय-

र्थोऽयं अभि अनुसृत्य पलायनमकारयन्त अतो यज्ञविघातिनां सन्धेरपगमाय सन्धिसामेदानीन्तनैरपि कर्त्तव्यमिति विधिर्द्रष्टव्यः ॥ २० ॥

अथासुराणामसंघातायाश्विनमाह ।

## तानाश्विनेनासꣳहाय्यमगमयन् ॥ २१ ॥

तान् सर्वतः पलायितानसुरानाश्विनेन शस्त्रेणासंहाय्यं संहर्त्तुमयोग्यमगमयन् यथा मिथो न संगच्छेयुस्तथा कुर्व्वन्नित्यर्थः ॥ २१ ॥

उक्तार्थवेदितुः फलमाह ।

## असꣳहाय्यं भ्रातृव्यं गमयति य एवं वेद ॥२२॥

स्पष्टोऽर्थः ॥ २२ ॥

अथ रात्रिपर्य्यायमग्निष्टोमसामसम्पादनेन प्रशंसति ।

## एषा वा अग्निष्टोमस्य सम्मा यद्रात्रिः ॥२३॥

संमा समिति साम्यमिति साम्यमित्यर्थः ॥ २३ ॥

साम्यं दर्शयति ।

## द्वादशस्तोत्राण्यग्निष्टोमो द्वादशस्तोत्राणि रात्रिः ॥ २४ ॥

अष्टौ आज्यानि चत्वारि पृष्ठस्तोत्राणि मिलित्वाऽष्टौ त्रीण्येकादशस्तोत्राण्येकं यज्ञायज्ञीयमिति मिलित्वा द्वादशाग्निष्टोमस्य स्तोत्राणि रात्रिपर्य्यायेष्वपि सन्धिव्यतिरेकेण पर्य्यायं होत्रादीनि चत्वारि चत्वारि स्तोत्राणीत्येवं साम्यं ॥ २४ ॥

अत्राप्युक्तसाम्येन सन्धिं प्रशंसति ।

**एषा वा उक्थस्य सम्मा यद्रात्रिः ॥ २५ ॥**

अत्र रात्रिशब्देन तदनन्तरभावि सन्धिस्तोत्रं लक्ष्यते ॥२५॥

अनयोः साम्यं दर्शयति ।

**त्रीण्युक्थानि त्रिदेवत्यः सन्धिः ॥ २६ ॥**

उक्थस्तोत्राण्यपि त्रीणि सन्धिस्तोत्राण्यपि अग्निरुषा अश्विनाविति त्रिदेवत्यं एवमुभयत्र त्रित्वात्साम्यं ॥ २६ ॥

समत्वसम्पादनेन उक्तस्याग्निष्टोमसमनन्तरभावि नवरात्रिसमनन्तरभावि सन्धिसाम प्रशंसति ।

**यथा वा अह्न उक्थान्येवमेषरात्रेः सन्धिर्नानारूपाण्यह्न उक्थानि नानारूपा एते तृचा भवन्ति ॥ २७ ॥**

अह्नो ज्योतिष्टोमसमनन्तरभवान्युक्थानि यथा यादृशानि

एवं रात्रेः सन्धिरपि उक्थानां छन्दोभेदान्नानारूपत्वं सन्धेस्तु नानाभेदात् देवता नाना रूपा इत्युक्तं ॥ २७ ॥

अथ कामनाभेदेन सन्धिस्तोत्रं विवक्षुरादौ प्रतिष्ठाकामायाह ।

**रथन्तरं प्रतिष्ठाकामाय सन्धिं कुर्य्यात् ॥ २८ ॥**

एनावो अग्न प्रत्यदर्शि इमा उवामिति प्रगाथेषु कर्त्तव्यं नित्यमेव रथन्तरे अभिसन्धिभेदात्प्रतिष्ठासाधनत्वमपि ॥ २८ ॥

एतत्प्रशंसति ।

**इयं वै रथन्तरमस्यामेव प्रतितिष्ठति ॥ २९ ॥**

स्पष्टं ॥ २९ ॥

अथ बृहत्स्वर्गायाह ।

**बृहत् स्वर्गकामाय सन्धिं कुर्यात् ॥ ३० ॥**

स्पष्टं ॥ ३० ॥

बृहत्स्वर्गयोः साम्यमाह ।

**स्वर्गोलोको बृहत्स्वर्ग एव लोके प्रतितिष्ठति ॥ ३१ ॥**

द्यावापृथिव्योः स्वर्गो द्वितीयः रथन्तरबृहतोर्म्मध्ये बृहत्द्वितीयमिति तस्य तत्स्थानीयत्वं ॥ ३१ ॥

पशुकामाय वैकल्पिकसन्धिसामानि दर्शयति ।

**वारवन्तीयं वा वामदेव्यं वा श्रुद्ध्यं वैतेषामेकं पशुकामाय सन्धिं कुर्य्यात् ॥ ३२ ॥**

विकल्पवाचिना वाशब्देनैव विकल्पे सिद्धेऽपि पुनरेतेषामेकमिति वचनं विस्पष्टार्थं ॥ ३२ ॥

एतानि प्रशंसति ।

**पशवो वा एतानि सामानि पशुष्वेव प्रतितिष्ठति ॥ ३३ ॥**

एतेषां प्रयोगे पशवो लभ्यन्त इत्येतानेव पशव उच्यन्ते । अत्रार्षेयकल्पः प्रतिष्ठाकामाय यत् क्लृप्तं रथन्तरसन्धिसामवत् स्वर्गकामस्य बृहत्सन्धिसाम तेष्वेव प्रगाथेषु वारवन्तीयं वा वामदेव्यं वा श्रुद्ध्यं वैतेषामेकं पशुकामस्य सन्धिं कुर्य्यादेतेष्वेव प्रगाथेष्विति ॥ ३३ ॥

अथोक्तस्य सन्धिसाम्नोऽनुवचनरूपं होतुर्विधत्ते ।

**आश्विनं होतानुशंसति ॥ ३४ ॥**

आश्विनाख्यं सन्धिस्तुतं सन्धिस्तोत्रमनु होता शंसेत् यद्यप्यस्य विधानं बह्वृचब्राह्मण एवोचितं तथापि अस्य वक्ष्यमाणरूपप्रशंसया पवमानदेवत्यत्वेन स्तोत्रस्य प्रशंसा भवतीति तदर्थ-

मत्रापि विधानं उत्तरत्र सर्वाः खलु देवताः प्रस्यन्त इति वक्ष्यति अतो अस्य वैश्वदेवत्वं युक्तं ॥ २४ ॥

कथमाश्विनमुच्यत इति तद्विवुराह ।

प्रजापतिर्वा एतत्सहस्रमसृजत तद्देवेभ्यः प्रायच्छत्तस्मिन्न समराधयꣳस्ते सूर्यं काष्ठाङ्कृत्वाजिमधावन् ॥ २५ ॥

पूर्वं प्रजापतिरेतत्सहस्रं सहस्रसंवत्सरमसृजत तत्सृष्टं देवेभ्यः प्रायच्छदिदं स्वीकुरुतेति तस्मिन् प्रत्ते न समराधयन् विभागं कृत्वा संसिद्धा अभवन् ते क उपाय इति सञ्चिन्त्य सूर्यं काष्ठां अवधिं कृत्वा आजिं अधावन्नगच्छन् ॥ २५ ॥

इदानीमाश्विनसम्बन्धं दर्शयति ।

तेषामश्विनौ प्रथमावधावतान्तावन्ववदन् सहनोऽस्त्विति तावब्रूताङ्किन्नो ततः स्यादिति यत्कामयेथे इत्यब्रुवꣳस्तावब्रूतामस्मद्देवत्यमिदमुक्थमुच्याता इति तस्मादाश्विनमुच्यते ॥ २६ ॥

तेषां देवानाम्मध्ये अश्विनौ प्रथमौ सन्तावधावतामाजिं तौ प्रथमगामिनावनुगत्य देवा अवदन् किमिति तच्छस्त्रन्नोऽस्माकमपि सहास्त्विति एवं देवैरुक्तौ भागप्रदानेनास्माकं किं

फलमिति देवानुक्तवन्तौ किमपेक्षितमिति तैः प्रत्युक्तौ इदमुक्थमस्मद्देवत्यमिति सर्वैरुच्यातामिति देवानयाचतां यस्माद्देवं तस्मादिदं शस्त्रमाश्विनमुच्यते ॥ ३६ ॥

सहनोऽस्त्वित्युक्तं शस्त्रसम्बन्धं दर्शयति।

**सर्वाः खलु देवताः शस्यन्ते ॥ ३७ ॥**

यस्माद्देवैः प्रार्थितं तस्मादाश्विनशस्त्रे सर्वा देवताः शस्यन्ते तथा हि अग्निरुषा अश्विनौ सूर्य्यं इन्द्रो मित्रावरुणौ द्यावापृथिव्यौ निर्ऋतिः बृहस्पतिरित्येतेऽत्र शस्यन्ते ॥ ३७ ॥

अथास्य शंसने किञ्चिन्नियमद्वयमाह।

**क्षिप्रꣳ शस्यमाजिमिव ह्येते धावन्त्यासूर्यस्योदेतोः शꣳसेत्सूर्य्यꣳ हि काष्ठामकुर्वत ॥ ३८ ॥**

लोके आजिं धावन्तः क्षिप्रमेव धावन्ति एते ऋत्विजः आजिं धावन्तीव यज्ञं समापयन्ति अतः एतत्तैः क्षिप्रमविलम्बेन शंसनीयं तच्च शंसनमासूर्य्यस्योदेतोः सूर्य्योदयकालपर्य्यन्तं कर्त्तव्यं शिष्टं स्पष्टं ॥ ३८ ॥

इति ताण्ड्यमहाब्राह्मणे नवमाध्यायस्य

प्रथमः खण्डः।

---

अथ द्वितीयः खण्डः ।

उक्ताः संग्रहेण रात्रिपर्य्यायाः पूर्वस्मिन् खण्डे अत्र तानेव सप्रपञ्चमाह, यद्यनुष्टुप्शिरसं प्रगाथमपश्यत्तासु वैतहव्यमित्यादिना स्तोतीयसाम्नी अपि विहिते तथापि मैत्रावरुणादीनां पर्य्यायसम्बन्धीनि सामानि विहितानि अतस्तदर्थं पुनर्विहितमपि होतृसामानूद्य प्रशंसति ।

## प्रान्तमावो अन्धस इति वैतहव्यमन्यच्चेत्रं वा एते प्रयन्ति ये रात्रिमुपयन्ति यदोकोनिधनꣳ रात्रेर्मुखे भवत्योकसो प्रच्यावाय ॥ १ ॥

वीतहव्येन निरोधपरिहारार्थं दृष्टत्वादस्य वैतहव्यत्वं पूर्व्वमुक्तं य ऋत्विजो रात्रिं रात्रिपर्य्यायानुपयन्ति एते अन्यचेत्रमुपगताः खलु प्रयोक्तॄणामग्निष्टोमे दिवैव प्रयुज्यमानत्वात् प्रकृतित्वाच्च चेत्रं अतिरात्रस्तु तद्विलक्षणत्वादन्यच्चेत्रमेव यद्वा देवैः उक्थवद्रात्रावसुरेभ्योजितत्वादन्यच्चेत्रत्वं तत्र स्वचेत्रवत् आश्रयाभावात् अतो रात्रेर्मुखे पर्य्याये यद्वोक इत्येतन्निधनं भवति ओक इति निवासनाम तस्याप्रच्युत्यै भवति ॥ १ ॥

अथ मैत्रावरुणसाम विधत्ते ।

## प्रव इन्द्राय मादनमिति गौरीवितं ॥ २ ॥

प्र व इति स्तोत्रीयात्रयस्य प्रतीकोपादानं एवमुत्तरत्र प्रतीकं द्रष्टव्यं ॥ २ ॥

एतत्प्रशंसति ।

**ब्रह्म यद्देवा व्यकुर्व्वत ततो यदत्यरिच्यत तद्गौरीवितमभवत् ॥ ३ ॥**

पूर्वं देवाः यद्ब्रह्मसाम व्यकुर्व्वत व्यभजन् अतो विभागात् परः योऽंशोऽत्यरिच्यत तद्गौरीवितमभवत् ॥ ३ ॥

एवमतिरिक्ततां सम्पाद्य रात्रिपर्य्याये योग्यतामाह ।

**अतिरिक्तं गौरीवितमतिरिक्तमेतत् स्तोत्रं यद्रात्रिरतिरिक्त एवातिरिक्तं दधाति ॥ ४ ॥**

अस्य साम्नोऽतिरिक्तत्वमुक्तं रात्रौ कर्त्तव्यं पर्यायगतं मैत्रावरुणस्तोत्रमपि सवनत्रयमतीत्य वर्त्तमानत्वादतिरिक्तं शिष्टं सुज्ञानं ॥ ४ ॥

अथ ब्राह्मणाच्छंसिनः साम विधत्ते ।

**वयमुत्वा तदिदर्था इति काण्वं ॥ ५ ॥**

स्पष्टं ॥ ५ ॥

एतत्प्रशंसति ।

एतेन वै कण्व इन्द्रस्य सांविद्यमगच्छदिन्द्रस्यै-वैतेन सांविद्यं गच्छति ॥ ६ ॥

सांविद्यं समानविद्यत्वं सखित्वमित्यर्थः तत् स्तोत्रीये इन्द्र-त्वायन्तः सखाय इति हि स्तूयते अतस्तत्प्रयोक्तापि इन्द्रस्य सांविद्यं प्राप्नोति ॥ ६ ॥

अच्छावाकसाम विधाय प्रशंसति।

इन्द्राय मद्वने सुतमिति श्रौतकक्षं क्षत्रसाम प्र क्षत्रमेवैतेन भवति ॥ ७ ॥

श्रुतकक्षेण क्षत्रियेण दृष्टं श्रौतकक्षं अतः क्षत्रसामैतत् तत्प्रयोगेण क्षत्रं बलं भवति ॥ ७ ॥

अथ मध्यमे पर्य्याये होतुः साम विदधाति।

अयन्त इन्द्रसोम इति दैवोदासं ॥ ८ ॥

दैवोदासं दिवोदासेन दृष्टं साम ॥ ८ ॥

एतन्निधनद्वारा प्रशंसति।

अग्निष्टोमेन वै देवा इमं लोकमभ्यजयन्नन्तरिक्ष-मुक्थेनातिरात्रेणामुन्त इमं लोकं पुनरभ्यकामयन्त त इहेत्यस्मिन् लोके प्रत्यतिष्ठन् यदेतत्साम भवति प्रतिष्ठित्यै ॥ ९ ॥

पूर्व्वं देवाः अग्निष्टोमोक्थ्यातिरात्रैः क्रमेण भूरादिलोकत्रयं जित्वा तएव पुनरिमं लोकमभ्यकामयन्त ते कामयित्वा इहेति निधनप्रयोगसामर्थ्येन भूर्लोक एव प्रतिष्ठिता अभवन् स्पष्टमन्यत् ॥ ६ ॥

होतुरेव वैकल्पिकं स्तोत्रमाह।

ऊर्द्ध्वसद्मनमपि सर्व्वरीषु प्रोहन्ति ॥ १० ॥

अपि सर्वरीष्वपि गतासु प्राप्तासु सर्वरीषु अतिरात्रेषु पर्यायेष्वित्यर्थः प्रयोगबहुत्वापेक्षया बहुवचनं तस्योर्द्ध्वसद्मनं साम प्रोहन्ति कुर्य्युः अत्र प्रतीकान्तरस्याश्रवणात् अयं त इन्द्रेत्याद्या एवास्य स्तोत्रीया इति बोद्धव्यं ॥ १० ॥

एतत्प्रशंसति।

असुरा वा एषु लोकेष्वासꣳस्तान्देवा ऊर्द्ध्वसद्मनेनैभ्योलोकेभ्यः प्राणुदन्त ॥ ११ ॥

स्पष्टार्थः ॥ ११ ॥

उक्तार्थवेदनं प्रशंसति।

तद्यएवं वेदैभ्यो लोकेभ्यो भ्रातृव्यं प्रणुद्य स्व आयतने सत्रमास्ते ॥ १२ ॥

अत्र यो वेद आस्त इत्युभयत्रापि एकवचनमविवक्षितं ये

जानन्त्येवं ते सर्वे सत्रानुष्ठायिनो भवन्तीत्यर्थः अत्र दैवोदासौ-र्द्ध्वसद्मनयोः साम्नोः प्रयोगविषये निदानकार आह मध्यमस्य पर्य्यायस्य होतृषामणी विचारयन्ति दैवोदासं वा स्यादौर्द्ध्वसद्मनं वेति विकल्पो वा स्यादपि वा दैवोदासमहीने कुर्य्यात् पूर्वाध्यायं पूर्वं यज्ञस्थाने ऊर्द्ध्वसद्मनं सत्रेषूत्तराध्यायमुत्तरयज्ञस्थानेष्वप्यस्मिन् सत्रे वादरूपो भवत्यौर्द्ध्वसद्मनमपि सर्वरीषु प्रोहन्तीति अस्यायमर्थः मध्यमस्य पर्य्यायस्य सम्बन्धिनि विहिते होतृषामणी विचारयन्ति विचारप्रकार उच्यते दैवोदासं वा स्यादौर्द्ध्वसद्मनं वेति विकल्पो वा स्यादिति व्यवस्थया कल्पो विकल्पः येन यजमानेन यत् पूर्वं दैवोदासमहीन इति सत्रापेक्षया यत् पूर्वं यज्ञस्थाने ते अहीने स्यादिति एतेनोत्तराध्यायमित्याद्यपि व्याख्यातं अथाप्यस्मिन्नित्यादेरयमर्थः अस्मिन्नौर्द्ध्वसद्मनविषये सत्रवादरूपो भवति प्रोहन्तीति बहुवचनेनाभिधानमेव अथवा प्रतीकोपादानमिदं सत्रवादस्तु स्व आयतने सत्रमास्त इत्ययमपि ॥ १२ ॥

अथ मैत्रावरुणसाम विधत्ते ।

आ तून इन्द्र क्षुमन्तमित्याकूपारं ॥ १३ ॥

स्पष्टं ॥ १३ ॥

तत् प्रशंसति ।

अकूपाराङ्गिरस्यासीत्तस्या यथा गोधायास्त्वगेवं

त्वगासीत्तामेतेन त्रिःसाम्नेन्द्रः पूत्वा सूर्य्यत्वचसमकरोत्तद्वाव सा तर्ह्यकामयत यत्कामा एतेन साम्ना स्तुवते सएभ्य कामः समृध्यते ॥ १४ ॥

अकूपारनामाङ्गिरस्यासीत् तस्या यथा गोधायास्त्वक् तथा त्वगासीत् सा गोधेव दुष्टत्वचा सतीन्द्रमस्तौषीत् सतुष्ट इन्द्रः एनामेतेन साम्ना त्रिरारं रथच्छिद्रादिनापवारयित्वा सूर्य्यत्वचमकरोत् तथाच मन्त्रवर्णः यस्य खनसः खे युगस्य शतक्रतो अपालामिन्द्रो पूत्वा ऽकृणोः सूर्य्यत्वचमिति एवमपगतत्वग्दोषा सा तर्हि तदानीं तदेवाकामयतेन्द्रं किमिति तद्दर्शयति यत्कामाः यादृक्कामोपेताः एतत्साम्ना स्तुवन्ति स काम एभ्यः स्तोतृभ्यः चमृध्यते समृद्धो भवति ॥ १४ ॥

अथ ब्राह्मणाच्छंसिसाम विधाय प्रशंसति।

अभित्वा वृषभासुत इत्यार्षभं क्षत्रसाम क्षत्रमेवैतेन भवति ॥ १५ ॥

विश्वामित्रस्य पुत्र ऋषभः एतस्योत्पादनकाले स क्षत्रिय एव अतस्तेन दृष्टत्वादेतदपि क्षत्रसाम स्पष्टमन्यत्। ॥ १५ ॥

अथाच्छावाकसाम विधाय प्रशंसति।

इदं वसो सुतमन्ध इति गारमेतेन वै गर इन्द्रमप्रीणात्प्रीत एवास्यैतेनेन्द्रो भवति ॥ १६ ॥

स्पष्टोऽर्थः ॥ १६ ॥

अथ तृतीयपर्य्याये होतृसाम विधाय प्रशंसति।

इदꣳ ह्यन्वोजसेति माधुच्छन्दसं प्रजापतेर्वा एषा तनूरयातयाम्नी प्रयुज्यते॥ १७॥

मधुच्छन्दसा दृष्टं माधुच्छन्दसं एषा एतत् साम प्रजापतेः शरीरं खलु अस्य तृचे आद्ये द्वे अनिरुक्ते अतः प्रजापतेस्तनुत्वं अतएव देवतान्तराश्रवणादेवायातयाम्नगतसारा प्रयुज्यते॥१७

अथ मैत्रावरुणसाम विधत्ते।

आत्वेता निषीदतेति दैवातिथं॥ १८॥

स्पष्टं ॥ १८ ॥

तत् प्रशंसति।

देवातिथिः सपुत्रोऽशनायꣳश्चरन्नरण्य उर्वारूण्य-विन्दत्तान्येतेन साम्नोपासीदत्ता अस्मै गावः पृश्नयो भूत्वोदतिष्ठन् यदेतत्साम भवति पशूनां पुष्ट्यै॥ १९॥

पूर्व्वं दुर्भिक्षे सञ्जाते देवातिथिर्नाम ऋषिः सपुत्रः अशनेच्छुः सञ्चरन् अरण्ये उर्व्वारूणि कर्कटीफलान्यविन्दत् तानि फलानि देवातिथिः साम्ना उपासीदत् उपासन्नाभूत् तास्तानि फलानि पृश्नयो नानावर्णा गावोभूत्वा अस्मै उदतिष्ठन् प्रादुर-

भवन् तस्मा एतत्प्रश्नानुगुण्याय भवति न वै तदसङ्गतमिति मन्तव्यं सामसामर्थ्यात्तथा भवत्येव अथवा विहितसाम्नः स्तुत्यर्थत्वाद्विरोधः ॥ १९ ॥

अथ ब्राह्मणाच्छंसिसामविधाय प्रशंसति।

योगे योगे तवस्तरमिति सौमेधꣳ रात्रिषाम* रात्रेरेव समृद्ध्यै ॥ २० ॥

सौमेधं सुमेधसा दृष्टं रात्रिषामेति तस्य नाम ॥ २० ॥

अथ अच्छावाकसाम विधत्ते।

इन्द्र सुतेषु सोमेष्विति कौत्सं ॥ २१ ॥

स्पष्टोऽर्थः ॥ २१ ॥

एतत्प्रशंसति।

कुत्सस्य लुशस्येन्द्रं व्यह्वयेताꣳ स इन्द्रः कुत्समुपावर्त्तत तꣳ शतेन वार्ध्रीभिराण्डयोरबध्नात्तं लुशोऽभ्यवदत् प्रमुच्यस्व परि कुत्सादिहागहि किमु त्वावानाण्डयोर्बद्ध आसाता इति ताः संछिद्य प्राद्रवत्स एतत् कुत्सः सामापश्यत्तेनैनमन्ववदत्स उपावर्त्तत ॥ २२ ॥

* रात्रिषामेति दन्त्यमध्यः पुस्तकान्तरपाठः।

कुत्सश्च लुशश्चोभावृषी पूर्व्वं यज्ञे समकालं एवेन्द्रं व्याह्वयेतां पृथक्पृथगाहूतवन्तौ तयोर्मध्ये सइन्द्रः कुत्सं प्रत्येवोपागच्छत् न पुनर्लुशं यज्ञगमनशङ्कया शतसङ्ख्याभिर्वार्द्ध्रीभिश्चर्म्ममयीभिः रज्जुभिः आण्डयोरवध्नात्तमिन्द्रं लुशश्चागत्यैवमवादीत् हे इन्द्र प्रमुच्यस्वात्मानं कुतः सकाशात्तदुच्यते कुत्सात्परि परीति पञ्चम्यर्थानुवादी कुत्ससकाशान्मुक्तस्त्वं इहास्मिन्यज्ञे आगच्छागच्छ किमु त्वावान् त्वत्सदृशः आण्डयोर्मुष्कयोर्बद्धः सन् आसातै आसीत् अतो महानुभावस्य तव मुष्कबन्धनमनुचितं अतो मुच्यस्वेत्यर्थः अस्य पूर्वार्द्धमृच्यं हित्वेत्यादिकोऽप्रयोजनत्वादत्र न पठितः एवमुक्तः इन्द्रः ता वार्द्ध्रीः संछिद्य प्राद्रवत् प्रकर्षेण शीघ्रं लुशमगच्छत् स तु कुत्सः एतत्सामापश्यत् तेन साम्ना एनमिन्द्रमन्ववदत् स्तुतवानित्यर्थः स स्तुतः कुत्समुपावर्त्तत अत एतत् इन्द्रस्य प्रियतममिति स्तुतिः ॥ २२ ॥

अस्त्वेवं किं तत इत्याह।

## यदेतत्साम भवति सेन्द्रत्वाय ॥ २३ ॥

स्पष्टं ॥ २३ ॥

इति ताण्ड्यमहाब्राह्मणे नवमाध्यायस्य
द्वितीयः खण्डः।

---

अथ तृतीयः खण्डः।

एवमुक्तो ज्योतिष्टोमः सर्वप्रकृतिभूतः स च यद्यपि चतु-

संख्यः तथापि नवै षोडशी नाम यज्ञोऽस्तीत्यादि श्रुतिः षोडशपृथक्त्वादत्र ब्राह्मणेऽग्निष्टोमादिसंख्यात्रयात्मक एवोक्तः अथावशिष्टेनाध्यायशेषेण सोमविषयं प्रायश्चित्तमुच्यते तत्रादौ सात्त्युत्थाने प्रायश्चित्तमाह ।

यदि सत्राय दीक्षेरन्नथ साम्युत्तिष्ठेत्सोममपभज्य विश्वजितातिरात्रेण यजेत सर्ववेदसेन सर्वस्मा एव दीक्षते सर्वमाप्नोति ॥ १ ॥

यदि सत्राय तदनुष्ठातारो बहवो यजमानाः सह दीक्षेरन् तेषु कश्चित् साम्यमप्यनुष्ठायोत्तिष्ठेदसमाप्यैव केनचिद्व्याधादिना निमित्तेन सः सोमं क्रीतं स्वांशमपभज्य विभागं कृत्वा तेन सोमेन विश्वजिता अतिरात्रसंस्थेन सर्वपृष्ठेन सर्व्ववेदसेन वेदइति धननाम सर्व्वस्वदक्षिणात्मकेन यजेत सत्रादुत्थाने अन्यं यं कञ्चित् क्रतुमननुष्ठाय कथं सर्ववेदसोऽतिरात्रः क्रियत इति तत्राह सर्वस्मा एव सर्वकेऽस्मै फलाय सर्वाणि च पृष्ठानि सर्वांश्च स्तोमान् प्रयोक्तुं खलु सत्राय दीक्षन्ते अतोऽयं उचितइत्यर्थः अनेनातिरात्रेण सर्वसत्रफलं प्राप्नोति ॥ १ ॥

अत्रत्यं सर्वस्वदक्षिणं सत्राद्दक्षिणकादप्यधिकमेवेत्याह ।

याहृदक्षिणा ददाति ताभिरति प्रयुङ्क्ते ॥ २ ॥

या इत या एव दक्षिणाः दिशति विश्वजिति क्रतौ ताभिः

सत्रमतीत्य प्रयुक्तवान् भवति एतेनापि सत्रादधिकं फलमनेन लभ्यत इत्युक्तं भवति अत्र सोममपभज्येति श्रवणात्सोमक्रयानन्तरमुपसत्सु वा सुत्येषु वाहःसु स्थितस्य विवक्षितं स्यात् तद्दीक्षासु स्थितस्येति शङ्कनीयं एतदुपग्रन्थे विचार्य निर्णीतं यथा खलु विश्वजित्तद्दीक्षाभ्य उत्तिष्ठतः स्यादित्येके सोमापभागेन जानीमो क्रीतो हि दीक्षासु सोमो भवतीति अत्र साभ्युत्तिष्ठेदित्येकवचनमविवक्षितं अनेकेषामप्युत्तिष्ठतामेतस्यानु साभ्युत्थानस्य निमित्तत्वात् एवं साभ्युत्थानप्रायश्चित्तमुक्तं रात्रेरुपरिभागे रात्रिपर्यायाः कर्त्तव्याः तदनन्तरं सन्धिषाम ततो व्युष्टेरर्वागेव आश्विनशस्त्रं समापनीयं ॥ २ ॥

एवं सति प्रमादात् विलम्बेन पर्यायाः व्युष्टेः पूर्वं न समाप्नुयुरिति शङ्कते तस्योपायमाह ।

**यदि पर्य्यायैरस्तुतमभिव्युच्छेत्यञ्चदशभिर्होता स्तुयुः पञ्चभिः पञ्चभिरितरेभ्यः ॥ ३ ॥**

यदि पर्यायैस्त्रिभिः सोममस्तुतमभिव्युच्छेत् प्रभातकालो भवेदिति शङ्केत तदा होत्रे होतृपञ्चदशभिर्ऋग्भिः स्तुयुः इतरेभ्यो मैत्रावरुणादिभ्यस्त्रिभ्यः पञ्चभिर्ऋग्भिः स्तुयुः होतृषाम पञ्चदशस्तोमकं कार्य्यं इतराणि पञ्चस्तोमकानि कुर्युरित्यर्थः अत्रापस्तम्बो यद्यपि पर्यायतयस्य पर्यायद्वयस्यैकपर्यायस्य च स्तोत्राय कालविलम्बाभावे पृथक्पृथगेव शीघ्रप्रयोगमुक्तवान्

तथापि रात्रिपर्य्यायस्य त्र्यस्याप्येतत्साधारणमिति मन्तव्यं तथाचोपग्रन्थे पठ्यते यदि पर्यायैरस्तुतमभिव्युच्छेदिति सर्वान् पर्यायानधिकृत्य भवति क्रत्वर्थसामान्यादथैकस्मिन् पर्याये प्रतीकेऽपि द्वयोरितीति ॥ ३ ॥

अथ सन्धिस्तोत्रायाह ।

**अग्ने विवस्वदुषस इति सन्धिना स्तुयुः प्राणा वै त्रिवृत् स्तोमानां प्रतिष्ठा रथन्तरꣳ साम्नां प्राणाꣳश्चैवोपयन्ति प्रतिष्ठाञ्च ॥ ४ ॥**

नवस्तोत्रीयात्मकसन्धिस्तोत्रेण स्तोतुं मध्ये व्युष्टिः स्यादिति शङ्का यदि उदियात् तदा अग्ने विवस्वदुषस इति प्रगाथे अग्निदेवत्ये सन्धिना स्तोत्रेण त्रिवृत् स्तोमेन स्तुयुः अत त्रिवृदिति त्रिक एवोच्यते स्तोमानां मध्ये त्रिवृत् स्तोमः प्राणाः खलु त्रिवृति त्रित्वसंख्यास्ति प्राणा अपि प्राणोऽपानो व्यान इति त्रिधा यद्वा नासिकाच्छिद्रयोः मुखे च सञ्चारभेदेन त्रिरूपाः अतः सङ्ख्यासाम्यात्त्रिवृदेव प्राणः तथा साम्नां मध्ये रथन्तरं साम्नः प्रतिष्ठात्वं एवं सति यद्रथन्तरं सन्धिषाम त्रिकस्तोमं भवति तेन प्राणान् च प्रतिष्ठाञ्च उभयमपि प्राप्नुवन्ति उक्तः सन्धिस्तोत्रेतिहासः ॥ ४ ॥

अथाश्विनशस्त्रस्य ऋक्सहस्रात्मकस्य कालविलम्बाभावे संख्यां विदधाति ।

षष्टिञ्च त्रीणि च शतानि होता शंसति ॥५॥

षष्ट्युत्तरशतत्रयसङ्ख्याका होता ऋचोऽनुशंसेत् ॥ ५ ॥

तत्संख्यां स्तौति ।

तावत्यः संवत्सरस्य रात्रयः संवत्सरसम्मिताभिरेव तदृग्भिराश्विनमाप्नोति ॥ ६ ॥

उक्तसङ्ख्या एव हि संवत्सररात्रयः स्युरस्त्वेवं किन्तत इत्याह उक्तसङ्ख्यया संवत्सरसंमानात् संमिताभिरेवाल्पसंख्याकाभिर्ऋग्भिः ऋक्सहस्रसम्पाद्यं मुख्यमाश्विनशस्त्रमाप्नोति अयमभिप्रायः संवत्सरो वै प्रजापतिरिति श्रुतेः उक्तसंख्यया संवत्सरद्वारा प्राजापत्यास्तैः स एव सर्वमिति तावदेव ऋक्सहस्रशस्त्रावाप्तेरिति ॥ ६ ॥

एवं विवासशङ्कायां कर्त्तव्यतामुक्त्वा इदानीं यथाविहितस्तोत्राणां न्यूनातिरेके प्रायश्चित्तं वक्तुं सम्यक्स्तुतीति स्तुतानां स्वरूपं दर्शयति ।

यदर्वाक् स्तुवन्ति तदस्तुतं यत्संप्रति स्तुवन्ति तत् स्तुतं यदतिष्टुवन्ति तत्सुष्टुतं ॥ ७ ॥

यद्यदि विहितत्रिवृदादिस्तोत्रादर्वाक् स्तोत्रीयान् न्यूनत्वेन स्तुवन्ति तदस्तुतमेव अस्तुतप्रायमेव क्रतुवैकल्येनापूर्वोत्पादना-

शक्तत्वात् यत् सम्प्रति यथावत् स्तुवन्ति तत् स्तुतं यदतिष्टुवन्ति विहितस्तोमसंख्यातिक्रम्याधिकेन स्तुवन्ति तत् सुष्टुतं तदत्र सुष्टोनिन्दार्थः अधिकस्य न्यूनवद्दुष्टत्वात् तेन क्रतुवैकल्यं भवत्येव अविहितत्वाविशेषात् ॥ ७ ॥

विहितन्यूनसंस्तवे प्रायश्चित्तमाह ।

यद्यर्वाक् स्तुयुर्यावतीभिर्न स्तुयुस्तावतीभिर्वातिष्टुयुर्भूयोऽक्षराभिर्वा ॥ ८ ॥

यदि विहितस्तुतितः अर्वाक् स्तोत्रीया न्यूनत्वेन स्तुयुः तदा यावतीभिः स्तोत्रीयाभिर्न स्तुयुः ताः परिगणय्य उत्तरे स्तोत्रे अधिकत्वेन तावतीभिरधिकसंख्यकेन वा विहितस्तोत्रेण स्तुयुः यद्वा भूयोऽक्षराभिः स्तुयुः यद्देवत्यं परस्तोत्रे तद्देवत्यास्वेव सस्तोत्रीयाभ्योऽधिकाक्षरासु स्तुयुः ॥ ८ ॥

अथातिष्टुतौ प्रायश्चित्तमाह ।

यद्यतिष्टुयुर्यावतीभिरतिष्टुयुस्तावतीभिर्वा न स्तुयुः कनीयोऽक्षराभिर्वा ॥ ९ ॥

उक्तवैपरीत्येन व्याख्यातव्यं पूर्वस्मिन् स्तोत्रे यावत्योऽधिका उत्तरस्मिन् तावत्यो न्यूनाः स्युरित्येकः कल्पः कनीयोऽक्षराभिर्वा स्तुयुरित्यपरः एवमस्तुतेस्तु द्वौ कल्पावुक्तौ ॥ ९ ॥

अथास्तुतावन्त्यं कल्पमाह ।

**यद्यर्वाक् स्तुयुस्तौडमग्निष्टोमसाम कार्य्यं निधनमेकेडा ये द्वे ताभ्यामेव तत्समं क्रियते ॥ १० ॥**

यद्यर्वाक् स्तुयुः तदा तत्परिहाराय तौडं महावैष्टाभितमग्निष्टोमसाम कार्य्यं यज्ञायज्ञीयस्य कथमस्तुतस्य तौडं परिहार इति तत्राह तासु तिसृष्विडासु मध्ये एकेडा स्तोत्रीयस्य निधनं भवति इडाद्वयं तु न्यूनस्तोत्रं सम्पूर्णं करोति ॥ १० ॥

अथातिष्टुतौ सामान्तरं सार्थवादमाह।

**यद्यतिष्टुयुः स्वारमग्निष्टोमसाम कार्यमूनमिव वा एतत्साम्नोयत् स्वरस्तेनैव तत्समं क्रियते ॥ ११ ॥**

अति स्तवने यज्ञायज्ञीयस्तोत्रीयास्वेव स्वारं दीर्घस्वरमग्निष्टोमसाम कार्य्यं कथं तेनाधिकस्य समतेति ऊनमिवेत्यादिनोच्यते यत्स्वरनिधनं सामास्ति एतत् साम अन्यस्मात् इडादिनिधनवतः सकाशादूनमिव वै अन्त्यस्वरव्यतिरेकेण बहिर्णिधनाभावादतस्तेनैव तदाधिक्यं समं क्रियते अत्रार्वाक् स्तवातिष्टवयोस्त्रयस्त्रयः कल्पा उक्ताः तेषामेवं व्यवस्था अग्निष्टोमसाम्नः पुरस्ताच्चेदर्वाक् स्तवोऽतिष्टवो वा स्यान्न तत्र तौडस्वराभ्यामेवाग्निष्टोमसामभ्यां न्यूनाधिकदोषापगमः ऊर्द्धं चेदग्निष्टोमसाम्नोऽर्वाक् स्तवातिष्टवौ स्यातां तदा स्तोत्रीयाभिरक्षरै-

र्वा सम्पाद्यमिति उक्तान्यूनाधिक्यप्रायश्चित्तव्यवस्था आर्षेयकल्पीयग्रन्थे स्पष्टं प्रतिपादिता सात्र द्रष्टव्या ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे नवमाध्यायस्य

तृतीयः खण्डः ।

---

अथ चतुर्थः खण्डः ।

अथ संस्तवनिमित्तकं प्रतिपदादिकं विधास्यन् प्रसङ्गादध्वर्युकर्त्तृकस्य प्रातरनुवाकोपाकरणस्य कालविशेषं विधत्ते ।

**यदि सोमौ सꣳसुतौ स्यातां महति रात्रेः प्रातरनुवाकमुपाकुर्यात् ॥ १ ॥**

पृथक् प्रयोजनयोर्यजमानयोः परस्परं विद्विष्यमाणयोर्वा युगपदेकस्मिन् देशे सोमौ संसुतौ सहाभिषुतौ यदि स्यातां तदा रात्रेर्महति काले महारात्रेः प्रबुध्य प्रातरनुवाकं होत्रानुवक्तव्यं उपाकुर्य्यात् प्रातर्यावद्देवेभ्योऽनुब्रूहीति सम्प्रेषणं अध्वर्युः प्रारम्भयेत् प्रकृतौ हि वयसां प्रवदनात् पूर्वं प्रातरनुवाकोपाकरणं तदेव संसुतसोमे मध्यमरात्रेः कर्त्तव्यमित्यर्थः ॥ १ ॥

एवं सति को लाभस्तं दर्शयति ।

**पूर्वो वाचं पूर्वश्छन्दाꣳसि पूर्वो देवता वृङ्क्ते ॥ २ ॥**

युगपदेकत्र बहुयज्ञेषु प्रवर्त्तमानेषु पौर्वापर्य्याभावात् गाय-

त्र्यादिछन्दसां अग्न्यादीनां देवतानाञ्च क्वचिदेव सन्निधानं स्यात् नान्यत्रेति संसवे दोषः एवं सति मध्यरात्रे एव प्रातरनुवाकस्य उपक्रमात् पूर्वो यजमानान्तरात् प्रथमभावी सन् वाचं मन्त्ररूपां वृङ्क्ते यजमानान्तराद्वर्जयति स्वयमेव पूर्वं परिगृह्णातीत्यर्थः तथा छन्दांसि गायत्र्यादीनि च पूर्वो यजमानान्तरात् वृङ्क्ते वर्जयति प्रातरनुवाके हि गायत्र्यादीनि चतुरुत्तराणि सप्तछन्दांस्यनूच्यन्ते अतस्तान्यपि यजमानान्तरात् पूर्वं स्वयमेव परिगृह्णाति तथा तस्मिन् प्रातरनुवाके अग्निरुषाश्विनौ चेति तिस्रो देवता आग्नेयोषस्याश्विनैस्त्रिभिः काण्डैः स्तुता ता अपि वृङ्क्ते पूर्वो यजमानान्तराद्वर्जयति स्वकीयत्वेन परिगृह्णाति ॥२॥

अथोद्गातुर्बहिष्पवमाने काञ्चित्प्रतिपदं विदधानः इन्द्रस्यापि यजमानान्तराद्वर्जनं दर्शयति ।

**वृषण्वतीं प्रतिपदं कुर्यादिन्द्रोवै वृषा प्रातःसवनादेवैषामिन्द्रं वृङ्क्ते ॥ ३ ॥**

वृषशब्दोपेतां पवस्वेन्द्रोवृषासुत इत्यादिकां वृषण्वतीं वृषशब्दात् मतुपि पदसंज्ञायां नलोपे अनो नुट इति नुट् प्रतिपद्यते प्रारभ्यते अयमिति प्रतिपत् तां वृषण्वतीं बहिष्पवमानस्य प्रतिपदं कुर्यात् इन्द्रो वै इन्द्र एव वृषा वर्षणशीलत्वात् तच्छब्दाभिधेयः एवमनेन वृषण्वत्यां प्रयोगेण एषां अन्येषां यजमानानां प्रातःसवनादेवेन्द्रं वृङ्क्ते वर्जयति स्वकीये यज्ञ आगमयति ॥ ३ ॥

अथ पक्षान्तरं दर्शयति।

**अथोखल्वाहुः सवनमुखे सवनमुखे कार्या सवनमुखात् सवनमुखादेवैषामिन्द्रं वृङ्क्ते॥ ४॥**

अथो खल्विति पक्षान्तरपरिग्रहे सवनमुखे सवनमुखे सवनादौ सवनादौ त्रिष्वपि पवमानेषु एषा वृषण्वती प्रतिपत्कार्या इति शब्दो अध्याहर्त्तव्यः इति ब्रह्मवादिन आहुः तेषामयं भावः यदि वृषण्वती बहिष्पवमान एव स्यात्तेन सिध्यति प्रातःसवनपरिग्रहः उत्तरयोः सवनयोः वृषण्वत्या अप्रयोगात् इन्द्रोऽपरिगृहीतोऽभवदिति पूर्व्वस्मिन् पक्षे दोषः अस्मिंस्तु पक्षे त्रिष्वपि पवमानेषु वृषण्वत्याः प्रयोगात् सवनमुखात् सवनमुखादेव त्रिभ्योऽपि सवनमुखेभ्य एव एषामिन्द्रं वर्जयति त्रिष्वपि सवनमुखेषु इन्द्रः प्रथमतोयष्टव्यः तथा प्रवर्त्तते बहुषु यज्ञेषु युगपदनुष्ठीयमानेषु यस्मिन् यज्ञेऽस्य वाचकं वृषेति शब्दं शृणोति तत्रैव गच्छति नान्यत्रेति॥ ४॥

सर्व्वासामपि देवतानां परिग्रहं दर्शयति।

**सुसमिद्धे होतव्यमग्निर्वै सर्व्वा देवताः सर्व्वाएव देवताः पश्यञ्जुहोति॥ ५॥**

सुसमिद्धे अतिशयेन दीप्ते होतव्यन्ततः किं अग्निः खलु सर्व्वा देवताः सर्व्वदेवतात्मकः देवासुरा ह संयत्ता आसन् ते

देवाविश्यतोऽग्निं प्राविशन् तस्मादाहुरग्निः सर्वा देवता इतीति श्रुत्यन्तरात् अग्नेः सर्व्वदेवतात्मकत्वं दीप्तस्याग्नेः सम्यक् दर्श-मात्तत्र प्रवर्त्तमानाः सर्वा एव देवताः पश्यन् हविःप्रतियोगि-त्वेन साक्षात् कुर्वन् जुहोति ॥ ५ ॥

अथास्मिन् संस्तुतसोमे प्रवृत्तहोमानन्तरं संवेशायेत्यादि-भिर्मन्त्रैः क्रमेणोद्गातव्यमिति विधत्ते ।

**संवेशायोपवेशाय गायत्र्यै छन्दसेऽभिभूतये स्वाहा संवेशायोपवेशाय त्रिष्टुभे छन्दसेऽभिभूतये स्वाहा संवेशायोपवेशाय जगत्यै छन्दसेऽभिभूतये स्वाहेति जुहोति ॥ ६ ॥**

अत्र च सूत्रकारेण संस्तुतसोमे त्वधिकमुद्गाता जुहुयात् संवेशायोपवेशायेति यथा सवनं छन्दांस्यादिशन्नित्यादिना तद्दत्रानुसन्धेयं प्रथमेन मन्त्रेण प्रातःसवने होमः द्वितीयेन माध्यन्दिने तृतीयेन तृतीयसवने तेषामयमर्थः संवेशाय संविशति सम्यगस्मद्यज्ञं विशतीति संवेशः संप्रविश्य चोपविशति तत्रैव निषीदति यज्ञान्तरं न गच्छतीत्युपवेशः ईदृशाय छन्दसे गायत्र्यै गायत्र्यात्मकाय अभिभूतये शत्रूणामभिभवित्रे यद्वा सोमाहरण-समये सोमरक्षकान् स्थानभाजादीनभिभूय हि गायत्री सोम-माहृतवती तदभिप्रायेणेदं विशेषणं तस्मै गायत्र्यछन्दसे स्वाहा

इदं हविस्सृजामि एवमुत्तरत्रापि योज्यं त्रिष्टुभे छन्दसे जगत्यै छन्दसे इति विशेषः ॥ ६ ॥

अस्तु होमः किमतो भवति तदाह ।

छन्दाꣳसि वा अभिभूतयस्तैरेवैनानभिभवति उभे बृहद्रथन्तरे कार्य्ये ॥ ७ ॥

गायत्र्यादीनि इमानि छन्दांसि खलु अभिभूतयः पूर्वोक्तप्रकारेणाभिभवितारस्तैरेव एनानन्यान् विद्विष्टान्यजमानानभिभवति ये बृहद्रथन्तरे पृष्ठस्तोत्रनिर्वचनकार्य्यैक्यात् व्रीहियववत् प्रकृतौ विकल्पते तयोः संस्तुतसोमेसु समुच्चयासम्भवेन विकल्प इति सत्यं अत्र तावदुभे बृहद्रथन्तरे इति पुनर्विधानात् समुच्चयारम्भः प्रतीयते तत्र कथं प्रयोगप्रकार इत्याकाङ्क्षायां यन्नित्याद्बृहत्पूर्वं प्रजापतौ समभवदित्यादिना तस्मात् पूर्वं योगमानश्च इत्यन्तेन ब्राह्मणेन बृहद्रथन्तरयोः सन्निपाते रथन्तरं पूर्वं प्रयोक्तव्यं पश्चाद्बृहदिति व्यवस्थितत्वात् माध्यन्दिनपवमाने पुनानः सोमेति वार्हते प्रगाथे रथन्तरं कर्त्तव्यं ॥ ७ ॥

पृष्ठस्तोत्रं बृहदिति उभयोः समुच्चयस्तदेतत्प्रशंसति ।

यत्र वा इन्द्रस्य हरी तदिन्द्र इन्द्रस्य वै हरी बृहद्रथन्तरे यदुभे बृहद्रथन्तरे भवतः पूर्वएवेन्द्रस्य हरी आरभन्ते ॥ ८ ॥

यस्मिन् देशे खलु इन्द्रस्य हरी रथ्यावश्वौ भवतः तत्रेन्द्रस्तिष्ठति बृहद्रथन्तरे सामनी इन्द्रस्य हरी अतो बृहद्रथन्तर उभे अपि भवत इति स्तुतेन अन्येभ्यो यजमानेभ्यः प्रथमभाविन एवैते इन्द्रस्य हरी आरभन्ते ते परिगृह्णन्ति ॥ ८ ॥

अन्यदपि सामद्वयं विधत्ते।

तौरश्रवसे कार्ये ॥ ९ ॥

तुरश्रवा नाम कश्चिदृषिः तेन दृष्टे सामनी तौरश्रवसे ते च यदि इन्द्रासो अव्रतमित्यस्यां उत्पन्ने प्रत्तं सधस्थमासदाष्टर्व्यं धरुणं वाज्यर्षसि त्वायो दीर्घजिह्वयोधारया पावकयेत्येतयोरेकर्चयोरूहेन गीयते तेचात्र लिङ्गा आर्भवे पवमाने कार्ये सा सुतसोमे ॥ ९ ॥

अनयोः प्रयोगानुगुण्यं आख्यानप्रदर्शनेनाह।

तुरश्रवसस्य वै पारावतानाञ्च सोमौ सꣳसुतावास्तान्तत एते तुरश्रवाः सामनी अपश्यत्ताभ्यामस्मा इन्द्रः शल्मलिनां यमुनाया हव्यं निरावहद्यत्तौरश्रवसे भवतोहव्यमेवैषां वृङ्क्ते ॥ १० ॥

परवा नाम कश्चित्तत्सम्बन्धिनः पारावताः तेषां दीक्षितानां तुरश्रवसस्य ऋषेः सोमौ संसुतौ सह सुतावास्तां संसवो जाग इत्यर्थः ततोऽनन्तरन्तुरश्रवा ऋषिः एते सामनी अपश्यद्दृष्टवान्

दृष्ट्वा च ताभ्यां स्तुतवानिति शेषः तत्स्तुत्या प्रीत इन्द्रः असौ तुरश्रवसे यमुनायाः सम्बन्धि यमुनातटे वर्त्तमानं तेषां हव्यं हविश्चरुपुरोडाशादिकं शल्मलिनां स्वकीयेनायुधविशेषेण निरावहत् निहृत्याभिप्रायत् पारावतानां हविरपहृत्य तुरश्रवसे दत्तवानित्यर्थः एवं सति तौरश्रवसे भवतः यत् तेन एषां यजमानानां विद्विषाणां हव्यं इन्द्रो वर्जयति ॥ १० ॥

अथ प्रसङ्गादध्वर्युकर्तृकमभिषवमपि अन्यदीयाभिषवात् पूर्वमेव कुर्य्युरिति विधत्ते ।

## पूर्वेऽभिषुणुयुः ॥ ११ ॥

अध्वर्य्युप्रतिप्रस्थात्रादयश्चत्वारो अध्वर्यवः पूर्वे अन्यदीयसोमाभिषवात् प्रथमभाविनः एतत्सोममभिषुणुयुः ॥ ११ ॥

किं तत इत्याह ।

## या वै पूर्वाः प्रस्नान्ति ताः पूर्वास्तीर्थं जयन्ति पूर्व एवेन्द्रमारभन्ते ॥ १२ ॥

याः खलु लोके प्रजाः पूर्व्वाः प्रथमभाविनः सत्यः प्रस्नान्ति नदीतडागादिषु स्नानं कुर्व्वन्ति पूर्वास्ता एव तीर्थन्तरन्त्यवतरन्त्यनेनेति अवतरणप्रदेशस्तीर्थं तज्जयन्ति लभन्ते पश्चाद्भाविन्यस्तु प्रजा न लभन्ते एवमत्रापि पूर्व्वएवाभिष्टोतारः इन्द्रमारभन्ते नान्ये ॥ १२ ॥

अथास्मिन् संसुतसोमे होतुः कृत्यं विधत्ते।

विहव्यं शस्यं ॥ १३ ॥

विहवो नाम कश्चिदृषिः तेन दृष्टं ममाग्ने इत्यादिकं सूक्तं विहव्यं तच्छस्यं होता वैश्वदेवसूक्तात्पुरस्ताच्छंसनीयं तदुक्तं भगवता आश्वलायनेन ममाग्ने इति वैश्वदेवसूक्तस्येति पुरस्तादिति हि तत्र वर्त्तते ॥ १३ ॥

एतच्छंसनमपि स्वकीययज्ञे इन्द्रस्य वर्त्तते कारणमिति आख्यानं प्रदर्शयन्नाह।

जमदग्नेश्च वा ऋषीणाञ्च सोमौ सꣳसुतावास्तां तत एतज्जमदग्निर्विहव्यमपश्यत्तमिन्द्र उपावर्त्तत यद्विहव्यꣳ होता शंसतीन्द्रमेवैषां वृङ्क्ते ॥ १४ ॥

पुरा जमदग्नेरन्येषामृषीणाञ्च सोमौ संसुतौ सहाभिषुतावास्तां भवेतां ततोऽनन्तरं जमदग्निरेतद्विहव्यं सूक्तमपश्यत् तं जमदग्निं इन्द्र उपावर्त्तत उपागच्छत् नान्यान् तत इदानीन्तनोऽपि होता संसुतसोमे विहव्यं शंसतीति यत् तेनेन्द्रमेवैषां वृङ्क्ते वर्जयति ॥ १४ ॥

अथास्य संसुतसोमस्य संस्थाभेदं पूर्वपक्षत्वेन दर्शयति।

यदीतरोऽग्निष्टोमः स्यादुक्थः कार्य्योयद्युक्थोऽति-

**राद्धो यो वै भूयान्यज्ञक्रतुः स इन्द्रस्य प्रियो भूयसैवैषां यज्ञक्रतुनेन्द्रं छन्क्ते ॥ १५ ॥**

यदीतरो यजमानान्तरेण क्रियमाणः सोमयागः अग्निष्टोमः स्यात् अग्निष्टोमसाम्ना संस्थितो भवेत् तत्तदा उक्थः उक्थसंस्थः स्वकीयो यज्ञः कार्य्यः यदि परकीय उक्थसंस्थः स्यात् तदानीमतिरात्रः कार्य्यः एवमधिसंस्थाकरणे को लाभः उच्यते यो हि भूयान् बहुतरः बहुस्तुतशस्त्रसाध्यः यज्ञक्रतुः स एवेन्द्रस्य प्रियइष्टो भवति अतो भूयसा बहुतरेणैव यज्ञक्रतुना एषामिन्द्रं छन्क्ते ॥ १५ ॥

तमिमं यज्ञं दूषयित्वा स्वाभिमतं पक्षमाह ।

**अथो खल्वाहुर्दुष्प्राप इव वै परः पन्था यमेवाग्रे यज्ञक्रतुमारभेत तस्मान्नेयादिति ॥ १६ ॥**

अथो खल्विति पक्षान्तरपरिग्रहद्योतनार्थः अथो खलभिन्ना ब्रह्मवादिनः आहुः किमिति दुष्प्रापइव वै इत्यवधारणे प्राप्तुमशक्य एव हि परो दीर्घः पन्थाः महापथेन हि गच्छन् चिरकालात् फलं प्राप्नोति अल्पेन तु सद्यः प्राप्नोति अतः परः पन्था उत्तरोत्तरः संस्थात्मको यज्ञमार्गोदुष्प्राप इत्युक्तं भवति यस्मादेवं तस्मादग्रे आदौ सङ्कल्पसमये यमेव यज्ञक्रतुमारभेत तस्मान्नेयादिति ॥ १६ ॥

अथ होतुः सूक्तद्वयं शस्त्रं विधत्ते ।

**सजनीयꣳ शस्यमगस्त्यस्य कयाशुभीयꣳ शस्यं ॥१७**

सजनास इन्द्र इति शब्दयुक्तं यो जात एवेति सूक्तं सजनीयन्तं निष्केवल्यशस्त्रे निविद्धानस्य सूक्तस्य पुरस्ताच्छंसनीयं तथा कयाशुभासवयस इति सूक्तं अगस्त्येन दृष्टत्वात् अगस्त्यस्य कयाशुभीयं तन्मरुत्वतीये शस्त्रे शंसनीयं तथाच सूत्रकृताश्वलायनेनोक्तं कयाशुभेति च मरुत्वतीये पुरस्तात् सूक्तस्य शंसेद्योजात एवेति निष्केवल्य इति ॥ १७ ॥

तदेतदुभयं शंसति ।

**अस्या अमुष्या अद्यश्वान्मिथुनादहोरात्राभ्यामेवैनान्निर्भजति ॥ १८ ॥**

शस्यमानयोः सूक्तयोः द्विसंख्यायोगात् अस्याः पृथिव्या अमुष्यादिवश्च द्वाभ्यां लोकाभ्यामेव एतान् द्वेष्टॄन् यजमानाद्विभजति निर्भक्तान् करोति वियोजयतीति यावत् तथा अद्येति वर्त्तमानः कालः श्व इति भविष्यः कालः उभयस्मादपि कालात् एतान्निर्भजति यद्वा उभे बृहद्रथन्तरे कार्य्ये इति विधिः पूर्वमुक्तः तच्छेषतया अयमर्थवादो योज्यः तथैव हि तैत्तिरीयके समाम्नातं उभे बृहद्रथन्तरे भवत इयं वाव रथन्तरमसौ बृहदाभ्यामेवैनमन्तरेत्यद्य वाव रथन्तरं श्वो बृहदद्यश्वादेवैनम-

न्तरे भूतं वाव रथन्तरं भविष्यद् बृहत् भूतत्वेवैनं भविष्यतस्सान्तरेतीति ॥ १८ ॥

इति ताण्ड्यमहाब्राह्मणे नवमाध्यायस्य
चतुर्थः खण्डः ।

---

अथ पञ्चमः खण्डः ।

उक्तं संस्रुतसोमे प्रायश्चित्तं अथ सोमापहरणे प्रायश्चित्तमुच्यते ।

## यदि सोममक्रीतमपहरेयुरन्यः क्रेतव्यः ॥ १ ॥

दीक्षान्ते सोमः क्रीयते यदि ततः पूर्व्वं अक्रीतं सोमं अपहरेयुरन्ये शत्रवः तदानीं यद्यविज्ञाता सर्व्वं व्यापद्येतेति सामान्येन विहितं सर्व्वप्रायश्चित्तं कृत्वा अन्यः सोमः क्रेतव्यः गवादिद्रव्यकेण समन्त्रकक्रयेण प्राप्तव्यः ॥ १ ॥

यदि क्रयोत्तरकालं सोमोऽपहृतः स्यात्तत्राह ।

## यदि क्रीतं योऽन्योऽभ्याशं स्यात् स आहृत्यः सोमविक्रयिणे तु किञ्चिद्दद्यात् ॥ २ ॥

यदि क्रीतं क्रयप्राप्तं सोममपहरेयुः तदा योऽन्यः सोमः अभ्याशं अन्तिके स्यात् स आहृत्याभिषोतव्यः पुनः क्रयो न भवति यः सोममाहृत्य विक्रीणाति तस्मै सोमविक्रयिणे यत्कि-

च्चिदल्पं धनं दद्यात् न शास्त्रीयं गवादिकं क्रयणद्रव्यं देयमित्यर्थः ॥ २ ॥

अथ सोमप्रतिनिधीनाह ।

**यदि सोमं न विन्देयुः पूतीकानभिषुणुयुर्यदि न पूतीकानर्ज्जुनानि ॥ ३ ॥**

सोमं शास्त्रोक्तलक्षणं यदि न विन्देयुर्न लभेरन् तदा पूतीकान् लताविशेषान् पूतीकसंज्ञकानभिषुणुयुः यदि पूतीकानपि न विन्देयुः तदानीं अर्ज्जुनानि श्यामलानि तृणानि आहृत्याभिषुणुयुः ॥ ३ ॥

अथ पूतीकानां सोमप्रभवत्वेन सोमकार्य्ये शक्तिं आख्यानं प्रदर्शयन्नाह ।

**गायत्री सोममहरत्तस्या अनु विसृज्य सोमरक्षिः पर्णमच्छिनत्तस्य योऽंशुः परापतत्स पूतीकोऽभवत्तस्मिन् देवा ऊतिमविन्दन्नूतीको वा एष यत्पूतीकानभिषुण्वन्त्यूतिमेवास्मै विन्दन्ति ॥ ४ ॥**

अस्य पूतीकस्य ऊतिं तृप्तिमेव विन्दन्ति लभन्ते देवा इति शेषः ॥ ४ ॥

अथास्मिन् पूतीकाभिषवयज्ञे गव्यादिसाहित्यं विधत्ते ।

प्रतिधुक् च प्रातःपूतीकाश्च शृतञ्च मध्यन्दिने पूतीकाश्च दधि चापराह्णे पूतीकाश्च ॥ ५ ॥

प्रातःसवने प्रतिधुक् सद्योदुग्धं पयश्च अभिषुताः पूतीकाश्च संहृत्य सोमकार्य्यं कुर्व्वन्ति तथा मध्यन्दिने माध्यन्दिने सवने शृतं पक्वं क्षीरञ्च पूतीकाश्च सह सोमकार्य्ये शक्ताः अपराह्णे तृतीयसवने दधि च पूतीकाश्च सह सोमकार्य्यं कर्त्तुं शक्नुवन्ति ॥ ५ ॥

प्रतिधुगादेः पूतीकानाञ्च संहृत्य सोमप्रतिनिधित्वमुपपादयति ।

सोमपीथो वा एतस्मादपक्रामतीत्याहुर्यस्य सोममपहरन्तीति स ओषधीश्च पशूंश्च प्रविशति तमोषधिभ्यश्च पशुभ्यश्चावरुन्धे ॥ ६ ॥

ओषधिवनस्पतिभ्यः सकाशात् प्रतिधुगादिविशिष्टपूतीकाभिषवणसोमपानं यजमानोऽवरुन्धे प्राप्नोति ॥ ६ ॥

अथ यत् पूर्व्वमुक्तं पूतीकाभावे अर्ज्जुनानि तृणानि अभिषोतव्यानीति तेषामपि सोमसम्बन्धं दर्शयन् सोमकार्य्यक्षमतामाह ।

इन्द्रो वृत्रमहंस्तस्य योनस्तः सोमः समधावत्तानि बभ्रुतूलान्यर्ज्जुनानि योऽवपाया उत्खिन्नाया स्तानि

**लोहिततूलानि यानि बभ्रुतूलान्यर्जुनाति तान्यभिषुणुयादेतद्वै ब्रह्मणोरूपं साक्षादेव सोममभिषुणोति ॥ ७ ॥**

पुरा खलु वृत्रमावरकं कृतसोमपानमसुरमिन्द्रोहतवान् तस्य नस्तो नासिकाप्रदेशात् यः सोमः समधावत् वहिःप्रावर्त्तत भूमौ प्रसृतोऽभूत् तानीति विधेयापेक्षया नपुंसकलिङ्गं बहुवचनञ्च योवपाया उत्खिन्नायास्तानि लोहिततूलानि, यानि बभ्रुतूलान्यर्ज्जुनानि तूलसमबभ्रुवर्णमञ्जरीयुक्तानि अर्जुनानि श्यामलानि तृणानि अभवन्त यस्य वपाया उत्खिन्नायाः सोमः समधावत् तानि लोहिततूलान्यभवत्, उभयेषां मध्ये यानि बभ्रुतूलान्यर्जुनानि तानि पूतीकाभावेऽभिषुणुयात् एतदेव हि साक्षाद्ब्रह्मणो रूपं यद्बभ्रुवर्णत्वं एवं सति साक्षात्प्रत्यक्षमेव सोममभिषुणोति अभिषुतवान् भवति ॥ ७ ॥

तस्मिन्नपहृतसोमप्रयोगे सामानि विधित्सुः ब्राह्मणाच्छंसिनः पृष्ठस्तोत्रनिवर्त्तकमेकं साम विधत्ते ।

**आयन्तीयं ब्रह्मसाम कार्य्यं सदेवैनं करोति ॥८॥**

आयन्त इव सूर्य्यमित्यस्यामुत्पन्नं साम आयन्तीयं तद्ब्रह्मसाम कर्त्तव्यं कृतेन च तेन एनं यज्ञं सदेव प्रशस्तमेव करोति ॥८

अथान्यत्सामद्वयं विधत्ते ।

**यज्ञायज्ञीयमनुष्टुभि प्रोहेद्वाचैवैनं समर्द्धयति वारवन्तीयमग्निष्टोमसाम कार्य्यमिन्द्रियस्य वीर्य्यस्य परिगृहीत्यै ॥ ९ ॥**

आर्भवपवमाने पुरोजितीवो अन्धस इति योऽयमानुष्टुभस्तृचः तस्मिन्ननुष्टुभि आनुष्टभे तृचे यज्ञायज्ञीयं साम प्रोहेत् यद्यपि वेयगाने यज्ञायज्ञीयं यज्ञायज्ञावो अग्नय इत्यत्रैवाम्नातं तथापि अनुष्टुभि ऊहेन कर्त्तव्यमित्यर्थः तस्य हि यज्ञायज्ञीयस्य वागिति निधनं भवति तथा सत्येनं यज्ञं वाचैव समर्द्धयति समृद्धं करोति अश्वं नत्वा वारवन्तमित्यस्यामुत्पन्नं साम वारवन्तीयं तदग्निष्टोमसामत्वेन यज्ञायज्ञाव इति प्रगाथे कार्य्यं तस्य च साम्नो वारणहेतुत्वादपि वारवन्तीयमिति संज्ञा एवं सति साम इन्द्रियस्य बलस्य वीर्य्यस्य च परिगृहीत्यै स्वीकरणाय भवति ॥ ९ ॥

अथ दक्षिणां विधत्ते।

**पञ्च दक्षिणादेयाः ॥ १० ॥**

दक्षिणाशब्देन गौरुच्यते पञ्च गावो दक्षिणात्वेन ऋत्विग्भ्यो देया इति ॥ १० ॥

तदेतत्प्रशंसति।

**पाङ्क्तो यज्ञोयावान्यज्ञस्तमेवारभते ॥ ११ ॥**

यज्ञस्तावत्पाङ्क्तस्त्रीणि सवनानि अवभृथोऽनुबध्या चेति यद्वा धानाः करम्भः परिवापः पुरोडाशः पयस्येति पञ्च सवनीयहवींषि तद्युक्तत्वात्पाङ्क्तः दक्षिणापि पञ्चसंख्यावती अतो यावान्यत्परिमाणको यज्ञस्तं तत्परिमाणकमेव यज्ञमारभते अनेन पञ्चदक्षिणाविधानेन संकल्पावसरे दृप्तानां दक्षिणानां बाध उक्तो भवति ॥ ११ ॥

अथैतं सोमयागं समाप्य प्रायश्चित्तार्थं पुनः सोमेन साङ्गमनुष्ठेयमिति विधत्ते।

## अवभृथादुदेत्य पुनर्दीक्षेत ॥ १२ ॥

अवभृथादवभृथं कृत्वा तदनन्तरं उदेत्य उदयनीयाद्युदवसानीयान्तं कृत्वा पुनस्तस्मा एवं क्रतवे दीक्षेत दीक्षणीयाद्युदवसानीयान्तं सर्वं कर्त्तव्यं ॥ १२ ॥

## तत्र तद्दद्याद्यद्दास्यं स्यात् ॥ १३ ॥

तत्र यस्मिन् यज्ञे दक्षिणाद्रव्यं दद्यात् पूर्वस्मिन् प्रयोगे यद्दक्षिणाद्रव्यं दास्यन् स्याद्भवेत् पूर्वस्मिन् यज्ञे या सप्तैकविंशतिश्यादिका दक्षिणा सङ्कल्पिता तामस्मिन् द्वितीये प्रयोगे दद्यादित्यर्थः ॥ १३ ॥

इति ताण्ड्यमहाब्राह्मणे नवमाध्यायस्य

पञ्चमः खण्डः।

अथ षष्ठः खण्डः ।

अथ द्रोणकलशस्य भेदने प्रायश्चित्तं विधत्ते ।

यदि कलशोदीर्येत वषट्कारणिधनं ब्रह्मसाम कुर्य्यात् ॥ १ ॥

अत्र कलशशब्देन नामैकदेशेन द्रोणकलश एवोच्यते यथा भीमसेनो भीमः सत्यभामा भामेति स यदि दीर्य्येत भिद्येत तदानीं अभि त्वा पूर्वपीतय इत्यस्यामुत्पन्नं वषट्कारणिधनाख्यं साम वक्ष्यमाणास्वृक्षु ब्रह्मसामत्वेन कुर्य्यात् ॥ १ ॥

किमतो भवति तदाह ।

अवषट्कृतो वा एतस्य सोमः परा सिच्यते यस्य कलशोदीर्यते यद्वषट्कारणिधनं ब्रह्मसाम भवति वषट्कृत एवास्य सोमो भवति ॥ २ ॥

यस्य यजमानस्य कलशो दीर्य्यते भिद्यते एतस्य सोमः अवषट्कृतो वषट्काररहित एव परासिच्यते भूमौ प्रस्कन्द्यते कलशे दीर्णे तत्स्थः सोमः सर्वो भूमावेव स्रवति तदानीं वषट्कारो न प्रयुज्यत इत्यवषट्कृतत्वं तथा सति वषट्कारणिधनं ब्रह्मसाम भवतीति यत् तेन अस्य यजमानस्य स्कन्नः सोमो वषट्कृतोवषट्कारेण चोदिताधारे प्रक्षिप्त एव भवति ॥ २ ॥

तथास्य साम्नः आधारभूता ऋचो विधत्ते।

**बिधुं दद्राणᳪ समने बहूनामित्येतासु कार्य्यं ॥३॥**

एतदाद्यास्वृक्षु ऊहेन कर्त्तव्यमित्यर्थः ॥ ३ ॥

कलशविदारणे अयं तृचः प्रयोगार्ह इत्याह।

**एष हि बहूनाᳪ समने दीर्यते यत्कलशः ॥ ४ ॥**

यत् यः कलशो द्रोणकलश एष खलु बह्वनामृत्विजां सङ्ग-मने दीर्यते भिद्यते तस्माद्दद्राणं समने बहूनामिति उक्तार्थ-प्रतिपादकेन शब्देन योगात् एताः ऋचः दीर्णे कलशे प्रयो-गार्हा इत्यर्थः ॥ ४ ॥

तमिमं पक्षं दूषयति।

**तदाहुर्न वा आर्त्यार्त्तिरनूद्यात्या वा एष आ-र्त्तिमनुवदति यः कलशे दीर्णे दद्राणवतीषु करो-तीति ॥ ५ ॥**

तत्तत विषये ब्रह्मवादिनः आहुः कथमिति तदुच्यते नख-ल्वार्त्तौ सत्यामार्त्त्यैनैव वचनेन अनुवदितव्यं एवं सति उद्गाता कलशे दीर्णे दन्द्राणवतीषु विदारणप्रतिपादकदद्राणशब्दव-तीषु वषट्कारणिधनं करोति एषः आर्त्या वै आर्त्तिप्रतिपादि-कयैव वाचा आर्त्तिं कलशविदारणरूपामनुवदति अत एतन्न युक्तमिति ॥ ५ ॥

किं तर्हि कलशे दीर्णे कर्त्तव्यं तदाह।

आयन्तीयमेव कार्य्यं ॥ ६ ॥

आयन्तीयमेव ब्रह्मसामत्वेन कर्त्तव्यं न वषट्कारणिधनं ॥ ६

अस्यैव साम्नः पूर्व्वोक्तदोषनिवर्त्तकत्वे सामर्थ्यं दर्शयति।

प्रजापतिः प्रजा असृजत स दुग्धोरिरिचानो ऽमन्यत स एतच्चायन्तीयमपश्यत्तेनात्मानं समश्रीणात्प्रजया पशुभिरिन्द्रियेण ॥ ७ ॥

पुरा सर्वकारणभूतः प्रजापतिः सर्वाः प्रजा असृजत स्वात्मनि सूक्ष्मरूपेणावस्थितानि सर्वाणि कार्य्यजातानि स्थूलरूपेण बहिः सृष्टवानित्यर्थः अतोऽन्तर्गतस्य कार्य्यस्याभावात् स प्रजापतिर्दुग्धोरिरिचानोऽमन्यत यथा दुग्धा गौः अन्तरवस्थितपयसो विसर्जनाद्रिक्ता भवति तथा प्रजापतिरपि सर्व्वं सृष्ट्वा आत्मनातिरिक्ततया आसीत् सर्व्वरिक्ततापरिहाराय एतच्चायन्तीयमपश्यत्तेन च दृष्टेन साम्ना साधनेन प्रजया पुत्रपौत्रादिरूपया पशुभिर्गवादिभिरिन्द्रियेण चक्षुरादिना वीर्य्येण वा आत्मना समश्रीणात् समयोजयत् अतएव अयणसाधनत्वादस्य च आयन्तीयमिति संज्ञा ॥ ७॥

दुग्धइव वा एष रिरिचानो यस्य कलशो दीर्यते

यत् आयन्तीयं ब्रह्मसाम भवति पुनरेवात्मानꣳ सꣳश्रीणाति प्रजया पशुभिरिन्द्रियेण ॥ ८ ॥

तथा सति यस्य कलशो दीर्यते एष दुग्ध इव रिरिचानोरिक्तो भवति यागस्य विकलत्वेन फलप्राप्त्यभावात् अर्जितस्य धर्मस्य च प्रहाणाच्च यच्चायन्तीयमस्य यज्ञे ब्रह्मसाम भवति तेनैष आत्मानं प्रजादिभिः फलैः पुनरेव संश्रीणाति संयोजयति ॥ ८ ॥

अस्मिन् पक्षे वषट्कारणिधनस्याप्रयुक्तत्वात् भिन्नात् कलशात् पुनः सोमो अवषट्कृतः स्यात् तत्राह।

यदि आयन्तीयं ब्रह्मसाम स्याद्वैष्णवीष्वनुष्टुप्सु वषट्कारणिधनं कुर्य्यात् ॥ ९ ॥

यदि आयन्तीयं ब्रह्मसाम भवेत् तत्तदा वैष्णवीषु विष्णुसम्बधिनीष्वनुष्टुप्छन्दस्कास्वृक्षु पवस्व वाजसातय इत्यादिकासु वषट्कारणिधनं कुर्य्यादिति उत्तरत्र हि वैष्णव्योऽनुष्टुभो भवन्तीति पवस्व वाजसातय इत्यादीनां विधिः दृश्यते अतोऽत्रापि वैष्णव्योऽनुष्टुभस्ता एवेत्यवसीयते अत्र यदि आयन्तीयं ब्रह्मसाम स्यादिति शब्दं प्रयुञ्जानः एष पक्षो वैकल्पिक इति सूचयति अतोऽनयोः पक्षयोरन्यतरः कर्त्तव्य इत्यर्थः ॥ ९ ॥

वैष्णवीष्वनुष्टुप्सु तस्य साम्नः करणं प्रशंसति।

**यद्वै यज्ञस्य स्रवति वाचं प्रतिस्रवति वागनुष्टुप् यज्ञो विष्णुर्वाचैव यज्ञस्य छिद्रमपि दधाति ॥ १० ॥**

यज्ञस्य सम्बन्धि पदं स्रवति गच्छति अनुष्टुबेव सा वाक् अनुष्टुप् च वै सप्तदश समभवतामित्यादिना सर्वेषां गायत्र्यादीनां छन्दसां अनुष्टुभः सकाशात् सृष्टेर्वक्ष्यमाणत्वादनुष्टुभो वाक्त्वं विष्णुस्तु यज्ञ एव भवति अनुष्टुभो विष्णोश्चास्मिन् तृचे दर्शनात् यज्ञस्य छिद्रं द्रोणकलशविदारणात्मकं सुषिरं वाचैवापि दधाति आच्छादयति वषट्कारणिधनेन च भूमौ प्रस्नः सोमो वषट्कृतो भवतीत्यभिप्रायः ॥ १० ॥

सामान्तरं विधत्ते ।

**यद्वै यज्ञस्य स्रवत्यन्ततः स्रवति वारवन्तीयमग्निष्टोमसाम कार्य्यं यज्ञस्यैव छिद्रं वारयते ॥ ११ ॥**

यत् खलु यज्ञसम्बन्धि स्रवति अतोऽन्ते वारवन्तीयं वारणसाधनमेतत्संज्ञं साम अग्निष्टोमसामतया कार्यं तेन यज्ञस्यैव छिद्रं वारयते निवर्त्तयति समीकरोति यदवारयन् तद्वारवन्तीयस्य वारवन्तीयत्वमिति हि तन्निर्वचनं दृष्टं ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे नवमाध्यायस्य

षष्ठः खण्डः ।

---

अथ सप्तमः खण्डः ।

अथ सोमातिरेके प्रायश्चित्तमुच्यते अथ प्रथमं प्रातःसवने दर्शयति ।

**यदि प्रातःसवनात्सोमोऽतिरिच्येतास्ति सोमो अयं सुत इति मरुत्वतीषु गायत्रेण स्तुयुः ॥ १॥**

प्रातःसवनस्यान्ते चत्वार्याज्यस्तोत्राणि तत्र प्रतिस्तोत्रं सोमपूर्णाश्चमसा होतव्या तत्रान्ये चमसगणे द्रोणकलशाधवनीयपूतभृत्सु विद्यमानः सकलसोमरस आसेचनीयः तत्र यदि अन्यस्य चमसगणस्य होमात्प्राक् सोमोऽतिरिक्तो दृश्येत तं चमसेष्वेव पुनरानीय होतव्यं यद्यन्त्यचमसगणस्य होमादूर्द्ध्वं दृश्येत तदिदं प्रायश्चित्तं अयमर्थः प्रातःसवनात् प्रातःसवनसमाप्तेः ऊर्द्ध्वं यदि सोमोऽतिरिच्येत अतिरिक्तोऽधिको दृश्येत तदा अध्वर्यवस्तं सोमं होतृचमसमुख्येषु चमसेष्वानीय स्तोत्रमुपाकुर्व्वन्ति तदोद्गातारः अस्ति सोमो अयं सुत इति मरुत्वतीषु मरुच्छब्दयुतासु गायत्रीष्वृक्षु गायत्रेण तत्सवितुर्वरेण्यमित्यस्यामुत्पन्नेन गायत्रसाम्ना स्तुयुः स्तुवीरन् ॥ १ ॥

अथास्यामृचि मरुत्वच्छब्दवत्त्वं गायत्रत्वञ्च अतिरिक्तसोमानुगुणमिति स्तौति ।

**माध्यन्दिनं वा एष सवनं निकामयमानोऽभ्यति-**

रिच्यते यः प्रातःसवनादतिरिच्यते तस्मान्मरुत्वतीषु स्तुवन्ति मरुत्वद्धि माध्यन्दिनꣳ सवनं तस्मादु गायत्रीषु गायत्रं हि प्रातःसवनं ॥ २ ॥

यः सोमः प्रातःसवनादतिरिच्यते अतिरिक्तो भवति एष सोमो माध्यन्दिनं सवनं निकामयमानोऽनितरामभिलषन्नतिरिच्यते यस्मादेवं तस्मान्मरुत्वतीषु मरुच्छब्दयुक्तासु स्तुवन्ति कथमेतावता माध्यन्दिनसवनप्राप्तिः ततोच्यते मरुत्वतीयं मरुद्भिर्युक्तं हि माध्यन्दिनं सवनं तत्र मरुत्वतीयग्रहणं मरुत्वतीयशस्त्रस्य च विद्यमानत्वात् अतो मरुत्वतीषु स्तवनेनातिरिक्तस्य सोमस्य माध्यन्दिनसवनप्राप्तिः यस्मादेष सोमः प्रातःसवनसम्बद्धः तस्मादेव गायत्रीषु स्तुवन्ति गायत्रं गायत्रीछन्दस्कं हि प्रातःसवनं ॥ २ ॥

अस्य चातिरिक्तस्तोमक्लृप्तिमाह।

यस्मात् स्तोमादतिरिच्येत स एव स्तोमः कार्य्यः सलोमत्वाय ॥ ३ ॥

यस्मात्प्रातःसवनान्तिमात् स्तोमात् त्रिवृत्पञ्च दशादेरतिरिच्येत सोमोऽतिरिक्तो भवेत् तन्निमित्तकस्य स्तोत्रस्य सवनान्तिमस्तोत्रगमः कार्य्यः तस्यैव करणं सलोमत्वाय सारूप्याय भवति ॥ ३ ॥

अथ प्रसङ्गाद्धोतुरनुशंसनविशेषं विधत्ते ।

## ऐन्द्रावैष्णवं होतानुशंसति ॥ ४ ॥

इन्द्रश्च विष्णुश्चेन्द्राविष्णू तद्देवताकं शस्त्रं होतानुशंसति ऐन्द्रीभिर्वैष्णवीभिश्च स्तोत्रानुशंसनं कार्य्यमित्यर्थः तथा-चोक्तं सूत्रकृताश्वलायनेन प्रातःसवनेऽस्ति सोमो अयं सुतेति गौर्द्धयति मरुतामिति स्तोत्रीयानुरूपौ महां इन्द्रो य ओजसाऽतो देवा अवन्तु न इति ऐन्द्रीभिर्वैष्णवीभिश्च स्तोम-मतिशंसति ॥ ४ ॥

उक्तमुभयदैवत्यत्वं प्रशंसति ।

## वीर्यं वा इन्द्रो यज्ञो विष्णुर्वीर्यएव यज्ञे प्रति-तिष्ठति ॥ ५ ॥

वीर्य्यं वै वीर्य्यरूप एवेन्द्रः प्रजापतेः सकाशाद्वीर्यवतो बाहोरिन्द्रस्योत्पन्नत्वात् विष्णुश्च यज्ञएवमुभयदेवतासु शंसनेन वीर्यं वीर्ययुक्ते एव यज्ञे यजमानः प्रतितिष्ठतीति ॥ ५ ॥

अथ माध्यन्दिने सोमातिरेके प्रायश्चित्तं विधत्ते ।

## यदि माध्यन्दिनात्सवनादतिरिच्येत वरमहां असि सूर्येत्यादित्यवतीषु गौरीवितेन स्तुयुः ॥ ६ ॥

यदि माध्यन्दिनात् सवनात् यदि माध्यन्दिने सवनसमाप्ते-

रूर्द्धं सोमोऽतिरिच्येत माध्यन्दिनस्य अन्त्यचमसगणे कृते सोमोऽधिको दृश्येत चेत्तदा तं सोमं अध्वर्य्यवश्चमसेषून्नीय स्तोत्रमुपाकुर्व्वन्ति ततोद्गातारः बण्महां असि सूर्य्येत्यादित्यवतीषु आदित्यशब्दयुक्तासृक्षु गौरीवितेन गौरीवितिना ऋषिणा दृष्टं गौरीवितं अभि प्रगोपतिं गिरेत्यस्यामुत्पन्नं साम गौरीवितं तेन साम्ना स्तुयुः तत्साम एतासु ऊहेन कर्त्तव्य इत्यर्थः ॥ ६ ॥

अस्यातिरिक्तसोमस्य सवनद्वयान्तरालवर्त्तित्वेन उभयरूपस्यादित्यवतीषु बृहतीषु स्तूयमानं गौरीवितं अनुगुणमित्याह।

**तृतीयसवनं वा एष निकामयमानोऽभ्यतिरिच्यते यो माध्यन्दिनात्सवनादतिरिच्यते तस्मादादित्यवतीषु स्तुवन्त्यादित्यं हि तृतीयसवनं तस्मादु बृहतीषु बार्हतं हि माध्यन्दिनं सवनं ॥ ७ ॥**

यो माध्यन्दिनात् सवनात्सोमोऽतिरिच्यते एष तृतीयसवनमेव निकामयमानो नितरामिच्छन् अतिरिच्यते यस्मादेवं तस्मादादित्यवतीषु वण्महां असीत्यादित्यशब्दयुक्तासु स्तुवन्ति आदित्यदेवता हि तृतीयसवनं आदित्यग्रहणेन हि तृतीयसवनं प्रारभ्यते यस्मादेष माध्यन्दिनात् सवनादतिरिक्तः तस्मादु तस्मादेव बृहतीषु स्तुवन्ति माध्यन्दिनं सवनं बार्हतं हि पुनानः सोमधारया अभित्वा शूरेत्यादीनां बृहतीनां तत्र विनियुज्यमानत्वात् ॥ ७ ॥

प्रातःसवनवदस्य स्तोमक्लृप्तं होतुरनुशंसनञ्च सार्थवाद विधत्ते ।

यस्मात् स्तोमादतिरिच्येत स एव स्तोमः कार्यः सलोमत्वायैन्द्रावैष्णवं होतानुशंसति वीर्यं वा इन्द्रो यज्ञो विष्णुर्वीर्यएव यज्ञे प्रतितिष्ठति ॥ ८ ॥

पूर्ववद्व्याख्येयं एतावांस्तु विशेषः अथैन्द्रावैष्णवमिति महां इन्द्रो यऽच विष्णोर्नुकमित्येतदादिकमेव ऐन्द्रं वैष्णवं शंसनीयं तथाचाश्वलायनसूत्रं माध्यन्दिने वरुमहां असि सूर्यैत्यादित्ये दर्शितं वपुरिति प्रगाथौ स्तोतीयानुरूपौ महां इन्द्रो यऽच विष्णोर्नुकमिति ॥ ८ ॥

अथ तृतीयसवने सोमातिरिक्ते प्रायश्चित्तं विधत्ते ।

यदि तृतीयसवनादतिरिच्येत विष्णोः शिपिविष्टवतीषु गौरीवितेन स्तुयुः ॥ ६ ॥

यदि तृतीयसवनात्सोमोऽतिरिच्यते विष्णोः शिपिविष्टवतीषु स्तुवन्ति ॥ ६ ॥

कोऽतिशयः सामान्तरं परित्यज्य गौरीवितेन स्तुतौ किं वा प्रयोजनमिति तदुभयं दर्शयति ।

यज्ञो वै विष्णुः शिपिविष्टो यज्ञएव विष्णौ प्रति-

तिष्ठत्यतिरिक्तं गौरीवितं अतिरिक्त एवातिरिक्तं दधाति ॥ १० ॥

शिपयो रश्मयः तैराविष्टः शिपिविष्टः तथा च यास्कः शिपयोऽत्र रश्मय उच्यते तैराविष्टो भवति यद्वा शिपयः पशवः तैराविष्टः शिपिविष्टः यज्ञो वै विष्णुः पशवः शिपिरिति श्रुत्यन्तरात् ईदृशो विष्णुः यज्ञो वै यज्ञ रूप एव अत एतद्देवत्यासु स्तुतेन यज्ञात्मक एव विष्णौ प्रतितिष्ठति यदेतद्गौरीविताख्यं साम तदतिरिक्तं विभज्यमानाया वेदात्मिकाया वाचोऽधिकं देवा वै वाचं व्यभजन्त तस्या यो रसोऽत्यरिच्यत तद्गौरीवितमभवदिति श्रुतेः तथा सत्यतिरिक्ते सवनादधिक एव सोमे तदतिरिक्तं साम दधाति निदधाति तेन साम्ना अतिरिक्तदोषं शमयतीत्यर्थः ॥ १० ॥

अथ तृतीयसवने सोमातिरेके पक्षान्तरमाह ।

एतदन्यत् कुर्युरुक्थान्यत्प्रणयेयुरुक्थानि वा एष निकामयमानोऽभ्यतिरिच्यते योऽग्निष्टोमादतिरिच्यते यद्युक्थ्येभ्योऽतिरिच्येतातिरात्रः कार्यो रात्रिं वा एष निकामयमानोऽभ्यतिरिच्यते य उक्थ्येभ्योऽतिरिच्यते यदि रात्रेरतिरिच्येत विष्णोः शिपिविष्टवतीषु बृहता स्तुयुरेष तु वा अतिरिच्यत इत्याहुर्यो रात्रेरतिरिच्यत इति ॥ ११ ॥

अत्र पक्षान्तरद्योतको यदिशब्दोऽध्याहर्त्तव्यः, एतत्प्रवृत्त-कर्म्मणोऽन्यत् संस्थान्तरं यदि कुर्युः तदा तृतीयसवनादतिरि-क्तेन सोमेन अग्निष्टोमादन्यत् संस्थान्तरं कार्य्यं अतस्तमति-रिक्तं सोमं उक्थस्तोत्राणि प्रणायेयुः यः सोमोऽग्निष्टोमादति-रिच्यते एष उक्थस्तोत्राणि निकामयमानो नितरामभिलषन्न-भ्यतिरिच्यते अभिप्राप्तयेऽतिरिक्तो भवति यद्युक्थ्येभ्योऽतिरिक्तः स्यात् तदा अतिरात्रः कार्यः यः सोम उक्थ्येभ्योऽतिरिच्यते रात्रावनुष्ठीयमानास्त्रयः पर्यायाः प्रत्येकं चतुष्टयः स्तुतशस्त्राः त इमे रात्रिशब्देनोच्यते उक्थ्येभ्योऽतिरिक्त एष सोमो रात्रिमेव निकामयमानोऽभ्यतिरिच्यते अतोऽतिरात्रः कार्य्यः इत्यर्थः यदि रात्रे रात्रौ कर्त्तव्यात् पर्यायत्रयात् सन्धिस्तोत्राच्च सोमोऽतिरि-च्येत तदा पूर्वोक्तासु विष्णोः शिपिविष्टवतीषु बृहत्साम्ना स्तुयुः यः सोमो रात्रेरतिरिच्यते एष तु वै एष एवातिरिच्यत इत्य-भिज्ञा ब्रह्मवादिन आहुः यस्तु अग्निष्टोमादिकादतिरिच्यते सोऽतिरिक्तो न भवति उत्तरोत्तरसंस्थायाविद्यमानत्वात् तत्र च तस्य सोमस्योपयोगसम्भवात् अतिरात्रादूर्द्ध्वं अन्यत् संस्था-न्तरं नास्तीत्यतिरिक्तः सोम उपयोगाभावात् निरर्थको भवेत् अतोऽत्रैव प्रायश्चित्तमिति विशेषद्योतनाय तुशब्दः ॥ ११ ॥

ननु पूर्वं तृतीयसवनात् सोमातिरेके गौरीवितं साम विहितं तत्परित्यज्य कुतो बृहतो विधानमित्यत आह।

**अमुं वा एष लोकं निकामयमानोऽभ्यतिरिच्यते**

**यो रात्रेरतिरिच्यते बृहता स्तुवन्ति बृहदमुं लोक-माप्तमर्हति तमेवाप्नोति ॥ १२ ॥**

यः सोमो रात्रेः अतिरात्रसंस्थायाः अतिरिच्यते अमुं स्वर्गाख्यमेव लोकं एष निकामयमानोऽप्यतिरिच्यते अतिरात्रा-दधिकस्य संस्थान्तरस्याभावात् साम्नां मध्ये बृहत्सामैवामुं स्वर्गं लोकं आप्तुमर्हति नान्यत् द्वयं वाव रथन्तरं असौ वै लोको बृहदिति श्रुतेरतः स्वर्गन्निकामयमानमतिरिक्तमेवासौ बृहता प्राप्नोति ॥ १२ ॥

इति ताण्ड्यमहाब्राह्मणे नवमाध्यायस्य

सप्तमः खण्डः ।

---

अथ अष्टमः खण्डः ।

अत्र सत्रमध्ये दीक्षितानां मरणे कर्त्तव्यं विधत्ते ।

**यदि दीक्षितानां प्रमीयेत दग्ध्वास्थीन्युपनह्य यो नेदिष्ठो स्यात्तं दीक्षयित्वा सह यजेरन् ॥ १ ॥**

सत्रार्थं दीक्षितानां दीक्षणीयेष्ट्या संस्कृतानां मध्ये यदि कश्चित्प्रमीयेत म्रियेत तदा तन्निर्मन्थ्येन विधिवद्दग्ध्वा कृष्णा-जिने अस्थीन्युपनह्य मार्जालीयेऽतिदध्यात् ततोऽस्य मृतस्य यो नेदिष्ठो स्यात् अन्तिकतमः पुत्रादिः स्यात् तन्दीक्षयित्वा मृत-

प्रतिनिधित्वेन तं नेदिष्ठिनं दीक्षासंस्कृतेन तेन सह यजेरन् प्रक्रान्तं सत्रमनुतिष्ठेरन् ॥ १ ॥

अथ यस्मिन् सुत्येऽहनि यजमानो मृतः स्यात् तत्रोद्गातृकृत्यं विधत्ते ।

**एतदन्यत् कुर्य्युरभिषुत्यान्यत्सोममगृहीत्वा ग्रहान्यासौ दक्षिणा स्रक्तिस्तद्वा स्तुयुर्मार्जालीयेव ॥२॥**

सुत्यामध्ये यजमाने मृते सति अभिषुतं सोमं परित्यज्य अन्यत् लिङ्गव्यत्ययः अन्यं सोमं विधिवदभिषुत्य ग्रहस्यैन्द्रवायवादीन् अगृहीत्वा अध्वर्य्यवो विरमेयुः तस्मिन् काले यासौ वेदेर्दक्षिणा स्रक्तिः कोणः दक्षिणपूर्वा दिक तत् तत्र वा मार्जालीयधिष्ण्ये वोद्गातारः स्तुयुः स्तुवीरन् ॥ २ ॥

किं तत इत्याह ।

**अपि वा एतस्य यज्ञे यो दीक्षितः प्रमीयते तमेतेन निरवदयन्ते ॥ ३ ॥**

अपि वा वाक्यालङ्कारद्योतकौ निपातौ अपि खल्वेतस्य सप्तम्यर्थे षष्ठी एतस्मिन् यज्ञे यो दीक्षितः प्रमीयते म्रियते तमेतेन स्तोत्रेण निरवदयन्ते निर्गमयन्ति तर्पयन्ति दयदानगतिरक्षणहिंसादानेषु यद्वा एतस्यैवेति गृहपतिः कथ्यते एतस्य वर्त्तमानस्य गृहपतेर्यज्ञ इत्यर्थः ॥ ३ ॥

स्तुतिमात्रं विहितं तत्केन साधनेनेत्याकाङ्क्षायामाह ।

**यामेन स्तुवन्ति यमलोकमेवैनं गमयन्ति ॥ ४ ॥**

यामेन साम्ना विहितं स्तोत्रमुद्गातारः कुर्य्युः तेन स्तोत्रेण एनं मृतं यमलोकं पितृलोकमेव गमयन्ति ॥ ४ ॥

तस्य साम्न आधारभूतानां ऋचां संख्यां विधत्ते ।

**तिसृभिः स्तुवन्ति तृतीये हि लोके पितरः ॥५॥**

तिसृभिः स्तोत्रीयाभिः स्तोत्रं कार्यं तस्माद्भूर्लोकादारभ्य तृतीये हि लोके स्वर्गाख्ये पितरो वर्त्तन्ते अतस्त्रिसंख्यया तत्र-त्यान् पितॄनेवैनं प्रापयन्ति ॥ ५ ॥

स्तोत्रान्तरे स्तोत्रीयस्य तृचस्य स्तोमसम्पत्त्यर्थमावृत्तिर्दृष्टा तद्वदत्राप्यावृत्तिमाशङ्क्याह ।

**पराचीभिः स्तुवन्ति पराङिवेतोऽसौ लोकः ॥६॥**

पराचीभिः स्तुवन्ति पराङ्मुखाभिरनावृत्ताभिः स्तुवन्ति तत् कस्य हेतोः इतोऽस्माल्लोकादारभ्य असौ स्वर्गो लोकः पराङ् हि पराङ्मुखः परावृत्तः ऊर्द्ध्वप्रदेशावस्थितो हि अत-स्तत्प्राप्तये पराचीभिरेव स्तवनं युक्तमित्यर्थः तिसृभिरित्यृचां संख्या विहिता ॥ ६ ॥

अथ काः पुनस्ता ऋच इति तत्राह ।

सार्पराज्ञा ऋग्भिः स्तुवन्ति ॥ ७ ॥

सर्पराज्ञी नाम ब्रह्मवादिनी तस्या ऋग्भिस्तया दृष्टाभिः आयङ्गौः पृश्निरक्रमीदित्यादिभिर्ऋग्भिः स्तुवन्ति एतासु यामं साम कार्यमित्यर्थः ॥ ७ ॥

मृतस्यापनयने एता ऋचोऽनुकूला इति दर्शयति ।

अर्बुदः सर्प एताभिर्मृतां त्वचमपाहत मृतामेवै-ताभिस्त्वचमपघ्नते ॥ ८ ॥

अर्बुदः सर्परूपो अर्बुदऋषिः एताभिः सार्पराज्ञा दृष्टाभि-र्ऋग्भिर्मृतां जीर्णां आत्मीयां त्वचमपाहत अपागमयत् अत एताभिस्तुवाना अपि मृतं यजमानमपगमयन्तीत्यर्थः ॥ ८ ॥

अथैतस्मिन् स्तोत्रे समाप्ते एतासामृचामनुवचनं विधत्ते ।

ता ऋचोऽनुब्रुवन्तस्त्रिर्मार्जालीयं परियन्ति सव्या-नूरूनाघ्नानाः ॥ ६ ॥

अध्वर्युप्रभृतयः ऋत्विजः ताः पूर्वोक्ता ऋचो यमदेवत्याश्च अनुब्रुवन्तः अनुवचनधर्मेणोच्चारयन्तः आत्मीयान् सव्यान् वाम-भागस्थानूरून् ऊरुप्रदेशान् आघ्नानाः सव्यैः पाणिभिः ताड-यन्तः मार्जालीयं धिष्ण्यं त्रिस्त्रिवारं परियन्ति परितो गच्छ-न्ति ॥ ६ ॥

अथैतासामनुशंसनं विधाय प्रशंसति ।

**स्तुतमनुसंसत्यमुष्मिन्नेवैनं लोके निधुवन्ति ॥१०॥**

स्तुतं स्तोत्रं होतृप्रभृतयोऽनुशंसति स्तोत्रीयास्ता ऋचोऽनुशंसेयुः तेनानुशंसनेन अमुष्मिन् स्वर्गे लोके एव एनं मृतं यजमानं निधुवन्ति प्रीणयन्ति धू विधूनने अत्रोपसर्गवशात् प्रीणने वर्त्तते एतावत् कृत्वा ग्रहाग्रहीतव्याः ॥ १० ॥

तेषामेवैन्द्रवायवाग्रत्वं कर्त्तव्यमिति दर्शयति ।

**यन्ति वा एते पथ इत्याहुर्यें मृताय कुर्वन्तीत्यैन्द्रवायवाग्रान् ग्रहान् गृह्णते पुनः पन्थानमपियन्ति ॥ ११ ॥**

ये ऋत्विजो मृताय यजमानाय उक्तं क्रियाकलापं कुर्वन्ति एते पथो मार्गान् वर्त्तमानयज्ञलक्षणान् यन्ति अपगच्छन्ति इति ब्रह्मवादिन आहुः तस्य चेदं समाधानं ऐन्द्रवायवाग्रान् ऐन्द्रवायवो ग्रहो अग्रे प्रथमतो येषां ते तथोक्ताः तथाविधान् ग्रहान् गृह्णते गृह्णीयुः तदग्रत्वं हि प्राकृतं विकल्पितं यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यदि बृहत्सामा शुक्राग्रान् यदि जगत्सामाग्रयणाग्रानिति अतोऽत्र नित्यार्थं पुनर्विधानं तथा च यस्मात्पथो यज्ञमार्गान् पूर्वं प्रच्युताः तमेव पन्थानं पुनरपियन्ति अपिगच्छन्ति ॥ ११ ॥

अथास्मिन् यज्ञे बहिष्पवमानस्याग्निपावमानी प्रतिपत कार्येति विधत्ते ।

**अग्न आयूंषि पवसइति प्रतिपत्कार्य्या य एव जीवन्ति तेष्वायुर्दधाति ॥ १२ ॥**

अग्न आयूंषि पवस इति बहिष्पवमानस्य प्रतिपत् कार्या यद्यप्यत्र ऋङ्मात्रं प्रतीयते तथापि तृचसूक्तानामादिग्रहणेन विधिरनादेश इति सूत्रकारेण परिभाषितत्वात् एतदादिकस्तृच एव ग्राह्यः अग्न आयूंषि पवस इति आयुर्लिङ्गात् यएव दीक्षिता जीवन्ति तेष्वायुर्दधाति स्थापयति ॥ १२ ॥

इत्थं प्रवृत्तं सत्रं समाप्य पुनः संवत्सरान्ते कर्त्तव्यमिति दर्शयति ।

**संवत्सरेऽस्थीनि याजयेयुः संवत्सरो वै सर्वस्य शान्तिर्यत्पुरा संवत्सराद्याजयेयुर्वाचमरुष्कृतां क्रूरामृच्छेयुः ॥ १३ ॥**

यागानन्तरं संवत्सरे पूर्णे मृतस्य दीक्षितस्यास्थीनि याजयेयुः अपूर्णे संवत्सरे याजयेयुश्चेत् वाचमरुष्कृतां क्रूरामृच्छेयुः प्राप्नुयुः ॥ १३ ॥

तस्मिन्नस्थिकर्तृकयज्ञे स्तोत्रपरिमाणाभावं स्तोमपरिमाणमाह ।

**असम्मितं स्तोत्रꣳ स्यादसम्मितोऽसौ लोकस्त्रिवृतः पवमानाः स्युः सप्तदशमितरत्सर्वं ॥ १४ ॥**

तस्मिन्नस्थिकर्तृके यज्ञे स्तोत्रमसम्मितमपरिमितं स्याद्भवेत् स्तोत्रपरिमाणन्नापेक्ष्यमित्यर्थः तत्कुतो हेतोः हि यस्मादसौ स्वर्गो लोकोऽसम्मितोऽपरिमितस्तस्मात् तत्प्राप्तये अपरिमितं स्तोत्रं स्यादित्यर्थः एवमेव स्तोमस्याप्यपरिमितत्वे प्रसक्तमिदमुच्यते पवमानास्त्रिषु सवनेषु वर्त्तमानाः बहिष्पवमानाद्यास्त्रिवृतः त्रिवृत्स्तोमयुक्ताः कार्याः इतरत् पवमानव्यतिरिक्तं सर्वं स्तोत्रं वप्तदशं सप्तदशस्तोमकं कार्यं ॥ १४ ॥

तदेतदुभयं प्रशंसति।

**यत्त्रिवृतः पवमाना भवन्ति प्राणा वै त्रिवृत्प्राणानेवोपयन्ति यत्सप्तदशमितरत् सर्वं प्रजापतिर्वै सप्तदशः प्रजापतिमेवोपयन्ति ॥ १५ ॥**

स्पष्टमेतत् ॥ १५ ॥

अथास्मिन् अस्थिकर्त्तृकप्रयोगे प्रातिस्विकं ग्रहाग्रत्वं विधत्ते।

**प्राणापानैर्वा एते व्यृध्यन्त इत्याहुर्ये ऋताय कुर्वन्तीति मैत्रावरुणाग्रान् ग्रहान् गृह्णते प्राणापानौ मित्रावरुणौ प्राणापानैरेव समृध्यन्ते ॥ १६ ॥**

एते ऋत्विजः प्राणापानैः प्राणवायुभिरपानवायुभिश्च विप्रयुज्यन्ते इत्याहुर्ब्रह्मवादिनः ये मृताय यजमानाय आर्त्विज्यं कुर्व्वन्तीति अत्रायं परिहारः प्रातःसवने विद्यमानान् ग्रहान् मैत्रावरुणाग्रान् मित्रावरुणौ देवते यस्य मैत्रावरुणः अग्रे प्रमुखे येषां ते तथोक्ताः तथाविधान् ग्रहान् गृह्णते गृह्णीयुः मित्रस्य वरुणस्येति यौ देवौ तावेव प्राणापानौ अतस्तद्देवत्यग्रहाग्रत्वेन प्राणापानैरेव एते समृध्यन्ते समृद्धा भवन्ति चिरजीविनो भवन्तीत्यर्थः॥ १६ ॥

इति ताण्ड्यमहाब्राह्मणे नवमाध्यायस्य

अष्टमः खण्डः।

---

अथ नवमः खण्डः।

अथ द्रोणकलशस्थस्य सोमस्य क्षये प्रायश्चित्तं विधित्सुस्तस्य दोषमाह।

**यस्य कलश उपदस्यति कलशमेवास्योपदस्यन्तं प्राणोऽनूपदस्यति प्राणो हि सोमः॥ १॥**

यस्य यजमानस्य कलशो द्रोणकलशस्थसोम उपदस्यति क्षयं प्राप्नोति तस्य उपक्षये अस्य यजमानस्य उपदस्यन्तं क्षीयमाणं कलशं अनु पश्चात् प्राण उपदस्यति यजमानस्य प्राणोऽपि क्षयं प्राप्नोति हि यस्मात् सोमः प्राणः प्राणहेतुः तस्मात्

सोमस्योपदासे प्राणोपदासो युक्त इत्यर्थः अत एवं सति प्रायश्चित्तमपेक्षितं ॥ १ ॥

अथ शाखान्तरीयं मतं तावद्दर्शयति ।

तदाहुः पयो वनयेदिति ॥ २ ॥

तत्र कलशे उपदासविषये आहुः केचिच्छाखिनः किमिति पयो वनयेदिति, द्रोणकलशस्थे सोम उपक्षीणे तत्र दुग्धं पयोऽवनीय तेन सोमकार्य्याणि कर्त्तव्यानीति ॥ २ ॥

अथ स्वमतं दर्शयति ।

अथो खल्वाहुरन्तर्हितमिव वा एतद्यत्पयो हिरण्यमेवापोऽभ्यवनयेद्धिरण्यमभ्युन्नयेदिति ॥ ३ ॥

अथो खल्विति पक्षान्तरपरिग्रहे अभिज्ञा ब्रह्मवादिन आहुः कथयन्ति य इति यत् एतदन्तर्हितमिव वै अन्तर्हितं असन्निकृष्टमप्रत्यक्षमेव दोहनादर्व्वाक् गवामूधसि वर्त्तमानस्याप्रत्यक्षत्वात् अतः सोमस्यान्तर्द्धाने अन्तर्हितस्य पयसोऽवनयनमयुक्तं किं तर्हि द्रोणकलशेऽवनेयन्तदुच्यते द्रोणकलशे हिरण्यं निधाय अपोऽभ्यवनयेत् अभिपूरयेदित्याहुः सोमस्य वा अभिषूयमाणस्य प्रिया तनूरुदक्रामत् तत्र सुवर्णं हिरण्यमभवदिति श्रुत्यन्तरात् सुवर्णं सोमस्य प्रियशरीरं अभि उपर्य्यर्थः सुवर्णस्योपरि वसतीवर्य्याख्या आयज्ञवीनभिश्रिता अवनयेदासिञ्चेत्

चमसानां उन्नयनकाले तेषु च हिरण्यं निधाय अभ्युन्नयेदभि-पूरयेदिति आहुः ब्रह्मवादिनः ब्रूयुः ॥ ३ ॥

अस्मिन् पक्षे प्रागुक्तस्य प्राणोपदासस्य परिहारो यथा भव-ति तथा दर्शयति।

**प्राणा वा आपोऽमृतं हिरण्यममृत एवास्य प्रा-णान् दधाति स सर्वमायुरेति ॥ ४ ॥**

आपः प्राणा वै प्राणरूपा एव तद्धेतुत्वात् अन्नमयं हि सोम्य मनः आपोमयः प्राण इति हि वयमधीमहे हिरण्यञ्च अमृतं मरणरहितं तस्य तैजसत्वेनात्यन्ताग्निसंयोगेऽपि विना-शाभावात् अत्र चापां हिरण्यस्य च समुच्चयविधानात् अस्य यजमानस्य प्राणान् अमृते मरणाभाव एव दधाति निदधाति स्थापयति अतः स यजमानः सर्वं सम्पूर्णं ब्राह्मणक्लिप्तं शत-वर्षलक्षणं आयुरेति प्राप्नोति ॥ ४ ॥

अथ नाराशंसस्योपशोषणे प्रायश्चित्तं विधित्सुः पूर्ववत्तस्य शोषणमनर्थहेतुरिति दर्शयति।

**यस्य नाराशंस उपवायति नाराशंसमेवास्योपवी-यन्तं प्राणोऽनूपदस्यति प्राणो हि सोमः ॥ ५ ॥**

सवनमुखेषु अग्नौ समुत्हुताः पुनर्भक्षिताः पुनर्वसतीवरीभिरा-प्यायस्वेति मन्त्रेण पूरिताश्चमसा नाराशंसाः सामान्याभिप्राय-

मेकवचनं यस्य यजमानस्य नाराशंस उपवायति उपशुष्यति उपवै शोषणे भौवादिक उपवायन्तमुपशुष्यन्तं नाराशंसमनु पश्चात् अस्य यजमानस्य प्राण उपदस्यति उपशुष्यति क्षय-मुपगच्छति नाराशंसात्मकः शुष्यमाणः सोमो हि यस्मात् प्राणसंस्कृतः तस्मादित्यर्थः ॥ ५ ॥

तत्र कर्त्तव्यमाह ।

**यमध्वर्य्युरन्ततो ग्रहं गृह्णीयात्तस्यासुमवनयेत् ॥६**

यमध्वर्य्युरन्ततः समीपे नाराशंसशोषणे समीपकाले गृह्णी-यात् तस्यैकदेशमग्नौ हुत्वा प्राणसंस्कृतं नाराशंसमासुं प्राप्त्यर्थं हुतशेषं चमसे च यथासिञ्चेत् तथा चाध्वर्युस्तत्वं यदि नारा-शंस उपदस्येद्यमध्वर्य्युः पूर्वग्रहं गृह्णीयात्तं वषट्कृते हुत्वा चमसाध्वर्य्यवे प्रयच्छेत्तेनैनं स आप्याययतीति ॥ ६ ॥

तदेतद्ग्रहावनयनं प्रशंसति ।

**प्रायश्चित्यै वै ग्रहो गृह्यते प्रायश्चित्यैवास्य प्राय-श्चित्तिं करोति ॥ ७ ॥**

नाराशंसोपशोषणसमये ग्रहो गृह्यते स न केवलं होमार्थं तथैव गृह्यते अपि तु सन्निधानात् प्रायश्चित्यै प्रायश्चित्तार्थ-मपि यतः प्रायश्चित्तार्थं गृहीतेन ग्रहेणैव अस्मै यजमानाय

प्रायश्चित्तिं प्रायोविनाशः तस्य समाधानं ज्ञानं चित्तिः नाराशंसोपशोषणजनितदोषस्योपशमनं करोति ॥ ७ ॥

भक्षिताभक्षितयोः सोमयोः संसर्गे प्रायश्चित्तमाह ।

यदि पीतापीतौ सोमौ सङ्गच्छेयातामन्तःपरिध्यङ्गारान्निर्वर्त्य जुहुयाद्धुतस्य चाहुतस्य चाहुतस्य हुतस्य च पीतापीतस्य सोमस्येन्द्राग्नी पिबतं सुतं स्वाहेति सैव तस्य प्रायश्चित्तिः ॥ ८ ॥

ग्रहचमसादिस्थं सोमं प्रथममग्नौ हुत्वा पश्चात् सदसि भक्षयन्ति अध्वर्य्युवषट्कर्त्तारौ होतादयोऽन्ये चमसिनश्च तत्र यदि पीतापीतौ सौमौ सङ्गच्छेयातां संसृजेयातां पीतशेष सोमोऽपीतेन अभक्षितेन सोमेन होमार्थमासादितेन वा यदि संसृष्टो भवेत् तदा अन्तःपरिधि परिधीनामन्तर्मध्ये अङ्गारान्निर्वर्त्य पृथक् कृत्य हुतस्य चेति संसृष्टं सोमं अङ्गारेषु जुहुयात् सैषाहुतिरेव तस्य संसर्गदोषस्य प्रायश्चित्तिः मन्त्रार्थस्तु मन्त्रेण विलक्षणस्य अग्नौ हुतस्य च अनेन क्रमेण संसृष्टस्य पीतापीतस्य होमानन्तरं पीतेन पीतावशेषितेन संसृष्टस्य अपीतस्य सोमस्य एकदेशं एतदेव विपर्य्ययस्योच्यते अहुतस्य हुतस्य चेति एवमुभयविधस्य पीतापीतस्य हुतशेषसोमः पीतः॰अहुतः सोमोऽपीतः तदुभयात्मकस्य एकदेशं सुतमभिषुतं

रसं हे इन्द्राग्नी पीबतं तदर्थं स्वाहा यच्छं तं सोममग्नौ प्रक्षि-
पामीति ॥ ८ ॥

यदि भक्षणायानीतो हुतशिष्टः सोमः केशकीटादिभि-
र्दुष्टः स्यात् तदा कर्त्तव्यमाह ।

## प्रजापतये स्वाहेत्यभक्षणीयस्य जुहुयादुत्तरार्द्ध- पूर्वार्द्ध उपरवः ॥ ९ ॥

प्रजापतये स्वाहेति मन्त्रेण अभक्षणीयस्य भक्षणानर्हस्य केशादिभिर्दूषितस्य सोमस्य कर्मणि षष्ठी अभक्षणीयं सोमं जुहुयात् प्रक्षिपेत् कुत्र होम इत्यपेक्षायामाह उत्तरार्द्ध- पूर्वार्द्ध उपरव इति उपरवा नाम दक्षिणहविर्धानस्य अधस्तात् परोक्षं खातास्त्वारो गर्त्ताः तत्रोत्तरार्द्धे भवौ द्वौ गर्तौ उत्त- रार्द्धौ पूर्वार्द्धे पूर्वदिक्स्थे ऐशान्यां दिशि वर्त्तमाने उपरवे अभक्षणीयः प्रक्षेप्य अत्र यज्जुहोति तदाहवनीय इति जुहोति चोदनाया आहवनीय एव होमाधारत्वेन प्राप्यते यद्यपि तथापि पदे जुहोतीत्यत्र यथा आहवनीयस्य बाध एवमत्रापि द्रष्टव्यः ॥ ९ ॥

अभिदृष्टस्य सोमस्य भक्षणमन्त्रं विधत्ते ।

## इन्दुरिन्दुमवागादित्यवदृष्टस्य भक्षयेत् ॥ १० ॥

इन्दुरित्यादिना मन्त्रेण अवदृष्टस्य वर्षणेन दूषितस्य सोम-

स्य क्रियाग्रहणं कर्त्तव्यमिति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे बहुलमिति षष्ठी तं सोमं भक्षयेत् ॥ १० ॥

अस्य च मन्त्रस्य शेषं दर्शयति।

**तस्य तइन्दविन्द्रपीतस्येन्द्रियावतः सर्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि ॥ ११ ॥**

अयमर्थः इन्दुरयं रसात्मकः सोमः इदममृतमयं द्युस्थानं सोमं अवागात् अवाप्नोत् हे इन्दो तस्य तथाविधस्य ते तवांशं अहं भक्षयामि ईदृशस्य तव इन्द्रपीतस्येन्द्रेण पीतस्येन्द्रियावतो वीर्यवतः सर्वगणस्य सर्वैर्ऋत्विग्गणैरर्पितस्योपहूतस्याध्वर्युरुपह्वयस्वेत्यादिभिः कृतोपह्वानस्य भक्षयिता विशेष्यते सर्वगणः समानभक्षैरन्यैर्ऋत्विग्गणैश्चक्षुरादीन्द्रियगणैर्वा युक्तः अन्यैर्ऋत्विग्भिर्मन्त्रेणानुज्ञातः चमसहोमानन्तरं तद्भक्षणं कर्त्तव्यं ॥ ११ ॥

कृते च तस्मिन्नध्वर्युणा स्तोत्रोपाकरणं कार्यं यद्यध्वर्युश्चमसभक्षणात्पूर्वं स्तोत्रमुपाकुर्य्यात् तदा कर्त्तव्यं प्रायश्चित्तमाह।

**हिरण्यगर्भः समवर्त्तताग्र इत्याज्येनाभ्युपाकृतस्य जुहुयादाग्नीध्रं परेत्य भूतानां जातः पतिरेक आसीत्सदाधार पृथिवीं द्यामुतेमां तस्मै त इन्दो हविषा विधेम स्वाहेति सैव तस्य प्रायश्चित्तिः ॥१२॥**

अभ्युपाकृतस्य अभक्षितं चमसमभिलक्ष्य उपाकृतं प्रारब्धं

स्तोत्रं यस्य स तथोक्तः तादृशस्य यजमानस्य अनुपाकरणदोषापगमनार्थं आग्नीध्रधिष्ण्यं परेत्य प्राप्य तस्मिन् हिरण्यगर्भ इति मन्त्रेणाज्येन द्रव्येण जुहुयात् भूतानां जात इत्यादिरस्य मन्त्रस्य शेषः तस्य दोषस्य सैवाहुतिः प्रायश्चित्तिरुपशमहेतुः मन्त्रस्यायमर्थः अत्र सर्वस्य भूतभौतिकप्रपञ्चस्य सृष्टेः पुरा हिरण्यगर्भः हिरण्मयस्याण्डस्य गर्भभूतः प्रजापतिः समवर्त्तत परस्माद्ब्रह्मणः सकाशादजायत स च जातो जातमात्र एव भूतानां स्वात्मनासृज्यानां सर्वेषां भूतजातानां एकोऽसाधारणः पतिरासीत् अधिपतिरभवत् स च पृथिवीं विस्तीर्णां द्यामुत अपि इमां भूमिं च दाधार धृतवान् तस्मै हिरण्यगर्भाय हे इन्द्रो सोम ते तव सम्बन्धिना हविषा विधेम परिचरेम तस्मा इति कर्मणि चतुर्थी ॥ १२ ॥

अथ सोमाभिषवार्थग्राव्णां भेदे कर्त्तव्यमाह ।

**यदि ग्रावापि शीर्यते पशुभिर्यजमानो व्यृध्यते पशवो वै ग्रावाणो द्युतानस्य मारुतस्य साम्ना स्तुयुः ॥ १३ ॥**

यद्यभिषवसमये ग्रावापि शीर्य्यते अपि शीर्णो भिन्नो भवेत् तदा यजमानः पशुभिर्गवादिभिर्व्यृध्यते पशवो हीयन्ते ग्रावाणः पशव एव खलु पशवो यथा क्षीरादिरसप्रदाः एवं सोमरसप्रदातृत्वात् ग्राव्णां पशुत्वं तया च तद्भेदनेन पशुहानिर्युज्यते तदैतत्प्रायश्चित्तं कर्त्तव्यं मारुतस्य मरुत्सम्बन्धिनः

द्युतानस्य एतत् संज्ञस्य ऋषेः साम्ना तत्साम च दृतस्य त्वा
श्वरथादित्यस्यामुत्पन्नं तेन साम्ना होतारः स्तुवीरन् ॥ १३ ॥

ग्राव्णो भेदे साम्नः सम्बन्धो योग्य इत्याह ।

मारुता वै ग्रावाणः स्वेनैवैनाꣳस्तद्रूपेण समर्द्ध-
यति ॥ १४ ॥

मारुता मरुद्देवत्याः खलु ग्रावाणः प्रमरुतो नशतोपाचया
इति हि ग्राव्णां योजनमन्त्रः तस्मान्मारुतस्य साम्नः करणेन
एनान् ग्राव्णः स्वेनैव रूपेण समर्द्धयति समृद्धान् पूर्णावयवान्
करोति ॥ १४ ॥

अथ सोमस्याभिदाहे प्रायश्चित्तं विधत्ते ।

यदि सोममभिदहेद्ग्रहानध्वर्युः स्थापयेत स्तो-
त्राण्युद्गाता शस्त्राणि होताथ यथापूर्वं यज्ञेन चरेयुः
पञ्च दक्षिणा देयाः पाङ्क्तो यज्ञोयावान्यज्ञस्तमेवा-
रभतेऽवभृथादुदेत्य पुनर्दीक्षेत तत्र तद्द्याद्यद्दास्यं
स्यात् पुरा द्वादश्या दीक्षेत यद्द्वादशीमतिनयेदन्त-
र्हीयेत ॥ १५ ॥

यदि सदोहविर्धानादीनि प्रमादादग्निना दह्येरन् तदा
सोमादिकं सर्वं यज्ञसम्भारमादाय तत्समीपे पुनरन्यद्देवयज-

नमध्यवसाय यज्ञशेषोऽनुष्ठेयः यदि सोममपि हविर्धानादिभिः सहाग्निरभिदहेत् तदाध्वर्युर्ग्रहानूर्ध्वपात्राणि वायव्यानि सादयेत एतावदनुष्ठितमेतावतेति कृताकृतविभागं जानीयात् तथोद्गाता स्तोत्राणि होता च शस्त्राणि, अथानन्तरमन्यद्देवयजनमध्यवसाय यथा पूर्वं पूर्ववदन्यं सोममाहृत्याभिषुत्य पुनरवशिष्टेन यज्ञेन चरेयुर्जयेयुः क्रतुसंकल्पावसरे यावत्यो दक्षिणादातव्यत्वेन संकल्पितास्तासां स्थाने पञ्चैव दक्षिणा गावो देयाः यज्ञस्य पाङ्क्तत्वं पूर्वमुक्तं तथा सति यावान् यत्परिमाणको यज्ञः तत्परिमाणमेव यज्ञं पञ्चसंख्योपेतया दक्षिणया आरभते गृह्णाति ततोऽवभृथादनन्तरं उदेत्य उदयनीयाद्युदवसानीयान्तं कृत्वा पुनस्तस्यैव क्रतोरनुष्ठानाय दीक्षेत यज्ञो हि यज्ञस्य प्रायश्चित्तिरिति श्रुतेः यद्दक्षिणाद्रव्यं पूर्वस्मिन् यज्ञे दास्यन् स्यात् तत्र तस्मिन् पुनः क्रियमाणे यज्ञे तद्दद्यात् यज्ञप्राप्तेरूर्ध्वं या द्वादशी द्वादशसंख्यापूरणी रात्रिः तस्या द्वादश्याः पुरा पुरस्ताद्दीक्षेत प्रायश्चित्तरूपस्य यज्ञान्तरस्य दीक्षा कार्या यद्यपि द्वादशीं रात्रिमतिनयेत् दीक्षया अतिक्रामयेत् द्वादशादूर्ध्वं दीक्षेतेत्यर्थः तदा स यज्ञोऽन्तर्धीयेत अन्तर्हितोऽदृश्यो भवेत् पुनरनुष्ठानेन प्राप्तुं न शक्यते इत्यर्थः ॥ १५ ॥

इति ताण्ड्यमहाब्राह्मणे नवमाध्यायस्य

नवमः खण्डः।

---

अथ दशमः खण्डः ।

प्रवर्ग्येण चरत्सु महावीरस्य भेदने प्रायश्चित्तं विधत्ते ।

यदि महावीरो भिद्येत तं भिन्नमभिमृशेद्यच्चते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः सन्धाता सन्धिं मघवा पुरूवसुर्निष्कर्त्ता विहृतं पुनरिति महीम निष्ठा इवेन्द्र त्वदरणा इव वनानि न प्रजहितान्यद्रिवो दुरोषासो अमन्महह्यमन्महोत्तदाशवो नुग्राभस्य हव-हन्सहस्रस्तु ते महता शूर राधसानुस्तोमं मदेमहीति महावीरं भिन्नमभिमृशेत् सैव तस्य प्रायश्चित्तिः ॥१॥

यदि प्रवृञ्जनसमये महावीरः त्रुट्येत् प्राप्तमाते कर्म्मये तस्मिन् पात्रे बहुलं घृतमानीय सन्तप्ते तस्मिन् आज्ये पयः आनीय प्रवृज्यते स प्रवर्ग्यपात्रविशेषो महावीरः स यदि भिद्येत भिन्नो भवेत् तदा तं भिन्नं महावीरं यच्चते चिदभिश्रिष इति त्वचेना-भिमृशेत् सैव तस्य भेदने प्रायश्चित्तिः पुनर्महावीरमभिमृशे-दिति वचनमुपसंहारार्थं ऋचामयमर्थः अभिश्रिषः अभिश्लि-ष्यति दृढी भवति अनेनेति अभिश्लिदभिन्नस्य सन्धायकं द्रव्यं रलयोरेकत्वस्मरणात् रेफः सन्धायकात् अन्यस्मात् द्रव्यात् ऋते चित् ऋतेऽपि अन्याराद्दितरर्त्ते इति पञ्चमी भिन्नस्य सन्धायकं जतुप्रभृतिकं द्रव्यमन्तरेणापि यः मघवा इन्द्रः सन्धिं सन्धातव्यं

भिन्नं वस्तु सन्धाता स्वसामर्थ्येनैव भिन्नस्य पुनरेकीकर्त्ता कदा जतुभ्यः आतृदः पुरा अंसमध्यदेहयोः सन्धयः जतूणि अत्र तत् साहश्यात् महावीरस्योपरिभागो लक्ष्यते षष्ठ्यर्थे चतुर्थी वक्तव्येति जतूणां आतृदः आतर्दनाद्धिंसनाच्छेदनात् पुरा पूर्वमेव उत्तृदिरहिंसानादरयोः सपि तृदो: कसुन्निति क्रत्यार्थे तृदेः कसुन्प्रत्ययः क्त्वा त्वोऽसुन् कसुन इत्यव्ययत्वादव्ययादाप्सुप इति पञ्चम्यालुक् मघवा इन्द्रः पुरूवसुर्बहुधनः विहृतं विनष्टं पुनर्निष्कर्त्ता निःशेषेण कर्त्ता पुनरुत्पादयितेत्यर्थः ह्वृ कौटिल्ये ह्वृ ह्वरेश्छन्दसीति निष्ठायां ह्व भावः हे इन्द्र अरणा इव रणन्तीति रणा स्तोतारः अस्तोतारो यथा त्वत्तो बिभ्यति एवं वयं निष्ठ्या हिंसाया इव त्वत्तोभाभेम भीता माभूमह अद्रिवः अद्रिणात्यनेनेत्यद्रिर्वज्रः तद्वन्निन्द्र प्रजहितानि प्रकर्षेण हातव्यानि वनान्यरण्यानि त्वत्प्रसादादुरोषासः उषितुं दग्धुं बाधितुमशक्याः सन्तो वयं नामन्महि न जानीमस्त्वत्प्रसिद्धं त्वदीयं रक्षणं अमन्महीत् इच्छब्दोऽवधारणे अक्षासिष्म एव कथंभूता आशवो व्यापनशीला हे वृत्रहन् अनुग्राभः त्वया अनुगृह्यमाणश्च अपि वा हे शूर ते तव सम्बन्धिना महता प्रभूतेन हेतुना स्तोमं त्वदीयं स्तोत्रमनु पश्चात् सकृद्युगपत् एकहेलयैव सुष्टु मदेमहि हृष्टाः ॥ १ ॥

निखातस्य यूपस्य यज्ञमध्ये विरोहणकृतां हानिं दर्शयति।

असुर्य्यं वा एतस्माद्वर्णं कृत्वा तेज इन्द्रियं वीर्य-

**मन्नाद्यं प्रजाः पशवोऽपक्रामन्ति यस्य यूपो विरोहति स ईश्वरा पापीयान् भवितोः ॥ २ ॥**

यस्य यजमानस्य यज्ञमध्ये यूपो विरोहति अष्टास्वत्र। यूपात्पुनः शाखान्तरमुत्पद्यते एतस्माद्यजमानात् असूर्यं असुरस्य स्वभूतं मायामयं वर्णं रूपं ज्ञात्वा तेज आदीन्यपक्रामन्ति अपगच्छन्ति तेजः शरीरकान्तिः इन्द्रियं अक्षयोग्यं वीर्य्यं बलकर्म अन्नाद्यं प्रशस्तमन्नं प्रजाः पुत्रभृत्यादयः पशवो गवाद्याः एवमेतेषां अपक्रमणात् स यजमानः पापीयान् भवितोः ईश्वरा निकृष्टो भवितुं समर्थः स्यादीश्वरेतोसुन्कसुनाविति भवतेस्तुमर्थे तोसुन् प्रत्ययः ॥ २ ॥

तत्र प्रायश्चित्तत्वेन पशुयागः कर्त्तव्य इत्याह।

**त्वाष्ट्रं पशुं बहुरूपमालभेत त्वष्टा वै पशूनां रूपाणां विकर्त्ता तमेव तदुपधावति स एनन्तेजसेन्द्रियेण वीर्य्येणान्नाद्येन प्रजया पशुभिः पुनः समर्द्धयति सैव तस्य प्रायश्चित्तिः ॥ ३ ॥**

त्वाष्ट्रं त्वष्टृदेवत्यं बहुरूपं नानारूपं पशुं छागं आलभेत संज्ञपयेत् बहुरूपेण पशुना त्वष्टारं यजेतेत्यर्थः नानारूपस्य त्वष्टुश्च सम्बन्धयोग्यतामाह त्वष्टा खलु पशूनां गवादीनां यानि परस्परं विभिन्नानि रूपाणि तेषां विकर्त्ता विविधं कर्त्ता तथा

च तैत्तिरीयकं यावच्छो वै रेतः सिक्तस्य त्वष्टा रूपाणि विक-रोति तावच्छो वै प्रजायत इति तत्तेन बहुरूपेण पशुना तं त्वष्टारमेव उपधावत्युपगच्छति स च त्वष्टामेन पशुना प्रीतः सन् एनं यजमानं तेज आदिभिः पुनः समर्द्धयति समृद्धं करोति तस्य यपविरोहस्य सैव प्रायश्चित्तिः।

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥ ३॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीर-बुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माध-वीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे नवमाऽध्यायस्य दशमः खण्डः।

नवमाध्यायः समाप्तिमगमत्।

# दशमोऽध्यायः ।

अथ प्रथमः खण्डः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥

अथ व्यूढ़द्वादशाहविधातुकामः तदीयदशरात्रगतान् त्रिवृदादिस्तोमान् क्रमेण प्रशंसिष्यन् प्रथमं त्रिवृतं स्तौति ।

**अग्निना पृथिव्यौषधिभिस्तेनायं लोकस्त्रिवृद्वायुनान्तरिक्षेण वयोभिस्तेनैष लोकस्त्रिवृद्योऽयमन्तरादित्येन दिवा नक्षत्रैस्तेनासौ लोकस्त्रिवृदेतदेव त्रिवृत आयतनमेषास्य बन्धुता ॥ १ ॥**

अयं पुरोवर्त्ती लोक अग्निना देवतया पृथिव्या औषधिभिस्तेनोत्पन्नाभिस्तैनैतत्त्रितयेन त्रिवृत् त्रिगुणः तथान्तरिक्षेण वायुना तदधिष्ठात्रा देवतया वयोभिः पक्षिभिः तेनैतत्त्रितयेन योऽयमन्तरा द्यावापृथिव्योर्मध्ये लोक एष भूसन्निहितस्त्रिवृत् त्रिगुणः तथा दिवा द्युलक्षणस्थानेनादित्येन तदधिष्ठात्रा देवतया नक्षत्रैस्तत्स्थैरुडुभिस्तेनैतत्त्रितयेन एव उपरि दृश्यमानो लोकः योऽयं अन्तरा स्वर्गस्य पृथिवी चान्तरिक्षलोक इत्यर्थः तथा

सूर्य्येण दिवा स्वर्गेण नक्षत्रैश्चासौ स्वर्गो लोकस्त्रिवृत् त्रिगुणः एवं त्रयाणां लोकानां प्रत्येकं त्रिवृत्त्वान्नवसंख्याको यः समुदायः एतदेव त्रिवृतः ऋतुन्नवकात्मकस्य त्रिवृत्स्तोमस्य आयतनं स्थानं एषैवास्य त्रिवृतो बन्धुता बन्धुसमूहः त्रिगुणास्त्रयो लोकास्त्रिवृतः परिजनभूता इत्यर्थः ग्रामजनबन्धुसहायेभ्यः सामूहिकस्तल् प्रत्ययः ॥ १ ॥

एतद्वेदनमपि फलवदित्याह ।

आयतनवान् बन्धुमान् भवति य एवं वेद ॥ २ ॥

एवमुक्तप्रकारेण यस्त्रिवृतं वेद सोऽपि आयतनवान् स्थानवान् बन्धुमान् बान्धवैर्युक्तश्च भवति ॥ २ ॥

तस्यैव त्रिवृतो ब्रह्मवादिभिः कृतां प्रतिष्ठारूपतां प्रदर्श्योपपादयति ।

तमु प्रतिष्ठेत्याहुस्त्रिवृद्ध्येवैषु लोकेषु प्रतिष्ठितः ॥ ३

तमु तमेव त्रिवृतं प्रतिष्ठा प्रतिष्ठात्मक इति ब्रह्मवादिनः आहुः कुतो हेतोः त्रिवृद्ध्येव त्रिवृत्स्तोमएव खलु एषु पूर्व्वमुक्तेषु भूरादिषु प्रत्येकं त्रिगुणलोकेषु प्रतिष्ठितः तदायतनत्वप्रतिपादनात् तत्रैवाश्रितो वर्त्तते ततस्तस्य प्रतिष्ठात्वं ॥ ३ ॥

अथ पञ्चदशस्तोमं पूर्ववत् प्रशंसति ।

अर्द्धमास एव पञ्चदशस्यायतनमेषास्य बन्धुता ॥४

मासस्यार्द्धमर्द्धमासः अर्द्धं नपुंसकमित्येकादेशि समासः अर्द्धमासेऽपि पञ्चदशसंख्या विद्यते अतः पञ्चदशस्य पञ्चदशस्तोमस्यार्द्धमास एव आयतनं स्थानं एष एवार्द्धमासः अस्य पञ्चदशमुपपादयतीति बन्धुता बन्धुसमूहः निर्द्दिश्यमानयोरेकतामापादतन्ति सर्व्वनामानि पर्य्यायेण वचनात् लिङ्गतामुपाददत इति वचनात् तत्रातिनिर्द्दिश्यमानापेक्षया एषेति स्त्रीलिङ्गता ॥ ४ ॥

वेदनं प्रशंसति ।

आयतनवान् बन्धुमान् भवति य एवं वेद ॥ ५ ॥

स्पष्टं ॥ ५ ॥

अथास्य पञ्चदशस्य ओजोवलरूपत्वं अभिधायोपपादयति ।

तं वोजोवलमित्याहुरर्द्धमासशो हि प्रजाः पशव ओजोवलं पुष्यन्ति ॥ ६ ॥

तं पञ्चदशस्तोमं ओजो रूपं वलरूपं चेत्याहुः ब्रह्मवादिनः वलहेतुः शरीरे वर्त्तमानो रसविशेष ओजो वलं प्रसिद्धं अर्द्धमासश अर्द्धमासेन हि क्षीरादिरसोपजीवनसहितेन प्रजाः मनुष्याः पशवश्च ओजो बलं च पुष्यन्ति पोषयन्ति वर्द्धयन्ति अतस्तदायतनोभयात्मकत्वमुपपन्नं ॥ ६ ॥

अथ सप्तदशस्तोमं प्रशंसति ।

**संवत्सर एव सप्तदशस्यायतनं द्वादशमासाः पञ्चर्त्तव एतदेव सप्तदशस्यायतनमेषास्य बन्धुता ॥ ७ ॥**

सप्तदशस्तोमस्य संवत्सर एवायतनं कथं तस्य सप्तदशसंख्यायोगस्तदाह द्वादशमासाश्चैत्राद्याः हेमन्तशिशिरयोः समासेनैकत्वात् पञ्चर्त्तव एवं सप्तदशावयवः संवत्सरः तस्मादेतदेव सप्तदशस्यायतनमित्युक्तस्योपसंहारः गतमन्यत् ॥ ७ ॥

अथ पूर्ववद्वेदनं प्रशंसति।

**आयतनवान् बन्धुमान् भवति य एवं वेद ॥ ८ ॥**

स्पष्टं ॥ ८ ॥

अथास्य सप्तदशस्य प्रजातिरूपत्वं विधायोपपादयति।

**तमु प्रजातिरित्याहुः संवत्सरं हि प्रजाः पशवोऽनुप्रजायन्ते ॥ ९ ॥**

तं सप्तदशस्तोमं प्रजातिः प्रजोत्पत्त्यात्मक इत्याहुर्ब्रह्मवादिनः कुतः हि यस्मात् संवत्सरमनु सम्बत्सरानन्तरमेव गर्भरूपाः प्रजाः पशवश्च प्रजायन्ते उत्पद्यन्ते अतः संवत्सरायतनसप्तदशस्य प्रजात्यात्मकत्वमुपपन्नं ॥ ९ ॥

अथैकविंशस्तोमं प्रशंसति।

**आदित्यएवैकविंशस्यायतनं द्वादशमासाः पञ्च-**

र्त्रिवृत्त्रय इमे लोका असावादित्य एकविंश एतदेवै-
कविंशस्यायनमेषास्य बन्धुता ॥ १० ॥

एकविंशस्य स्तोमस्य आदित्य एवायतनं आश्रयः मासाद्य-
पेक्षया तस्यैकविंशत्वेन उभयोः साद्दश्यात् गतमन्यत् ॥ १० ॥

तद्वेदनं प्रशंसति ।

आयतनवान् बन्धुमान् भवति य एवं वेद ॥११॥

स्पष्टोऽर्थः ॥ ११ ॥

अथास्य स्तोमस्य देवतल्पत्वं विधाय तद्वेदनेन सह स्तौति ।

तमु देवतल्प इत्याहुः प्र देवतल्पमाप्नोति य एवं
वेद ॥ १२ ॥

स्पष्टं ॥ १२ ॥

अथ त्रिणवस्तोमं प्रशंसति ।

त्रिवृदेव त्रिणवस्यायतनमेषास्य बन्धुता ॥ १३॥

त्रिवृतः स्तोम एव त्रिणवस्तोमस्याश्रयः यतोऽयं त्रिवृत्
त्रयः समुदायात्मकः समुदायस्च समुदायाश्रय एवेति प्र-
सिद्धं ॥ १३ ॥

अथैतद्वेदनं प्रशंसति ।

आयतनवान् बन्धुमान् भवति य एवं वेद ॥१४॥

स्पष्टोऽर्थः ॥ १४ ॥

तस्य च पुष्टरूपत्वं विधाय प्रशंसति ।

तमु पुष्टिरित्याहुस्त्रिवृद्ध्येवैष पुष्टः ॥ १५ ॥

तं त्रिणवस्तोमं पुष्टिः अभिवृद्धिः तद्रूप इत्याहुर्ब्रह्मवादिनः हि यस्मादेष त्रिणवः पुष्टोऽभिवृद्धः त्रिवृदेव त्रिणवस्तोम एव त्रिरावृत्त्या पुष्टस्त्रिणव इति व्यपदिश्यते अतोऽस्य पुष्टरूपता युक्ता ॥ १५ ॥

अथ त्रयस्त्रिंशस्तोमं प्रशंसति ।

देवता एव त्रयस्त्रिꣳशस्यायतनं त्रयस्त्रिꣳशद्देवताः प्रजापतिस्त्रयस्त्रिꣳश एतदेव त्रयस्त्रिꣳशस्यायतनमेषास्य बन्धुता ॥ १६ ॥

त्रयस्त्रिंशस्य स्तोमस्य देवतायतनं त्रयस्त्रिंशत्संख्याका हि देवताः अष्टौ वसव एकादश रुद्रा द्वादशादित्या इन्द्रश्चेति द्वात्रिंशत् प्रजापतिस्त्रयस्त्रिंशत् संख्यापूरकः अतएव तत् एव देवाः त्रयस्त्रिंशस्यायतनमित्युक्तोपसंहारः एषैवास्य स्तोमस्य बन्धुता बन्धुसमूहः त्रयस्त्रिंशद्देवा एवास्य परिजनभूता इत्यर्थः ॥ १६ ॥

एतद्वेदनं फलवदित्याह।

आयतनवान् बन्धुमान् भवति य एवं वेद ॥१७॥

स्पष्टं ॥ १७ ॥

अथास्य स्तोमस्य नाकरूपत्वं उपपादयति।

तमु नाक इत्याहुर्न हि प्रजापतिः कस्मैचनाकं ॥१८

तमु तमेव त्रयस्त्रिंशं स्तोमं नाकं कं सुखं अकं दुःखं नास्त्यस्मिन् अकमिति नाकः दुःखलेशोनास्य संस्पृष्टः सुखात्मक इत्याहुः न खलु प्रजापतिः सर्व्वं स्रष्टा कस्मैचन कस्मैचिदपि पुरुषाय अकं दुःखहेतुर्भवति अतस्तदायतनोऽपि स्तोमः नाकात्मक इत्यर्थः नभ्राण्नपान्नवेदानासत्या इत्यादिना प्रकृतिभावस्य निपातनात् नलोपो नञः इति नाक इत्यत्र नञो नकारस्य लोपो न भवति ॥ १८ ॥

अथ चतुर्व्विंशादयः स्तोमाः छन्दोमास्तान् प्रशंसति।

छन्दांस्येव छन्दोमानामायतनमेषैषां बन्धुता ॥१९

छन्दोभिर्गायत्र्यादिभिर्मीयमानाश्चतुर्विंशादयः स्तोमाश्छन्दोमास्तेषां छन्दांस्येव गायत्र्यादीन्येवायतनं तत्र चतुर्व्विंशस्य चतुर्व्विंशत्यक्षरा गायत्री चतुश्चत्वारिंशस्य द्वितीयस्य चतुश्चत्वारिंशदक्षरात्मिका त्रिष्टुवायतनं अष्टाचत्वारिंशस्य तृतीयस्य

छन्दोमस्याष्टाचत्वारिंशदक्षरा जगती आयतनं एषां छन्दोमा-नामेषैषां बन्धुता एषां गायत्र्यादय एव बन्धुसमूहः ॥ १९ ॥

एतद्वेदनं प्रशंसति ।

**आयतनवान् बन्धुमान् भवति य एवं वेद ॥२०॥**

स्पष्टं ॥ २० ॥

अथ तेषां छन्दोमानां पुष्टिरूपत्वं विधाय प्रशंसति ।

**तानु पुष्टिरित्याहुः पशवो हि छन्दोमाः ॥२१॥**

तानेतांश्चतुर्विंशादीन् पुष्टिः पुष्ट्यात्मका इत्याहुः हि यस्मात् पशवश्छन्दोमाः पशुसाधनभूताः पशवश्च क्षीरादिप्रदानेन पुष्टि-हेतव इति युक्तं छन्दोमानां पुष्टिरूपत्वम् ॥ २१ ॥

इति ताण्ड्यमहाब्राह्मणे दशमाध्यायस्य

प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

अथ द्वादशाहं विधित्सुस्तत्प्रकृतिभूतस्याग्निष्टोमस्य ज्योति-ष्टोमत्वन्निर्वक्तुमुपक्रमते ।

**प्रजापतिः प्रजा असृजत सोऽताम्यत्तस्मै वाग्-ज्योतिरुदगृह्णात्सोऽब्रवीत्कोमेऽयं ज्योतिरुदग्रहीदिति**

**स्वैव ते वागित्यब्रतोत्तामब्रवीद्विराजं त्वा छन्दसां ज्योतिष्कृत्वा यजान्ता इति ॥ १ ॥**

पुरा प्रजापतिः सर्वकारणभूतः स्रष्टा स्रष्टव्याः प्रजाः प्रजोपलक्षितं सर्वं जगद् असृजत सृष्टवान् सृष्ट्वा च सः प्रजापतिरताम्यत् अश्राम्यत् व्यापारबाहुल्यात् एवं श्रान्तस्य तस्मै षष्ठ्यर्थे चतुर्थी तस्य प्रजापतेर्ज्योतिस्तेजः वाग्देवता उत् अस्मात् उत्कृष्टा गृहीतवती स प्रजापतिरब्रवीत् मे मदीयं ज्योतिस्तेजः कोऽयमुदग्रहीदिति ततोऽर्वाक् प्रजापतिरब्रवीत् किमिति तदुच्यते हे प्रजापते ते तव स्वैव स्वभूतैव वागहं त्वदीयं ज्योतिरुदग्रहीषमिति ततस्तां वाचं प्रजापतिरब्रवीत् हे वाक्ज्योतिः मदीयेन ज्योतिषा मुक्तां त्वा त्वां छन्दसां गायत्र्यादीनां मध्ये विराजं विराडात्मकं छन्दः कृत्वा यजान्तै यजमानाय यजान्ता इति यजेर्लेटि लेटोऽडाटाविति आडागमः वैतोऽन्यत्र इत्यैत्वं नित्यं विराजो ज्योतिरात्मकत्वमुक्तं ॥ १ ॥

अथाग्निष्टोमस्य ज्योतिष्टोमत्वं निर्वक्ति।

**तस्माद्यो विराजꣳ स्तोमः सम्पद्यते तं ज्योतिष्टोमोऽग्निष्टोम इत्याचक्षते विराड्ढि छन्दसां ज्योतिः ॥ २ ॥**

यस्मादुक्तप्रकारेण विराड् ज्योतिरात्मिका तस्मात् यः स्तोमः अत्र स्तोमशब्देन स्तोमवान् याग उच्यते यः सोमयागो

विराजं सम्पद्यते यत्र संस्तुतानां सर्वासां स्तोत्रीयाणां दश-संख्याविभागे अन्ततो दशसंख्ययैव परिसमाप्यते तान्यवशिष्यते स यागः विराजं सम्पद्यते दशाक्षरा विराडिति श्रुतेर्दशसंख्ययैव विराट् तस्मात् सद्भावात् तं स्तोमं स्तोमवन्तं सोमयागं ज्योतिष्टोमोऽग्निष्टोम इत्याचक्षते ज्योतीरूपविराट्सम्पत्तेः ज्योतिष्टोमः अन्तिमे स्तोत्रे यज्ञायज्ञावो अग्नयः इत्यग्निष्टोम इत्युभयथा अभिज्ञा ब्रह्मवादिनः कथयन्ति अस्य चाग्निष्टोमस्य संस्तुतस्य विराड्सम्पत्तिः षोडशेऽध्याये तस्य नवतिशतं स्तोत्रीया इत्यत्रास्माभिः प्रदर्शिता पूर्वमाख्यायिकया यद्विराजो ज्योतीरूपत्वमुक्तं तदेव विव्रियते छन्दसां गायत्र्यादीनां मध्ये विराट्छन्दो हि ज्योतिः ज्योतिरात्मिका इति ॥ २ ॥

एतद्ब्राह्मणार्थं जानतोऽपि ज्योतिर्भवतीत्याह।

**ज्योतिः समानां भवति य एवं वेद ॥ ३ ॥**

समानानां सदृशानां ज्ञातीनां मध्ये एवं वेदिता ज्योतिः ज्योतिष्मान् तेजस्वी भवति इत्थं विराट्सम्पत्त्या ज्योतिष्टोमत्वं प्राप्तो योऽग्निष्टोमः षष्ठाद्यध्यायैर्विस्तरेण विहितः स इह द्वादशाहे प्रकृततयाऽस्माभिरीरितः ॥ ३ ॥

अथ द्वादशाहमध्ये यो दशरात्र तत्साधनभूतानां त्रिवृदादिस्तोमानां गायत्र्यादिछन्दसाञ्च सृष्टिमाह।

**अनुष्टुप् च वै सप्तदशश्च समभवतां सानुष्टुप् चतु-**

**चत्तराणि छन्दांस्यसृजत षडुत्तरान् स्तोमान् सप्त-दशस्तावेतान्मध्यतः प्राजनयतां ॥ ४ ॥**

गायत्र्यादीनां मध्ये येऽयमनुष्टुप् सा वाग्वा अनुष्टुबिति श्रुतेः वाग्रूपत्वात् उत्पत्तिन्नापेक्षते सप्तदशस्य स्तोमस्य प्रजापतिः प्रजापतिर्वै सप्तदश इति श्रुतेः अतस्तस्याप्युत्पत्त्यपेक्षा नास्ति वाग्रूपा अनुष्टुप् च प्राजापत्यात्मकः सप्तदशश्च स्त्रीपुंसौ समभवतां मिथुनीभूतयोस्तयोर्मध्ये सानुष्टुप् समानाकृतीनि चतुरुत्तराणि उत्तरोत्तरं चतुःसंख्ययातिरिक्तानि छन्दांसि गायत्र्यादीन्यसृजत सृष्टवती सप्तदशस्तोमस्तु स्वसमानजातीयान् षडुत्तरान् उत्तरोत्तरं षट्संख्ययाधिकान् स्तोमान् त्रिवृदादीनसृजत छन्दसाम्मध्ये गायत्री चतुर्विंशत्यक्षरा ततश्चतुराधिक्येनोष्णिगष्टाविंशत्यक्षरा भवति पुनश्चतुराधिक्ये सति द्वात्रिंशदक्षरानुष्टुप् सम्पद्यते ततोऽक्षरचतुष्टयेन षट्त्रिंशदक्षरा बृहतीत्यादि चतुरुत्तरत्वं छन्दसां द्रष्टव्यं स्तोमेष्वपि त्रिवृत् स्तोमो नवस्तोत्रीयात्मकः ततः षड्भिः स्तोत्रीयाभिराधिक्ये पञ्चदशस्तोमो निष्पद्यते पुनः षडाधिक्ये एकविंशस्तोम इत्यादि षडुत्तरत्वं स्तोमानामप्यूहनीयं तावनुष्टुप् सप्तदशावेतान् पूर्वोक्तान् विराजं मध्यतः उष्णिगनुष्टुभोर्मध्ये प्राजनयतां उत्पादितवन्तौ त्रिंशदक्षरा हि विराट् द्वाभ्यामक्षराभ्यामधिका उष्णिगेव विराट् भवति तथा चोक्तं द्वाभ्यां विराट् स्वाराजाविति ॥ ४ ॥

अथ सृष्टानां स्तोमानां मध्ये स्तोमद्वयस्य अहर्विशेषसम्बन्धं प्रदर्शयन् तयोरह्नोरहरन्तरात् पूर्वप्रयोज्यत्वमाह।

**त्रिवृच्च त्रिणवश्च राथन्तरौ तावजश्चाश्वश्चान्वसृज्येतां तस्मात्तौ राथन्तरं प्राचीनं प्रधूनुतः॥ ५॥**

त्रिवृच्च त्रिणवश्चेत्येतौ द्वौ स्तोमौ राथन्तरौ राथन्तरेऽहनि प्रयोज्यौ पृष्ठ्यषडहे प्रथमतृतीयपञ्चमानि त्रीण्यहानि राथन्तराणि अन्यानि त्रीणि बार्हतानि तदुक्तं सूत्रकृताश्वलायनेन अभिप्लवपृष्ठ्याहानि रथन्तरपृष्ठान्ययुजानि बृहत्पृष्ठानीतराणीति अतः एतौ स्तोमौ तृतीयस्याह्नः सप्तदशस्यावरुद्धत्वात् प्रथमपञ्चमयोरह्नोः प्रयोज्यत्वाद्राथन्तरौ तौ स्तोमावनु पश्चात् तयोः सृष्ट्यनन्तरं अजश्चाश्वश्चेत्येतौ पशू असृज्येतां सृष्टावभूतां तस्मात्पश्चात् सृष्टत्वात् तावजाश्वौ राथन्तरमहः प्राचीनं प्राक्तनं बार्हता द्वितीयादेरह्नः पूर्वं प्रयोज्यं प्रधूनुतः प्रक्षिपतः स्थापयत इत्यर्थः॥ ५॥

अथान्ययोः स्तोमयोरहर्विशेषसम्बन्धं दर्शयन् तस्याहर्विशेषस्य पश्चाद्भाविनोऽपि दीप्तिर्भवतीत्याह।

**पञ्चदशश्चैकविंशश्च बार्हतौ तौ गौश्चाविश्चान्वसृज्येतां तस्मात्तौ बार्हतं प्राचीनं भास्कुरुतः॥ ६॥**

पञ्चदशश्चैकविंशश्चेति द्वौ स्तोमौ बार्हतौ बार्हतेऽहनि प्रयो-

ज्यौ तावनुपश्चात् गौश्च अविश्चेत्येतौ पशू असृज्येतां सृष्टाव-भूतां तस्माद्वार्हतयोः पञ्चदशैकविंशयोरनन्तरं सृष्टत्वात् तौ पशू वार्हतं द्वितीयचतुर्थादिकमहः प्राचीनं प्राक्तनं अञ्चगति-पूजनयोः यथा पूजितं भवति तथा भास्कुरुतः भासा दीप्त्या युक्तं कुरुतः ॥ ६ ॥

एवं वाग्रूपानुष्टुभः सकाशात् प्रजापतिः आत्मनः सप्तदशा-द्योक्ता सृष्टिं जानतः फलमाह ।

**एवं वै विद्वांसमाहुरपि ग्राम्याणां पशूनां वाच आजानाति ॥ ७ ॥**

एवमुक्तां सृष्टिं विद्वांसं जानन्तं पुरुषं आहुर्ब्रह्मवादिनः किमिति ग्राम्याणां ग्रामे भवानाङ्गवादीनां पशूनामपि च वाचः अव्यक्तानि वाक्यानि आजानाति अभिजानातीति एवं विद्वान् पुरुषः मनुष्यवाक्यस्येव पशूनां वाक्यस्यापि आकारणा-दिकमर्थञ्जानातीत्यर्थः ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे दशमाध्यायस्य

द्वितीयः खण्डः ।

---

अथ तृतीयः खण्डः ।

**अथ द्वादशाहस्य द्विफलकं विधित्सुराह ॥**

प्रजापतिरकामयत बहु स्यां प्रजायेयेति स आत्मन्नृत्वमपश्यत्तत ऋत्विजोऽसृजत यदृत्वादसृजत तदृत्विजामृत्विक्त्वं तैरेतं द्वादशाहमुपासीदत्सोऽराध्नोत् ॥ १ ॥

अस्य जगतः सृष्टेः प्रागवस्थायां प्रजापतिः सर्वस्य स्रष्टा अकामयत ऐच्छत् किमिति बहु स्यां नानाविधकार्य्यात्मना अहं बहु भवेयं तदर्थं प्रजायेय प्रजारूपेणोत्पद्येयेति एवं कामयमानः स प्रजापतिः आत्मन् आत्मनि स्वस्मिन् ऋत्वं ऋतौ ऋतुकाले भवद्गर्भस्य कारणं बीजमपश्यत् दृष्टवान् ततस्तस्मात् आत्मनि ऋत्वात् प्रजापतिर्ऋत्विजोऽसृजत यद्यस्मात् ऋत्वात् सृष्टवान् तस्मात् ऋत्विजां याजकानां ऋत्विक्त्वं ऋत्विगिति नाम सम्पन्नं एवमृत्विजः सृष्ट्वा तैः सृष्टैः एतं द्वादशाहं अत्राहःशब्देन सवनत्रयात्मकः सोमयागः उक्तः तमेतं द्वादशाहसंज्ञं सोमयागं उपासीदत् उपागच्छत् अन्वतिष्ठदित्यर्थः तदनुष्ठानेन स प्रजापतिरराध्नोत् प्रजादिभिः समृद्धोऽभवत् रुधसाधसंसिद्धाविति धातुः एवं द्वादशाहः समृद्धिहेतुरित्युक्तं ॥ १ ॥

अथ तस्मिन् द्वादशाहे या द्वादशदीक्षा सापि समृद्धिहेतुः किमु वक्तव्यं द्वादशाहस्य समृद्धिहेतुत्वमित्यभिप्रायेणाह ।

पिता नोऽरात्सीदिति मासा उपासीदꣳस्ते दीक्षयैवाराध्नुवन्नुपसत्सु त्रयोदशमदीक्षयꣳ सोऽनव्यमभव-

**तस्मादुपसत्सु द्विदीक्षाणोऽनुव्यं भवत्येव च हि त्रयोदशं मासमन्वक्षते नैव च ॥ २ ॥**

संवत्सरात्मकः प्रजापतिः नोऽस्माकं पिता अराध्नीत् अनेन द्वादशाहेन समृद्धोऽभूदिति बुद्धा मासाश्चैत्राद्या मासदेवता अपि एनं द्वादशाहमुपासीदन् अनुष्ठानमुपागच्छन् ते दीक्षयैव द्वादशदिवसनिष्पाद्येन दीक्षासंस्कारेणैव अराध्नुवन् समृद्धा अभवन् द्वादशभिर्दीक्षादिवसैरेव समृद्धा ते मासा उपसत्सु द्वादशाहस्य द्वादशदीक्षा द्वादशोपसदो द्वादशप्रसुत इति स्थितिः येषु दिवसेषु सायंप्रातःकालयोः प्रवर्ग्योपसद अनुष्ठानं ते दिवसा उपसद इत्युच्यन्ते तेषूपसद्दिवसेषु त्रयोदशसंख्यापूरकं संसर्पांहस्पत्याख्यं मासं अदीक्षयन् समृद्धा मासाः तमपि दीक्षया समस्कुर्वन् स त्रयोदशोमासः अनुव्यं अनुपूर्वाद्वेतेर्गतिकर्म्मणः सम्पदादिलक्षणाभावे क्विप् ततो द्वितीयैकवचने एरनेकाच इति यण् अनुव्यमनुगमनं प्रति अभवत् अजायत द्वादशानाम्मासानामनुगन्ता त्रयोदशो मासो जात इत्यर्थः यस्मात्ते पूर्वदीक्षया समृद्धाः अतः पश्चाद्भाविनो मासस्य त्रयोदशस्य युक्तमनुगन्तृत्वं यस्मादेवं तस्मादुपसत्सु द्विदीक्षाणो दीक्षां कृतवान् पुरुषोऽनुव्यं भवति अनुगमनं प्रति समर्थो भवति सर्वेषां पूर्वदीक्षाणामनुयायी भवतीति तस्मादुपसत्सु त्रयोदशेन न दीक्षितव्यं तथा चाध्वर्य्युसूत्रं एको द्वादशाहेन यजेत त्रयः षट् द्वादश त्रयोदश वा तेषामुपसत्सु त्रयोदशं

दीक्षयति तस्मात् द्वादशाहे त्रयोदशेन न ब्रह्मणा भवितव्यमित्येक इति अतएव मासान्तरवत् प्राधान्याभावात् कदाचिदेव त्रयोदशम्मासन्नैव चक्षते क्वचिदेव संवत्सरेऽस्तीति कथयन्ति न चैनं सर्वस्मिन् संवत्सरे एवमुक्तेन प्रकारेण द्वादशाहेन समृद्धिकामो यजेतेति विधिरुन्नेतव्यः ॥ २ ॥

अथ विहिते तस्मिन्नधिकारिविशेषानाह ।

**एकोदीक्षेतैको हि प्रजापतिरराध्नोद्द्वादश दीक्षेरन् द्वादश हि मासा अराध्नुवꣳश्चतुर्विंशतिर्दीक्षेरꣳश्चतुर्विंशतिर्ह्यर्द्धमासा अराध्नुवन् ॥ ३ ॥**

तस्मिन् द्वादशाहे एक एव दीक्षेत एकेनैव यजमानेन द्वादशाहोऽनुष्ठेयः हि यस्मात् प्रजापतिः एकएव यजमानः सन् अराध्नोत् तस्मादद्यापि एकयजमानकर्त्तृको द्वादशाहः द्वादशयजमानाः संहत्य द्वादशाहमनुष्ठाय समृद्धा अभूवन्निति हि पूर्व्वमुक्तं अतः संहतानामपि द्वादशानामद्यापि अनुष्ठानं गम्यते, अथवा चतुर्व्विंशतिसंख्याका यजमानाः द्वादशाहाय दीक्षेरन् चतुर्व्विंशतिसंख्याका ह्यर्द्धमासाः सकृदनुष्ठानेन पूर्व्वमराध्नुवन् एकैकस्मिन् मासे द्वौ द्वावर्द्धमासाविति मासानां समृद्धिरेव तदवयवानामर्द्धमासानामपि सैव समृद्धिरिति अभिप्रायेणेयं स्तुतिः ॥ ३ ॥

इतोऽधिकस्य दीक्षणं प्रतिषेधति ।

यदि पञ्चविंशोदीक्षेतेमे पञ्चेमे पञ्चेमे पञ्चेमे पञ्चेमे चत्वारोऽसावेक इति निर्दिशेयुर्य्यस्मा अराद्धिकामाः स्युस्तमेवाराद्धिरन्वेति सर्वइतरे राभ्नुवन्ति ॥ ४ ॥

यदि चतुर्व्विंशतेरधिकः पञ्चविंशः पञ्चविंशतिसंख्यापूरकोऽन्यः पुरुषो दीक्षेत तदा पञ्चशः पञ्चशः विंशतिसंख्यान्यजमानांश्चतुर्द्धा पृथक् कुर्यात् अवशिष्टानां पञ्चानाम्मध्ये इमे चत्वार इति चत्वारः पृथक् कर्त्तव्याः अथ यस्मै यजमानाय अराद्धिकामाः असमृद्धिकामाः स्युः असमृद्धिरस्मै भूयादिति कामयेरन् तं असौ देवदत्त एकोऽस्माद्यो वहिर्भूत इति निर्दिशेयुः विभजेयुः तमेव यजमानं अराद्धिरसमृद्धिरन्वेति अनुगच्छति इतरे सर्व्वे यजमानाराभ्नुवन्ति संसिध्यन्ति तस्मात् पञ्चविंशो न दीक्षितव्य इत्यर्थः यदि वहवो मिलित्वा द्वादशाहेन यजेरन् तत्रैको गृहपतिः इतरे सह दीक्षिणो यजमानाः यजमानकर्म्मणाम्मध्ये यानि केवलं क्रत्वर्थानि यूपाञ्जन ऋतुयाज्यादीनि तानि गृहपतिरेव कुर्य्यात् नेतरे यानि पुरुषार्थानि क्रतुफलभोक्तृत्वयोग्यतासम्पादकानि च दीक्षासंस्कारादीनि तानि सर्व्वे कुर्युः तथा च भवनापस्तम्बः सर्वे याजमाने स्थानिनः सर्वे याजमानं कुर्युर्गृहपतिरेव परार्थानि यथा यूपाञ्जनऋतुयाज्यानि गृहपतिरेव सामिधेनीकल्पेनावदानकल्पेनेति प्रकामेयुः यानि चान्यान्येवं रूपाणि स्युरिति ॥ ४ ॥

एवं सति स्वस्य गृहपतित्वं सह दीक्षिणोऽन्यांश्च यजमाना-न् यः कामयेत तस्य तत्प्राप्त्युपायं दर्शयति।

**यो वै देवानां गृहपतिं वेदाश्नुते गार्हपतं प्रगार्हं-पतमाप्नोति ॥ ५ ॥**

यो वै देवानां गृहपतिं सह दीक्षिणश्च वेद जानाति सगार्हपतं गृहपतित्वं सह दीक्षिणस्याश्नुते एतस्यैव विवरणं गार्हप्रतमाप्नोतीति ॥ ५ ॥

कोऽसौ देवानां गृहपतिः केवा सह दीक्षिण इत्युभयं दर्शयति।

**संवत्सरो वै देवानां गृहपतिः स एव प्रजापति-स्तस्य मासाएव सह दीक्षिणः ॥ ६ ॥**

संवत्सरः खलु देवानाम्मध्ये गृहपतिः कालात्मकस्य तस्य कथं गृहपतित्वं इत्याशङ्क्योच्यते स एव संवत्सरः प्रजापतिः प्रजापतिरेव संवत्सरात्मना वर्त्तमानो गृहपतिर्जात इत्यर्थः तस्य संवत्सरात्मनः प्रजापतेः मासा एव सह दीक्षिणः सह दीक्षमाणा अन्ये यजमाना अभवन् ॥ ६ ॥

एतदेवोपसंहरति।

**विन्दते सह दीक्षिणोऽश्नुते गार्हपतं प्रगार्हपत-माप्नोति य एवं वेद ॥ ७ ॥**

एवमुक्तमर्थं यो वेद जानाति सवेदिता सह दीक्षिषः सह दीक्षमाणानन्यान् यजमानान् विन्दते लभते स्वयं च गार्हपतं गृहपतित्वमश्नुते ॥ ७ ॥

अथ द्वादशाहं बृहत्यात्मना तुष्टुवानस्तस्य प्रथमं स्वाराज्य प्राप्तिहेतुतामाह ।

यो वै छन्दसां स्वराजं वेदाश्नुते स्वाराज्यं प्रस्वाराज्यमाप्नोति बृहती वाव छन्दसां स्वराड़श्नुते स्वाराज्यं प्रस्वाराज्यमाप्नोति य एवं वेद ॥ ८ ॥

यो वै यः छन्दसाङ्गायत्र्यादीनां मध्ये स्वराजं स्वयमेव राजमानां दीप्यमानां वेद स स्वाराज्यं स्वायत्तदीप्तिमत्तामश्नुते तस्यैव विवरणं प्रस्वाराज्यमाप्नोतीति का सौ छन्दसां स्वराडुच्यते बृहती खलु छन्दसाम्मध्ये स्वराट् स्वयमेव राजमाना यन्वित्याङ्गरन्यानि छन्दांसि वर्षीयांसि कस्माद्बृहत्युच्यत इत्यादिना बृहत्याः सर्वलोकव्यापकस्य चान्येषां छन्दसां बृहत्यन्तर्भावस्य चोक्तत्वात् अति स्पष्टमन्यत् ॥ ८ ॥

अथ स्वाराज्यप्राप्तिहेतुभूतं बृहत्यात्मना द्वादशाहम्प्रशंसति ।

तां वा एतामन्नाद्याय व्याष्टज्यासते यदेतं द्वादशाहं द्वादश दीक्षा द्वादशोपसदो द्वादश प्रसुतः षट्-

**त्रिंशदेता रात्रयो भवन्ति षट्‌त्रिंशदक्षरा बृहती॥९॥**

तां पूर्वोक्तां स्वराड्‌रूपामेवैतां बृहतीमन्नाद्याय अन्नाद्यफलाय व्यावृज्य विभज्य आसते अनुतिष्ठन्ति यत् ये यजमाना एतं द्वादशाहमासते कथं बृहत्या विभाग इत्युच्यते अथ द्वादशाहस्य द्वादशरात्रयो दीक्षाः पयोव्रतादिनियमात्मकया युक्ता भवन्ति ततो द्वादशरात्रयः उपसदः ततो द्वादशप्रसुतः सुत्या एवं षट्‌त्रिंशत्संख्याका एता रात्रयो दिवसाः भवन्ति बृहती च षट्‌त्रिंशदक्षरा ततो बृहतीमेवैवं त्रेधा विभज्य द्वादशाहं कुर्वाणाः अन्नाद्यायानुतिष्ठन्तीत्यन्वयः अतः स्वराडात्मिकया बृहत्या संस्तुतत्वात् द्वादशाहोऽपि स्वाराज्यहेतुरित्युक्तं भवति ॥ ९ ॥

अथोक्तं दीक्षादिकमवयुज्य प्रशंसति ।

**जायते वाव दीक्षया पुनीत उपसद्भिर्देवलोकमेव सुत्ययाप्येति ॥ १० ॥**

ब्राह्मणो वा एष जायते यो दीक्षित इति श्रुत्यन्तरात् द्वादशदिवसानुष्ठितया दीक्षितया पुनर्यजमानो जायते ततः कृताभिरुपसद्भिः पुनीते शुध्यति ततः शुद्धः सन् सुत्यया द्वादशदिवसकृतया तत्साध्येन सोमयागेन देवलोकं देवानां लोकं स्वर्गादिकं अप्येत्यपिगच्छति अनेन देवलोकप्राप्तिरपि द्वादशाहस्य फलमित्युक्तं भवति ॥ १० ॥

अथानेन संवत्सरसम्बन्धीन्द्रियवीर्य्यप्राप्तिरपि भवतीत्याह ।

**एतावद्वाव संवत्सरइन्द्रियं वीर्यं यदेतारात्रयो द्वादश पौर्णमास्यो द्वादशैकाष्टका द्वादशामावास्या यावदेव संवत्सर इन्द्रियं वीर्यं तदेतेनाप्त्वावरुन्धे द्वादशाहेन ॥ ११ ॥**

यदेता वच्यमाणाः या रात्रयः एतावदेव संवत्सरे वर्त्तमानं बलं वीर्य्यं बलसाध्यं वीरकर्म च संवत्सरस्य सारभूता रात्रयः इत्यर्थः का पुनरेताः द्वादश पौर्णमास्यः द्वादशमासात्मके संवत्सरे द्वादशसंख्याकाः पौर्णमास्यो भवन्ति एकाष्टकास्च द्वादश भवन्ति यद्यपि माघकृष्णाष्टम्येवैका तथाचाध्वर्य्युसूत्रं यामाध्याः पूर्णमास्याः उपरिष्टादष्टका तस्याष्टमी ज्येष्ठया सम्पद्यते तामेकाष्टकेत्याचचत इति तथापि तत्सामान्यात् चैत्रादिमासगताः सर्व्वा एव कृष्णाष्टम्योऽत्रैकाष्टकाशब्देनोच्यन्ते तथामावास्यास्च द्वादश भवन्ति एवं संवत्सरे यावदेव षट्त्रिंशद्दिवसात्मकमिन्द्रियं तत्सर्व्वमेतेन द्वादशाहेन षट्त्रिंशद्दिवससाध्यं आप्त्वा प्राप्यावरुन्धे स्वात्मनि निदधाति ॥ ११ ॥

अथ द्वादशाहस्य विराट्सम्पत्तिमाह ।

**त्रिंशदक्षरा वा एषा विराट् षडृतव ऋतुष्वेव विराजा प्रतितिष्ठत्यृतुभिर्विराजि ॥ १२ ॥**

द्वादशाहस्य हि दीक्षोपसत्सुत्यानां मिलित्वा षट्त्रिंशदहानि भवन्ति तत्र यानि त्रिंशत् सा विराट् त्रिंशदक्षरा विराट् इति श्रुतेः यान्यवशिष्टानि षट् ते षडृतवः स्पष्टमन्यत् ॥ १२ ॥

पुनः षट्त्रिंशत्सङ्ख्यामवयुज्य स्तौति।

द्वात्रिंशदक्षरा वा एषानुष्टुब्वागनुष्टुप् चतुष्पादाः पशवो वाचा पशून्दाधार तस्माद्वाचा सिद्धा वाचाहूता आयन्ति तस्मादु नाम जानते ॥ १३ ॥

अथ द्वादशाहस्य यान्यादितो द्वात्रिंशदहानि एषा द्वात्रिंशदक्षरानुष्टुवेव यान्यवशिष्टानि तानि चत्वारि तानि चतुष्पादाः पशवः अनुष्टुप् च वाग्रूपा तया पूर्व्वप्रयुक्तया वाचा चतुष्पादः पशून् दाधारात्मनि धारयति यस्मादेवं तस्मादेव कारणात् पशवो वाचा सिद्धाः वाग्व्यवहारे लब्धाः वाचा नामधेयात्मकेन शब्देन आहूताः आकारितास्च सन्तः पशवः आयन्ति आगच्छन्ति यस्मादेव पशून् वाचा दाधार तस्मादेव कारणात्ते पशवः स्वं स्वं नाम जानते अवगच्छन्ति ॥ १३ ॥

इति ताण्ड्यमहाब्राह्मणे दशमाध्यायस्य
तृतीयः खण्डः।

---

अथ चतुर्थः खण्डः ।

एवं द्वादशाहं विधाय समुदायेन वक्ष्यः स्तुतिः कृता अथ तस्य आद्यन्तयोर्यावतिरात्रौ तौ स्तुतिमुखेन विधत्ते ।

**भूतं पूर्वोऽतिरात्रो भविष्यदुत्तरः पृथिवी पूर्वोऽतिरात्रो द्यौरुत्तरोऽग्निः पूर्वोऽतिरात्र आदित्य उत्तरः प्राणः पूर्वोऽतिरात्र उदानउत्तरः ॥ १ ॥**

भूतं इतः पूर्वं सृष्टेरूर्द्धं उत्पन्नं यावत्पदार्थजातमस्ति स एव पूर्वः द्वादशाहस्य प्रथमातिरात्रः भविष्यदितः परमुत्पत्स्यमानं यावदस्ति विकारजातं स एवोत्तरः द्वादशाहस्यान्त्योऽतिरात्रः तथा पृथिव्यग्निप्राणानां प्राथम्यात् प्रथमोऽतिरात्रस्तत्स्थानीयः द्यौरादित्य उदान इत्येतेषां स्वस्वपूर्वापेक्षयोत्तरत्वात् चरमातिरात्रस्य तदात्मकत्वं अतएवं विधायातिरात्रौ आद्यन्तयोः कर्त्तव्याविति विधिरुन्नीतो भवति ॥ १ ॥

अथ प्रथमादतिरात्रादूर्द्ध्वमुत्तमान्त्यपूर्वं अग्निष्टोमसंस्थे द्वे अहनी कार्य्ये इति विधित्सुराह ।

**चक्षुषी अतिरात्रौ कनीनिके अग्निष्टोमौ यस्मादन्तरा अग्निष्टोमावतिरात्राभ्यां तस्मादन्तरे सत्यौ कनीनिके भुङ्क्तः ॥ २ ॥**

यावेतौ पूर्व्वोक्तावतिरात्रौ तौ चक्षुषी यज्ञस्य चक्षुषो गोलकस्थानीयौ उभयोः समीपेऽनुष्ठीयमानौ यावग्निष्टोमौ ते कनीनिके नेत्रमध्ये वर्त्तमानकृष्णमण्डलस्थानीयौ एवं सति यस्मादतिरात्राभ्यां अन्तरा मध्ये अग्निष्टोमावनुष्ठेयौ तस्मादन्तरे चक्षुर्मण्डलस्य अन्तरा मध्ये सत्यौ वर्त्तमाने कनीनिके भुङ्क्तः पुरुषं पालयतः भुजपालनाभ्यवहारयोः भुजवचन इति पर्य्युदासादात्मनेपदाभावः ॥ २ ॥

अथानयोरतिरात्रयोः शयनन्न कार्य्यमिति विधत्ते ।

संवत्सरस्य वा एतौ दंष्ट्रौ यदतिरात्रौ तयोर्न स्वप्तव्यं संवत्सरस्य दंष्ट्रयोरात्मानन्नेदपिदधानीति ॥ ३ ॥

यत् यौ पूर्वोक्तावतिरात्रौ एतौ संवत्सरस्य दंष्ट्रौ संवत्सरप्रतिमा वै द्वादशरात्रयः इति श्रुतेः संवत्सरस्य द्वादशाहस्य दंष्ट्रस्थानीयौ तयोर्न स्वप्तव्यं स्वापो न कार्य्यः संवत्सरस्य दंष्ट्रयोः स्वापान्नैवात्मानमपिदधानि अपिदध्यां प्रक्षिपेयमिति बुद्ध्या ॥३॥

अथ पक्षान्तरमाह ।

तदाहुः कोऽस्वप्तुमर्हति यद्वाव प्राणो जागार तदेव जागरितमिति ॥ ४ ॥

तत्तत्र विषये अभिज्ञा ब्रह्मवादिन आहुः लोके को नाम

पुरुषः अस्वप्नुं स्वापमकर्त्तुमर्हति स्वापस्यावश्यम्भावित्वात् तर्हि कथं पूर्वोक्तदोषपरिहारः उच्यते यद्वाव यदेव प्राणो देहे वर्त्तमानः प्राणवायुर्जागर्त्ति कदाचिदपि न स्वपिति स हि जाग्रत्स्वप्नसुषुप्तिषु तिसृष्वप्यवस्थासु सर्वदा प्रबुद्ध एव वर्त्तते तदेव प्राणकर्त्तृकं जागरणं अस्य यजमानस्य जागरितं जागरणमिति उक्तदोषो न भविष्यति ॥ ४ ॥

अथ पूर्वोक्तानां चतुर्णामह्नामन्तराले उक्थसंस्थान्यष्टावहानि कर्त्तव्यानीति विधित्सुराह ।

**गायत्रीं वा एतां ज्योतिष्पक्षामासते यदेतं द्वादशाहमष्टौ मध्य उक्था अग्निष्टोमावभितो भासा स्वर्गं लोकमेत्याजरसं ब्रह्माद्यमन्नमत्ति दीप्यमानः ॥ ५ ॥**

यत् य एतं द्वादशाहं आसते अनुतिष्ठन्ति ते एतां वक्ष्यमाणां ज्योतिःपक्षां गायत्रीमेवासते कैषा गायत्री किं वा तस्याः पक्षभूतं ज्योतिस्तदुभयमुच्यते ये द्वादशाहस्य मध्ये अष्टावुक्थाः उक्थसंस्थाः सैषा गायत्री अष्टाक्षरा च गायत्रीत्युभयोरष्टसंख्यासाम्यात् अभितः पार्श्वयोः उक्थानां पुरस्तात् परस्ताच्च यावग्निष्टोमौ क्रियमाणौ तावेव अस्याः गायत्र्याः पक्षौ अग्निर्देवतानां ज्योतिर्विराट् छन्दसां ज्योतिरिति श्रुतेः तस्मिन् ज्योतिष्टोमसमाप्तत्वादग्निष्टोमोऽपि ज्योतिः तस्मादेषा

गायत्री ज्योतिःपक्षा एवं ज्ञात्वानुतिष्ठन् देहावसाने भासा दीप्त्या सह स्वर्गं लोकमेति गच्छति अस्मिंश्च लोके आजरसं यावज्जीर्य्यते तावत्पर्य्यन्तं अन्नाद्यं ब्राह्मणजात्या अदनीयं प्रशस्तमन्नं अत्ति भुङ्क्ते दीप्यमानः मध्ये मध्ये ज्वरादिभिः तप्यमानः सन् एतदुक्तं भवति द्वादशाहस्य प्रथममतिरात्रं तत एकमहरग्निष्टोमः ततोऽष्टावुक्थाः ततोऽग्निष्टोमातिरात्राविति क्रमेण कर्त्तव्यानीति ॥ ५ ॥

अथैतेष्वहःसु आद्यन्तावतिरात्रौ मुक्त्वा यो मध्ये दशरात्रातिक्रमेण कर्त्तव्यः तत्रादितस्त्रिष्वहःसु पृष्ठस्तोत्रे विकल्पेन रथन्तरं साम कार्य्यमिति विधत्ते ।

त्रिष्पुरस्ताद्रथन्तरमुपयन्ति त्र्यावृद्वै वाक् सर्व्वामेव वाचमवरुध्य सर्व्वमन्नाद्यं द्वादशाहं तन्वते ॥६॥

पुरस्तात् पूर्व्वस्मिन् भागे दशाहस्यादितः त्रिष्वहःसु रथन्तरं त्रिरुपयन्ति त्रिवारं प्रयुञ्जीरन् त्र्यावृद्वै त्रिधा आवर्त्तमाना खलु वाक् सुप्तिङ्कृदन्तरूपेण यद्वा वेदत्रयरूपेण त्रिधा वर्त्तमाना एव रूपावर्त्तनेन रथन्तरस्य त्रिरूपामनेन सर्व्वां तत्स्थामेव वाचं सर्वमन्नाद्यञ्चावरुध्य द्वादशाहं तन्वते विस्तारयन्ति ॥ ६ ॥

अस्मिन् पक्षे रथन्तरस्य नैरन्तर्य्येण प्रयोगाज्जामितादोषमाशङ्क्य परिहरति ।

जामि वा एतद्यज्ञे क्रियत इत्याहुर्यत् त्रिष्पुरस्ताद्रथन्तरमुपयन्तीति सौभरमुक्थानां ब्रह्मसाम भवति तेनैव तदजामि ॥ ७ ॥

पुरस्ताद्रथन्तरं पूर्वस्मिं स्त्र्यहे रथन्तरं साम नैरन्तर्य्येणोपयन्तीति यत् एतद्यज्ञे जामि नीरसमेव क्रियते प्रयुक्तस्यैव पुनः पुनः प्रयोगादिति ब्रह्मवादिन आहुः तत्नायं जामितादोषपरिहारः उक्थानां तृतीयसवनगतानां स्तोत्राणां मध्ये ब्रह्मसाम ब्रह्मणःस्तोत्रनिर्वर्त्तकं साम तत् सौभरं कार्य्यं तेन प्रयुक्तेन सौभरेणैव एतदहरजामित्वदोषरहितं सारवदेव भवति ॥७

ननु दशरात्रस्य प्रथमेऽहन्यग्निष्टोमसंस्थे तृतीयसवने उक्थानि न सन्ति तत्र कथं अजामित्वमित्यत आह ।

प्रत्नवत्यः प्रायणीयस्याह्नः प्रतिपदो भवन्ति तेनो एव तदजामि ॥ ८ ॥

प्रतिपद्यन्ते प्रारभ्यन्तेऽनेनाह्नेति प्रायणीयं एष्यमहस्तस्य प्रायणीयस्याह्नः प्रत्नवत्यः अस्य प्रत्नामनुद्युतमित्याद्या ऋचः प्रतिपदो वहिष्पवमानस्य प्रारम्भार्था भवन्ति तेनो तेन उ तेनैव प्रत्नवतीनां प्रतिपत्त्वेनैव तत् प्रायणीयमहरजामि तत्रत्यानां प्रतिपदां प्रत्नवत्त्वलक्षणेन विशेषणेन योगात् अहरन्तरस्य तद्योगाभावाच्च अस्याप्यह्नो जामित्वदोषो न भवतीत्यर्थः ॥ ८॥

अथ दशरात्रस्योपरिभागे अष्टमनवमदशमेष्वहःस्वपि रथन्तरस्य त्रिरूपायनं विधत्ते ।

**त्रिर्वैवोपरिष्टाद्रथन्तरमुपयन्ति त्रयाग्द्वै वाक् सर्वामेव वाचमवरुध्य सर्वमन्नाद्यं द्वादशाहादुत्तिष्ठन्ति ॥ ९ ॥**

उपरिष्टाद्दशरात्रस्योपरितनेष्वपि त्रिष्वप्यहःसु एवमेव रथन्तरं त्रिरुपयन्ति त्रिवारमुपगच्छेयुः अन्यत् पूर्ववद्व्याख्येयं सर्वां वाचं सर्वमन्नाद्यञ्च प्राप्य द्वादशाहादनुष्ठिताद्यागादुत्तिष्ठन्ति उत्क्रामन्ति तं परिसमापयन्तीत्यर्थः अत्रापि पूर्ववज्जामित्वाशङ्कापरिहारश्च पूर्ववद्योजनीयः दशमेऽह्न्यपि प्रत्नवत्यः प्रतिपद इति विधास्यति अतः पूर्ववदजामित्वं ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे दशमाध्यायस्य

चतुर्थः खण्डः ।

---

अथ पञ्चमः खण्डः ।

अथास्मिन् द्वादशाहे आद्यन्तावतिरात्रौ दशममहश्चान्तर्मध्ये यो नवरात्रः तं स्तोतुं त्रेधा विभजति ।

**त्रयो वा एते त्रिरात्रा यदेष द्वादशाहो गायत्र-**

मुखः प्रथमो गायत्रमध्यो द्वितीयो गायत्रोत्तमस्त्रि-
तीयः ॥ १ ॥

अत्र द्वादशाहशब्दः तदवयवे नवरात्रे वर्त्तते यत् एष द्वादशाहो द्वादशाहावयवो नवरात्रः एते त्रयस्त्रिंशद्रात्राः तत्र त्रिरात्रो गायत्रमुखः गायत्रीछन्दस्कमहर्मुखे प्रथमतो यस्य स तथोक्तः द्वितीयस्त्रिरात्रो गायत्रमध्यः तत्र मध्यमस्याह्नो गायत्रत्वात् तृतीयस्तु गायत्रोत्तमस्तृतीयमहर्हि तत्र गायत्रं अत्र प्रथमं पदशस्त्रं गायत्रीछन्दस्कत्वञ्चाभिप्रेत्य गायत्रमुख-इत्यादि व्यपदेशः एतच्छन्दांसि वा अन्योन्यस्य लोकमभ्यध्याय-न्निति छन्दसी व्यूहनविधानसमये विस्पष्टं दर्शयिष्यामः ॥ १ ॥

अस्त्वेवं ततः किं जातमत आह।

यस्माद्गायत्रमुखः प्रथमस्तस्मादूर्द्ध्वोऽग्निर्दीदाय यस्माद्गायत्रमध्यो द्वितीयस्तस्मात्तिर्य्यङ् वायुः पवते यस्माद्गायत्रोत्तमस्तृतीयस्तस्मादर्वाङादित्यस्तपति॥२॥

यस्मात्प्रथमस्त्रिरात्रो गायत्रमुखो भवति तस्मात्तेजो-रूपाया गायत्र्याः प्रथमतः प्रयुक्तत्वात् तत्प्रदेशादारभ्य ऊर्द्ध्व ऊर्द्ध्वाभिमुखः सन् अग्निर्दीदाय ज्वलति यस्मात् द्वितीय-स्त्रिरात्रो गायत्रमध्यः तस्माद्गायत्र्या मध्यतः प्रयोगात् द्यावा-पृथिव्योर्म्मध्ये तिर्य्यङिति तिरश्चीनो वायुः पवते यस्मात् तृतीयस्त्रिरात्रोत्तमः तस्माद्गायत्र्या उपरिस्थितत्वादादित्यो

द्युलोकस्योपर्य्यवस्थाय अर्वाक् अवाङ्मुखस्तपति प्रकाशयति ॥२॥

अथ प्रकारान्तरेण एतेषां त्रिरात्राणाङ्गायत्रीसम्बन्धं स्तौति ।

**तेजसा वै गायत्री प्रथमं त्रिरात्रं दाधार पदैर्द्वि-तीयमक्षरैस्तृतीयं ॥ ३ ॥**

येषा गायत्री चतुर्विंशत्यक्षरात्मिका अग्निना तेजसैव प्रथमं त्रिरात्रं दाधार धारयति पदैः पादैर्द्वितीयं त्रिरात्रं अक्षरैरात्मीयैश्चतुर्विंशत्यक्षरैस्तृतीयं त्रिरात्रं धारयति ॥ ३ ॥

किञ्च तस्यास्तेजः किं वा पादाः कियन्ति वा तदीयान्यक्षराणि कथं वा तैस्त्रयस्त्रिरात्रा धृता इति सर्वमेतद्दर्शयति ।

**त्रिवृद्वै गायत्र्यास्तेजस्त्रिवृत्प्रायणीयमहस्तेन प्रथ-मस्त्रिरात्रो धृतस्त्रिपदा गायत्री त्रिरात्रो मध्ये तेन द्वितीयस्त्रिरात्रो धृतश्चतुर्विंशत्यक्षरा गायत्री चतुर्विंशᳪ सप्तममहस्तेन तृतीयस्त्रिरात्रो धृतः ॥४॥**

त्रिवृत्स्तोमो हि गायत्र्यास्तेजः प्रजापतिमुखात् अनयोः सहोत्पत्तेः अग्निना सहोत्पन्नत्वाच्च त्रिवृतस्तेजोरूपत्वं दशरात्रस्य प्रायणीयं प्रथममहस्त्रिवृत् त्रिवृत्स्तोमकं त्रिवृदेव स्तोमो भवतीति विधास्यमानत्वात् तेन त्रिवृदात्मकेन गायत्र्यास्तेजसा प्रथमस्त्रिरात्रो धृतः त्रिवृतस्तृचः तयात्मकत्वेन त्रि-

संख्यायुक्तत्वात् अष्टाक्षरास्त्रयः पादा अस्यामिति त्रिपदा गायत्री संख्यासु पूर्व्वस्येति पादशब्दस्यान्त्यलोपः पादोऽन्यतरस्यामिति ङीपि प्राप्ते टाट्चोति टाप् पादः पत् इति पद्भावः, मध्ये प्रथमतृतीययोस्त्रिरात्रयोरन्तराले त्रिरात्रस्त्रिस्तोरात्रयः तेनोभयोस्त्रिरात्रयोगेन गायत्र्याः पादैर्द्वितीयस्त्रिरात्रो धृत इति उच्यते चतुर्व्विंशत्यक्षरात्मिका एवं प्रथममध्यमोत्तमानां त्रिरात्रगतानामह्नां गायत्रत्वं गायत्रो वा ऐन्द्रवायवो गायत्रं प्रायणीयमहरित्यादिना शाखान्तरे स्पष्टमाम्नातं यद्वा प्रथमे त्रिरात्रे त्रीण्यपि प्रातःसवनानि गायत्राणि मध्ये तु माध्यन्दिनसवनानि उत्तमे त्रिरात्रे तु तृतीयसवनानि गायत्राणि एतदेका गायत्री सप्तममहश्चतुर्व्विंशस्तोमकं अत एतद्द्वयं संख्याद्वारेण सम्बद्धं तेन सप्तमस्याह्नः सम्बन्धेन तृतीयस्त्रिरात्रोऽक्षरैर्धृत इत्युच्यते ॥ ४ ॥

अथोक्तप्रकारेण गायत्र्यास्त्रिरात्रत्रयव्याप्तिं स्तौति।

तेजसा वा एते प्रयन्ति तेजो मध्ये दधति तेजोऽभ्युद्यन्ति, ज्योतिषा वा एते प्रयन्ति ज्योतिर्म्मध्ये दधति ज्योतिरभ्युद्यन्ति, चक्षुषा वा एते प्रयन्ति चक्षुर्मध्ये दधति चक्षुरभ्युद्यन्ति, प्राणेन वा एते प्रयन्ति प्राणम्मध्ये दधति प्राणमभ्युद्यन्ति, ये गायत्र्या प्रयन्ति गायत्रीम्मध्ये दधति गायत्रीमभ्युद्यन्ति ॥५॥

ये यजमाना गायत्र्या गायत्रीछन्दसा प्रयन्ति प्रगच्छन्ति प्रथमं त्रिरात्रमारभन्ते एते तेजसा वै तमसो निवर्त्तकमालोकादिकं तेजस्तेनैव प्रयन्ति प्रारभन्ते, ये गायत्रीम्मध्ये दधति द्वितीयं त्रिरात्रं माध्यन्दिनसवनेषु धारयन्ति एते तेजएव मध्ये दधति स्थापयन्ति ये गायत्रीमभिलच्योद्यन्ति उद्गच्छन्ति गायत्रैस्तृतीयसवनैस्तृतीयं त्रिरात्रं समापयन्ति एते पूर्व्वोक्तं तेजोऽभिलच्योद्यन्ति उदयनं समापनं कुर्व्वन्ति एवमुत्तरेषु त्रिषु पर्य्यायेषु योज्यं तेजसा तेजःशब्दाभिधेयेन अग्न्यादिना अन्यं प्रकाशो ज्योतिः चष्टेः पश्यतिकर्म्मणः चक्षुर्ज्योतिरन्यं न्नानं चक्षुः प्राणापानादिपञ्चवृत्त्यात्मकः प्राणः गायत्र्यास्च तेजआदिसम्बन्धस्तेजो वै गायत्री ज्योतिर्वै गायत्रीत्यादिवाक्यशेषैरधिगन्तव्यः ॥ ५ ॥

अथैनं द्वादशाहं वस्त्रात्मकत्वेन रूपयन् विस्तार्य्यमाणस्तस्य प्रान्तदार्ढ्यहेतुशङ्कुस्थानतयैतां गायत्रीं स्तौति।

तन्त्वं वा एतद्वितायते यदेष द्वादशाहस्तस्यैते मयूखा यद्गायत्र्यसंव्याथाय ॥ ६ ॥

तायते विस्तार्य्यत इति तन्त्वं वस्त्रं एतदेव वै एतद्वितायते विस्तीर्य्यते तनोतेर्य्यकीति अनुनासिकस्याकारः यत् यएष द्वादशाहस्तस्य विस्तारितस्य असंव्याथाय संव्याथः सञ्चलनं व्यथभयचलनयोरिति धातुः चलनाभावाय दार्ढ्याय एते मयूखाः

प्रान्तेषु निखातव्याः शङ्कवः यत् येषा गायत्री सर्वद्वादशाहं व्याप्नुवती गायत्री तत्स्थलेव द्वादशाहं दृढ़यतीत्यर्थः ॥ ६ ॥

अथोक्तिप्रत्युक्त्या सदृष्टान्तं द्वादशाहो गायत्र्यां प्रतिष्ठित इति प्रदर्शयति।

गिरिक्षिदौच्चामन्यवेति होवाचाभिप्रतारी काक्ष-सेनिः कथं द्वादशाह इति यथारान्नेमिः पर्य्येत्येवमेनं गायत्री पर्य्येत्यविस्त्रंसाय यथारा नाभौ धृता एवम-स्यां द्वादशाहो धृतः ॥ ७ ॥

उच्चामन्युपुत्रो गिरिच्चित् नामकः कश्चिदृषिः हे औच्चाम-न्यव गिरिच्चित् इति तं सम्बोध्य काक्षसेनिः कक्षसेनस्य पुत्रः अभिप्रतारी नामऋषिः इति ह इति खलु पूर्व्वमुवाच इति शब्दपरामृष्टमेव प्रदर्श्यते कथं द्वादशाह इति कथं केन प्रका-रेण स्थितोऽतो द्वादशाह इति उच्चामन्यवं काक्षसेनिः पप्रच्छ तस्योत्तरमेतत् यथा अरान् रथचक्रमध्यस्थान् कीलकान् नेमिर्बहिर्वलयः पर्य्येति परितो व्याप्नोति एवमेनं द्वादशाहं गायत्री पर्य्येति परितो व्याप्नोति किमर्थं अविस्त्रंसाय विस्रंसना-भावाय शैथिल्याभावाय यथा वा अरा नाभौ चक्रमध्ये धृताः सम्बद्धा एवमस्यां द्वादशाहो धृतः ॥ ७ ॥

अथैतमनुष्टुप्रूपेण स्तौति।

**अनुष्टुभं वा एतामन्नाद्याय व्यावृज्यासते यदेतं द्वादशाहं ॥ ८ ॥**

यत् यमेतं विहितं द्वादशाहमासते अनुष्टुभं द्वात्रिंशदक्षरात्मिकामेवैतां व्यावृज्य विभज्य अन्नाद्याय अन्नञ्च तदाद्यञ्च अन्नाद्यं तदर्थं आसते अनुतिष्ठन्ति ॥ ८ ॥

कथं द्वादशाहमनुतिष्ठद्भिरनुतिष्ठतो विभागः क्रियत इति तदर्थं तद्विभागमाह ।

**अष्टाभिर्वा अक्षरैरनुष्टुप् प्रथमं द्वादशाहस्याहरुद्यच्छत्येकादशभिर्द्वितीयं द्वादशभिस्तृतीयं ॥ ९ ॥**

द्वात्रिंशदक्षरात्मिकानुष्टुप् अष्टाभिरात्मीयैरक्षरैर्द्वादशाहस्य प्रथममहः उद्यच्छति उद्गृह्णाति व्याप्नोति तस्याह्नो गायत्रत्वात् तत एकादशभिरात्मीयैरक्षरैर्द्वितीयमहरुद्यच्छति तस्याह्नस्त्रैष्टुभत्वात् त्रिष्टुभश्च पादा एकादशाक्षरा इति तद्योगः द्वादशभिरवशिष्टैरक्षरैस्तृतीयमहरुद्यच्छति जागतं हि तदहः अतो जागतपादयोगात्तदभिप्रायेणेदं अत्र प्रथमेऽह्नि नियुक्तानां अष्टानामक्षराणामन्त्यमक्षरमुपादाय तत्प्रभृति पुनरेकादशाक्षराणि द्वितीयेऽह्नि विनियुज्यन्ते तत्रापि अन्त्यमक्षरमुपादाय तदारभ्य द्वादशाक्षराणि तृतीये सम्बध्यन्ते एवमेकैकमक्षरमादाय विनियोगे सति त्र्यक्षरमवशिष्यते ॥ ९ ॥

तान्येवाक्षराणि चतुर्थादीनि त्रीण्यहानि व्याप्नुवन्तीत्याह ।

अक्षरं व्यक्षरमुच्छिष्यते तदेवोत्तरं त्रिरात्रम-नुविदधाति ॥ १० ॥

उक्तप्रकारेण अन्त्यमक्षरमादाय परिगणनायां व्यक्षरमक्षरत्रयमुच्छिष्यते अवशिष्यते तदेवाक्षरत्रयं द्वितीयत्रिरात्रमनुक्रमेण विदधाति करोति नत्वनुष्टुभि विद्यमानानि सर्वाण्यक्षराणि गतानि ॥ १० ॥

अथ तृतीयस्य त्रिरात्रस्य कथमनुष्टुभा व्याप्तिः तत्राह ।

छन्दांस्येवास्यास्तृतीयं त्रिरात्रं वहन्ति ॥ ११ ॥

अस्याः अनुष्टुभः सम्बन्धीनि यानि गायत्रीत्रिष्टुब्जगत्यात्मिकानि छन्दांस्येव तृतीयं त्रिरात्रं वहन्ति निर्वहन्ति अनुष्टुप् च वै सप्तदशश्च समभवतामित्यादिना छन्दसामनुष्टुभः सकाशात् सृष्टिरुक्ता तैश्च गायत्र्यादिभिश्छन्दोभिर्नीयमानानि सप्तमादीन्यहानि चतुर्विंशत्यक्षरा हि गायत्री सप्तममहश्चतुर्विंशस्तोमकं चतुश्चत्वारिंशदक्षरा त्रिष्टुप् अष्टममहश्चतुश्चत्वारिंशस्तोमकं अष्टाचत्वारिंशदक्षरा जगती अष्टाचत्वारिंशस्तोमश्च नवममहः अतएतानि छन्दांसि तृतीयं त्रिरात्रं वहन्तीत्युच्यते एतेषाञ्चानुष्टुप्प्रभवत्वात् अनुष्टुवेव व्याप्नोतीति कृत्स्नस्य नवरात्रस्य अनुष्टुप्रूपता अतो द्वादशाहमनुतिष्ठन्त एतामनुष्टुभं एवं विभज्य आसत इति पूर्ववदन्वयः ॥ ११ ॥

अथोक्ते नवरात्रस्यानुष्टुभोव्यापने यत्प्रतित्रिरात्रव्याप्ति-वैलक्षण्यं तत्प्रशंसति ।

तां वा एतां प्रतीचीं तिरश्चीं पराचीमासतेऽन्नाद्याय तस्मात्प्रत्यञ्चं तिर्य्यञ्चं पराञ्चं प्रजाः पशुमुपजीवन्ति ॥ १२ ॥

तां पूर्व्वोक्तामेतामनुष्टुभं प्रतीचीं प्रतिमुखं अञ्चन्तीं प्रत्यचीभूतां प्रथमे त्रिरात्रे प्रयुञ्जते तत्र अष्टावेकादशद्वादशेति आनुष्टुभाक्षरसंख्यया भूयस्त्वेनोपलम्भात् द्वितीये तु त्रिरात्रे तिरश्चीन्तिरोऽञ्चतीं अन्तर्द्धानं प्राप्नुवन्तीं आसते तत्र हि त्रीण्येकाक्षराणि विभज्य प्रत्यहं एकैकमक्षरमानुष्टुभं संयोजितं अतोऽक्षरस्याल्पीयस्त्वात् तस्यास्तिर्य्यक्त्वं अथ तृतीये त्रिरात्रे पराचीं परावृत्तां परोक्षमेवानुष्टुभमासते तत्र हि अनुष्टुभः सकाशादुत्पत्तेः छन्दोभिर्गायत्र्यादिभिः स्तोमसंख्यासाम्यं अनुष्टुभो व्याप्तिहेतुरिति, वर्णितं आत्माभिमुखं तिर्यञ्चं तिरश्चीनं अन्यथावृत्तमुखं पराञ्चं परावृत्तं पारोक्ष्यस्थितञ्चोपजीवन्ति ॥ १२ ॥

अथ छन्दसां व्यूहनप्रकारं विधित्सुराह ।

छन्दांसि वा अन्योन्यस्य लोकमभ्यध्यायन् गायत्री त्रिष्टुभस्त्रिष्टुब्जगत्या जगती गायत्र्यास्तानि व्यौहन्यथा लोकं ततो वै तानि यं यं काममकामयन्त तमसन्वन् ॥ १३ ॥

छन्दांसि वै गायत्रीत्रिष्टुब्जगत्यात्मकानि छन्दांसि पुरा-ऽन्योन्यस्य लोकं स्थानं अभ्यधायन् एतेषां हि क्रमेण प्रातःसव-नादीनि सवनानि स्थानतया क्लृप्तानि गायत्रं प्रातःसवनं* ॥१३

यत् कामो व्यूढच्छन्दसा द्वादशाहेन यजते सोऽ-सौ कामः समृध्यते ॥ १४ ॥

द्वादशाहेन यजते सकामः काम्यमानोऽर्थं अस्मै यजमानाय समृध्यते एतदुक्तं भवति द्वादशाहस्तावत् द्विविधः सत्रात्मको-ऽहीनात्मकश्च पुनरपि प्रत्येकं द्वेधा भवति समूढो व्यूढश्चेति यत्रोक्तं व्यूहनन्न क्रियते स समूढः इतरतस्तु व्यूढः सकामप्राप्ति-हेतुरिति अस्मिन् ब्राह्मणे प्राधान्येन प्रतिपाद्यत्वात् श्रूयते ॥१४॥

अथैतं द्वादशाहं देवानां स्थानत्वेन स्तौति ।

ओको वै देवानां द्वादशाहो यथा वै मनुष्या इमं लोकमाविष्टा एवं देवता द्वादशाहमाविष्टा देवता वताह वा एतेन यजते यएवं विद्वान् द्वादशाहेन यजते ॥ १५ ॥

योऽयं द्वादशाहः सदेवानामोकः स्थानं वै तद्देवोपपाद्यते यथा खलु मनुष्या इमं लोकमाविष्टाः एवं देवता द्वादशाहमा-

---

* अत्र पतितमनुमीयते ।

विष्टाः तथा सति य एवं विद्वाञ्जानन् द्वादशाहेन यजते स देवतायुक्तेनैव एतेन द्वादशाहेन यजते ॥ १५ ॥

अथैतं गृहत्वेन प्रशंसति ।

**गृहा वै देवानां द्वादशाहो नागृहताया भय्यं ॥१६**

देवानां द्वादशाहो गृहस्थानीय एव सर्व्वदा तत्रैव वासात् अतएवं जानता द्वादशाहेन यष्ट्रा अगृहताया अगृहत्वात् गृहराहित्यात् भय्यं न भेतव्यं भीतिस्तस्य न जायते सर्व्वत्र गृहलाभादित्यर्थः भय्यप्रभय्येव छन्दसीति विभेतेर्हेतुभये यत् प्रत्यये निपात्यते ॥ १६ ॥

एवं द्वादशाहं बहुधा प्रशस्य अथ तस्याग्निष्टोमसाध्यतां जानतः फलमाह ।

**यो वै द्वादशाहमग्निष्टोमेन कल्पमानं वेद कल्पतेऽस्मै प्रातःसवनेनैव प्रथमस्त्रिरात्रः कल्पते माध्यन्दिनेन सवनेन द्वितीयस्तृतीयसवनेन तृतीयोऽग्निष्टोमसाम्नैव दशममहः कल्पते ॥ १७ ॥**

यः खल्वेवं द्वादशाहमग्निष्टोमेन अग्निष्टोमसंस्थेन ज्योतिष्टोमेन कल्पमानन्निष्पाद्यमानं वेद जानाति अस्मै जानते यजमानाय अग्निष्टोमस्य यत्प्रातःसवनं तेनैव द्वादशाहि-

कस्य दशरात्रस्य प्रथमस्त्रिरात्रः कल्पते क्लृप्तो न क्षतो भवति अग्निष्टोमकेन माध्यन्दिनसवनेनैव दशरात्रस्य द्वितीयस्त्रिरात्रः कल्पते तृतीयसवनेन तृतीयस्त्रिरात्रस्तस्मिन् तृतीयसवने यद्-न्तिममग्निष्टोमसाम तेनाग्निष्टोमसाम्नैव दशममहरविवाक्याख्यं कल्पते क्लृप्तो भवति ॥ १७ ॥

इदमुक्तमर्थं वेदितुरपि फलमाह।

कल्पतेऽस्मै य एवं वेद ॥ १८ ॥

स्पष्टोऽर्थः ॥ १८ ॥

इति ताण्ड्यमहाब्राह्मणे दशमाध्यायस्य

पञ्चमः खण्डः।

---

अथ षष्ठः खण्डः।

द्वादशाहस्य दशरात्रस्य पञ्चभिरध्यायैः स्तोत्रीयाः सामानि च विधास्यन् तत्र पृष्ठ्यषडहे या स्तोत्रीयाः सामानि च तेषाम-साङ्कर्य्याय प्रत्यहं विभिन्नानि रूपाणि इतः परं षड्भिः खण्डैः प्रदर्श्यन्ते तत्राद्यैस्त्रिभिः स्तोत्रीयाणां रूपाणि ततस्त्रिभिः साम्नां रूपाणीति विवेकः, एवं प्रदर्शितरूपैरुपेताः स्तोत्रीयाः तद्युक्तानि सामानि च उत्तरत्र विधेयानि तथोत्तरत्र गायत्र्यः सत्यस्त्रिष्टुभो रूपेण त्रिष्टुभः सत्यो जगत्यो रूपेणेत्यादिना छन्दसामपि प्रत्येकमसाधारणरूपवत्त्वं सिद्धवदाम्नायते अतो

अनेन खण्डेन सप्तस्तोमच्छन्दःसाम्नां साधारणानि रूपाणि षडहरसम्बन्धीन्यभिधीयन्ते तत्र प्रथमस्याह्नस्तदीयस्तोमादेश्च रूपाणि दर्शयति ।

**एति प्रेत्याशुमद्वीतिमद्रुक्मत्तेजस्वद्युञ्जानं प्रथमस्याह्नोरूपं त्रिवृतः स्तोमस्य गायत्रस्य छन्दसो रथन्तरस्य साम्नः ॥ १ ॥**

आ इति प्र इति एवमेतदुपसर्गद्वयं प्रथमस्य त्रिवृत्स्तोमकस्य प्रायणीयस्याह्नोरूपं अहरन्तराद्व्यावर्त्तकं अतएव अग्न आयाहि वीतय आनो मित्रावरुणा प्रसो मासो विपश्चितः प्रसो मासो मदच्युत इत्यादिकं उक्तरूपद्वयोपेतं तस्मिन्नहनि प्रयुज्यमानस्य त्रिवृत्स्तोमस्य गायत्रस्य छन्दसो रथन्तरस्य साम्नश्च एतदेव रूपं अतएतेषामप्यसाधारणरूपत्वसिद्धिः एवमाशुमदित्यादावपि योज्यं आशुङ व्याप्ताविति अस्माद्धातोर्निष्पन्नाशुशब्दः स चास्मिन्नहनि अश्वन्नत्वा वाजिनं अश्वायन्तो मघवन्निन्द्रवाजिन इत्यादिषु दृश्यते तदभिप्रायेणेदमाशुमदिति आशुमत् आशुधातुनिष्पन्नशब्दमुक्तं यद्वा आशुरश्वः अर्थपरोऽयमाशुशब्दः आशुशब्दार्थयुक्तमित्यर्थ वीतिमत् वीगत्यादिषु एतद्धातुनिष्पन्नेन शब्देन युक्तं तथा हि वीतयुक्तं दृश्यते अग्न आयाहि वीतये प्रसोमदेव वीतये इति तथा रुक्मत् रुचिधातुयुक्तं तेजस्वत् तेजःप्रतिपादकशब्दोपेतं युञ्जानं युजिधातु-

युक्तं एतान्यपि रूपाणि प्रथमेऽहनि विनियुज्यमानासु स्तोत्री-यासु अन्यत्र विद्यमानायां गायत्र्यां द्रष्टव्यानि अहरादिषु साधारणत्वात् रूपाणां. अतएवान्यत्र गायत्र्यां दविद्युतत्या-रुचेति रुचिधातुयोगो दृश्यते अस्मिंश्चाहनि अयं सूर्य्य इवो-पदृगिति तेजःप्रतिपादकसूर्य्यशब्दश्रवणात् तदभिप्रायेण तेज-स्वदिति रूपं ब्रह्माणस्त्वायुजावयं आत्वा ब्रह्म युजा हरी इति युजिधातुयोगस्य दृष्टः एतदभिप्रायेण तेजस्वदिति रूपं ब्रह्माणस्त्वायुजावयमित्युपन्यस्तं यद्वा युञ्जानं योजनत्वमेव कु-र्वन्ति सम्बन्धो नियोगः लोटो लिटस्य मध्यमपुरुषप्रयोगः एतावत् प्रथमस्याह्नो रूपं लिङ्गादेश्च ॥ १ ॥

अथ पृष्ठ्यषडहे द्वितीयस्याह्नः तदीयस्तोमादीनाञ्च साधा-रणानि रूपाणि दर्शयति ।

**वृषवद्वृत्रहवद्रयिमद्विश्ववदुपस्थितं द्वितीयस्या-ह्नोरूपं पञ्चदशस्य स्तोमस्य त्रैष्टुभस्य छन्दसो बृहतः साम्नः ॥ २ ॥**

वृषवत् वृषिधातुनिष्पन्नशब्दयुक्तं द्वितीयस्य पार्ष्णिकस्या-ह्नोरूपं पञ्चदशस्तोमादेश्चैतदेव रूपं अतएव अस्मिन् द्वितीये-ऽहनि वृषा पवस्व धारया वृषा शोण इत्यादिकाः वृषशब्दवत्यः स्तोत्रीया विनियुज्यन्ते एवमुक्तरेष्वपि रूपेषु योज्यं वृत्रहवत् वृत्रहननलिङ्गयुक्तं तथा हि तत्र मन्त्रवर्णः हन्ति वृत्राणि दा-

श्रुवे जग्निर्ऋतमभिर्नियमिति तथा रयिमत् रयिशब्दयुक्तं तथा च रयिं वीरवतीमिषमिति दृश्यते तथा विश्ववद्विश्वशब्दोपेतं अतएव तत्र दृश्यते अभि विश्वानि काव्येति उपस्थितमित्यनेन तिष्ठतिधातुर्निर्दिष्टः तद्युक्तमपि द्वितीयस्याह्नोरूपं तथाहि तस्मिन्नहनि दृश्यते महिम्ने सोमतस्थिर इति यद्वा उपस्थितं प्राप्तं विद्यमानस्यैव कथनं वर्त्तमानकालापदेशिनो लटः प्रयोग इति यावत् ॥ २ ॥

अथ तृतीयस्याह्नः सप्तदशस्तोमादेश्च रूपाणि दर्शयति ।

## उद्वत्त्रिवद्दिग्वद्गोमदृषभवत् तृतीयस्याह्नोरूपꣳ सप्तदशस्य स्तोमस्य जागतस्य छन्दसो वैरूपस्य साम्नः ॥ ३ ॥

उत् वत् उच्छब्दयुक्तं त्रिवत् त्रित्वसंख्यायोगश्च तृतीयस्य पार्ष्ठिकस्याह्नो रूपं तदीयस्य सप्तदशस्तोमादेश्च तदेव रूपं अतएव तस्मिन्नहनि तिस्रो वाच उदीरत इति रूपद्वयं दृश्यते तथा दिक्शब्दवत्त्वञ्चापरं रूपं तस्मादेव दिशं विशं हसिति दिक्शब्दयोगो दृश्यते तथा गोमत् गोशब्दवत्त्वञ्चान्यद्रूपं गावो मिमन्ति धेनव इति हि तत्रत्यो मन्त्रवर्णः ऋषभवत् अर्थपरोऽयन्निर्देशः ऋषभशब्दार्थवत्त्वमपरं रूपं इन्द्रस्तद्धोववंसग इति तत्र दृश्यते यद्वा शोभनशब्दोववंसगः वननीयगामी वृषभ इव इन्द्रः कदाप्यतयज्ञं प्राप्नोतीति ॥ ३ ॥

अथ चतुर्थस्याह्नः एकविंशस्तोमादेश्च रूपाणि दर्शयति।

राजन्वज्जनवत्सूर्य्यवद्विराडनुतोदवच्चतुर्थस्याह्नो रूपमेकविंशस्य स्तोमस्यानुष्टुभस्य छन्दसो वैराजस्य साम्नः ॥ ४ ॥

राजन्वत् राजन्शब्दवत्त्वं यद्वा राजनिधातुयुक्तं एवमादिकं चतुर्थस्य पार्ष्णिकस्याह्नोऽसाधारणं रूपं एकविंशस्तोमादेश्च एतदेव रूपं तथा हि मन्त्रवर्णो दृश्यते राजानावनभिद्रुहा पवमानो अजीजनदित्यादौ तथा सूर्य्यवत् सूर्य्यशब्दयोगोऽप्यन्यत् रूपं उग्रः सूर्य्यो न रश्मिभिरिति हि तत्र मन्त्रवर्णस्तथा विराट् छन्दसोऽनुतोदवत् अनुतोदयुक्तं अन्यद्रूपं तत्र हि पिबा सोममिन्द्रमन्दतुत्वेत्यादिका विराट्मत्वाहावोजोहाउसहो हाउ बलं हाविन्द्रोहाउवयो हाउ दृहतं हाउ स्वर्हाउ ज्योतिर्हाउ दा २ ध इत्यादिभिस्तोमैः प्रतिपाद्यमनुतोद्यते व्यवधीयते यद्वा अनुतोदोऽभ्यासः स च चतुर्थेऽहनि विहिते महावैराजसामादौ दृश्यते तथा हि पिबा सोममिन्द्रमन्दतुत्वेत्यादिकं निरभ्यस्यते ॥ ४ ॥

अथ पञ्चमस्याह्नस्त्रिणवस्तोमादेश्च रूपाणि दर्शयति।

चित्रवच्छ्रिशुमत् पङ्क्तिः शक्करी द्यूनाक्षरा गोमद्दषभवद्ज्युभिमत्पञ्चमस्याह्नोरूपं त्रिणवस्य स्तोमस्य पाङ्क्तस्य छन्दसः शक्करीणाᳫं साम्नः ॥ ५ ॥

चित्रवत् चित्रशब्दयुक्तं शिशुमत् शिशुशब्दयुक्तं एतदादिकं पञ्चमस्याह्नोरूपं त्रिणवस्तोमादेश्चैतदेव रूपं शक्कर्य्य इति एकस्यैव विदामघवन्नित्यस्यां गीयमानस्य साम्नः संज्ञा स्त्रीत्वं बहुत्वञ्चापेक्षया शक्कर्य्याश्रयस्य साम्न इत्यर्थः तथा पङ्क्तिछन्दोऽप्यस्याह्नोरूपं अतएव इन्द्रोमदाय वावृध इत्यादिका पङ्क्तिर्दृश्यते सप्तपदा शक्करी सा च विदामघवन्नित्यादिका पञ्चमेऽहनि विधित्सिता तथा द्यूनाक्षरा द्वाभ्यामक्षराभ्यां न्यूनाप्यन्या ऋक् अस्याह्नोरूपं गोमत् गोशब्दयुक्तं ऋषभवत् ऋषभशब्दयुक्तं अश्वे गोमान् गोभिरक्षा इत्यादिकमपि पञ्चमस्याह्नोरूपं तथा वज्रीवत् वज्रयुक्तं अभिमत् अभिशब्दयुक्तं वज्रं हिन्वन्विसायकं अभिव्रतानि पवते पुनान इति हि तत्त्यौ मन्त्रवर्णौ एतावत्सर्व्वं पञ्चमस्याह्नस्त्रिणवस्तोमादेश्च रूपं ॥ ५ ॥

अथ षष्ठस्याह्नस्त्रयस्त्रिंशस्तोमादेश्चासाधारणानि रूपाण्याह।

**परिवत्प्रतिवत्सप्तपदा द्विपदा विनाराशꣳसा गोमदृषभवत् षष्ठस्याह्नो रूपं त्रयस्त्रिꣳशस्य स्तोमस्य सर्वेषां छन्दसां रूपं रेवतीनां साम्नः ॥ ६ ॥**

परिवत् परिशब्दयुक्तं प्रतिवत् प्रतीत्यनेन युक्तञ्च षष्ठस्याह्नो अहरन्तराद्यावर्त्तकं रूपं अतएवैतदुभयं तस्मिन्नहनि

दृश्यते भिन्द्विश्वा अपद्विषः परिबाधे इति प्रतिशं सूर उदित इति प्रतिशब्दस्य त्रयस्त्रिंशस्तोमस्य तस्मिन्नहनि प्रयुज्यमानस्य तथा सर्व्वेषां गायत्र्यादीनां छन्दसां तथा रेवतीनां रेवतीर्नः सधमाद इति अस्यामुत्पन्नं साम रेवत्यः आपो वै रेवत्य इति श्रुतेः अप्त्वेन संस्तुतत्वात् अपिशब्दवत् अस्यापि स्तोत्वं बहुत्वञ्च रेवत्याख्यस्य साम्नोऽप्येतदेत्र रूपं एवमुत्तरेष्वपि योजना सप्तपदा सप्तभिः पदैरुपेता सप्तपदया यजतीति ब्राह्मणे विशेषदर्शनात् होत्रा साम्ना योज्येत्यवगच्छति दृषन्निन्द्रदृषपाणास इन्दवः सुष्टुमायातमद्रिभिः अयं जायत धनुषोधारीत्यादिकाः सप्तपदाश्च अत्र विनियुज्यन्ते द्विपदा पादद्वयात्मिका अग्ने त्वन्नो अन्तममानुकं भुवनासीषधेमेत्यादिका विनाराशंसाः नराः शस्यन्ते अनयेति नाराशंसाः स्तुतिः तद्रहिता ऋक् अस्याह्नो रूपं तथा गोमत् गोशब्दयुक्तं ऋषभवत् ऋषभयुक्तञ्च गोभिरञ्जानो अर्षसि सुदुघामि गोदुह इत्यादिकं ॥ ६ ॥

अथोक्तानां षड़हसम्बन्धिनां रूपाणान्नानात्वं स्तौति ।

**यस्मादेषा समाना सती षडहविभक्तिर्नानारूपा तस्माद्विरूपः संवत्सरः ॥ ७ ॥**

यस्मादेषोक्ता षड़हविभक्तिः षड़हस्य विभक्तिर्विभागः समाना सती षडहविभक्तित्वेन सदृशीभवत्यपि नानारूपा उक्तप्रकारेण परस्परं विभिन्नरूपा तस्मात् संवत्सरो विरूपो विभि-

न्नरूपः उक्तप्रकारेण विलक्षणान्यहानि षड्‌ऋतुस्थानीयानि अतो वसन्तादीनां परस्परं विभिन्नधर्म्मत्वात् उक्तं संवत्सरस्य विरूपत्वं ॥ ७ ॥

एतद्वेदनं प्रशंसति।

**विरूपमेनमनुप्रजायते य एवं वेद ॥ ८ ॥**

एनं वेदितारमनु पश्चात् विरूपं विविधरूपमपत्यादि प्रजायते उत्पद्यते यएवमुक्तां विलक्षणां षडहविभक्तिं वेद जानीयात् ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे दशमाध्यायस्य
षष्ठः खण्डः।

---

अथ सप्तमः खण्डः।

अथास्मिन्नेव षष्ठे षडहे अग्निविभक्तिवैचित्र्य प्रदर्श्य स्तौति।

**अग्नइति प्रथमस्याह्नोरूपमग्निविभक्तेरग्निमिति द्वितीयस्याग्निनेति तृतीयस्याग्निरिति चतुर्थस्य ॥१॥**

अग्निविभक्तेः अग्निशब्दस्य या विभक्तयस्तासाम्मध्ये अग्ने इति सम्बुध्यन्तं प्रथमस्याह्नोरूपं अग्न आयाहि वीतये इति हि तस्मिन्नहनि दृश्यते अग्निमिति द्वितीया विभक्तिः द्वितीय-

स्याह्नोरूपं अग्निन्दूतं वृणीमह इति हि तत्र मन्त्रवर्णः अग्नि-नेति तृतीया तृतीयस्याह्नोरूपं अतएव तत्रापि अग्निनाग्निः समिध्यत इति दृश्यते अग्निरिति प्रथमैव चतुर्थस्याह्नोरूपं जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्ष इति तत्र दर्श-नात् ॥ १ ॥

अथ पञ्चमस्याह्नोऽसाधारणाग्निविभक्तिं विवक्षुराह।

देवा वै श्रियमैच्छꣳस्तान्न प्रथमेऽहन्यविन्दन्न द्वि-तीये न तृतीये तांश्चतुर्थेऽहन्यविन्दन् विन्दते श्रियं य एवं वेदाग्नेरिति पञ्चमस्य तेनो श्रीः प्रत्युपोदिते-त्याहुः ॥ २ ॥

देवाः खलु पुरा श्रियं सम्पदम् ऐच्छन् तदर्थं द्वादशाह-मन्वतिष्ठन् तत्र च तां श्रियं प्रथमेऽहनि नाविन्दन् नालभन्त तथा द्वितीये चाहनि नाविन्दन् तृतीये चाहनि न अविन्दन् एवं प्रथमे त्रिरात्रे अलब्ध्वा तां चतुर्थेऽहन्यविन्दन् एवमुक्तां श्रियो-लाभं यो वेद असौ श्रियं सम्पदं विन्दते लभते एवं चतुर्थेनाह्ना श्रियः प्राप्तौ सत्यां अग्नेः इति विभक्तिः पञ्चमस्याह्नो भव-तीति यत् तेनो तेनैव सा प्राप्ता श्रीः प्रत्युपोदिता प्रत्याख्याते-त्याहुर्ब्रह्मवादिनः तव श्रियो वर्षस्येव विद्युतोऽग्नेश्चिकित्व इति हि पञ्चमेऽहनि दृश्यते तत्र चाग्नेः श्रियः इति सम्बन्धः

प्रतीयते तस्मात् सम्बन्धः प्रत्याख्यात इति तेषां ब्रह्मवादिनामभिप्रायः ॥ २ ॥

एतद्वेदनस्य फलमाह ।

**अप्रतिवाद्येनं भ्रातृव्यो भवति यएवं वेद ॥ ३ ॥**

एवमुक्तं प्रतिवचनं यो वेद भ्रातृव्यः शत्रुः एनमप्रतिवादी भवति अनेनोक्तं प्रतिवक्तुं न शक्नोति ॥ ३ ॥

आरम्भावसानयोः सारूप्यार्थं तस्यैव सम्बुध्य षष्ठस्याह्नो रूपमित्याह ।

**अग्न इति षष्ठस्य येनैव रूपेण प्रयन्ति तदभ्युद्यन्ति ॥ ४ ॥**

अग्ने सख्ये मारिषामावयं तवेति षष्ठेऽहनि दर्शनात् अग्न इत्येतदेव षष्ठस्याह्नो रूपं तथा च येनैव रूपेण प्रयन्ति षडहं प्रारभन्ते तदेव रूपमभिलक्ष्य तेनैव रूपेण उद्यन्ति षडहं समापयन्ति ॥ ४ ॥

उक्तविभक्तिनानात्वं प्रशंसति ।

**यस्मादेषा समाना सत्यग्निविभक्तिर्नानारूपा तस्माद्यथर्त्वादित्यस्तपति ॥ ५ ॥**

एषोक्ताग्निविभक्तिः समाना अग्निविभक्तित्वेन सरूपा सती

यस्मान्नानारूपा सम्बुद्ध्यादिविभक्तिभेदेन परस्परं विलक्षणाकारा तस्माद्धेतोर्यथर्त्तु ऋतावृतौ वसन्तादिके आदित्यो नानारूपः सन् तपति सर्वं जगद्भासयति ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे दशमाध्यायस्य

सप्तमः खण्डः।

---

अथ अष्टमः खण्डः।

अथास्मिन् षडहे विभक्तेर्नानात्वं प्रदर्श्य स्तौति।

इन्द्रेति प्रथमस्याह्नो रूपमिन्द्रविभक्तेरिन्द्रमिति द्वितीयस्येन्द्रेणेति तृतीयस्येन्द्र इति चतुर्थस्येन्द्रादिति पञ्चमस्येन्द्रेति षष्ठस्य येनैव रूपेण प्रयन्ति तदभ्युद्यन्ति यस्मादेषा समाना सतीन्द्रविभक्तिर्नानारूपा तस्माद्यथर्त्वोषधयः पच्यन्ते ॥ १ ॥

इन्द्रविभक्तेः इन्द्रशब्दस्य विभक्तीनां मध्ये इन्द्रेति सम्बुध्यन्तं प्रथमस्याह्नो रूपं तथाच तत्त्यो मन्त्रवर्णः आयाहि सुषमाहित इन्द्र सोममिति इन्द्रमिति द्वितीया विभक्तिर्द्वितीयस्याह्नो रूपं इन्द्रमिद्गाथिनो बृहदिति हि तत्र दृश्यते इन्द्रेणेति तृतीयस्य इन्द्रेण सहिदृक्षस इति तत्त दर्शनात् इन्द्र इति प्रथमान्तं चतुर्थस्य इन्द्रो दधीचो अस्थभिरिति हि तत्र मन्त्रो दृश्यते

इन्द्रादिति पञ्चमस्य इन्द्रात्परितन्वम्मम इति तत्रत्यान् मन्त्रवर्णान् इन्द्रेति सम्बुध्यन्तमेव षष्ठस्य यद्वीडाविन्द्रतच्छिर इति हि तत्र दृश्यते शिष्टं सिद्धप्रायं ॥ १ ॥

इति ताण्ड्यमहाब्राह्मणे दशमाध्यायस्य
अष्टमः खण्डः।

---

अथ नवमः खण्डः।

इत्थं स्तोत्रीयागतानि रूपाणि दर्शयित्वा साम्नामपि पृष्ठ्यषडहे विधास्यमानानां रूपाणि इत उत्तरं त्रिभिः खण्डैः प्रदर्श्यन्ते तत्र प्रथमं स्वराश्रयाणि रूपाणि षडहस्य दर्शयति।

**यदृचा प्रस्तौति तत्प्रथमस्याह्नो रूपꣳ स्वरविभक्त्यैत्पुरस्तात् स्तोभन्तद्द्वितीयस्य यदुभयतः स्तोभन्तत्तृतीयस्य यदनुतुन्नं तच्चतुर्थस्य यदभ्यारब्धन्तत्पञ्चमस्य यदिहकारेणाभ्यस्तं तत् षष्ठस्याह्नोरूपं ॥१॥**

स्वरविभक्तेः स्वराणां विभक्तयो विभज्यमाना एकदेशाः स्वरविभक्तयः जातावेकवचनं स्वरविभक्तीनाम्मध्ये ऋचा स्तोभादिवर्ज्जितया केवलयैवर्चा प्रस्तोता साम प्रस्तौतीति तत् प्रथमस्याह्नो रूपं तथा हि प्रथमेऽहनि माध्यन्दिनसवने विधास्यमानानि आश्वं सोमसाम औशनादीनि ऋचैव प्रस्तूयन्ते यत्

पुरस्तात् ऋक्प्रारम्भात् पूर्वमेव स्तोभयुक्तं साम तत् द्वितीयस्याह्नो रूपं तथैव तस्मिन्नहनि यौक्ताश्वमायास्यं वासिष्ठं हृहद्दित्येवमादीनि सामानि पुरस्तात् स्तोभान्येव त्रिधास्यन्ते यदुभयतः स्तोभं पादस्याद्यन्तयोः स्तोभयुक्तं साम तत् तृतीयस्याह्नोरूपं हावभिसोमास आयवो हाउ इत्यादिकमुभयतः स्तोभं गौतमस्य तत्र विधानात् यत् अनुतुन्नं अनुपादः स्तोभैस्तूयमानं साम तच्चतुर्थस्याह्नोरूपं स्वराडनुतोदवदित्यत्रैव एतत्साम प्रदर्शितं यत्सामाभ्यारब्धं अभि उपर्य्यधः एकस्या ऋच उपर्य्यभ्यारब्धव्यं भवति तत् पञ्चमस्याह्नोरूपं सर्वाण्यपि सामानि एकैकस्यामृचि समाप्यते शाक्वरसाम तु तिसृष्वृक्षु समाप्यत इत्यभिप्रायेण अभ्यारब्धव्यमित्युक्तं एवं तिस्रः तिस्र एकैका स्तोत्रीयेति पञ्चमेऽह्नि पृष्ठस्तोत्रे तथा चाश्वलायनसूत्रं नवप्रकृत्या तिस्रो भवन्तीति यत्साम इहकारेणाभ्यस्तं पुनः पुनरिहकारेण इहशब्दोच्चारणेन स्तोभयुक्तेन दीदिहीतीति नवभिर्ऋग्भिः स्तोत्रीयास्तृचो निष्पद्यन्ते भद्रं दीदिश्रौषं इत्यादिकं तत् षष्ठस्याह्नोरूपमुक्तं ॥ १ ॥

स्वरविभक्तेर्नानात्वं प्रशंसति ।

**स्वराणां यस्मादेषा समाना सतो स्वरविभक्तिर्नानारूपा तस्माद्यथर्त्तु वायुः पवते ॥ २ ॥**

स्वराणाम्मध्ये येषा स्वरविभक्तिरुक्ता सा समाना सती

सामावयवत्वेन सदृशो भवन्ती यस्मान्नानारूपा उक्तप्रकारेण प्रत्यहं विभिन्नरूपा तस्माद्यथर्तु ऋतावृतौ वीप्सालक्षणेऽर्थे यथाशब्दस्याव्ययीभावः प्रत्यृतु वायुर्नानाकारः पवते गच्छति॥२

इति ताण्ड्यमहाब्राह्मणे दशमाध्यायस्य

नवमः खण्डः।

---

अथ दशमः खण्डः।

अथ तस्मिन् षडहे निधनविभक्तेर्नानात्वं प्रदर्श्य स्तौति।

**पदनिधनं प्रथमस्याह्नो रूपन्निधनविभक्तेर्वह्निर्णिधनं द्वितीयस्य दिङ्निधनं तृतीयस्येनिधनञ्चतुर्थस्याथकारणिधनं पञ्चमस्य यदिहकारेणाभ्यस्तन्तत् षष्ठस्याह्नो रूपन्निधनानां यस्मादेषा समाना सती निधनविभक्तिर्नानारूपा तस्मादिमे लोकाः सह सन्तोनानैव॥१॥**

निधनानि तावत् द्विविधानि अन्तर्निधनानि वहिर्निधनानि च इहकार इडाथकारौ गीतञ्च निधनस्वरं हीषीस्वरञ्च द्यक्षरं देवताश्चारण्ये गेयेषु तान्यन्तःसामनिधनानीत्यादिना सूत्रकारेण अन्तनिधनान्युक्तानि सर्वत्र तावच्चत्वार एव सामान्ताः स्वरोनिधनमिडाक्षरागित्यादिना। वहिर्निधनान्यपि सूत्र एतो-

क्तानि तदुभयमत्रानुसन्धातव्यं अयमर्थः निधनविभक्तीनाम्मध्ये यदनिधनं.पादे पादे क्रियमाणेन निधनेन युक्तं साम प्रथम-स्याङ्गोरूपं तथा यौधाजयं वहिर्निधनं ऋगचराद्वहिर्भूतं नि-धनं यस्य तत् द्वितीयस्याङ्गोरूपं तथा यौक्ताश्वादिकं दिश इति निधनं यस्य तद्दिङ्निधनं तृतीयस्याङ्गोरूपं तथाक्षुल्लकवैष्टम्भ-म्महावैष्टम्भं ई इति निधनं यस्य तदीनिधनं चतुर्थस्याङ्गोरूपं तथामहावाल्खे प्रमहावैराजे अथकारः अथेति शब्दो निधनं यस्य तदथकारणिधनं पञ्चमस्याङ्गोरूपं इहकार इडाथकारौ गीतञ्च निधनस्वरमित्यादिना सूत्रकृता अथकारस्यान्तर्णिधनत्व-मुक्तं तच्च शाक्करे साम्नि दृश्यते ईन्द्रा यूम्नायना१ इषा इत्यादि तथा इडा इहा यत् साम भद्रं दीदिहा औषादिकं इह कारणिधनेनाभ्यस्तं तत् षष्ठस्याङ्गो रूपं निधनानां सम्बन्धिनी एषा निधनविभक्तिः समाना सती यस्मादुक्तप्रकारेण नानारूपा तस्मात् भूरादयस्त्रयोलोकाः सहसन्त एकरूपाः सन्तोऽपि नानैव नानारूपा एव भवन्ति ॥ १ ॥

इति ताण्ड्यमहाब्राह्मणे दशमाध्यायस्य

दशमः खण्डः।

---

अथ एकादशः खण्डः।

अथेडाविभक्तेर्नानात्वं प्रदर्श्य स्तौति।

इवदिडं प्रथमस्याह्नो रूपमिडाविभक्तेरुद्वैडं

द्वितीयस्य परिष्टुब्धेडं तृतीयस्येडाभिरैडं चतुर्थस्या-ध्यर्द्धेडं पञ्चमस्य यदिहकारेणाभ्यस्तं तत् षष्ठस्याह्नो रूपमिडानां यस्मादेषा समाना सतीडाविभक्तिर्नानारूपा तस्मात्समानाः सन्तः पशवो नानारूपाः ॥१॥

इडाविभक्तिः इडाविभक्तीनां इडाप्रभेदानामध्ये इवदिति हि चिप्रनाम इवन्तीडा यस्य तद्इवदिडं कालेयगौतमादिकं तत्प्रथमस्याह्नोरूपं इडाभिरैडाभिशब्देन युक्ता इडा यस्य श्रृङ्गि सामादेः तत्तथोक्तं इडा २३ भा ३४३ तुं २३४५ इ डा इति ऊर्ध्वैडा यस्येति तत्माधुछन्दसादेः तत्द्वितीयस्याह्नोरूपं *भा २३४५ ई डा अधिकमस्याः सा अध्यर्द्धा अध्यर्द्धा इट् इडेत्येवं रूपा यस्य वार्षवाम्नादेः तदध्यर्द्धेडं पञ्चमस्याह्नोरूपं, यद्यपि वार्षवाम्नादेरध्यर्द्धरूपा ऊ२२३४पा एवाध्ययने दृश्यते तथापि सूत्रकारेण उपा स्थानेष्वन्यानि निधनानीत्युपक्रम्य इडा परिष्टुब्धादिडा यस्य संज्ञैरवभ्रयाच्छावाकसाम भवतीत्यादेः तद्गौरवादिपरिष्टुब्धेडं तत हिउप २ होवा हो ५ इडा २३ भा ३४३ पो २३४५ इ डा इति हि तत दृश्यतेऽनादेशे इत्यादिना ध्यध्यर्द्धात्वमध्यर्द्धोपानामित्येतेन अध्यर्द्धोपास्थाने इट् इडेत्येवं रूपा अध्यर्द्धेडा प्रयोगकाले प्रयोज्येत्युक्तत्वात् वार्षवाम्नयोरप्यध्यर्द्धेडत्वं यत्साम इहकारेणाभ्यस्तं

* अत्र पतितमनुमीयते।

आवर्त्तमानेहकारयुक्तं वारवन्तीयादिकं तत् षष्ठस्याह्नोरूपं दूडानां सम्बन्धिन्येषा उदाहृतेड़ाविभक्तिः समाना सदृशी सत्यपि यस्मान्नानारूपा दृवदूर्द्दृतादिभेदेन विभिन्नाकारा तस्मात् पशवः समानाकृतयः सन्तोऽपि नानारूपाः ॥ १ ॥

इति ताण्ड्यमहाब्राह्मणे दशमाध्यायस्य

एकादशः खण्डः ।

---

अथ द्वादशः खण्डः ।

अथास्य षडहस्य प्रत्यहं विशिष्टफलहेतुतां ब्रह्मवादिनां प्रश्नप्रत्युक्तिभ्यां दर्शयति ।

भारद्वाजायना वै सत्रमासत तानपृच्छन् किं प्रथमेनाह्ना कुरुतेति प्रैवैमेति किं द्वितीयेनेत्यवसमेवा- कुर्म्महीति किं तृतीयेनेति पर्य्येवास्रवामहीति किं चतुर्थेनेति सतैव सदप्यदध्मेति किं पञ्चमेनेति प्रा- णानेव विच्छिन्दन्त ऐमेति किꣳ षष्ठेनेतीदमेवाग- च्छामेति ॥ १ ॥

भारद्वाजायनाः भरद्वाजगोत्राः खलु पुरा ऋषयः सत्रं सत्रात्मकमेतं द्वादशाहमासत अन्वतिष्ठन् सत्रमासीनान् यज- मानान् अन्ये तु ब्रह्मवादिनोऽपृच्छन् हे ऋषयो यूयं प्रथमेन पार्ष्टिकेनाह्ना तु किं कुरुत किं फलं प्राप्नुथेति तान् प्रत्येवम-

ब्रूवन् प्र एवैमेति पदच्छेदः एतेर्लटि लङि रूपमेतत् प्रैवैमैव यज्ञस्य प्रायणमेव केवलमकार्ष्मेति अथ द्वितीयेनाह्ना किं कुरुध्वेति पुनस्ते ब्रह्मवादिनोऽपृच्छन् अवसं अन्नमेवाकुर्म्महि निष्पादितवन्तो वयमिति प्रत्यवोचन्त अथ तृतीयेनाह्ना किं कुरुध्वेति ब्रह्मवादिभिः पृष्टे तस्येदमुत्तरं परि सर्व्वत एवा-न्नवामहि प्राप्नुवन्तः स्म इति पुनश्चतुर्थेनाह्ना किं कुरुथेति ब्रह्मवादिनां प्रश्नः तस्येदमुत्तरं सतैव विद्यमानेन निष्पन्नेन एते सुपांसुलुगिति तृतीयाया आकारः अन्वादेशः विषयादे-तादेशः एतेन चतुर्थेनाह्ना सत् विद्यमानं सर्वं फलमपदध्म अपिहितवन्तः स्थापितवन्तः प्राप्तवन्तः वयमिति पञ्चमेनाह्ना किं कुरुथेति ब्रह्मवादिभिः पृष्टे सत्येतान् विद्विषां प्राणा-नेव विछिन्दन्तः वियोजयन्तः एतान् प्राणानेव प्राप्ताः स्म इति प्रत्यब्रुवन् अथ षष्ठेनाह्ना किं कुरुधेति ब्रह्मवादिभिः पुनः पृष्टे तस्येदमुत्तरं इदमेव स्थानं इहलोकावस्थानमेव प्राप्तवन्तः स्म इति ॥ १ ॥

अथ यद्दचा प्रस्तौतीत्यादिना येषां स्वरविभक्तिः पूर्वं प्रद-र्शिता तत्तैकैकमनूद्य स्तौति।

**यस्य पदेन प्रस्तौत्यथ स्वारमभि वाव तेन देवाः पशूनपश्यन्यन् पुरस्तात् स्तोभमथ स्वारमुदेव तेना-सृजन्त यदुभयतः स्तोभमथ स्वारमेभ्य एव तेन लोकेभ्यो देवाः पशुभ्योऽन्नाद्यं प्रायच्छन् यदनुतुन्नमथ**

**स्वारमुपैव तेनाशिक्षन्यस्य मध्ये निधनमथ स्वारं गर्भाऽस्तेनादधत तानि स्ववनास्वारेण प्राजनयन् ॥२**

यस्य प्रथमेऽहनि विहितस्य साम्नः पदेन ऋचः पादेनैव स्तोभरहितेन प्रस्तौति प्रस्तोता प्रस्तावभागं ब्रूयात् अथानन्तरं स्वारं स्वर्य्यमाणं स्वरिति विशिष्टं उद्गीथभागञ्चोद्गाता ब्रवीति तेन साम्ना स्तूयमाना देवाः पशूनेवाभ्यपश्यन् यजमानाय दातु-मभ्यजानन् यत् पुरस्तात् स्तोभं ऋचः पुरस्तात् क्रियमाणेन स्तोभेन युक्तं अथानन्तरं स्वारं स्वर्य्यमाणं द्वितीयेऽहनि विनि-योज्यं साम तेन स्तुता देवा उदसृजन्तैव पूर्व्वदृष्टान् पशून् यजमानैः प्राप्तुं व्यमुञ्चन् प्रायच्छन्नित्यर्थः यदुभयतः स्तोभं आद्य-न्तयोः स्तोभं आद्यन्तयोः स्तोभयुक्तं अथानन्तरं स्वर्य्यमाणं स्वारं तृतीयेऽहनि विनियोज्यं साम तेन साम्ना स्तुताः देवा एभ्य एव भूरादिभ्यो लोकेभ्यः एव दृष्टेभ्यः पशुभ्यः सकाशादन्नाद्यं क्षीरादिकं अदनीयमन्नं प्रायच्छन् प्रकर्षेण दत्तवन्तः यदनुतुन्नं प्रथमं अनुतोदवत् अथानन्तरं स्वारं स्वरितयुक्तं चतुर्थेऽहनि विनियोज्यं साम तेन स्तुता उपैवाशिक्षन् शिक्षयितुमैच्छन् यजमानान् शक्तान् कर्त्तुमैच्छन्नित्यर्थः शिक्षते सनि मीमाघुर-भलभशकेत्यादिना सन् प्रत्यये परतः अत लोपोऽभ्यासस्येत्यभ्या-सलोपः यद्वा शिक्ष इति दानकर्म्मा यजमानैर्य्यद्यत्प्रार्थितं तत्तत् प्राप्नुयुरित्यर्थः यस्य साम्नो मध्ये निधनं इडा अथेत्यादिकं अथा-नन्तरं स्वारं स्वरितयुक्तं तेन साम्ना स्तूयमाना देवाः गर्भान्

दधन् प्रजासु गर्भाणां निक्षेपणमकार्षुः इहवताद् इहवताद् हाइहकारवता स्वारेण स्वर्य्यमाणेन साम्ना तान् पूर्वमाहितान् गर्भान् प्राजनयन् प्रकर्षेण उदपादयन् ॥ २ ॥

पदनिधनं प्रथमस्येत्यादिना येषान्निधनविभक्तिरुक्तास्तानवयुज्य स्तौति ।

**इमं वाव देवा लोकं पदनिधनेनाभ्यजयन्नमुं वह्निर्णिधनेनान्तरिक्षं दिङ्निधनेनामृतत्वमीनिधनेनागच्छन् ब्रह्मवर्च्चसमथनिधनेनावारुन्धतास्मिन्नेव लोकइह निधनेन प्रत्यतिष्ठन् ॥ ३ ॥**

देवाः खलु पुरा इममेव भूर्लोकं पदनिधनेन क्रियमाणेन निधनेन तद्वता साम्ना अभ्यजयन् अमुं स्वर्गं लोकं वह्निर्णिधनेन ऋगक्षराद्वहिर्भूतनिधनयुक्तेन साम्नाभ्यजयन् अथ दिङ्निधनेनागच्छन् प्राप्नुवन् दिश इति निधनवता साम्ना अन्तरिक्षमभ्यजयन् तथा अमृतत्वं कदाचिदपि मरणराहित्यं इनिधनेन इकारनिधनेन साम्ना आगच्छन् प्राप्नुवन् अथ निधनेन अथ कारणिधनेन साम्ना ब्रह्मवर्च्चसं ब्राह्मं तेजः अवरुन्धत प्राप्नुवन् तथा इहनिधनेन इहकारनिधनेन साम्ना अस्मिन्नेव भूर्लोके प्रत्यतिष्ठन् चिरकालावस्थायिनोऽभूवन् ॥ ३ ॥

अथ इवदिड़ प्रथमस्याह्नो रूपमित्यादिना यैषा इडा विभक्तिर्नानारूपोक्ता तामवयुज्यानुवादेन स्तौति ।

इमं वाव देवा लोकं द्रवदिडेनाभ्यजयन्नमुमूर्ध्वेडेनान्तरिक्षं परिष्टुब्धेडेन प्रतिष्ठामिडाभिरैडेनावारुन्धत प्रतिष्ठाध्यर्द्धेडेन व्यजयन्तास्मिन्नेव लोक इहेडेन प्रत्यतिष्ठन्॥ ४॥

इममेव भूर्लोकं देवाः पुरा द्रवदिडेन हो इडा इति युक्तेन साम्नाभ्यजयन् ऊर्ध्वेडेन अमुं द्युलोकमभ्यजयन् परिष्टुब्धेडेन परितः स्तोभयुक्तेडाशब्दोपेतेन साम्ना अन्तरिक्षलोकमभ्यजयन् इडाभिरैडेन साम्ना प्रतिष्ठां प्रतिष्ठानं अवरुन्धत प्राप्नुवन् प्रतिष्ठाय च अध्यर्द्धेडेन अर्द्धाधिकयेडया युक्तेन साम्ना अजयन्त ऊर्ध्वमभ्यजयन्त अभितो जयन्त अभितो जयं प्राप्नुवन् अस्मिन्नेव भूर्लोके इहेडेन इहकारयुक्तषडहोपेतेन साम्ना प्रत्यतिष्ठन् प्रतिष्ठिता अभवन् ॥ ४ ॥

अथैतामिडाविभक्तिं प्रकारान्तरेण स्तौष्यन् वाङ्निधनात् इडानिधनस्यातिशयं दर्शयति ।

न वाक् संवत्सरमतिवदतीडैव संवत्सरमतिवदति गर्भेण संवत्सरे पर्य्यावृत्य प्रजायते तेनातिवदति॥ ५ ॥

वाक् वाङ्निधनं संवत्सरं द्वादशमासात्मकं कालविशेषं नातिवदति अतिक्रम्य न वदति किन्तु ततः पूर्व्वमेव वदति

जननादूर्द्धं पञ्चसु मासेषु हि बालानां जल्पितं भवति इडैव इडानिधनमेव तु संवत्सरमतिवदति एतदेव विव्रियते गर्भेणेति इडेति गोनामसु पाठात् पशवो वा इडेति श्रुतेश्च इडाशब्देन पशुरेवोच्यते स च गर्भेण गर्भरूपेणावस्थितः सन् संवत्सरे मासदशके सम्पूर्णे पर्य्यावृत्य योनिदेशं प्रति स्वकीयं शिरः प्रतिनिवृत्यर्थं प्रजायते उत्पद्यते तेन प्रकारेण इडानिधनं संवत्सरमतिवदतीति ॥ ५ ॥

अस्त्वेवं ततः किमतमाह।

**ता वा एतास्तिस्रः षडहं पराच्य इडा अतियन्त्येषा नु नूतैषा विषूच्येषा प्रतीच्येतद्वोडं ॥ ६ ॥**

एता ताः पूर्वोक्ताः पराच्यः पराक् उपरिभागे वर्त्तमानास्तिस्रः इडाः परिष्टुब्वेडाद्याः षडहस्तिष्टदादि षट् पृष्ठकं अतिशयं यन्ति अतीत्य गच्छन्ति प्राप्नुवन्तीत्यर्थः द्रवादिडोर्द्धेडे तु रथन्तरस्य वृहतश्चोभयोः प्रकृतावेव सम्बन्धात् तद्विषये एवेति नताभ्यां षडहव्याप्तिः एषा नु एषा खल्विडा उता प्रोता षडहिकेषु सामसु सम्बद्धा तथैषा विषूची विष्वक् सर्व्वत्राञ्चती साम्नामधस्तादुपरिष्टाच्च वर्त्तमाना एषैव प्रतीची प्रत्यञ्चती प्रत्येकं सामानि प्राप्नुवती भवति एतदिदं परिदृश्यमानं जगत्सर्वं ऐडमु ऐडमेव इडा प्रभवमेव इडायाः पशुरूपत्वात् पशुभिश्च सर्वं जगत् पुष्टं भवतीति इडाजगतोः सम्बन्धः ॥ ६ ॥

यद्येवं इडानिधनमेव स्यात् न तर्हि वाङ्निधननिबन्धना-भीर्भवेदित्याशङ्क्य सम्पत्त्या तदपि लभ्यत इत्याह ।

**संवत्सरोऽग्निर्वाक् संवत्सरो यदग्निर्विभज्यते वाचमेव तद्विभजन्ति ॥ ७ ॥**

अग्निस्तावत् संवत्सरस्तन्निष्पाद्यत्वात् वाक् च संवत्सरात्मिका संवत्सरे पूर्णे एव शिशवो व्यक्तवर्णां वाचं प्राप्नुवन्ति तस्मादेकहायना मनुष्या वाचं वदन्तीति श्रुत्यन्तरात् अतो वाचः संवत्सरात्मकत्वं एवं परम्परया अग्निरेव वागित्युक्तं भवति युक्तञ्चैतत् अग्नेर्वाचोऽधिष्ठातृत्वात् श्रूयते हि अग्निर्वाग्भूत्वा मुखं प्राविशदिति एवं सति यदग्निर्विभज्यते अग्न इति प्रथमस्याह्नो रूपमित्यादिनोक्तेन प्रत्यहं अग्निशब्दो विभक्तिभेदेन भिद्यते तत्तेन वाचमेव तद्विभजन्ति वाग्विभक्तिरेव सा एषा विभक्तिः अतो वाङ्निधनाश्रितमपि फलं सम्पद्यत इत्यर्थः ॥ ७ ॥

तत्र विभज्यमानाग्निशब्दगतां संख्यामनूद्य प्रशंसति ।

**द्वे द्वे अक्षरे विभजन्ति द्वौ द्वौ हि मासावृतुरृतो मासानामेव तद्रूपं क्रियते ॥ ८ ॥**

अग्निर्विभक्ताविभक्तौ च द्वे द्वे अक्षरे अग्निरिति द्व्यक्षरं इन्द्र इति द्व्यक्षरञ्च विभजन्ति कुतः हि यस्माद् द्वौ द्वौ मासौ

चैत्रादिकौ सम्भूय ऋतुः वसन्तादिक ऋतुर्भवति अथो अपि च तदत्तरद्वयविभजतान्मासानां द्वन्द्वशो वर्त्तमानानामेव रूपं क्रियते ॥ ८ ॥

अथोक्तां षडहविभक्तिमनूद्य स्तौति।

**षडहानि विभजन्ति षड्ढ्वा ऋतूनां धृत्या ऋतूनां प्रतिष्ठित्या अथो ऋतूनामेव तद्रूपं क्रियते षडु पुरुषा यानग्निरनुविह्रियते ॥ ६ ॥**

दशरात्रस्यादितः षट्संख्यान्यहानि विभजन्ति एति प्रेत्याशुमदित्यादिना पूर्व्वोक्तेन साधारणरूपेण विभजन्ति विभक्तानि कुर्व्वन्ति ऋतवश्च षट् सङ्ख्याका भवन्ति यथा च तत् षडहविभजनं ऋतूनां धृत्यै स्थैर्य्याय भवति तथा तेषामृतूनां प्रतिष्ठित्यै प्रतिष्ठानाय च भवति अथोऽपि च तद्विभजनं ऋतूनामेव रूपं क्रियते ऋतवोऽपि परस्परं विभक्ताकारा विभज्यमानान्यहानि च परस्परं विलक्षणानि भवन्ति इति तद्वैलक्षण्यमेव ऋतुवैलक्षण्यकारणमित्यर्थः यस्मादेतानि विभज्यमानान्यहानि षट्संख्यानि अतएव कारणात् सदसि निविष्टा होतृमैत्रावरुणाद्या वषट्कर्त्तारः पुरुषाः षट् षट्संख्याका भवन्ति यान् होत्रादीनुलक्ष्य समीपे अग्निर्विह्रियते होत्रीयादिषु धिष्णेषु आग्नीध्रीयादाहृत्याग्निः प्रक्षिप्यते ॥ ६ ॥

ननु सर्वासां देवतानां मध्ये अग्नेरिन्द्रस्य चोभयोरेव विभक्तिरुक्ता कुतो नान्यासामित्यत आह।

**यदिदं बहुधाग्निर्विह्रियते यदसावादित्यः सर्वा इमाः प्रजाः प्रत्यङ् तस्मादेते एव देवते विभक्तिमानशाते नातोऽन्या काचन ॥ १० ॥**

यस्मात् इदमयमग्निर्बहुधा बहुप्रकारं विह्रियते यस्माच्च असौ द्युलोकस्थः आदित्यः सर्वा इमाः भूर्लोकवर्त्तिनीः प्रजाः प्रत्यङ् प्रत्यञ्चन् प्रत्येकं पूर्वस्यां दिश्युद्यन् भवति श्रुत्यन्तरञ्च भवति तस्मात् सर्वएव मन्यतेमां प्रत्युदगादितीति इन्द्र एव आदित्यः तस्माद्धेतोः एते एव अग्निरिन्द्रश्चेति देवते विभक्तिं षडहे प्रत्यहं विभागं आनशाते प्राप्नुवत्यौ अतोऽन्या एतद्व्यतिरिक्ता काचन काचिदपि देवता न प्राप्नवतीति।

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १० ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे दशमाऽध्यायस्य द्वादशः खण्डः।

दशमाध्यायः समाप्तिमगमत्।

---

# एकादशोऽध्यायः ।

अथ प्रथमः खण्डः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥

द्वादशाहं विधाय समुदायशोऽवयवशश्च तत्प्रशंसा कृता तदवयवे पृष्ठ्ये षडहे स्तोत्रीयाणां तदाश्रितानां साम्नाञ्च रूपाणि प्रदर्शितानि, अथ तद्रूपविशिष्टाः स्तोत्रीयाः सामानि च दाशरात्रिकाणि विधास्यन्ते द्वादशाहस्य यावाद्यन्तावतिरात्रौ तौ पूर्वोक्तात् ज्योतिरतिरात्रान्न विशिष्येते अत स्तौ वर्णयित्वा यानि मध्ये दशाहानि पृष्ठ्यः षडहस्त्रयश्छन्दोमाः दशममहर्विवाक्यञ्चेति तेषु प्रथमेऽहनि अग्निष्टोमसंस्थे सर्वेष्वपि स्तोत्रेषु त्रिवृदेव स्तोमः द्वितीयादीन्यष्टौ अहान्युक्थ्यसंस्थानि पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशचतुर्विंशचतुश्चत्वारिंशाष्टचत्वारिंशस्तोमकानि दशममहस्तु चतुर्विंशस्तोमकं अग्निष्टोमसंस्थं तत्राग्निष्टोमसाम्नि तु त्रयस्त्रिंशस्तोमः अथैषामह्नामतःपरं दशभिः प्रकरणैः स्तोत्रीयाः सामानि च विदधानः प्रदर्शितान् स्तोमांश्च क्रमेण विधत्ते, तत्र प्रथमेऽहनि वहिष्पवमानस्य स्तोमक्रमं विधित्सुराह ।

**स्तोमोयुज्यते सत्त्रियेभ्योऽहर्भ्यः प्रत्नवतीभिश्चोपवतीभिश्च ॥ १ ॥**

दशरात्रस्य प्रथमेऽहनि बहिष्पवमाने योऽयं विधास्यमानस्त्रिवृतः स्तोमः सोऽसौ प्रत्नवतीभिः प्रत्नशब्दयुक्ताभिः अस्य प्रत्नामनुद्युतमित्यादिभिः उपवतीभिः उपशिचायतस्युष इत्यादिभिः स्तोत्रीयाभिः प्रयुज्यते सम्बध्यते निष्पाद्यत इत्यर्थः किमर्थं सत्त्रियेभ्यः द्वादशाहप्रभृतिविश्वसृजामयनं तानि सत्राणि तत्सम्बन्धिभ्यः विधिस्थितो दशरात्रस्य सर्वसत्रसम्बन्धी भवति तत्र तत्र द्वादशाहस्य दशाहानीति विधिदर्शनात् ईदृग्भ्योऽहर्भ्यः अहरर्थं एतच्च नव भवन्ति नवाहस्य युक्त्या इत्यनेन विशदीकरिष्यते समिधो यजति तनूनपातं यजतीत्यादाविव ॥ १ ॥

प्रत्नवतीभिश्चोपवतीभिश्चेति पाठाद्योऽनुष्ठानक्रमोऽवगतस्तमनूद्य स्तौति।

**यत्प्रत्नवत्य उपवतीभ्यः पूर्वा युज्यन्ते ब्रह्म तत्पूर्वं क्षत्राद्युज्यते ब्रह्म हि पूर्वं क्षत्रात्॥ २॥**

उपवतीभ्यः पूर्वं प्रत्नवत्यो युज्यन्ते सम्बध्यन्त इति यत् तत्तेन ब्रह्म हि पूर्वं क्षत्रात् ब्राह्मणजातिरेव क्षत्रात् क्षत्रियजातेः पूर्वं युज्यते सम्बध्यते युक्तञ्चैतत् क्षत्रात् क्षत्रियजातेः पूर्वं हि ब्रह्म ब्राह्मणजातिः सृष्टिसमये हि प्रजापतिमुखात् ब्राह्मणजाताद्युत्पन्नायां पश्चादुरसो बाहुभ्याञ्च क्षत्रियस्योत्पत्तेः ॥ २ ॥

एतदेव पौर्व्वापर्य्यं प्रकारान्तरेण स्तौति ।

**मनस्तत्पूर्वं वाचो युज्यते मनो हि पूर्वं वाचो यद्धि मनसाभिगच्छति तद्वाचा वदति ॥ ३ ॥**

उपवतीभ्यः एव प्रत्नवत्यः इति यत्तेन वाचः पूर्वं मन एव युज्यते मनो हि मनः खलु वाचः शब्दात् पूर्वं प्रथमभावि भवति यद्धि यत् खलु मनसा अभिगच्छति अभिप्राप्नोति विषयीकरोति तदेव वाचा वदति न खलु कश्चित्प्रेक्षावान् मनसा अविषयीकृतं वस्तु वक्तुं शक्नोति तस्मादेतयोः पौर्वापर्य्यनियमात् अतत्येन पौर्वापर्य्येण तदेव क्रियत इत्यर्थः ॥ ३ ॥

अथ पुनः प्रकारान्तरेण स्तौति ।

**बृहत्तत्पूर्वं रथन्तराद्युज्यते बृहद्धि पूर्वꣳ रथन्तराद्विजित्या तु वै रथन्तरं पूर्वं योगमानशे ॥ ४ ॥**

तत्तेन प्रत्नवतीनां पूर्व्वयोगेन रथन्तरात् पूर्व्वमुत्पन्नं बृहत्सामैव युज्यते बृहत्साम हि रथन्तरात् पूर्व्वं प्रजापतेरजायत नन्वेवं बृहतः प्रथमभावित्वे प्रथमेऽहनि बृहत्सामैव पृष्ठस्तोत्रं स्यात् उभयसामसु च संस्तवादिषु बृहदेव पूर्व्वं सम्बध्येतेत्याशङ्कायामिदमुच्यते विजित्यात्विति तुशब्दः पञ्चम्यार्थत्वर्थः प्रजापतिरकामयत बहु स्यां प्रजायेयेति स तूष्णीम्मनसा ध्यायदित्यादौ बृहत एव प्रथमभावित्वं प्रतीयते तथापि यन्वि-

त्यांऊर्ध्वं हत् पूर्व्वं प्रजापतेः समभवदित्यादिना कस्मात् पूर्व्वं रथन्तरं योगमानश इत्यन्तेन पूर्व्वं प्रजापतेर्मनसि समुद्भूतमपि वृहत्तिरस्कृत्य सृष्टिसमये रथन्तरस्यैव प्रथमसर्ज्जनात् प्रथमयोग इति पूर्व्वमुक्तं तदेवात्र विजित्येत्युच्यते विजित्या विजयेनैव रथन्तरं हृतः पूर्व्वं दशरात्रस्य प्रथमेऽहनि योगं सम्बन्धमानशे प्राप तृचत्रयात्मको हि त्रिवृत्स्तोमस्तेषु तेषु प्रदेशेषु समाम्नातां एकैकामृचमादाय तृचीकृत्य ताः तृचाः स्युरिति ॥ ४ ॥

## संभार्य्यास्तृचा भवन्ति यथाश्रिष्ठान्वहिष्ठान् संभरेदेवमेवैतान् सम्भरन्ति गत्यै ॥ ५ ॥

एते तृचाः सम्भार्य्याः सम्पाद्या भवन्ति यद्यपि तृतीय एव तृचः सम्भार्य्यस्तथापि तद्योगात्प्राणभृतः प्रायेण सर्व्वेऽपि तृचाः सम्भार्य्या इति व्यपदेशः यथा खलु लोके आशिष्ठान् भोक्तृतमान् भक्षणसमर्थान् वहिष्ठान् वोढृतमांश्च अनडुह अन्विष्य एकत्र सम्भरेत् समूहीकरोति एवमेव एतांस्तृचान् परस्परभूतान् सम्भरन्ति समूहीकुर्व्वन्ति गत्यै गमनाय दशरात्रस्यान्तप्राप्त्यर्थं ॥ ५ ॥

अथ सलिलेभ्य इति यदुक्तं पूर्व्वं तत् स्तोतीयासङ्ख्यानुवादेनोपपादयति ।

## नव भवन्ति नवाहस्य युक्त्या ऋचश्चैवाहर्युनक्ति

**यथा प्रार्थस्य शम्या अवदध्यादेवमेवैतन्नवाहस्य शम्या आवदधाति गत्यै ॥ ६ ॥**

एवं त्रिवृत्सु तृचेषु नवस्तोत्रीया भवन्ति एतच्च नवाहस्य अविवाक्यात् पूर्व्वभाविनो नवरात्रस्य युक्त्यै योजनाय भवति एतदेव विव्रियते ऋचर्चैवाहर्युनक्तीति अतत्यया एकैकया ऋचा नवाहःसु एकैकमहर्योजितवान् भवति अपिच प्रार्थस्य प्रकर्षेण दूयर्न्ति गच्छतीति प्रार्थोऽनड्वान् तस्य युजे योजनाय यथा शम्या अवदध्यात् युगच्छिद्रेषु प्रक्षेप्यान् कीलकान् प्रोतान् कुर्य्यात् एवमेव एतत् एतेन नवर्चेन नवाहस्य योजनाय शम्या एवावदधाति तथा सति गत्यै समाप्तिपर्य्यन्तं गमनायैतत्सम्पद्यते ॥ ६ ॥

अथास्मिन्नहनि विधित्सितं स्तोमं वहिष्पवमानस्य विधाय प्रशंसति ।

**त्रिवृदेव स्तोमो भवति तेजसे ब्रह्मवर्च्चसाय ॥७॥**

सिद्धप्रायमेतत् तेजः शरीरकान्तिः ब्रह्मवर्चसं श्रुताध्ययनादिजन्यं ब्राह्मं तेजः अग्निना सहोत्पन्नत्वात् त्रिवृत्स्तोमः तस्योभयस्य कारणं भवतीत्यर्थः ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे एकादशाध्यायस्य

प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

प्रथमेऽहनि बहिष्पवमानस्य स्तोत्रीयाः स्तोमाश्च विहिताः अथाज्यानां विधित्सुराह ।

## उभाभ्यां वै रूपाभ्यां बहिष्पवमान्यो युज्यन्ते यत्सामा स्तोमो भवति तदाज्येषु ॥ १ ॥

उभाभ्यां बृहद्रथन्तराभ्यां रूपाभ्यां खलु बहिष्पवमान्यः स्तोत्रीयाः युज्यन्ते बृहत्तत् पूर्वं रथन्तरादिति हि पूर्वमुक्तं अतः प्रत्नवत्यो बार्हतं रूपं उपवत्यो राथन्तरमिति रूपद्वययोगः आज्येषु आज्यस्तोत्रेषु उत्तरस्यैव साम्नोरूपं भवति यत्सामा यत् सामपृष्ठकस्तोमवान् योगो भवति प्रथमेऽहनि होतुः पृष्ठस्तोत्रे यत्साम क्रियते तस्यैव साम्नोरूपमाज्येषु भवति नान्यस्येत्यर्थः अतएव वक्ष्यति राथन्तरमेव तद्रूपं निर्द्योतयति स्तोमइति ॥१॥

अथाज्यानि लिङ्गविशेषयुक्तानि विधत्ते ।

## निराहवन्त्याज्यानि भवन्ति युक्तमेव तैराह्वयति ॥ २ ॥

निराहवन्ति निष्कृष्य समूहान् पृथक्कृत्य संबुध्याभिमुखी कृत्याह्वानं निराहवस्तद्वन्त्याज्यानि आज्यस्तोत्राणि भवन्ति निराहवन्तीत्यत्र एकोवकारलोपश्छान्दसः तैराह्वानलिङ्गकै-राज्यैर्बहिष्पवमान्यो युक्तं योजितमेव प्रथममहराह्वयति ॥२॥

कानि पुनस्तथाविधानीति तान्याह।

**अग्न आयाहि वीतय आनो मित्रावरुणायाहि सुषमाहित इन्द्राग्नी आगतꣳ सुतमिति राथन्तरमेव तद्रूपन्निर्द्योतयति स्तोमः॥ ३॥**

एते चत्वारस्तृचाश्चत्वार्य्याज्यस्तोत्राणि एषु च आकारो दृश्यते एति प्रेत्याशुमदिति परिगणितत्वात्तच्च राथन्तरं रूपं तदेकमेव राथन्तरं रूपं निर्द्योतयति प्रकाशयति स्तोमश्चाज्येष्वपि त्रिष्टदेव सत्येकैकस्मिन्नाज्ये तृचस्यावर्त्तनेन पूरणीय इत्यर्थः एवं प्रातःसवनिकेषु पञ्चसु स्तोत्रेषु स्तोत्रीयाणामेव विधानात् अत्र गातव्यं साम प्राकृतमेव गायत्रं॥ २॥

इति ताण्ड्यमहाब्राह्मणे एकादशाध्यायस्य

द्वितीयः खण्डः।

---

अथ तृतीयः खण्डः।

अथ माध्यन्दिनपवमानस्य सामानि विधास्यन् स्तोत्रीयांस्तावद्विधाय स्तौति।

**प्रसोमासो विपश्चित इति गायत्री भवति प्रेत्या अभिद्रोणानि बभ्रव इत्यभिक्रान्त्यै सुता इन्द्राय वायव**

## इति स्वꣳस्कृत्यै प्रसोम देव वीतय इति प्रेत्यै प्रतुद्र-वेति प्रेत्यै प्रवा एतेनाह्ना यन्ति ॥ १ ॥

प्रसोमास इति गायत्रीछन्दस्का प्रथमा स्तोत्रीया भवति सा च प्रशब्दयोगात् प्रेत्यै प्रायणाय दशरात्रप्रारम्भायोचिता अभिद्रोणानि बभ्रव इत्यस्यां तु अभीत्युपसर्गौ दृश्यते तेन चा-भिक्रमणं स्मार्य्यते अतः सा अभिक्रान्त्यै अभिक्रमणाय दश-रात्रस्याभितः आक्रमणाय भवति सुता इन्द्राय वायव इत्यस्य सुतशब्देनाभिषुतसोमवाचिना अभिषवाख्यः संस्कारोवुद्ध्याप्यु-पस्थाप्यते अतः सा संस्कृत्यै प्रकृतस्य दशरात्रस्य संस्कारगुणा-तिशयाधानाय भवति प्रसोम देव वीतये प्रतुद्रवेत्यनयोः प्रशब्द-योगात् प्रायणं बुद्धिस्थं भवति अतस्तदुभयं प्रेत्यै प्रायणाय दशरात्रस्यारम्भाय योग्यं एतेन त्रिवृतः स्तोमकेन प्रथमेनाह्ना प्रयन्ति वै प्रायणमेव कुर्वन्ति यजमानाः अतः प्रायणस्य प्रति-पादिका स्तोत्रीया योग्यादिति भावः ॥ १ ॥

अथ प्रसोमास इत्यस्यां स्तोत्रीयायां गातव्यं साम विधत्ते।

## गायत्रं भवति ॥ २ ॥

तच्चैकर्चमित्यत्रोत्तरग्रन्थे एकस्या ऋच एवाध्ययनादव-सीयते ॥ २ ॥

अस्य च गायत्रस्य स्वप्रकारविधायकं ब्राह्मणं सार्थवाद-पूर्व्वकाम्नातं अत्राप्यतिदिशति।

**यदेव गायत्रस्य ब्राह्मणं ॥ ३ ॥**

यदेव प्रकृतावग्निष्टोमविहितस्य गायत्रस्य ब्राह्मणं इमे वै लोका गायत्रं व्याहृद्गेयमित्यादि तदेवास्यापि विहितस्य गायत्रस्य ब्राह्मणं प्रकरणभेदाद्ब्राह्मणस्यासम्बन्धशङ्का स्यात् तद्व्यावृत्त्यर्थमयमतिदेश: ॥ ३ ॥

अथाभिद्रोणानीत्यस्याङ्गातव्यं साम विधत्ते।

**आश्वं भवति ॥ ४ ॥**

स्पष्टं ॥ ४ ॥

एतदप्येकर्चमथैतत् प्रवृत्त्युपन्यासेन प्रजातिहेतुरिति स्तौति।

**अश्वो वै भूत्वा प्रजापतिः प्रजा असृजत स प्राजायत बहुरभवत्प्रजायते बहुर्भवत्याश्वेन तुष्टुवानः ॥ ५ ॥**

पुरा खलु प्रजापतिः सर्वकारणभूतः स्रष्टा अश्वः अश्वतरी भूत्वा प्रजाः स्रष्टव्या असृजत सृष्टवान् पुनरपि स प्राजायत बहुप्रजारूपेणोदपद्यत बहुरनेकविधोऽभवत् अतः आश्वेनाश्वसम्बन्धिना साम्ना तुष्टुवानः स्तुतवान् यजमानः प्रजायते पुत्रपौत्रादिरूपेणोत्पद्यते ततो बहुरनेको भवति ॥ ५ ॥

अथैतस्य निधनविभक्तिमनूद्य स्तौति।

**एकाक्षरन्निधनमुपयन्ति रथन्तरस्यानतिवादाय ॥ ६ ॥**

रा २३४५ इति एकाक्षरं हि अस्य साम्नो निधनं तदुपर्यन्ति रथन्तरस्य साम्नोऽनतिवादायातिवादाभावाय भवति असिति हि रथन्तरस्यैकमेवाक्षरन्निधनं यद्यत्रापि अनेकमक्षरं निधनं स्यात् रथन्तरस्यातिवादो भवेत् अत उभयोरेकाक्षरत्वेन साम्यात् अतिवादाभावः सिध्यतीत्यर्थः ॥ ६ ॥

एतद्वेदनं प्रशंसति।

**अनतिवादीनं भ्रातृव्यो भवति य एवं वेद ॥७॥**

य एवमुक्तमर्थं जानाति एनं वेदितारं भ्रातृव्यः शत्रुरनतिवादी अतीत्य वादी नभवति एतद्वचनस्योपरि भ्रातृव्यवचनन्नोत्पद्यत इत्यर्थः ॥ ७ ॥

अथ सुता इन्द्राय वायव इत्यस्याज्ञातव्यं साम विधत्ते।

**सोमसाम भवति ॥ ८ ॥**

सोमेन दृष्टं साम सोमसाम तदप्यत्रैव कर्त्तव्यं ॥ ८ ॥

अथास्य साम्नः सोमसम्बन्धमेवाख्यानेन प्रदर्शयन् राज्यादिहेतुत्वेनेदं स्तौति।

**यथा वा इमा अन्या ओषधयएवꣳ सोम आसीत्सतपोऽतप्यत स एतत्सोमसामापश्यत्तेन राज्यमाधिपत्यमगच्छद्यशोभवद्राज्यमाधिपत्यङ्गच्छति यशो भवति सोमसाम्ना तुष्टुवानः ॥ ९ ॥**

यथा वा यथा खलु द्रुमाः इदानीं दृश्यमानाः अन्या ओषधयः लतागुल्माद्याः एवमेव सोमः पुरा अविशिष्ट आसीत् स सोमस्तपोऽतप्यत ईश्वरस्मरणात्मकं तपश्चक्रे तत ईश्वरानुग्रहात् स सामापश्यत् दृष्टवान् दृष्ट्वा च तेन स्तुत्वा राज्यं राज्ञः कर्म्म आधिपत्यं ओषधीनामधिपतित्वञ्चागच्छत् प्राप्नोत् ततो यशो यशस्वी अभवत् अतोऽन्योऽपि सोमसाम्ना तुष्टुवानः स्तुत्वा राज्यमाधिपत्यं च गच्छति यशो यशस्वी च भवति ॥९॥

प्रसोम देव वीतये इति तृचे गातव्यसामविधायकं प्राकृतं तद्ब्राह्मणं चातिदिशति।

## यौधाजयं भवति यदेव यौधाजयस्य ब्राह्मणं॥१०

देवा वै सत्रमासताग्निरिन्द्रोवायुरित्युपक्रम्य अथेन्द्रो यौधाजयं प्राहरतेत्यादि यदेव प्राकृतस्य यौधाजयस्य ब्राह्मणन्तदेवास्यापि ब्राह्मणं द्रष्टव्यं ततोक्तं सर्वस्यापि भवतीत्यर्थः॥१०॥

अथ प्रतुद्रवेति तृचे गातव्यं साम विधाय पूर्ववत्तद्ब्राह्मणमप्यतिदिशति।

## औशनं यदौशनस्य स्तोमः॥११॥

भवति ब्राह्मणमिति पदद्वयमनुषज्यते औशनं भवति यदेव प्रकृतावौशनस्य ब्राह्मणमाम्नातं अथवा पुरौशनं प्राहरते-

त्यादिना देवस्थायौशनस्य ब्राह्मणं भवति स्तोत्रीयाभिर्माध्य-न्दिनस्य पवमानस्य त्रिवृत्स्तोमो निष्पन्न इत्यर्थः ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे एकादशाध्यायस्य

तृतीयः खण्डः।

---

अथ चतुर्थः खण्डः।

होतृमैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां क्रमेण चत्वारि पृष्ठस्तोत्राणि तेषां स्तोत्रीयाः सामानि च प्राकृतान्येव तत्र होतुः पृष्ठस्य स्तोत्रीयं प्रगाथविधिमनूद्य स्तौति।

**अभि त्वा शूर नो नुम इत्यभीति रथन्तरस्य रूपꣳ राथन्तरꣳ ह्येतदहः ॥ १ ॥**

अभित्वा शूरेत्येषा हि रथन्तरस्य योनिः ततोऽभिशब्दस्यो-त्पत्तावेव रथन्तरेण सम्बन्धादभिशब्दो रथन्तरस्य रूपं एत-त्प्रायणीयमहश्च राथन्तरं रथन्तरपृष्ठकं हि यस्मादेवं तस्माद-भिशब्दयुक्तः प्रगाथोऽस्मिन्नहनि सम्बन्धयोग्य इत्यर्थः ॥ १ ॥

अथ द्वितीयस्य पृष्ठस्य स्तोत्रीयं तृचमुपादाय स्तौति।

**कया नश्चित्र आभुवदिति कवत्यस्तेन प्राजापत्याः को हि प्रजापतिः प्रजापतेराप्त्यै ॥ २ ॥**

कयानश्चित्र इत्याद्याः कवत्यः कशब्दोपेतास्तिस्र ऋचो भवन्ति यतः कवत्यस्तेन प्राजापत्याः प्रजापतिर्देवताकाः कुत एतत् को हि कशब्दाभिधेयः खलु प्रजापतिः एवं कवत्यो भवन्तीति यत् तत् प्रजापतेराप्त्यै प्राप्तये सम्पद्यते ॥ २ ॥

अथ तृतीयस्य पृष्ठस्य स्तोत्रीयं तृचमनूद्य स्तौति ।

**तं वोदस्ममृतीषहं वसोर्मन्दानमन्धसोऽभिवत्सन्न स्वसरेषु धेनव इत्यभीति रथन्तरस्य रूपꣳ राथन्तरꣳ ह्येतदहः ॥ ३ ॥**

तं वोदस्ममित्यस्मिन्नृचे अभिवत्समिति अभिशब्दो विद्यते अभीत्येतद्रथन्तरस्य रूपमित्यादि पूर्ववद्व्याख्येयं ऋचस्तु उत्तरास्वेव व्याख्याता इति न पुनर्व्याख्यायते ॥३॥

अस्मिन्नेव तृचे कञ्चित्पादमादाय तदभिप्रायमाह ।

**इन्द्रङ्गीर्भिर्हवामह इति हवन्त एवैनं ॥ ४ ॥**

इन्द्रं गीर्भिर्हवामह इत्यनेन एनमिन्द्रं हवन्त एव आह्वयन्त एव ॥ ४ ॥

अथ चतुर्थस्य पृष्ठस्य स्तोत्रीयं प्रगाथमनूद्य स्तौति ।

**तरोभिर्वो विदद्वसुमिति स्तोमो वै तरो यज्ञो**

**विदद्वसुः स्तोमेन वै यज्ञो युज्यते यत्तरोभिर्वो विदद्वसुमित्याह यज्ञमेव तद्युनक्ति ॥ ५ ॥**

स्तोभो वै देवेषु तरो नामासीदित्यादिना तरः शब्दस्य स्तोमवाचकत्वं विदद्वसुशब्दस्य यज्ञवाचकत्वं पूर्वमुक्तं तरत्यनेन यज्ञमिति तरः स्तोमः वसूनां लम्भकत्वात् यज्ञो विदद्वसुः अत्र मन्त्रे यद्यपि शब्दद्वयमर्थान्तरपरं तथापि शब्दसामान्येन स्तुतिः स्तोमेन च लिष्टह्यादिना यज्ञो युज्यते सम्बध्यत इति च प्रसिद्धं तथा सति यया तरोभिर्वोविदद्वसुमिति तरोभिः करणैः सम्बन्धं विदद्वसुमाह तत्तेन यज्ञमेव विदद्वसुवाच्यन्तरःशब्दवाच्येन स्तोमेन युनक्ति सम्बद्धं करोति ॥ ५ ॥

अथ प्रथमे स्तोत्रीये प्रकृतमेव सामविधिमनूद्य स्तौति।

**रथन्तरं भवति ब्रह्म वै रथन्तरं ब्रह्म प्रायणीयमहर्ब्रह्मण एव तद्‌ब्रह्माक्रम्य प्रयन्ति ॥ ६ ॥**

ब्रह्म ब्राह्मणजातिरेव रथन्तरं प्रजापतिमुखात्सहोत्पन्नत्वात् प्रयन्त्यनेनेति प्रायणीयं प्रथममहस्तच्च ब्रह्म तस्मिन्नहनि रथन्तरस्य करणात् ब्रह्मण एव सकाशात् ब्रह्माक्रम्याधिष्ठाय प्रयन्ति प्रायणमुपक्रमं कुर्वन्ति ॥ ६ ॥

प्रकारान्तरेण प्रशंसति।

**इयं वै रथन्तरमस्यामेव प्रतिष्ठाय सत्रमासते ॥ ७ ॥**

इयं दृश्यमाना भूमिरेव रथन्तरं तथा सति अस्यामेव पृथिव्यां प्रतिष्ठाय सत्रमासतेऽनुतिष्ठन्ति ॥ ७ ॥

अथ मैत्रावरुणपृष्ठस्तोत्रनिवर्त्तकं साम विधाय प्रशंसति।

**वामदेव्यं भवति पशवो वै वामदेव्यं पशूनामवरुध्यै प्राजापत्यं वै वामदेव्यं प्रजापतावेव प्रतिष्ठाय सत्रमासते ॥ ८ ॥**

प्राप्तिहेतोः तथा पशुसाधनत्वात् वामदेव्यस्य पशुत्वं कयानश्चित्र इति वामदेव्याधारस्य तृचस्य प्राजापत्यत्वात् तदाश्रितं सामापि प्राजापत्यमित्युक्तं स्पष्टमन्यत् ॥ ८ ॥

अथ तृतीयस्य पृष्ठस्तोत्रस्य साम विधाय स्तौति।

**नौधसं भवति तद्ब्रह्म वै नौधसं ब्रह्म प्रायणीयमहर्ब्रह्मण एव तद्ब्रह्माक्रमन्ते ॥ ९ ॥**

नोधा नाम ऋषिस्तेन दृष्टं साम नौधसं तद्ब्रह्म परिदृढं यद्वा बृहत् प्रतिरूपकत्वेन राथन्तरेऽहनि प्रयोज्यत्वात् ब्रह्मेति व्यपदेशः प्रायणीयमहस्य परिदृढं मुख्यत्वात् एवं सति नौधसं भवतीति यत्तेन ब्रह्मणः सकाशादेव ब्रह्माक्रमन्ते अवलम्बते ॥ ९ ॥

अथ चतुर्थस्य पृष्ठस्य साम प्रदर्श्य तच्च रथन्तरञ्चोभयं संयुज्य स्तौति।

कालेयं भवति समानलोके वै कालेयञ्च रथन्तरञ्चेयं वै रथन्तरं पशवः कालेयमस्याञ्चैव पशुषु च प्रतिष्ठाय सत्त्रमासते ॥ १० ॥

कालेयं सामाच्छावाकपृष्ठस्तोत्रं भवति कालेयञ्च रथन्तरञ्चैते सामनी समानलोके समानायतने रथन्तरं यत्र प्रयुज्यते तत्र कालेयमपि प्रयोज्यमित्यर्थः इयं खलु पृथिवी रथन्तरं साम पशवस्तु कालेयं तत्साधनत्वात् ईदृशयोरुभयोः प्रयोगात् अस्याञ्चैव पृथिव्यां पशुषु गवादिषु च प्रतिष्ठाय चिरकालं स्थित्वा सत्त्रमासते अनुतिष्ठन्ति ॥ १० ॥

अस्य साम्नो निधनस्य अहरानुरूप्यं दर्शयति।

इडवदिडं तथा ह्येतस्याह्नोरूपं स्तोमः ॥ ११ ॥

हो इडेति· त्रिप्रगेयेन इडाशब्देन युक्तं एतत्साम तथाहि तथा खल्वेतस्य प्रायणीयस्याह्नोरूपं पूर्वमुत्पन्नं तं इडवदिडं प्रथमस्याह्नोरूपमिति एतेषु चतुर्षु पृष्ठस्तोत्रेषु उक्तएव त्रिवृत् स्तोमोवेदितव्यः ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे एकादशाध्यायस्य

चतुर्थः खण्डः।

---

अथ पञ्चमः खण्डः ।

अथार्भवपवमानस्य स्तोत्रीया विधाय तत्र तासामानु-रूप्यञ्च दर्शयति ।

**प्रसोमासो मदच्युत इति गायत्री भवति मदवद् वै रसवत्तृतीयसवनम्मदमेव तद्रसं दधात्यया पवस्व देवयुरित्येति रथन्तरस्य रूपꣳ राथन्तरꣳ ह्येतदहः पवतेऽहर्य्यतो हरिरिति बृहतो रूपं बृहदेव तदेतस्मिन्नहनि युनक्ति तद्युक्तꣳ स्व आरभन्ते प्रसुन्वानायान्धस इति प्रवत्यो भवन्ति प्रणिनीषेण्यमिव ह्येतदहरभिप्रियाणि पवते च नोहित इत्यभीति रथन्तरस्य रूपꣳ राथन्तरꣳ ह्येतदहः ॥ १ ॥**

प्रसोमास इत्येषा एका स्तोत्रीया गायत्री प्रथमा भवति तत्तृतीयसवनं तन्मदवद्धि मदयुक्तमेव रसवत् रसयुक्तं भवति तत्र शिरावनयनेन मदकररसजननात् विश्वे देवाः सोमस्य मत्सन् ऋभवोदेवाः सोमस्य मत्सन्नित्यादिनिविन्मन्त्रवर्णाच्च तृतीयसवनस्य मदहेतुत्वं गम्यते तत्तेन मदवत्या गायत्र्याः प्रयोगेन मदं मदकरमेव रसं तृतीयसवने दधाति, अयापवस्वेति अपरा स्तोत्रीया तत्र चाकारो विद्यते आ इति च रथन्तरस्य रूपं एतिप्रेत्याघ्नुमादे इति परिगणनात् एतत्रायणीयमहस्य

राथन्तरं अतो रथन्तररूपयुक्तमत्र प्रयोगार्हमित्यर्थः, पवते इर्य्यत इति वर्त्तमानकालाभिधायिना पवनस्य स्थितिः प्रतीयते तच्च बृहतोरूपं उपरिस्थितं द्वितीयस्याह्नोरूपमित्यादिना बृहतस्तद्रूपत्वस्योक्तत्वात् तत्तेन स्तोत्रीयाकरणेन बृहत्सामैव एतस्मिन् प्रथमेऽहनि युनक्ति पूर्व्वस्मिन्नहनि युक्तं सम्बद्धं तत्सामाख्या श्वःपरेद्युरारभन्ते प्रयोक्तुं परिगृह्णन्ति, प्रस्तुन्वानायेत्येषा परा स्तोत्रीया यद्यप्येकर्च्चमेव गौरीवितं गौतमश्चात्र गीयते तथापि उत्तराभ्यां सह मिलित्वैतत्प्रशस्यते प्रवत्यः प्रशब्दयुक्ता भवन्ति तत्प्रायणीयमहः प्रणिनीषेण्यमिव हि प्रणेतव्यत्वेनेष्टं खलु, अभिप्रियाणीत्यपरः स्तोत्रीयस्तृचः अभीति रथन्तरस्य रूपं तद्योन्याममभित्वा शूरेति दृष्टत्वात् गतमन्यत् ॥ १ ॥

अथाग्निष्टोमसाम्नः स्तोत्रीयां दर्शयति ।

यज्ञायज्ञावो अग्नय इत्यग्निर्वै यज्ञो यज्ञएव तद्यज्ञं प्रतिष्ठापयति ॥ २ ॥

यज्ञा यज्ञाव इत्यस्मिन् प्रगाथे यज्ञायज्ञेति द्वौ यज्ञशब्दौ दृश्येते तयोरेकयज्ञशब्दो अग्निवाचकः अपरस्तु क्रियाया इत्यभिप्रायेण व्याचष्टे अग्निर्वै यज्ञ इति योऽयं यज्ञः यज्ञशब्दाभिधेयः क्रतुः सोऽग्निर्वै अग्निरेव तन्निष्पाद्यत्वात् यज्ञशब्दस्योपरि पुनर्य्यज्ञशब्दोच्चारणात् यज्ञे यज्ञे संस्तुते अग्नावेव तत्तेन यज्ञं प्रतिष्ठापयति ॥ २ ॥

अथ प्रसोमास इत्याद्यायां स्तोत्रीयायां गायत्रं साम विधाय इमे वै लोका गायत्रं त्र्याहृत्येयमित्यादिकं तद्ब्राह्मणत्वात्तिदिशति।

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणं ॥ ३ ॥**

व्याख्यातमेतत् ॥ ३ ॥

अथ तस्यामेव स्तोत्रीयायां सामान्तरं विधाय निधनद्वारा तत्प्रतिष्ठाहेतुरिति स्तौति।

**सꣳहितं भवति द्व्यक्षरणिधनं प्रतिष्ठायै प्रतिष्ठायैव सत्रमासते ॥ ४ ॥**

गायत्रं संहितञ्चैते द्वे अपि च सामनी एकर्चे तत्र संहितं द्व्यक्षरणिधनं द्वे अक्षरे निधनं यस्य तत्तथोक्तं क्रतुः इति हि तस्य निधनमधीयते तस्य मनुष्यपदद्वयसाम्यात् प्रतिष्ठायै प्रतिष्ठानाय भवति पवमानेन निधनेन प्रतिष्ठायैवानन्तरं प्रतिष्ठिताः यजमानाः सत्रमासते ॥ ४ ॥

अया पवस्वेत्यस्यां गालव्यं साम विदधाति।

**सफं भवति ॥ ५ ॥**

स्पष्टोऽर्थः ॥ ५ ॥

**सफेन वै देवा इमान् लोकान् समाप्नुवन् यत्स-**

**माप्नुवꣳस्तत्सफस्य सफत्वमिमानेवैतेन लोकान् स-माप्य सत्रमासते ॥ ६ ॥**

सफेन खलु साम्ना साधनेन देवाः पुरा इमान् पृथिव्यादि-लोकान् समाप्नुवन् सम्यगाप्तवन्तः यद्यस्मात्समाप्नुवन् तत्तस्मात् समाप्तिसाधनत्वात् सफस्य साम्नः सफत्वं सफमिति संज्ञा सम्पन्ना संपूर्वादाप्नोतेः सफशब्दो व्युत्पादनीयः पृषोदरादि-त्वाद्वर्णविकारः यस्मादेवं तस्मादिदानीन्तना अपि यजमानाः एतेन सफेन साम्ना इमानेव लोकान् समाप्य सम्यगवाप्य सत्रमासते ॥ ६ ॥

पवते हर्य्यतो हरिरित्यस्यां गातव्यं साम दधाति ।

**आच्छारं भवति ॥ ७ ॥**

स्पष्टोऽर्थः ॥ ७ ॥

इदं साम भ्रातृव्यापनोदनहेतुरिति प्रतिपिपादयिषुराह ।

**अष्टौ वा एताः कामदुघा आसꣳस्तासामेका समशीर्य्यत सा कृषिरभवद्दृध्यतेऽस्मै कृषौ य एवं वेद ॥ ८ ॥**

पुरा खलु एता गायत्रीत्रिष्टुबाद्याः अष्टौ अष्टसंख्याः सत्यः कामदुघाः कथमस्य काम्यमानस्याभिमतस्य सर्व्वस्य फलस्य दोग्ध्र्यो गोरूपा आसन् तासाम्मध्ये एका समशीर्य्यत विशी-

र्णी प्रवृत्ताभूत् ततः सा कृषिः व्रीहियवादिहेतुः कर्षणक्रिया अभवत् अत इदानीं गायत्र्यादीनि चतुरक्षराधिकानि छन्दांस्युपलभ्यन्ते एवं कृषेरुत्पत्तिं यो वेद जानाति तस्मै जानते कृषौ कर्षणक्रियायां ऋध्यते ऋद्धिः समृद्धिर्भवति ॥ ८ ॥

अथ प्रतिपिपिक्षितं भ्रातृव्यापनोदनमेव दर्शयति ।

**तासु देवासुरा अस्पर्द्धन्त ते देवा असुरान् कामदुघाभ्य आचारेणानुदन्त नुदते भ्रातृव्यं कामदुघाभ्य आचारेण तुष्टुवानः ॥ ९ ॥**

तासु पूर्वोक्तासु कामदुघासु देवासुराः देवाश्चासुराश्चास्पर्द्धन्त परस्परं अस्पर्द्धन्त स्पर्द्धां कृतवन्तः ते स्पर्द्धमाना देवाः अनेनाचारेण साम्ना तानसुरान् कामदुघाभ्योऽनुदन्त प्रेरयन् ताभिरसुरान्वियोजितवन्त इत्यर्थः यत एवं अतो हेतोरिदानीमपि आचारेण तुष्टुवान इति स्तुतवान् यजमानो भ्रातृव्यं शत्रुं कामदुघाभ्यः सकाशात् नुदते प्रेरयति निर्गमयति ॥ ९ ॥

अथ प्रसङ्गादिदं साम कस्यचिद्यजमानविशेषस्य ब्रह्मसामत्वेन विधित्सुरन्वर्थां आचारसंज्ञां निर्वक्ति ।

**एभ्यो वै लोकेभ्यो रसोऽपाक्रामत्तं प्रजापतिराचारेणाचारयद्यदाचारयत्तदाचारस्याचारत्वं ॥१०॥**

एभ्यस्त्रिभ्यो लोकेभ्यः सकाशात् पुरा रसः क्षीराद्यात्मकः

अपाक्रामत् अपागच्छत् तमपक्रान्तं रसं प्रजापतिः प्रजानां पालयिता देवः आचारेणानेन साधनेनाचारयत् आसमन्तादासिक्तवान् यद्यस्मादनेनाचारयत् यत्तस्मादस्य साम्न आचारत्वं आचारमिति नाम सम्पन्नं ॥ १० ॥

अस्त्वेवं किं ततइत्याह।

तस्माद्यः पुरा पुण्यो भूत्वा पश्चात्पापीयान् स्यादाचारं ब्रह्मसाम कुर्वीतात्मन्येवेन्द्रियं वीर्य्यꣳ रसमाचारयति ॥ ११ ॥

यस्मात् चारणसाधनमेतत्साम तस्माद्योयजमानः पुरा पूर्व्वस्मिन् काले पुण्यः धनादिभिः श्रेष्ठो भूत्वा पश्चात्परस्मिन् काले पापीयान् पापिष्ठो दरिद्रतमः स्यात् भवेत् आचारं साम ब्रह्मसाम कुर्वीत कृतेन च तेन साम्ना आत्मनि स्वस्मिन्निन्द्रियं इन्द्रस्य सम्बन्धि वीर्य्यं रसं पयःप्रभृतिकञ्च आचारयति आसेचयति ॥ ११ ॥

अथ प्रकृतमेवानुसरन् सफमाचारञ्चोभयं संयुज्य धृतिहेतुत्वेन स्तौति।

जनुषैकर्च्चौ भवतोऽह्नो धृत्यै यद्वा एतस्याह्नोऽधृतं तदेताभ्यान्दाधार ॥ १२ ॥

जनुषा जन्मना स्वभावतः एतौ सामविशेषौ एकर्च्चौ एक

स्यामेवर्च्चि गेयौ भवतः तथा चोभयोः साम्यात् पादद्वयवत् अस्य प्रायणीयस्याह्नो धृत्यै धारणाय भवति एतदेव विव्रियते यद्वा इत्यादिना यत् खलु एतस्य प्रायणीयस्याह्नः अधृतमधारितं अनाश्रितं भवति तदेताभ्यां सामभ्यां दाधार स्तोता धारयति ॥ १२ ॥

अथ प्रसुन्वानायेत्यस्यामृचि गौरीवितगौतमे गातव्ये तत्राद्यं विदधाति ।

## गौरीवितं भवति ॥ १३ ॥

स्पष्टं ॥१३॥

अहीनेषु क्रतुषु पूर्वोत्तरयोरह्नोरिदं साम सन्धानहेतुरिति दर्शयिष्यन् तदर्थमस्य साम्नोऽतिरिक्ततामाह ।

## गौरीवितिर्वा एतच्छाक्त्यो ब्रह्मणोऽतिरिक्तमपश्यत्तद्गौरीवितमभवत् ॥ १४ ॥

शाक्त्यः शक्तिगोत्रः गौरीवितिर्नामऋषिः पुरा ब्रह्मणः शब्दब्रह्मात्मिकाया वाचो विभज्यमानायाः एतत्सामातिरिक्तमपश्यत्तत्साम गौरीविताख्यं अभवत् देवा वै वाचं व्यभजन्त तस्या यो रसोऽत्यरिच्यत तद्गौरीवितमभवदिति हि ब्राह्मणं ॥ १४ ॥

किमतस्तदाह ।

## अतिरिक्तं वा एतदतिरिक्तेन स्तुवन्ति यद्गौरी-

**वितेनाहीनान्त्स्नुवन्नवत्यपि प्रजाया उपक्लृप्तं ॥१५॥**

एतद्गौरीवितं उक्तप्रकारेणातिरिक्तं वै अधिकमेव खलु अतोऽतिरिक्तेनाधिकेन अत स्थित्वैव अहरन्तरं व्याप्तुं यक्तेन साम्ना स्तुवन्ति अहीनानहःसमूहान् अह्नः समूहैरेव वक्तव्यः यद्गौरीवितेन साम्नाऽहीनान् सन्तनोति तेन प्रजायाः पुत्र-पौत्रादिरूपायाः उपक्लृप्तं उपकल्पितं सम्पादितं धनादिकं श्वस्तनवत् श्वः परेद्युरपि वर्त्तमानं भवति सर्व्वदावस्थितं भवति न कदाचित् चीयत इत्यर्थः ॥ १५ ॥

अथैतत्प्रजातिहेतुत्वेन स्तौति।

**वृषा वा एतद्वाजिसाम वृषभोरेतोधा अद्यस्तुवन्ति श्वः प्रजायते ॥ १६ ॥**

वाजि वेजनवान् बलवद्वान् एतत्साम वृषा वै वर्षणसमर्थः पुङ्गवः स च वृषभो रेतोधा रेतसः पुत्रपौत्राद्युत्पत्तिहेतुभूतस्य वीर्य्यस्याधाता भवति अतो वृषभः स्तुतेनानेन साम्ना अहीनेषु अद्यास्मिन्नहनि स्तुवन्ति तेन च रेत एवाभिषिक्तं भवति श्वः परेद्युः प्रजायते तदेव निहितं रेतः प्रजारूपेणोत्पद्यते ॥ १६ ॥

अथास्याधारभूताया ऋचश्छन्दोद्वारा प्रजाहेतुत्वमाह।

**अनुष्टुभि छन्दसां क्रियतेऽनुष्टुभि छन्दसां योनिः स्वायामेव तद्योनौ रेतोधत्ते प्रजात्यै ॥ १७ ॥**

छन्दसां गायत्र्यादीनां मध्ये अनुष्टुभि अनुष्टुप्छन्दस्कायामृचि प्रमुन्वानायेत्यस्यां क्रियते तत्कस्य हेतोः हि यस्मात् छन्दसां गायत्र्यादीनामनुष्टुप् योनिर्भवति अनुष्टुप् च वै सप्तदशस्य सम्भवतामित्यादिना छन्दसामनुष्टुप्योनित्वञ्च पूर्वमेव प्रदर्शितं तत्तस्माच्छन्दसां योनावनुष्टुभि गौरीवितस्य करणात् स्वायां स्वकीयायां आत्मीयायामेव योनौ रेतो धत्ते आधत्ते प्रजात्यै पुत्रादिरूपेणोत्पत्त्यै ॥ १७ ॥

एतद्वेदनं प्रशंसति ।

**प्रजायते बहुर्भवति य एवं वेद ॥ १८ ॥**

स्पष्टोऽर्थः ॥ १८ ॥

अधुनास्य साम्नोऽहःसमूहे प्रयुज्यमानस्य पूर्वोत्तरयोरह्नोः सन्धायकत्वं दर्शयति ।

**द्युदासम्भवत्येतौ वा उदासौ स्वर्गस्य लोकस्यावसानदर्शौ पूर्वेण पूर्वमहः सꣳस्थापयन्त्युत्तरेणोत्तरमहरभ्यतिवदन्ति ॥ १९ ॥**

एतत्साम द्युदासं द्वावुदासावुत्क्षेपौ यस्मिन् तथाविधं भवति ततश्च किं एतौ खलूदासौ स्वर्गस्य लोकस्यावसानदर्शौ यारदृश्यानौ तयोः पूर्व्वेण पूर्व्वमनुष्ठीयमानमहः संस्थापयन्ति

परिसमापयन्ति उत्तरेणोदासेन उत्तरभागाभ्यहर्भिलक्ष्याति-वदन्ति इदमहरतिक्रम्य वदन्ति ॥ १९ ॥

अथैतेनोदासद्वयेन यजमानानां स्वर्गलोकाध्यवसानं भवतीति दर्शयति।

**तद्यथाऽदः पूर्वेद्युः स्पष्टं तृणोदकमन्ववस्यन्तो यन्त्येवमेवताभ्याꣳ स्वर्गं लोकमन्ववस्यन्तो यन्ति ॥२०**

तदिति वाक्यालङ्कारे यस्मादेतावुदासौ स्वर्गस्य लोकस्यावसानदर्शौ दर्शिनौ अतोऽस्माद्धेतोः यथा पूर्वेद्युः पूर्वस्मिन् दिवसे यागकाले तृणोदकं समीपस्थानि तृणान्युदकानीति चान्ववस्यन्तोयन्ति एवमेवैताभ्यामुदासाभ्यां यजमानाः स्वर्गं लोकमन्ववस्यन्तः अनुक्रमेण पश्यन्तोयन्ति गच्छन्ति ॥ २० ॥

अथास्यामेव स्तोत्रीयायां सामान्तरं विधत्ते।

**गौतमं भवति ॥ २१ ॥**

गौतमेन दृष्टं साम गौतमं एतदप्यत्रैकर्चः ॥ २१ ॥

तदेतत् स्वर्गे चिरकालस्थितिहेतुत्वेन स्तौति।

**सामार्षेयवत् स्वर्गाय युज्यते स्वर्गाल्लोकान्न च्यवते तुष्टुवानः ॥ २२ ॥**

आर्षेयवत् ऋषिसम्बन्धवत् साम स्वर्गाय युज्यते स्वर्गप्राप्त्यै

युक्तं भवति ततोऽनेन तुष्टुवानः स्तुतवान् स्वर्गात् लोकान्न च्यवते न प्रच्युतो भवति ॥ २२ ॥

अथ सामान्तरस्य पूर्व्वमुक्तं ब्राह्मणमत्राप्यतिदर्शयति।

**यदु चैवानुष्टुभस्य मध्ये निधनस्य ब्राह्मणं तदु चैतस्य ॥ २३ ॥**

प्रकृतौ हि पुरोजितीवो अन्धस इत्यस्मिन्नानुष्टुभे तृचे श्यावाश्वान्धीगवे द्वे सामनी विहिते अत्रान्धीगवस्मध्ये निधनं दृष्टाचरम्मध्यतो निधनमुपयन्तीति तत्र स्रवणात् आनुष्टुभस्य आनुष्टुभि क्रियमाणस्य मध्ये निधनस्यान्धीगवस्य यदु चैव यदेव च ब्राह्मणं मध्ये निधनमैडम्भवत्येतेन वै तृतीयसवनं प्रतिष्ठितमित्यादिकं तदु तदेव चैतस्य गौतमस्यापि ब्राह्मणं तत्र प्रतिपादितं सर्व्वं अनेनापि शेषत्वेनान्वीयत इत्यर्थः ॥ २३ ॥

अथाभिप्रियाणीति तृचे गेयं साम विदधाति।

**कावं भवति ॥ २४ ॥**

स्पष्टोऽर्थः ॥ २४ ॥

अथैतल्लोकप्राप्तिहेतुरित्याह।

**लोकविन्दु साम विन्दते लोकं कावेन तुष्टुवानः ॥२५**

लोकविन्दु लोकस्य लम्भकं एतत्साम अतोऽनेन कावेन तुष्टु

वानः स्तुतवान् लोकमभिलषितं स्थानं विन्दते विद्लाभ इत्य-स्माद्धातोः विन्दुरिच्छुरिति उप्रत्ययान्तो निपातितः ॥ २५ ॥

अस्य निधनं प्रदर्श्य स्तौति।

**स्वारमु स्वरेण स्वरेण हि देवेभ्योऽन्ततोऽन्नाद्यं प्रदीयते स्वरेणैव तद्देवेभ्योऽन्ततोऽन्नाद्यं प्रयच्छति ॥२६**

स्वरेण स्वरितेन स्वारं स्वरनिधनञ्चैतद्भवति ततः किमुच्यते स्वरेण स्वर्य्यमाणेन वषट्कारेण स्वरितान्तेने स्वाहाकारेण वा खलु देवेभ्यः अन्ततो मन्त्रावसानेऽन्नाद्यं अत्तुं योग्यञ्चरुपुरो-डाशादिकमन्नं प्रदीयते तत्तस्मादत्रापि अन्ततः अहरवसाने तृतीयसवने देवेभ्यः स्वरेणैव कावसम्बन्धिना क्रियमाणेनान्नाद्यं देवेभ्यः प्रयच्छति एवमार्भविकस्य त्रिवृत्स्तोमस्य नवस्तोतीया-स्तवत्यानि सामानि च विहितानि ॥ २६ ॥

अथाग्निष्टोमसाम विधत्ते।

**यज्ञायज्ञीयं भवति ॥ २७ ॥**

स्पष्टं ॥ २७ ॥

तदन्ततः स्तौति।

**वाग्यज्ञायज्ञीयं वाचि यज्ञः प्रतिष्ठितो वाच्येव तद्यज्ञमन्ततः प्रतिष्ठापयन्ति तं वाचोऽधि स्व आर-भन्ते ॥ २८ ॥**

वाङ्निधनत्वाद्यज्ञायज्ञीयं साम वागात्मकं वाचि च वेदात्मिकायां यज्ञः प्रतिपाद्यत्वेन प्रतिष्ठितः यस्मादेवं तस्मादन्ततोऽहरवसाने आश्रयभूतायां वाच्येव यज्ञं प्रतिष्ठापयन्ति निदधति पूर्व्वेद्युः प्रतिष्ठापितं यज्ञं वाचोऽधि वाचः सकाशादेव श्वः परेद्युरारभन्ते पुनराददते ॥ २८ ॥

तस्याग्निष्टोमसाम्नः स्तोमक्लृप्तिं प्रदर्श्य स्तौति।

**त्रिवृदेव स्तोमो भवति तेजसे ब्रह्मवर्च्चसाय ॥२९॥**

स्पष्टमुक्तं पूर्व्वं ॥ २९ ॥

इति ताण्ड्यमहाब्राह्मणे एकादशाध्यायस्य

पञ्चमः खण्डः।

---

अथ षष्ठः खण्डः।

त्रिवृदग्निष्टोमस्य दाशरात्रिकस्य प्रथमस्याह्नः स्तोमक्लृप्तिर्विहिता अथ पञ्चदशस्तोमकस्य पृष्ठ्यस्य द्वितीयस्याह्नः स्तोमक्लृप्तिरभिधीयते तत्र बहिष्पवमानस्य प्रतिपत्तृचं विदधाति।

**पवस्व वाचो अग्रिय इति द्वितीयस्याह्नः प्रतिपद्भवति ॥ १ ॥**

स्पष्टं ॥ १ ॥

वक्ष्यमाणयोरह्नोः सन्धानहेतुरित्येतत् स्तौति।

**पवस्वेति वै राथन्तरꣳ रूपमग्रिय इति वार्हत-मुभे रूपे समारभते द्विरात्रस्याविस्रꣳसाय॥ २॥**

अस्यामृचि यत्पवस्वेति प्रेरणा प्रातिपदिकं पदं तत् खलु राथन्तरं रथन्तरसम्बन्धिरूपं युञ्जानं प्रथमस्याह्नोरूपमित्या-दिना तद्रूपस्योक्तत्वात् अग्रिय इति पदन्तु वार्हतं बृहतो रूपं अतोऽग्रियः बृहच्च रथन्तरादग्रे जातत्वादग्रियं भवतीति शब्द-सामान्येन तद्रूपता यथाच पवस्व वाचो अग्रिय इति प्रतिपदा बृहद्रथन्तरयोः साम्नोः स्वभूते उभे द्वे अपि रूपे समारभते परिगृह्णाति द्विरात्रस्य पूर्व्वमनुष्ठितस्याह्नोऽस्यानुष्ठास्यमानस्य च द्विरात्रस्य द्व्यहस्याविस्रंसाय अविस्रंसनायाशैथिल्याय सन्धानायेत्यर्थः राथन्तरं हि पूर्व्वमहः अत्र च तद्रूपान्वयात् सन्धानं भवति॥ २॥

अथ तस्यैव बहिष्पवमानस्य द्वितीयं तृचं विधत्ते।

**पवस्वेन्दो वृषासुत इत्यनुरूपो भवति वृषण्वद्वा एतदैन्द्रं त्रैष्टुभमहर्य्यत् द्वितीयं तदेव तदभिवदति॥३॥**

पवस्वेन्दो वृषासुत इति तृचोऽनुरूपाख्यो द्वितीयो भवति तदेतत् द्वितीयमहस्तदैन्द्रं इन्द्रदेवत्यं त्रैष्टुभं त्रिष्टुप्छन्दस्कं वृष-ण्वत् वृषशब्दयुक्तं च भवति वृषवद्दत्वहन्द्रायिमहिम्नवदुपस्थित-मिति रूपस्य द्वितीयेऽहनि परिगणितत्वात्तदेव वृषण्वद्रूपं तत्

पवस्वेन्दो वृषासुत इति मन्त्रवाक्यं अभिवदति अभिलक्ष्य ब्रवीति ॥ ३ ॥

अथास्य तृचस्यानुरूप इति संज्ञान्निर्वक्ति।

पूर्व्वमु चैव तद्रूपमपरेण रूपेणानुवदति यत्पूर्वꣳ रूपमपरेण रूपेणानुवदति तदनुरूपस्यानुरूपत्वं ॥४॥

पवस्व वाचो अग्रिय इति प्रथमतृचेन प्रतिपाद्यं यदर्थरूपं पूर्व्वमु च पूर्व्वभाषितमेतदेव च रूपं अपरेण द्वितीयतृचप्रतिपाद्येन पश्चाद्भाविना रूपेणानुवदति तृचः प्रतिपादयति इत्यम्भावे तृतीया यद्यस्मात् पूर्व्वं रूपं अपरेण रूपेणानुवदति तत्तस्मादनुवाद्यरूपवाचकत्वादनुरूपस्य द्वितीयस्य तृचस्यानुरूपत्वं अनुरूप इति संज्ञा ॥ ४ ॥

एतद्वेदनफलमाह।

अनुरूपएनं पुत्रो जायते यएवं वेद ॥ ५ ॥

य एवमनुरूपत्वं वेद जानाति एनमनुरूपः अस्य अनुरूप आत्मीयैर्गुणैः सदृशः पुत्रो जायते ॥ ५ ॥

विहितं तृचद्वयं सहानूद्य स्तौति।

स्तोत्रीयानुरूपौ तृचौ भवतः प्राणापानानामवरुध्यै ॥ ६ ॥

उक्तयोः स्तोत्रीयानुरूपयोस्तृचयोः करणे प्राणापानानां प्राणवायूनामपानवायूनाञ्च ऊर्द्ध्वाधोवर्त्तिनामवरुध्यै अवरोधनाय शरीरे निरोधनाय भवति ॥ ६ ॥

अथ विहितमनुरूपं तृचं अर्थवादसम्बन्धार्थं विधित्सुः तेन तृचद्वयेन संयुज्य विधाय स्तौति ।

**वृषण्वन्तस्तृचा भवन्तीन्द्रियस्य वीर्य्यस्यावरुध्यै ॥ ७**

वृषा सोमः वृषा ह्यसीति द्वौ तृचौ, पूर्व्वोक्तः पवस्वेन्दो वृषा सुत इति तृचस्वेत्येते वृषण्वन्तः वृषशब्दयुक्तास्तृचा भवन्ति वृषशब्दाञ्च सेचनसामर्थ्यं प्रतीयते अतएव तृचत्रयं इन्द्रियस्य रेतोरूपवीर्य्यस्यावरुध्यै अवरोधनाय भवति ॥ ७ ॥

अथ पवमानस्य ते वयमिति बहिष्पवमानस्यान्त्यं तृचं विधत्ते ।

**तृच उत्तमो भवति ॥ ८ ॥**

स्पष्टोऽर्थः ॥ ८ ॥

तदेतत् प्रतिपद्रूपेण स्तौति ।

**येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति ॥ ९ ॥**

येन प्राणेन प्रयन्ति प्रारभन्ते तमभिलक्ष्य उद्यन्ति समापयन्ति प्रथमोत्तमयोस्तृचोः पवमानसोमदेवताकत्वात्तृचात्मनैकात्म्यानाञ्चोभयोः सारूप्यमित्यैक्यव्यपदेशः ॥ ९ ॥

अथास्य स्तोत्रस्य स्तोमक्लृप्तिं विदधाति।

**पञ्चदश एव स्तोमो भवति ॥ १० ॥**

पञ्च तृचा अनुक्रान्तास्ते पञ्चदशस्तोत्रीयास्तृचो भवन्तीति पञ्चदश एव स्तोमोऽस्य भवति ॥ १० ॥

तदेतत्प्रतिष्ठाहेतुरित्याह।

**ओजस्येव तद्वीर्य्यं प्रतितिष्ठत्योजो वीर्य्यं पञ्चदशः ॥ ११ ॥**

तत्तथा सति पञ्चदशस्तोमे कृते सति ओजस्येव ओज इति बलनाम बले बलात्मक एव वीर्य्यं प्रतितिष्ठति प्रतिष्ठितो भवति कुतः पञ्चदशः स्तोमोयत ओजः बलात्मकं वीर्य्यं वीर्य्यरूपः प्रजायते वीर्यवतोऽङ्गादुत्पन्नत्वात् ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे एकादशाध्यायस्य षष्ठः खण्डः।

---

अथ सप्तमः खण्डः।

अथाज्यानि विधित्सुराह।

**उभाभ्यां वै रूपाभ्यां बहिष्पवमान्यो युज्यन्ते यत् सामास्तोमो भवति तदाज्येषु ॥ १ ॥**

उभाभ्यां बार्हतराथन्तराभ्यां रूपाभ्यां खलु बहिष्पवमान्यः स्तोत्रीया युज्यन्ते पवस्वेति वै राथन्तरं रूपमग्निं इति बार्हतमुभे रूपे समारभते इति प्रागुक्तं आज्येषु आज्यस्तोत्रेषु तत्तस्यैव साम्नोरूपं भवति यत्साम यत्सामपृष्ठकः स्तोत्रकस्तोमवान् यागो भवति अस्मिन् द्वितीयेऽहनि होतुः पृष्ठस्तोत्रे यद्बृहत्साम क्रियते तस्यैव साम्नोरूपमाज्येषु भवति नान्यस्येत्यर्थः ॥ १ ॥

किं तद्रूपं यत् बृहतोऽसाधारण्येनाज्येषु भवेदित्याशङ्क्य तद्विशिष्टान्येवाज्यानि विधत्ते।

## निराह्वोपस्थितान्याज्यानि भवन्ति ॥ २ ॥

निराह्वो निराह्वावो निष्कृष्य सम्बोध्याह्वानं तं उपस्थितं समीपे स्थितं आर्थकं न तु शब्दतएतत् येषु तानि निराह्वोपस्थितानि तादृशान्याज्यस्तोत्राणि भवन्ति उपस्थितत्वलिङ्गञ्च बृहत एवासाधारणं न रूपं रथन्तरस्येति उपस्थितं द्वितीयस्याह्नो रूपमित्यादिना प्रत्ययादिकानि पुनस्तथाविधान्याज्यानीति ॥ २ ॥

तानि दर्शयति।

**अग्निन्दूतं वृणीमहे मित्रं वयꣳ हवामह इन्द्रमिद्गाथिनो बृहदिन्द्रे अग्ना नमो बृहदिति बार्हतमेव तद्रूपन्निर्द्योतयति स्तोमः ॥ ३ ॥**

एषु चतुर्ष्वपि उपस्थितात्मकं बार्हतं रूपं दृश्यते इन्द्रे अग्ना नमो बृहदिन्द्रभिज्ञायिनो बृहदिति बृहच्छब्दो दृश्यते स च शब्दसामान्यात् बृहत्सामावगमयति तत्तेन बार्हतमेव रूपन्निर्द्योतयति प्रकाशयति स्तोमश्चामीषां युक्तः पञ्चदश एव भवति एवं प्रातःसवनिकेषु चत्वसु स्तोत्रेषु उक्तासु स्तोत्रीयासु प्राकृतमेव गायत्रं साम गातव्यं सामान्तरस्य विध्यभावात् ॥२॥

इति ताण्ड्यमहाब्राह्मणे एकादशाध्यायस्य

सप्तमः खण्डः।

---

अथ अष्टमः खण्डः।

अथ माध्यन्दिनपवमानस्य त्रयः स्तोत्रीयास्तृचा विधित्सिताः तत्र प्रथमं विदधाति।

## वृषा पवस्व धारयेति गायत्री भवत्यह्नो धृत्यै ॥१॥

वृषा पवस्व धारयेति गायत्री गायत्रछन्दस्का प्रतिपद्भवति प्रथमस्तृचो भवतीत्यर्थः धारयेति शब्देन धृञ् धारणे इत्यस्य धातोः प्रत्यभिज्ञानात् एषा प्रतिपत् अस्य द्वितीयस्याह्नो धृत्यै धारणाय स्थैर्य्याय भवति ॥ १ ॥

ननु गायत्रं वै प्रथममहस्त्रैष्टुभं द्वितीयं जागतं तृतीयमित्यादिना द्वितीयस्याह्नस्त्रैष्टुभत्वं प्रतीयते कुतस्तत्र गायत्र्योऽभिनियोज्यन्त इति तत्राह।

**वृषण्वत्यस्त्रिष्टुभो रूपेण त्रैष्टुभꣳ ह्येतदहः ॥२॥**

इमा विहितागायत्र्यो वृषण्वत्यो वृषच्छब्दयुक्ता भवन्ति वृषण्वत्त्वञ्च त्रिष्टुभो रूपं तस्मात्त्रिष्टुभो रूपेण युक्ता द्वितीयेऽहनि विनियोगार्हाः एतदहस्त्रैष्टुभं हि त्रिष्टुप्सम्बद्धं हि यद्धः प्रसिद्धौ सा च पूर्वमेव दर्शिता ॥ २ ॥

अथापरं स्तोत्रीयं तृचं विदधाति।

**पुनानस्सोमधारयेति द्वत्यै ॥ ३ ॥**

पूर्व्ववद्योज्यं ॥ ३ ॥

अथान्यं स्तोत्रीयं तृचं विधत्ते।

**वृषाशोणो अभिकनि क्रदन्ना इति ॥ ४ ॥**

स्पष्टं ॥ ४ ॥

अस्य त्रैष्टुभे द्वितीयेऽहनि सङ्गतिमाह।

**वृषण्वत्यस्त्रिष्टुभो रूपेण सम्टद्धा वृषण्वद्वा एतदैन्द्रं त्रैष्टुभमहर्य्यत् द्वितीयं तदेव तदभिवदति ॥५॥**

यत् वृषा शोण इत्याद्या वृषण्वत्यो वृषशब्दयुक्ताः अतस्त्रिष्टुभोरूपेण सम्टद्धाः सम्पूर्णाः एतदहस्त्यैन्द्रं इन्द्रदेवत्यं त्रैष्टुभं त्रिष्टुप्छन्दस्कं वृषण्वद्वै वृषच्छब्दयुक्तमेव वृषवद्दत्तद्दवदित्यादिना

वृषशब्दस्य तद्रूपत्वेनोक्तत्वात् दशरात्रस्य यत् द्वितीयमहः एतदिति सम्बन्धः तद्वृषा शोण इत्यादिकं मन्त्रवाक्यं तदेव वृषवद्वदेव द्वितीयमहरभिवदति अभिलक्ष्य ब्रवीति ॥ ५ ॥

अथ वृषा पवस्वेति प्रथमे तृचे गातव्यं साम विधाय पूर्वमाम्नातन्तत्तद्ब्राह्मणञ्चाति दिशति ।

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणं ॥ ६ ॥**

सिद्धमेतत् ॥ ६ ॥

अथास्मिन्नेव तृचे पुनरावृत्ते गातव्यं सामान्तरं दर्शयति ।

**यौक्ताश्वं भवति ॥ ७ ॥**

युक्ताश्वेन दृष्टं साम यौक्ताश्वं ॥ ७ ॥

अथास्य कामप्राप्तिहेतुतां स्विवचुराख्यायिकामाह ।

**युक्ताश्वो वा आङ्गिरसः शिशू जातौ विपर्य्यहरत्तस्मान्मन्त्रोपाक्रामत्सतपोऽतप्यत सएतद्यौक्ताश्वमपश्यत्तं मन्त्र उपावर्त्तत तद्वाव स तर्ह्यकामयत कामसनि साम यौक्ताश्वं काममेवैतेनावरुन्धे ॥ ८ ॥**

पुरा युक्ताश्वो नामाङ्गिरसोऽङ्गिरागोत्रजातो जातमात्रौ शिशू बालौ तनयौ विपर्य्यहरत् विपरिहृतवान् बाधितवान्,

स्वकार्य्यस्य करणात् तस्मादृषेर्म्मन्त्रो वेदोपाक्रमदपागमत् स मन्त्र-राहित्येन हीनः सन् पुनस्तत्प्राप्तये तपोऽतप्यत प्रायश्चित्तात्मकं तपस्तेपे तेन च तपसा विशुद्धः स ऋषिः एतद्यौक्ताश्वं सामापश्यत् एतस्य साम्नो द्रष्टारं तमपक्रान्तो मन्त्रः पुनरुपावर्त्तत तत् ततोऽनन्तरं हि तस्मिन् काले स खल्वकामयत किमिति यदेतद्यौक्ताश्वं एतत्साम कामसनि कामप्रदं षणु दाने छन्दसि वनसनरक्षिमथमितीन्प्रत्ययः तस्मादनेन साम्ना यः स्तौति स कामं काम्यमानमभिलषितमेव फलं एतेन साम्नावरुन्धे लभते ॥ ८ ॥

अथ पुनानस्सोमधारयेति तृचे द्विरभ्यस्ते द्वे सामनी क्रमेण गेये दर्शयति।

आयास्ये भवतः ॥ ९ ॥

अयास्येन दृष्टे सामनी आयास्ये प्रथममिड़ानिधनमायास्यं द्वितीयं तिणिधनमायास्यं ॥ ६ ॥

एतत्सामद्वयं निन्दितान्नोपजीवनजातस्य पापस्य निष्कृति-हेतुरित्यभिप्रायेणाह।

अयास्यो वा आङ्गिरस आदित्यानां दीक्षितानामन्नमाश्नात्तꣳ शुगार्छत्सतपोऽतप्यत स एते आयास्ये अपश्यत्ताभ्याꣳ शुचमपाहतापशुचꣳ हत आयास्याभ्यां तुष्टुवानः ॥ १० ॥

पुरा खल्वयास्यो नामाङ्गिरसः अङ्गिरोगोत्रजऋषिः दीक्षितानां प्राप्तदीक्षाणां प्रारब्धयज्ञानामादित्यानां अदितेः पुत्राणां अन्नमाश्नात् अभुङ्क्त तं ऋषिं शुक् शोक आर्छत् प्राप्नोत् अभोज्यस्य भक्षणात् दीक्षितान्नं हि प्रतिषिद्धत्वादभोज्यं स्मर्यते न दीक्षितवसनं परिदधीत नास्य पापं कीर्त्तयेत् नान्नमश्नीयादिति शुगार्त्तः ऋषिः तपोऽतप्यत तत्तेन तपसा एते आयास्ये सामनी अपश्यत्ताभ्यां सामभ्यां अभोज्यभोजनवशादुपजातां शुचं शोकमपाहत अवर्ज्जयत् अत इदानीमपि आयास्याभ्यां तुष्टुवानः स्तुतवान् यजमानः शुचमपाहते अपहन्ति अभोज्यभोजनादिजन्यं पापं विनाशयतीत्यर्थः ॥ १० ॥

अथैनयोः स्तवनं वृष्टिहेतुरपीति दर्शयति ।

**एभ्यो वै लोकेभ्यो वृष्टिरपाक्रामत्तामयास्य आयास्याभ्यामच्यावयत् च्यावयति वृष्टिमायास्याभ्यां तुष्टुवानः ॥ ११ ॥**

पुरा एभ्यः पृथिव्यादिभ्यस्त्रिभ्यो लोकेभ्यो वृष्टिः अपाक्रामदपागच्छत् त्रिष्वपि लोकेष्वनावृष्टिर्जातेत्यर्थः तामपक्रान्तां वृष्टिं अयास्य ऋषिः आयास्याभ्यामेताभ्यां सामभ्यां साधनभूताभ्यामच्यावयदवर्षत् स्रष्टमन्यत् ॥ ११ ॥

अथान्नाद्यहेतुत्वेनैते स्तौति ।

अन्नाद्यं वाव तदेभ्यो लोकेभ्योऽपाक्रामत्तदयास्य आयास्याभ्यामच्यावयत् च्यावयत्यन्नाद्यमायास्याभ्यां तुष्टुवानः ॥ १२ ॥

तत्तत्र वृष्ट्यपक्रमणसमयेऽन्नाद्यं वाव अदनीयमन्नमेवैभ्यो लोकेभ्योऽपाक्रामत् वृष्टिमन्तरेण तस्यानुत्पत्तेः निगदसिद्ध-मन्यत् ॥ १२ ॥

अथ वृषाणोण इति तृतीये तृचे गातव्यं साम विदधाति ।

वासिष्ठं भवति ॥ १३ ॥

वसिष्ठस्येदं वासिष्ठं ॥ १३ ॥

इममेव सम्बन्धं प्रदर्शयन् इदं वसिष्ठफलहेतुरित्याह ।

वसिष्ठो वा एतेन वैडवः स्तुत्वाञ्जसा स्वर्गं लोक-मपश्यत् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः स्तोमः ॥ १४ ॥

वैडवो वीडपुत्रो वसिष्ठः खलु पुरा एतेन साम्ना स्तुत्वा अञ्जसा आर्जवेन ऋजुगामिनैव मार्गेण स्वर्गं लोकमपश्यत् सम्यगद्राक्षीत् अत एतत्सामेदानीं प्रयुज्यमानं स्वर्गस्य लोक-स्यानुख्यात्या अनुख्यानार्थं सम्यग्दर्शनाय भवति अपिच तुष्टु-वानः स्तुतवान् स्वर्गाल्लोकात् सम्यग् दृष्टान्न च्यवते न प्रच्युतो

भवति सर्व्वदा तत्रैव तिष्ठत इत्यर्थः एवं तृचा आवृत्त्या सप्त पञ्च स्तोत्रीयास्तृचाः सम्पन्नाः अतः पञ्चदशस्तोमो निष्पन्न इत्यर्थः ॥ १४ ॥

इति ताण्ड्यमहाब्राह्मणे एकादशाध्यायस्य
अष्टमः खण्डः।

---

अथ नवमः खण्डः।

अथ होतुः पृष्ठस्तोत्रीयं तृचं प्रदर्श्य तस्मिन्नहनि तदानुगुण्यं दर्शयति।

**त्वामिद्धि हवामह इति त्वमिति बृहतोरूपं बार्हतꣳ ह्येतदहः ॥ १ ॥**

त्वामिद्धीत्ययं प्रगाथस्तोत्रीयो भवति प्रथमस्य पृष्ठस्तोत्रस्य त्वामिति युष्मच्छब्दरूपस्योपलक्षणं त्वामिद्धीति बृहतो योन्यां त्वामिति युष्मच्छब्दः सूयते अतस्तद्बृहतो बृहत्साम्नो रूपं उत्पत्तिविशिष्टत्वात् एतत् द्वितीयमहस्य बार्हतं बृहत्पृष्ठत्वात् अतोऽस्मिन्नहनि त्वामिद्धीति प्रगाथस्य करणं युक्तमिति भावः ॥ १ ॥

अथ ब्रह्मणः पृष्ठ्यस्तोत्रस्याधारभूतं तृचं विधाय स्तौति।

**अभिप्रवः सुराधसमिति युञ्जते वै पूर्वेणाह्नाश्वेतेन प्रयन्ति ॥ २ ॥**

पूर्व्वेण प्रथमेनाह्ना यज्ञं युञ्जते प्रारभन्ते यथा देशान्तरं गच्छन् रथे अश्वान् युङ्क्ते एवं यज्ञसमाप्तिं गन्तुं तस्योपक्रम एव क्रियते तेनाह्ना युक्तं यज्ञं एतेन अभिप्रयन्ति उद्दिश्य प्रकर्षेण गच्छन्ति अतोऽस्याह्नः प्रायणसाधनत्वादभिशब्दयुक्तोयं तृचः सङ्गत इत्यर्थः ॥ २ ॥

अथाच्छावाकपृष्ठस्य स्तोत्रीयं तृचं विधाय तस्य पूर्व्वोक्तयोरह्नोः सन्धानहेतुतामाह।

त्वामिदाह्योनर इत्यद्य चैव ह्यश्च समारभते द्विरात्रस्याविस्रꣳसाय ॥ ३ ॥

त्वामिदाह्य इत्यस्मिन् तृचे इदाह्यश्चेति शब्दद्वयं श्रूयते तयोरयमर्थः इदानीं ह्यः पूर्व्वेद्युरिति एवं कालद्वयवाचिना तेन अद्यच अद्यतनञ्चैव द्वितीयमहः ह्यः पूर्व्वमहश्च समारभते सम्नित्येकीभावे एकीकृत्योभयं गृह्णातीति किमर्थं द्विरात्रस्याहर्द्वयस्य अविस्रंसनाय विस्रंसनाभावार्थं सन्धानार्थमित्यर्थः ॥ ३ ॥

अथाद्ये तृचे साम विधाय तस्य द्वितीयेनाह्ना सङ्गतिमाह।

बृहद्भवति वर्ष्म वै बृहद्वर्ष्म द्वितीयमहर्वर्ष्मणएव तद्वर्ष्माक्रमते ॥ ४ ॥

यदेतद् बृहत्साम तद्वर्ष्म वै ब्रह्मणः शरीरभूतं द्वितीयम-

इस्य यज्ञस्य वर्ष्म शरीरं तत्तथा सति बृहतो द्वितीये सम्बन्धात् वर्ष्मणएव सकाशात् वर्ष्माक्रमते ॥ ४ ॥

अथ द्वितीयस्मिन् तृचे साम विधाय तस्य सन्तानहेतुतामाह ।

## श्यैतं भवति साम्नोर्विवाहो यज्ञस्य सन्तत्यै ॥५॥

अभिप्रवः सुराधसमित्यस्मिन् तृचे श्यैतं ब्रह्मसाम भवति श्यैतं हि रथन्तरप्रभवं नौधसं बृहत्प्रभवं अतो राथन्तरेऽहनि श्यैतस्य वार्हतेऽहनि नौधसस्य प्रयोगे प्राप्ते इमौ वै लोकौ सहास्तामित्यादिनाऽनयोः साम्नोर्विवाहो विविधं प्रायणं विपर्य्यस्य प्रयोग उक्तः स च यज्ञस्य पूर्व्वोत्तरयोर्व्यासज्य वर्त्तमानस्य सन्तत्यै सन्तानाय भवति राथन्तरं हि पूर्व्वमहः बार्हतमुत्तरं रथन्तरपक्षीयस्य श्यैतस्यात्र प्रयोगात् सन्ततिरिति द्रष्टव्यं ॥ ५ ॥

अथ तृतीये प्रगाथे साम विधाय ऋषिसम्बन्धप्रतीतेस्तत्साम चिरकालं स्वर्गावस्थितिहेतुरिति स्तौति ।

## माधुच्छन्दसं भवति सामार्षेयवत्स्वर्गाय युज्यते स्वर्गाल्लोकान्न च्यवते तुष्टुवानः ॥ ६ ॥

सिद्धमेतत् ॥ ६ ॥

अस्मिन् साम्नि विद्यमानां ऊर्द्ध्वस्वरविशिष्टामिडामनूद्यास्मिन्नहनि तत्सङ्गतिमाह ।

**ऊर्द्ध्वैडं तथा ह्येतस्याह्नोरूपꣳ स्तोमः ॥ ७ ॥**

धौर२३४५डा इत्येवं रूपा इडा यस्य तदूर्द्ध्वैडं साम तथा हि तथैव खल्वेतस्य द्वितीयस्याह्नो रूपमुपन्यस्तं द्रवदिडं प्रथमस्याह्नोरूपमित्यादिना अत्र त्रीणि पृष्ठस्तोत्राण्यनुक्रान्तानि मैत्रावरुणपृष्ठस्तोत्रन्तु चोदकत एव प्राप्तं तेनैतेषु चतुर्षु स्तोत्रेषु पञ्चदश एव स्तोमो भवति ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे एकादशाध्यायस्य

नवमः खण्डः ।

---

अथ दशमः खण्डः ।

अथार्भवपवमानस्यैकं स्तोत्रीयं तृचं विदधाति ।

**यस्ते मदोवरेण्य इति गायत्री भवति ॥ १ ॥**

गायत्रस्तृचो भवतीत्यर्थः ॥ १ ॥

अस्य तृचस्य मदशब्दयुक्तत्वेन तृतीयसवनस्यानुरूप्यं दर्शयति ।

**मदवद्वै रसवत्तृतीयसवनं मदमेव तद्रसं दधाति ॥२**

प्रसोमासो मदच्युत इति गायत्री भवतीत्यस्य वाक्यशेषवत् एतदपि व्याख्येयं ॥ २ ॥

अन्यां स्तोत्रीयां विधायास्मिन्नहनि तस्याः सङ्गतिमन्नाद्यहेतुताञ्चाह ।

**पवस्व मधुमत्तम इति पवन्त इव ह्येतेनाह्ना मधुमत्तम इत्यन्नं वै मध्वन्नाद्यमेव तद्यजमाने दधाति ॥३**

पवस्व मधुमत्तम इत्यस्मिन् पुङ् पवन इत्यस्माद्धातोर्न्निष्पन्नस्य पवस्वेति शब्दः श्रूयते एतेन द्वितीयेनाह्ना च पवन्त इव हि एवेत्यवधारणे पवन्ते शोधयन्त्येव खल्वनुष्ठातारः अतोऽस्मिन्नहनि तत् पवत इति प्रतिपादकं मन्त्रवाक्यं सङ्गतं तथा मधुमत्तम इति च पदं तत्र श्रूयते लोके च अन्नं वै अन्नमेव मधु मधुरमिति प्रसिद्धं अतोऽन्नवाचि मधुशब्दयुक्तेन तत्तेन मन्त्रवाक्येन यजमाने अन्नाद्यं अदनीयमन्नमेव दधाति ॥ ३ ॥

अथापरान् स्तोत्रीयान् विधाय वीर्य्यमाह।

**इन्द्रमच्छसुताइम इतीन्द्रियस्य वीर्यस्यावरुध्यै ॥४**

अस्यामचीन्द्रशब्दः श्रूयते तेन च इन्द्रियसम्बन्धि च सम्प्रत्यभिज्ञायते अत इन्द्रियस्य इन्द्रेण सृष्टस्य दत्तस्य वा वीर्य्यस्यापत्यकारणस्य रेतोरूपस्यावरुध्यै अवरोधनाय प्राप्तये एको भवति ॥ ४ ॥

अथापरं स्तोत्रीयं व्रतं विदधाति।

**अयं पूषा रयिर्भग इत्यनुष्टुभः सत्यस्त्रिष्टुभोरूपेण त्रैष्टुभं ह्येतदहः ॥ ५ ॥**

अनुष्टुभः सत्यः अनुष्टुप्छन्दस्का भवन्त्योऽप्येतास्त्रिष्टुभो रूपेण रयिशब्दादिना युक्ताः रयिशब्दयोगश्च त्रिष्टुभो रूपमिति वृषवद्वृत्रवद्रयिवदित्यादिना प्रागुक्तं अतोऽस्मिन् त्रैष्टुभेऽहनि सङ्गता इत्यर्थः ॥ ५ ॥

अथान्यं जागतं वृतं विधाय तस्यापि त्रैष्टुभरूपयोगात् त्रैष्टुभेऽहनि सङ्गतिरित्याह।

**वृषा मतीनां पवते विचक्षण इति जगत्यः सत्यस्त्रिष्टुभो रूपेण त्रैष्टुभꣳ ह्येतदहः ॥ ६ ॥**

अत्र वृषशब्दस्त्रिष्टुभो रूपत्वं अन्यत् पूर्ववद्योज्यं ॥ ६ ॥

अथ प्रथमे तृचे एकं साम विधाय प्राकृतिकं तद्ब्राह्मणञ्चातिदिशति।

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणं ॥ ७ ॥**

व्याख्यातमेतत् ॥ ७ ॥

अथ पुनरावृत्ते तस्मिन्नेव तृचे सामान्तरं विदधाति।

**हाविष्मतं भवति ॥ ८ ॥**

हविष्मता ऋषिणा दृष्टं साम हाविष्मतं ॥ ८ ॥

इममेव सम्बन्धं प्रदर्शयन् समृद्धिहेतुरेतत्साम इत्याह।

**हविष्माꣳश्च वै हविष्कृच्चाङ्गिरसावास्तां द्वितीये ऽहनि हविष्मानराध्नोन्नवमेऽहनि हविष्कृत् ॥ ९ ॥**

पुरा खलु हविष्मांश्च हविष्कृच्चेति द्वौ आङ्गिरसौ अङ्गिरोगोत्रावृषी आस्तामभवतान्तयोर्मध्ये हविष्मान् द्वादशाहमनुतिष्ठन् द्वितीयेऽहनि अनेन साम्ना स्तुत्वा अराध्नोत् समृद्धोऽभवत् हविष्कृच्च नवमेऽहनि आत्मदृष्टेन हाविष्कृतेन साम्ना अराध्नोदित्येतत् प्रासङ्गिकं ॥ ९ ॥

अथैतत्प्रकारान्तरेण स्तौति।

**अयꣳ हविष्मानित्येव जातमहर्जातꣳ सोमं प्राह देवेभ्यः साम्नैवास्मा आशिषमाशास्ते साम हि सत्याशीः ॥ १० ॥**

अस्य साम्नोऽवसाने हविष्मान् इति पदं श्रूयते तद्विशिष्टं जातमुत्पन्नमेतदहः अयं यजमानो हविष्मान् हविषा युक्त एवेति जातमुत्पन्नं अभिषवादिभिः संस्कृतं सोमं देवेभ्यो हविर्भुग्भ्यः प्राह प्रब्रूते अपि वास्मै यजमानायानेनैव साम्नाशिषमप्राप्तस्य फलस्य प्राप्तिराशीः तामाशास्ते स्तोतेति शेषः सामा हि साम खलु सत्याशीः सत्या अवितथा आशीः फलप्राप्तिर्यस्मिन् तत्तथोक्तं ऋग्यजुःसाम्नाम्मध्ये सामैव फलहेतुः अतो हेतोः साम्नैवाशिषमाशास्त इति ॥ १० ॥

अथ पवस्व मधुमत्तम इत्यस्यामृचि गातव्यं साम विधाय शब्दसामान्येन तस्य धृतिहेतुतामाह।

शङ्कु भवत्यह्नो धृत्यै यद्वा अधृतꣳ शङ्कुना तद्दाधार ॥ ११ ॥

शङ्कुः शङ्कुसंज्ञं साम पवस्व मधुमत्तम इत्यस्यां गातव्यं भवति तत्रास्याह्नो धृत्यै धारणाय स्थैर्य्याय भवति अतः खलु लोके अधृतं अधारितं चञ्चलं भवति तच्छङ्कुना दार्ढ्याय निखातव्येन कीलकेन दाधार धारयति लौकिकः पुरुषः तद्वदिदमपि साम शङ्कुशब्दवाच्यत्वाद्धृतिहेतुरित्यर्थः ॥ ११ ॥

अस्याह्नो ब्रह्मवादिभिः कृतां संज्ञां तस्य निर्वचनञ्च प्रदर्शयन् पृथिव्यादिलोकप्राप्तिहेतुरित्यादिसाम दर्शयति।

तदु सीदन्तीयमित्याहुरेतेन वै प्रजापतिरूर्द्ध्व इमान् लोकानसीदद्यदसीदत्तत्सीदन्तीयस्य सीदन्तीयत्वमूर्द्ध्व इमान् लोकान् सीदति सीदन्तीयेन तुष्टुवानः ॥ १२ ॥

तदु शङ्कुसाम सीदन्तीयशब्दवाच्यं एतदपि तस्य नामेति ब्रह्मवादिन आहुः तस्यैतत् निर्व्वचनं एतेन खलु साम्ना साधनेन प्रजापतिर्विधाता ऊर्द्ध्वं उत्थितः सन् इमान् लोकान् दृश्यमानलोकानसीदत् अगच्छत् यद्यस्मात्कारणादनेन साम्ना-सीदत् तत्तस्मादस्य सीदन्तीयशब्दवाच्यसाम्नः सीदन्तीयत्वं

सीदन्त्यनेनेति व्युत्पत्त्या सीदन्तीयमिति नाम सम्पन्नं यस्त्व
दूदानीं सीदन्तीयेनानेन तुष्टुवानः स्तुतवान् भवति सोऽप्यूर्द्ध्वमु-
त्थितः सन् दूमान् लोकान् सीदति व्याप्नोति ॥ १२ ॥

दून्द्रमयेत्यस्यां गातव्यं साम विदधाति।

**सुज्ञानं भवति ॥ १३ ॥**

सुज्ञानाख्यं साम कर्त्तव्यं ॥ १३ ॥

रथन्तरबार्हतयोरेतयोरह्नोः सन्तानाय उभ्याभ्यां रूपा-
भ्यां भाव्यमित्यभिप्रायेणाह।

**स्वर्वद्वै रायन्तरꣳ रूपꣳ स्वर्णिधनं बार्हतं ॥१४॥**

अस्मिन् सुज्ञाने सुवर्च्चिदए ३ उपा २३४५ इति समाप्तौ
दृश्यते स्वर्वत् स्वरशब्दवत्त्वं हि राथन्तरं रूपं ईशानमस्य
जगतः स्वर्दृशमिति तद्योन्यां दृश्यत्वात् स्वर्णिधनं स्वरिति
सुज्ञानस्य निधनमसौ लोको वृहदिति श्रुतेः बार्हतं बृह-
त्सम्बन्धिरूपं अतो रूपद्वययुक्तमेतत्साम द्विरात्रस्य सन्तत्यै
भवतीत्यभिप्रायः नन्वस्मिन् ऊपा इति निधनं दृश्यते अतः
स्वरिति कथं स्वर्णिधनत्वं नैषदोषः यतः सूत्रकारेण ऊपा-
स्थानेष्वन्यानि निधनानीति प्रकृत्य स्वःकारान्तो दैवोदास-
सुज्ञानयोरित्यूपास्थाने स्वरिति निधनस्य विहितत्वात् ॥ १४ ॥

एतदेवाभिप्रेत्याह।

स्वर्णिधनं भवति तथा ह्येतस्याह्नो रूपं ॥ १५ ॥

एतत्सुज्ञानं स्वरिति बहिर्णिधनयुक्तं भवति तथा खल्वेतस्य द्वितीयस्याह्नो रूपं पूर्वमुक्तं पदनिधनं प्रथमस्याह्नोरूपं बहिर्णिधनं द्वितीयस्येति ॥ १५ ॥

अथ शङ्कुसुज्ञाने संयुज्य प्लवात्मनः रूपयन् प्रशंसा स्वर्गप्राप्तिसाधनमित्याह ।

प्लवौ वा एतावुपोहन्ते स्वर्गस्य लोकस्य समष्ट्यै ॥१६

ये शङ्कुसुज्ञाने सामनी विहिते एतौ प्लवापेक्षया पुंलिङ्गता एते प्रयुञ्जाना उद्गातारः प्लवौ दुस्तरस्य यज्ञात्मकसमुद्रस्य पारप्राप्त्यर्थं प्लवरूपावेवोपोहन्ते प्रेरयन्ति किमर्थं स्वर्गस्य लोकस्य समष्ट्यै यजमानस्य प्राप्त्यर्थं ॥ १६ ॥

अयं पूषेत्यस्य तृचस्याद्यायामृचि गानं विधाय पूर्वमाम्नातं तद्ब्राह्मणञ्चातिदिशति ।

गौरीवितं भवति यदेव गौरीवितस्य ब्राह्मणं ॥ १७ ॥

गौरीवितिर्वा एतच्छाक्त्यो ब्रह्मणोऽतिरिक्तमपश्यदित्यादिकं गौरीवितस्य प्रागाम्नातं ब्राह्मणं यत् तदेवास्यापि ब्राह्मणं ॥ १७ ॥

अथास्मिन्नेव तृचे सामान्तरं विदधाति ।

क्रौञ्चं भवति ॥ १८ ॥

स्पष्टं ॥ १८ ॥

तदेतत् स्तौति ।

वाग्वै क्रौञ्चं वाग्द्वादशाहो वाच्येव तद्वाचा स्तुवते यज्ञस्य प्रभूत्यै ॥ १९ ॥

वाचात्मकं खलु क्रौञ्चं साम द्वादशाहश्च वाग्रूपः तस्मादेक-हायना मनुष्या वाचं वदन्तीति वाग्वदनसाधनत्वात् संवत्सरस्य तावद्वाचात्मना वाचंश्च ते संवत्सरप्रतिमा वै द्वादशरात्रय इति श्रुतेः द्वादशाहस्य संवत्सरप्रतिरूपत्वात् वाचात्मकं द्रष्टव्यं तत्तथा सति उभयोर्वाग्रूपत्वात् वाच्येव वाच संस्तुत एव द्वादशाहे वाग्रूपेण क्रौञ्चेण स्तुवत उद्गातारः किमर्थं यज्ञस्य प्रवृत्तस्य द्वादशाहात्मकस्य प्रभूत्यै प्रभूत्यर्थमाधिक्यार्थं स्वत एव वाग्रूपयज्ञे पुनर्वाचा स्तवनात् प्रभूतिरतः ॥१९॥

अथ वृषामतीनां पवत इत्यन्तं तृचे गेयं साम विधत्ते ।

यामं भवति ॥ २० ॥

प्रो अयासीदित्यस्यामुत्पन्नं साम यामं तदस्मिंस्तृचे ऊहेन कार्य्यं ॥ २० ॥

इदं स्वर्गलोकस्याधिपत्यहेतुरित्यभिप्रेत्याह ।

एतेन वै यमोऽनपजय्यममुष्य लोकस्याधिपत्यमाश्नुतानपजय्यममुष्य लोकस्याधिपत्यमश्नुते यामेन तुष्टुवानः ॥ २१ ॥

एतेन खलु साम्ना साधनेन पुरा धर्म्मो वैवस्वत अनपजय्यं केनाप्यपजेतुमशक्यं अबाध्यममुष्य स्वर्गलोकस्याधिपत्यमधिपतित्वं आश्नुत प्राप्नोत् अत इदानीन्तनोऽपि यामेन तुष्टुवानः स्तुतवान् अनपजय्यममुष्य लोकस्याधिपत्यमश्नुते प्राप्नोति ॥२१॥

तथेदं साम स्वर्गलोकावगतिहेतुः तत्र चिरकालावस्थितिहेतुश्चेत्याह।

एतेन वै यमी यमꣳ स्वर्गं लोकमगमयत् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गात् लोकान्न च्यवते तुष्टुवानः स्तोमः ॥ २२ ॥

एतेन खलु साम्ना पुरा यमी यमस्य पत्नी, यमं स्वर्गं लोकमगमयदजयत् अत इदं साम स्वर्गस्य लोकस्यानुख्यात्यै अनुख्यानाय संदर्शनाय भवति अपि च एतेन तुष्टुवानः तस्मात् स्वर्गलोकान्न च्यवते उक्ते स्तोत्रीयाणां परिगणने सति पञ्चदशाख्यस्तोमो निष्पद्यते ॥ २२ ॥

इति ताण्ड्यमहाब्राह्मणे एकादशाध्यायस्य
दशमः खण्डः।

———

अथ एकादशः खण्डः ।

अथास्याह्न उक्थसंस्थत्वादतः परं त्रीण्युक्थस्तोत्राणि कर्त्तव्यानि तत्र मैत्रावरुणोक्थस्य स्तोत्रीयमेवं विदधाति ।

**एह्यूषु ब्रवाणित इत्यैहिवत्यो भवन्ति तृतीय स्याह्न उपह्वाय सन्तत्यै ॥ १ ॥**

एह्यूष्वित्याद्यास्तिस्र एहिवत्य एहीत्यनेन शब्देन युक्ताः प्रथमस्योक्थस्य स्तोत्रीया भवन्ति तास्च एहीत्यागमनप्रतिपादनात् तृतीयस्यागामिनोऽह्नः उपह्वाय उपह्वानाय भवन्ति उपह्वः किमर्थं इति तत्राह सन्तत्या इति उभयोर्द्वितीयतृतीययोरह्नोः सन्तानार्थं ॥ १ ॥

तदपि वा कस्मात्कारणादित्यत आह ।

**अपच्छिदिव वा एतद्यज्ञकाण्डं यदुक्थानि यदेति सलोमत्वाय ॥ २ ॥**

उक्थान्युक्थस्तोत्राणीति यत् एतद्यज्ञकाण्डं यज्ञभागः अपच्छिदिव वै अपरिच्छिन्नमेव खलु यज्ञायज्ञीयेनैव प्रकृतस्याह्नः परिसमाप्तत्वात् उत्तरस्य चानारब्धत्वात् अतोऽस्य संज्ञानार्थं एह्यूषु ब्रवाणित इत्यादीन्युक्थानि एति प्राप्नोति करोतीति यत् सलोमत्वाय सारूप्याय अपच्छेदाभावेनैकरूप्याय भवति अथवा एति आइति आभिमुख्यवाची उपसर्गोऽस्मिंस्तृचे

दृश्यते ईदृश आकार इति यत् विच्छिन्नयोः परस्पराभिमुख्य-प्रतिपादनात् सलोमत्वाय सारूप्याय तद्भवति ॥ २ ॥

अथ द्वितीयस्योक्थस्य स्तोत्रीयं विदधाति।

**एवाह्यसि वीरयुरिति समानं वदन्त्य इदमित्य-मसदिति ॥ ३ ॥**

एवाह्यसि इति तृचः स्तोत्रीयः कार्य्यस्तिस्रः ऋचः समानं सदृशमेवार्थं वदन्ति प्रतिपादयन्ति इदमदमित्यमनेन प्रकारे-णासत् अभूदिति तत्र हि एवशब्दपर्य्यायः एवशब्दोबहुकृत्वो-ऽभ्यस्यते तदभिप्रायेणेदमित्यमसदिति समानं वदन्तीति व्यप-देशः ॥ ३ ॥

अथ तृतीयस्योक्थस्य स्तोत्रीयं तृचं विदधाति।

**इन्द्रं विश्वा अवीवृधन्नित्यवर्द्धन्त ह्येतर्हि यज-मानमेवैतया वर्द्धयन्ति ॥ ४ ॥**

इन्द्रं विश्वा इति तृचः तृतीयस्योक्थस्य स्तोत्रीयाः तत्र च अवीवृधन्नवर्द्धयन् इति वृधिधातोर्भूतकालसम्बन्धता दृश्यते एतर्हि एतस्मिन् काले तृतीयोक्थसमये जेतव्यानसुराञ्जित्वा देवाः पुरा अवर्द्धन्त समृद्धा अभूवन् हि यस्मादेवं तस्माद्भूतका-लसम्बन्धिवृधिधातुयुक्तास्तृचः सङ्गत इत्यर्थः अपि चैतया वृधि-धातुयुक्तया ऋचा यजमानमेव वर्द्धयन्ति ॥ ४ ॥

अथ प्रथममेव मैत्रावरुणोक्थसाम विदधाति।

**साकमश्वं भवत्युक्थानामभिजित्या अभिक्रान्त्यै ॥ ५ ॥**

साकमश्वन्नाम साम एह्यूष्विति तृचे गातव्यं किमर्थमुक्थानामुक्थस्तोत्राणामभिजित्यै अभिजयार्थं अभिजित्य चाभि क्रान्त्यै अभिक्रान्तिराक्रान्तिः शत्रूणामभिभवस्तदर्थं ॥ ५ ॥

कुतोऽस्य साम्नस्तदुभयहेतुतेत्यत आह।

**एतेन ह्यग्र उक्थान्यभ्यजयन्नेतेनाभ्यक्रामन् ॥ ६ ॥**

एतेन खलु साम्ना अग्रे पुरा देवा उक्थान्यभ्यजयन् एतेनैवाभ्यक्रामन्क्रतून् देवावा अग्निष्टोममभिजित्योक्थानि नाशक्नुवन्नभिजेतुमित्यादि ब्राह्मणमनुसन्धेयं ॥ ६ ॥

अथ ब्रह्मण उक्थस्तोत्रं साम विदधाति।

**आमहीयवं भवति क्लृप्तिश्चान्नाद्यञ्च समानं वदन्तीषु क्रियत इदमित्थमसदिति ॥ ७ ॥**

एवाह्यसीति तृचे आमहीयवं साम कार्य्यमिदमहरित्थमनेन प्रकारेणासदित्यभवदिति शब्दसामान्येन वदन्तीषु प्रतिपादयन्तीषु स्तुतिः सामर्थ्यं चान्नाद्यं अत्तुमर्हमन्नञ्च क्रियते तदुभयहेतुरेतत्सामेत्यर्थः ॥ ७ ॥

अथ स्तोमच्छन्दोभ्यां संहताभ्यां ब्रह्मक्षत्रयोः सङ्गतिर्भवतीत्याह।

**क्षत्रं वा एतदहरभिनिर्वदति यत्पञ्चदशं यद्गायत्रीषु ब्रह्मसाम भवति ब्रह्म चैव तत्क्षत्रञ्च सयुजी करोति ब्रह्मैव क्षत्रस्य पुरस्तान्निदधाति ब्रह्मणे क्षत्रञ्च विशञ्चानुगे करोति॥ ८॥**

यत्पञ्चदशं पञ्चदशस्तोमकं अहः एतदहः क्षत्रं क्षत्रियजातिमेवाभिलक्ष्य निर्वदति निर्वक्ति गायत्रं छन्दो ब्राह्मणजातिः तेन सह प्रजापतिमुखादुत्पत्तेः एवं सति गायत्रीष्वृक्षु पञ्चदशस्तोमकं ब्रह्मसाम भवतीति यत् तत्तेन ब्राह्मणजातिमेव च क्षत्रं क्षत्रियजातिमेव च सयुजी संयुक्ते करोति अपि च गायत्रीणामृचां साम्न आधारतया प्रथमभावित्वात् स्तोमस्य च स्तोत्रीयासंघातकस्य पञ्चदशस्य पश्चाद्भावित्वात् क्षत्रस्य क्षत्रियजातेः पुरस्तात् पूर्वस्मिन् भागे ब्रह्मैव ब्राह्मणजातिमेव निदधाति न तावत् पुरस्तान्निधानमात्रं ब्राह्मणजातेः अपि तु ब्रह्मणे षष्ठ्यर्थे चतुर्थी ब्रह्मणः क्षत्रञ्च विशञ्च क्षत्रियजातिं वैश्यजातिञ्च अनुगे अनुगं करोति॥ ८॥

अथास्मिन्नहनि गायत्रीषु ब्रह्मसामकरणं ब्राह्मणजातेरभिवृद्धिहेतुरित्याह।

**ब्रह्म वै पूर्व्वमहः क्षत्रं द्वितीयं यद्गायत्रीषु ब्रह्म-**

**साम भवति ब्रह्म तद्यशसार्द्धयति ब्रह्म हि गायत्री ॥९**

पूर्वं प्रायणीयमहर्ब्रह्म वै ब्राह्मणजातिरेव गायत्री रथन्तर-सम्बन्धात् तयोश्च ब्राह्मणजातिसहोत्पन्नत्वात् द्वितीयमहः क्षत्रं क्षत्रियजातितया सहोत्पन्नानां त्रिष्टुभादीनां अत्र सद्भावात् अतः क्षत्रसंस्तुते द्वितीयेऽप्यहनि गायत्रीष्वृक्षु ब्रह्मसाम भवतीति यत् तत्तेन ब्रह्म ब्राह्मणजातिं यशसा कीर्त्या अर्द्ध-यति समृद्धं करोति कुत एतत् हि यस्माद्ब्राह्मणजातिरेव गायत्रीछन्दसां मध्ये गायत्र्याख्यं छन्दः ॥ ९ ॥

अथ तृचस्यार्थद्वारा समृद्धिहेतुतामाह ।

**तदु समानं वदन्तीषु क्रियते समृद्धौ ॥ १० ॥**

तदु तद्ब्रह्मसाम समानं वदन्तीषु एकरूपमेवार्थं प्रतिपादय-न्तीषु एवाह्यसि एवा शूर एवा ते राधमित्यादिना एवशब्दे-नैवं शब्दपर्यायेण सादृश्यार्थस्य तत्र प्रतिपादनात् तासु क्रियते एतस्यैव शब्दस्य भूयोऽभ्यासात्तत्साम समृद्धौ समृद्ध्यर्थमेव भवति ॥ १० ॥

अथ तृतीये उक्थस्तोत्रे विकल्पेन सामनी विधत्ते ।

**आष्टादंष्ट्रे भवतः ॥ ११ ॥**

अष्टादंष्ट्रेण ऋषिणा दृष्टे सामनी आष्टादंष्ट्रे तयोरन्यतरत् इन्द्रं विश्वा इत्यस्मिंस्तृचे अच्छावाकसामत्वेन गातव्यं ॥ ११ ॥

तयोः साम्नोराद्यौ स्तोभौ वृत्रहननसम्बन्धाविति प्रतिपादयन् वीर्य्यवत्त्वं प्रतिपादयति।

**ऐयाहा इति वा इन्द्रो वृत्रमहन्नैयादोहोवेति न्यगृह्णाद्वार्त्तघ्ने सामनी वीर्यवती ॥ १२ ॥**

ऐयाहा इति पूर्व्वमाष्टादंष्ट्रे विद्यमानस्तोभः शब्दानुकरणमेतत् एवं शब्दं कुर्व्वन् खलु पुरा इन्द्रो वृत्रमसुरमहन् हतवान् ऐयादो हो वेति द्वितीयस्य स्तोभः एतदपि शब्दानुकरणं ऐयादो हो वेति शब्दायमानस्तमसुरं न्यगृह्णात् निगृहीतवान् अत एते सामनी वार्त्तघ्ने वृत्रहननसाधने वीर्य्यवती वीर्य्योपेते ॥ १२ ॥

किं तत आह।

**ओजएवैताभ्यां वीर्य्यमवरुन्धे ॥ १३ ॥**

यस्मादुक्तप्रकारेण वीर्योपेते तस्मादेताभ्यां सामभ्यां ओजो बलरूपं वीर्य्यं शत्रुहननसामर्थ्यमवरुन्धे लभते ॥ १३ ॥

अथैषामुक्थानां पूर्ववत् स्तोमं विधाय तत्साध्यफलमाह।

**पञ्चदश एव स्तोमो भवत्योजस्येव तद्वीर्य्ये प्रतितिष्ठत्योजो वीर्यं पञ्चदशः ॥ १४ ॥**

पूर्वोक्तः पञ्चदश एवषां स्तोमो भवति तत्तेन ओजस्येव

ओजोरूपे बलात्मक एव वीर्य्ये प्रतितिष्ठति यजमानः प्रतिष्ठितो भवति यतः पञ्चदशः स्तोमः ओजो वीर्य्यं ओजोरूपवीर्य्यात्मकः प्रजापतिना सृष्टत्वात् अतः पञ्चदशस्तोमेन वीर्य्ये प्रतिष्ठायुक्तेतिभावः॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥ १४॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे एकादशाध्यायस्य एकादशः खण्डः।

एकादशाध्यायः समाप्तिमगमत्।

---

# द्वादशोऽध्यायः।

अथ प्रथमः खण्डः।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं॥

अथ तृतीये दाशरात्रिकेऽह्नि बहिष्पवमानस्य सप्तदश-स्तोमस्य प्रथमं तृचं विदधाति।

**दविद्युतत्यारुचेति तृतीयस्याह्नः प्रतिपद्भवति॥१**

प्रतिपद्यते अनेनेति प्रतिपदाद्यस्तृचः तृतीयस्य सप्तदश-स्तोमकस्योक्थसंस्थस्य पार्ष्टिकस्याह्नो बहिष्पवमानस्य दविद्युत-त्येत्याद्यस्तृचः कार्य्यः॥१॥

अनुष्ठितयोरह्नोस्तृतीयस्य चाह्नः सन्धायकानि रूपाणि दविद्युतत्येत्यस्यां दर्शयन् त्रिरात्रसन्धानं दर्शयति।

दविद्युतत्यारुच्या परिष्टोभन्त्या कृपा सोमाः शुक्रा गवाशिरः॥

**दविद्युतती वै गायत्री परिष्टोभन्ती त्रिष्टुबावा-शीर्ज्जगती त्रीणि रूपाणि समारभते त्रिरात्रस्या-विस्रंसाय॥ २॥**

गायत्रीत्रिष्टुब्जगतीत्येतानि त्रीणि छन्दांसि क्रमेणैतेषां

त्रयाणामह्नां रूपाणि अत च द्विद्युततीति गायत्र्यधीयते द्विद्युततीत्यर्थं दीप्यमानेति हि शब्दार्थः गायत्री च अग्निना सहोत्पत्तेस्तेजोरूपत्वात् दीप्यमाना भवति अतः शब्दसामान्येन द्विद्युततीशब्देन गायत्र्येवोपस्थाप्यते परिष्टोभन्तीशब्देन त्रिष्टुबक्षराधिकेन गायत्रपादेन स्तोभवतीति त्रिष्टुप् परितः स्तोभतीति परिष्टोभन्ती अनेन पादेन त्रिष्टुबेवोपस्थाप्यते परिष्टोभन्त्या रूपेति ह्यत्र द्वितीयः पादः सोमाः शुक्रागवाशिर इति तृतीयः जगती च गवाशीः गोविकारेण पयसा आशिरा आश्रयसाधनेन युक्ता तृतीयसवनं हि जगत्या आयतनं तत्र चाशिरावनयनं रसवत्त्वाय क्रियते अतो गवाशिर इति पदेन जगतीं सन्निधाप्यते एवमेषां त्रयाणां छन्दसामस्यामृचि प्रतिपादनात् तानि त्रीणि रूपाणि त्रयाणामह्नां रूपाणि समारभते समूहीकृत्य प्रयुङ्क्ते किमर्थं त्रिरात्रस्य अनुष्ठितयोरनुष्ठीयमानस्य त्रयाणामह्नामविस्रंसाय स्रंसनाभावाय परसम्बन्धाय दार्ढ्यायेति यावत् ॥ २ ॥

अथानुरूपाख्यं तृचं विधत्ते।

**एते असृग्रमिन्दव इत्यनुरूपो भवति ॥ ३ ॥**

अनुरूपाख्यो द्वितीयस्तृचो भवतीत्यर्थः ॥ ३ ॥

एते असृग्रमिन्दव इति पदत्रयेण देवमनुष्यपितृसृष्टिरूपोऽर्थः पर्यवसाय तृत्या प्रतिपाद्यत इत्याह।

एतं असृग्रमिन्दवः ... । निरूपानपाभि सौभग...



**एतइति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानिन्दव इति पितॄंस्तदेव तदभिवदति ॥ ४ ॥**

एवं ज्योतिष्टोमप्रकरण एव व्याख्यातं प्रजापतिसृष्टिसमये एतैः पदैर्य्यदेवार्थरूपं ससर्ज्ज तदेवार्थरूपं तत् पादत्रयमभिवदति ॥ ४ ॥

अस्य तृचस्यानुरूपसंज्ञान्निर्ब्रूवन् तद्वेदनफलमाह ।

**पूर्वंसु चैव तद्रूपमपरेण रूपेणानुवदति यत्पूर्वं रूपमपरेण रूपेणानुवदति तदनुरूपस्यानुरूपत्वमनुरूपएनं पुत्रो जायते य एवं वेद ॥ ५ ॥**

एतत् पवस्व वाचो अग्रिय इति द्वितीयस्याह्नः प्रतिपद्भवतीति खण्डे व्याख्यातं ॥ ५ ॥

अथ विहितावेतौ तृचावनूद्य फलान्तरहेतुतामाह ।

**स्तोत्रीयानुरूपौ तृचौ भवतः प्राणापानानामवरुध्यै ॥ ६ ॥**

एतदपि तत्रैव व्याख्यातं ॥ ६ ॥

अथ तृचान्तरं विधत्ते ।

**राजा मेधाभिरीयते पवमानो मनावध्यन्तरिक्षेण यातव इति ॥ ७ ॥**

राजा मेधाभिरिति बहिष्पवमानस्य तृतीयस्तृचः ॥ ७ ॥

तृतीयेऽहन्यस्य तृचस्य सङ्गतिं वक्तुं अवशिष्टपादद्वयस्यानुवादतामेव सङ्गतिं दर्शयति ।

**अन्तरिक्षदेवत्यस्तृचो भवत्यन्तरिक्षदेवत्यमेतदहर्यत्तृतीयं तदेव तदभिवदति ॥ ८ ॥**

यत्तृतीयमहरन्तरिक्षदेवत्यं अन्तरिक्षदेवतार्थं अतो अन्तरिक्षेण यातव इति तन्मन्त्रवाक्यं तदेवान्तरिक्षदेवत्यत्वमभिवदति ॥ ८ ॥

अथ पञ्चर्चं साम बहिष्पवमानस्य विधत्ते ।

**पञ्चर्चो भवति पञ्चपदा पङ्क्तिः पाङ्क्तमन्नमन्नाद्यस्यावरुध्यै ॥ ६ ॥**

तन्वा त्वम्णानीत्यादिकः पञ्चर्चः अन्नाद्यस्यावरुध्यै सम्पद्यते ॥ ६ ॥

अथान्यं तृचं विधत्ते ।

**तृच उत्तमो भवति येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति ॥ १० ॥**

द्वितीयस्याह्नो बहिष्पवमानविधावेतदपि व्याख्यातं ॥१०॥

अथास्य स्तोत्रस्य विहिताभिर्ऋग्भिः सिद्धां स्तोमक्लृप्तिं ब्रुवन् विशिष्टफलहेतुतामाह।

**सप्तदश एव स्तोमो भवति प्रतिष्ठायै प्रजात्यै ॥११॥**

सप्तदशस्तोत्रीयात्मक एवास्य स्तोत्रस्य स्तोमो भवति किमर्थं प्रतिष्ठायै प्रतिष्ठार्थं द्वादशमासाः पञ्चर्त्तव इति संवत्सरात्मकः सप्तदशः संवत्सरेणैव च पुरुषस्य प्रतिष्ठानात् सप्तदशस्य तद्धेतुत्वं तथा प्रजात्यै प्रजात्यर्थं प्रजापतिर्वै सप्तदश इति श्रुतेः प्रजोत्पत्तिरपि सप्तदशस्तोमसाध्येत्यर्थः ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे द्वादशाध्यायस्य
प्रथमः खण्डः।

---

अथ द्वितीयः खण्डः।

अथ होतुराज्यस्य स्तोत्रीयं तृचं दर्शयति।

**अग्निनाग्निः समिध्यत इत्याग्नेयमाज्यं भवति ॥१॥**

आग्नेयमग्निदेवत्यं होतुराज्यं स्तोत्रं अग्निनाग्निरित्यादिकस्तृचो भवतीत्यर्थः ॥ १ ॥

अस्मिंस्तृचे विद्यमानस्याग्निनाग्निरित्यग्निशब्दद्वयस्य पर्यवसितमर्थमाह।

**पूर्वे एव तदह्नी समिद्धे तृतीयमहरभिसमिन्धे ॥२॥**

तत्तेनाग्निनाग्निरितिशब्देन समिद्धे सम्यग्दीप्ते पूर्वे एवाहनी अभिलक्ष्य तृतीयमिदमहः समिन्धे सन्दीपयति अयमर्थः अग्निनेति तृतीया तेन पदेन अग्न आयाहि वीतयेऽग्निं दूतं वृणीमह इत्याद्याभ्यां यदनुष्ठितं पूर्व्वमहर्द्वयं तदेवोपलक्ष्य तेन सह पुनरग्निशब्दाभिधेयमहः समिध्यते ॥ २ ॥

अथ द्वितीयमाज्यस्तोत्रीयं तृचं विधत्ते ।

**मित्रꣳ हुवे पूतदक्षमिति राथन्तरम्मैत्रावरुणं ॥३**

मित्रं हुव इति तृचा राथन्तरं रथन्तरसम्बन्धि मैत्रावरुणेन यदाज्यस्तोत्रमनुशस्यते तद्भवतीत्यर्थः ॥ ३ ॥

कुतोऽस्य सम्बन्धितेत्यत आह ।

**हुवदिति वै राथन्तरꣳ रूपं ॥ ४ ॥**

प्राकृतिके राथन्तरे प्रगाथे गव्यन्तस्त्वा हवामह इति ह्वयतिधातुः श्रूयते तस्य च रथन्तरसम्बन्धात्तद्रूपत्वं अत्रापि हुव इति श्रूयते तच्चोक्तप्रकारेण राथन्तरमेव रूपं ॥ ४ ॥

नन्वस्मिन्नहनि वैरूपसामैव पृष्ठस्तोत्रन्न रथन्तरं तत्कस्मिन्नहनि राथन्तरमाज्यं विधीयत इति तत्राह ।

**रथन्तरमेतत्परोक्षं यद्वैरूपं राथन्तरमेव तद्रूपन्निर्द्योतयति ॥ ५ ॥**

यद्वैरूपं साम एतत् परोक्षं पारोक्ष्येण वर्त्तमानरथन्तर-मेव रथन्तरादस्योत्पत्तेः तथा चैतरेयके ष्टहच्च वाग्रे रथन्तर-ञ्चास्तामित्युपक्रम्य तद्रथन्तरगर्भमाधत्त तद्वैरूपमसृजतेत्याम्नातं यद्यस्मात्परोक्षं रथन्तरमेव वैरूपं तत्तस्माद्रथन्तरमेव रूपं निर्द्योतयति प्रकाशयति ॥ ५ ॥

अथ ब्रह्मण आज्यस्तोत्रं दर्शयति।

इन्द्रेण सꣳहि दृक्षस इत्यैन्द्रं ॥ ६ ॥

इन्द्रेणेति तृच ऐन्द्रमिन्द्रदेवत्यं तृतीयमाज्यस्तोत्रं कार्य्य-मित्यर्थः ॥ ६ ॥

संहि दृक्षस इति शब्दार्थद्वारेण तृतीयेऽहन्येतस्य तृचस्य सङ्गतिमाह।

सम्मिव वा इमे लोका दृदृशिरेऽन्तरिक्षदेवत्यम-हर्य्यत्तृतीयं तदेव तदभिवदति ॥ ७ ॥

दृशिधातोः कर्मणि मध्यमैकवचने व्यत्ययेन सेप्रत्यये दृक्षस इति रूपं भवति हि यस्मादतः संदृक्ष्यते सम्यग्दर्शनेन विषयी-क्रियत इति तस्यार्थः इमे पृथिव्यादयस्त्रयो लोकाः सन्ददृशिर इव वै संदृश्यन्त एव खलु तदन्तर्वर्त्तित्वादन्तरिक्षमपि संदृश्यते एतदेवात्र संदृक्षस इति पदेनोपख्याप्यते एतदहरान्तरिक्ष-देवत्यं अन्तरिक्षदेवताधं यदेतत्तृतीयमहस्तदेवास्याङ्गोदैवतमन्तरिक्षं तत् संदृक्षस इति पदमभिवदति ॥ ७ ॥

अथ चतुर्थमाज्यस्तोत्रं विधत्ते।

**ता हुवे ययोरिदमिति राथन्तरमैन्द्राग्नं ॥८॥**

ता हुव इति तृचः राथन्तरसम्बन्धि ऐन्द्राग्नं इन्द्राग्नि-दैवत्यं चतुर्थमाज्यस्तोत्रं कार्य्यमित्यर्थः॥ ८॥

प्रथमाज्यस्तोत्रवदत्रापि प्रथमतो राथन्तरं रूपं प्रदर्शयन् वैरूपस्य च रथन्तरात्मकत्वमभिधाय राथन्तरस्य वैरूपेऽहनि सङ्गतिमाह।

**हुव इति वै राथन्तरं रूपं रथन्तरमेतत्परोक्षं यद्वैरूपं राथन्तरमेव तद्रूपन्निर्द्योतयति स्तोमः॥ ९॥**

पूर्ववद्योज्यं अथैतेषु चतुर्ष्वाज्यस्तोत्रेषु उक्तएव सप्तदशः स्तोमः कार्य्य इत्यभिप्रायेणोक्तं स्तोम इति॥ ९॥

इति ताण्ड्यमहाब्राह्मणे द्वादशाध्यायस्य
द्वितीयः खण्डः।

---

अथ तृतीयः खण्डः।

अथास्मिन्नेव तृतीयेऽहनि माध्यन्दिनस्याद्यं स्तोत्रीयतृचं दर्शयति।

**उच्चाते जातमन्धस इति गायत्री भवति॥१॥**

उच्चाते इत्येषा गायत्री गायत्रच्छन्दस्का प्रतिपद्भवति इदमादिकः प्रथमतृच इत्यर्थः ॥ १ ॥

तृतीयेऽहन्यस्य तृचस्य सङ्गतिमाह ।

**उद्वद्वा एतदहर्यत्तृतीयं तदेव तदभिवदति ॥२॥**

यत्तृतीयमहः एतदुद्वद्वै उत्शब्दवदेव पूर्वाभ्यामहोभ्यामूर्द्ध्वमस्य वर्त्तमानत्वात् ऊर्द्ध्ववाचिन उच्छब्दस्य तद्रूपता युक्ता अतएव पूर्वं उद्वत्त्रिवद्दिग्वदित्यादिना तृतीयेऽहनि रूपत्वेनोद्वत्त्वं परिगणितं तदुद्वत्त्वलक्षणं रूपमेव तदुच्चाते इति वाक्यं वदति यद्यप्यस्मिन् उदिति पृथक्पदन्न श्रूयते तथाप्युच्चाते इत्यत्र प्रथमपदस्यावयवभूतो य उच्छब्दः तदपेक्षयैवेयं स्तुतिर्द्रष्टव्या ॥ २ ॥

अथैतस्मिन् तृचे पदान्तरस्य श्रवणात् पवमानस्यारम्भयोग्यस्तृच इति दर्शयति ।

**अन्धस्वती भवत्यहर्वा अन्धोऽह्न आरम्भः ॥ ३ ॥**

अन्धस्वती अन्धस्शब्दयुक्ता उच्चाते जातमन्धस इत्येषा भवति अन्धः इति सकारान्तमन्ननाम अत्र तु तत्साधनेऽहनि वर्त्तते इत्याचष्टे अहर्वा अन्धः इति यदिदं द्वयागतस्य तृतीयमहः एतदेवान्धःशब्दसामान्येन स्तुतिः तथा सत्यन्धःशब्दप्रयोगादह्न एव आरम्भः उपक्रमः कृतो भवति ॥ ३ ॥

अथान्यं प्रगाथं विधत्ते ।

**अभिसोमास आयवइति ॥ ४ ॥**

स्पष्टोऽर्थः ॥ ४ ॥

बृहद्रथन्तरयोः प्रत्येकं असाधारणमन्यत्र सिद्धन्तद्रूपद्वयं तदस्मिन्नहनि प्रदर्शयन् तयोः साम्नोरस्मिन्नहनि सम्बन्धमाह।

**अभीति रथन्तरस्य रूपं बृहदिति बृहत उभयोः सह रूपमुपैत्युभौ हि वर्णावेतदहः ॥ ५ ॥**

अभिसोमास इत्यत्र यो अभीति शब्दः एतद्रथन्तरस्य रूपं अभित्वा शूरेति तद्योन्यां दृष्टत्वात् तथास्मिन् प्रगाथे प्रहिन्वान ऋतं बृहदिति बृहच्छब्दः श्रूयते स च बृहत्साम्नो वाचकत्वात्तस्यैव बृहतो रूपं एवं सत्युभयोर्बृहद्रथन्तरयोः सह सहितं संहतं रूपमस्मिन् तृतीयेऽहन्युपैति हि यस्मात् एतत्तृतीयमहरुभौ वर्णौ बृहद्रथन्तरयोरुभयोरपि यावाकारौ तादृगाकारद्वयात्मकमित्यर्थः सृष्टिसमये बृहद्रथन्तरे मिथुनीभूय पश्चाद्रथन्तराद्वैरूपस्योत्पत्तेः तत्पृष्ठकस्य तृतीयस्याह्नः उभयवर्णात्मके ह्यत्र तैत्तिरीयकं सृष्टिप्रतिपादकं ब्राह्मणं पूर्वमेवोदाहृतं ॥ ५ ॥

अथ तृचान्तरं विधत्ते।

**तिस्रो वाच ईरयति प्रवह्निरिति तृतीयस्याह्नो रूपं तेन तृतीयमहरारभन्ते ॥ ६ ॥**

तिस्रो वाच इत्ययमन्त्यस्तृचः कार्य्यः तत्र तिस्र इति त्रि-शब्दः श्रूयते तच्च तृतीयस्याह्नो रूपं प्रत्यभिज्ञापकत्वात् अतएव उद्वत्त्रिवद्दिग्वदित्यादिना पूर्वं त्रित्वयोगस्य तृतीयेऽहनि रूपत्व मुक्तं तेन कारणेन त्रित्वसंख्यावाचकेन तिस्र इत्यनेन तृतीयमेवा-हरारभन्ते अवलम्बन्ते ॥ ६ ॥

ननु गायत्रं प्रथममहस्त्रैष्टुभं द्वितीयं जागतं तृतीयमिति प्रसिद्धत्वात् कथमस्य त्रैष्टुभतृचस्य जागतेऽहनि सङ्गतिरिति तत्राह।

त्रिष्टुभः सत्यो जगत्यो रूपेण जागतꣳ ह्येत-दहः॥ ७॥

तृतीयस्याह्न इव जागतच्छन्दसोऽपि त्रित्वं रूपं छन्दसाम्मध्ये तस्य तृतीयत्वात् यस्मादेतास्त्रैष्टुभः सत्योऽपि रूपेण जगत्याः सम्बन्धिना त्रित्वाख्येन तल्लक्षणेन युक्ताः तस्मादेता जगत्यः एत-दहश्च जागतं अतोऽस्मिन्नहनि योगार्हा इत्यर्थः ॥ ७ ॥

अथोच्चात इति प्रथमे तृचे पूर्ववद्गायत्रं साम विधाय प्राक्-तिकं तद्ब्राह्मणञ्चातिदिशति।

गायत्रं भवति यदेव गायत्रस्य ब्राह्मणं ॥ ८॥

सिद्धमेतत् ॥ ८ ॥

अथ पुनरावृत्तेरस्मिन्नेव तृचे सामान्तरं विधत्ते।

**वैष्टम्भं भवति ॥ ९ ॥**

यत् क्षुल्लकवैष्टम्भमिति सम्प्रदायप्रसिद्धन्तदस्मिन् तृचे कार्य्यमित्यर्थः ॥ ९ ॥

अथास्यैतत् संज्ञानिर्वचनद्वारेण अहर्दार्ढ्यहेतुतामाह ।

**अहर्वा एतदव्लीयत तद्देवा वैष्टम्भैर्व्यष्टम्नुवंस्त-द्वैष्टम्भस्य वैष्टम्भत्वं ॥ १० ॥**

एतत्तृतीयमहः खलु पुरा अव्लीयत अहिंस्यत व्लीनातिहिंसा-कर्म्मा शिथिलावयवं जातमित्यर्थः तत्तदवस्थमहः देवाः वैष्ट-म्भैरस्य साम्नोऽवयवैर्व्यष्टम्नुवन् विष्टब्धं विशेषेण स्थिरमकुर्वन् तत्तस्मात् विष्टम्भनसाधनत्वादस्य वैष्टम्भस्य साम्नो वैष्टम्भत्वं वैष्टम्भमिति संज्ञा संजाता ॥ १० ॥

अथास्य निधनं दिशां धृतिहेतुरित्याह ।

**दिश इति निधनमुपयन्ति दिशां धृत्यै ॥११॥**

स्पष्टोऽर्थः ॥ ११ ॥

अभिसोमास आयव इति प्रगाथं तृचीकृत्य तत्राद्यायां पौरुमद्गाख्यं साम गातव्यमिति विधत्ते ।

**पौरुमद्गं भवति ॥ १२ ॥**

स्पष्टोऽर्थः ॥ १२ ॥

अथैतत्साम पापक्षयहेतुरिति प्रतिपादयितुमाह ।

अह्नर्वा एतद्व्लीयमानं तद्रक्षाᳫंस्यसचन्त तस्मा-द्देवाः पौरुमद्गेन रक्षाᳫंस्यपाघ्नन्नपपाप्मानᳫं हते पौ-रुमद्गेन तुष्टुवानः ॥ १३ ॥

वैष्टम्भेन विष्टब्धत्वात् अव्लीयमानमहिंस्यमानमेतदह्नः रक्षां-स्यसचन्त समवायं प्राप्नुवन्नित्यर्थः सच समवाये इति धातुः ततोऽनन्तरं देवाः पौरुमद्गेनानेन साम्ना सङ्गतानि रक्षांसि तस्मादह्नोऽपाघ्नन् अपहिंसिषुः यस्मादेवं तस्मादिदानीमपि पौरुमद्गेनानेन साम्ना सङ्गतानि रक्षांसि तुष्टुवानः स्तुतवान् यजमानः पाप्मानमपहते विनाशयति ॥ १३ ॥

अथास्य संज्ञानिर्वचनद्वारेण पापनिवृत्तिपुरःसरं शुद्धि-हेतुतामाह।

देवाश्च वासुराश्चास्पर्द्धन्त ते देवा असुराणां पौरु-मद्गेन पुरोऽमज्जयन्यत पुरोऽमज्जयᳫं स्तस्मात्पौरुमद्गं पाप्मानमेवैतेन भ्रातृव्यमाज्जयति ॥ १४ ॥

देवाश्चासुराश्च पुरा अस्पर्द्धन्त स्पर्द्धामकुर्वन् तत्र ते स्पर्द्ध-मानादेवाः पौरुमद्गेनानेन साम्ना साधनेन असुराणां पुरः पुराणि निवासस्थानानि अमज्जयन् असुरैर्व्ययोजयन्नित्यर्थः यद्यस्मादनेन साम्ना पुरोऽमज्जयन् अशोधयन् तस्मात्पौरुमद्गं एतन्नाम पौरुमद्गसंज्ञं जातमित्यर्थः यत एवं ततो हेतोरिदा-

नीमपि एतेन साम्ना स्तुवन् पाप्मानं पापरूपमेव भ्रातृव्यं यत्तु मज्जयति शोधयति अपगमयतीत्यर्थः ॥ १४ ॥

अथैतस्मिन्नेवाभिसोमास इति तृचे सामान्तरं गेयमिति विधत्ते।

**गौतमं भवति ॥ १५ ॥**

स्पष्टोऽर्थः ॥ १५ ॥

अस्य साम्नः पूर्वमाम्नातं ब्राह्मणमप्यतिदिशति।

**यदेव गौतमस्य ब्राह्मणं ॥ १६ ॥**

गौतमं भवति सामार्षेयवत् स्वर्गाय युज्यत इत्यादिकं तदेव चात्रापि द्रष्टव्यमित्यर्थः ॥ १६ ॥

अथास्मिन् साम्नि पादस्याद्यन्तयोः स्तोभमाम्नायते ह्यावभिसोमास आयवो हा ऊ इति तदेतदस्मिन्नहनि सङ्गतिमाह।

**उभयतः स्तोभं तथा ह्येतस्याह्नो रूपं ॥१७॥**

उभयतः पादस्य आद्यन्तयोः स्तोभो यस्य तत्तथोक्तं तथैव खल्वेतस्य तृतीयस्याह्नो रूपमुक्तं प्राक् यदुभयतः स्तोभं तत्तृतीयस्येत्यादिना ॥ १७ ॥

अथास्मिन्नेवाष्टर्चे तृचे सामान्तरं विधत्ते।

अन्तरिक्षं भवति ॥ १८ ॥

पिबा सुतस्य रसिन इत्यस्यामुत्पन्नं सामान्तरिक्षं तत्तस्मिन् त्र्यचे गातव्यमित्यर्थः ॥ १८ ॥

साम्नोऽह्नश्च सङ्गतिं दर्शयति ।

अन्तरिक्षदेवत्यमेतदहर्यत्तृतीयमन्तरिक्ष एव तदन्तरिक्षेण स्तुवते प्रतिष्ठायै ॥ १९ ॥

यदेतत्तृतीयमहः अन्तरिक्षदेवत्यं अन्तरिक्षदेवतार्थं अन्तरिक्षमस्य देवतेत्यर्थः तत्तथा सति अन्तरिक्षदेवत्यत्वात् अन्तरिक्षे अन्तरिक्षात्मकएवैतस्मिन्नहनि अन्तरिक्षेण साम्ना स्तुवते स्तुवन्ति निराधारेऽन्तरिक्षे स्तवनात् तच्च प्रतिष्ठायै प्रतिष्ठानाय आस्पदाय भवति नृभिर्येमाण इति द्विपदाभिसोमास आयव इत्यस्यावसान आम्नाता प्रहिन्वान इति ॥ १९ ॥

पूर्वेण पादेनाभ्यस्तायां तस्यामेकं साम गेयमिति विधत्ते ।

आष्कारणिधनं काण्वं भवति ॥ २० ॥

आष्कार आष इति शब्दो निधनं यस्य तथाविधं काण्वं नृभिर्येमाण इत्यस्यां गातव्यं पूर्वयोरह्नोः प्रयुक्तयोर्बृहद्रथन्तरयोर्ये निधने तद्विलक्षणत्वमस्य प्रतीयते ॥ २० ॥

अतो निधनानां बहुत्वात्समृद्धिर्भवतीत्याह ।

अस्मिति वै राथन्तरं रूपं हस्मिति बार्हतं तृतीय-मेव तद्रूपमुपयन्ति समृध्यै ॥ २१ ॥

अस इति रथन्तरसम्बन्धिरूपं हस्मिति बार्हतं बृहतः सम्ब-न्धि तयोर्ह्येते निधने एतद्वाप् इति रूपं तृतीयमेव उभयविल-क्षणमन्यदेव त्रिसंख्यापूरकमुपयन्ति उपगच्छन्ति प्रयुञ्जते तथा सति निधनबहुत्वात्पादमेतत्तृतीयस्य निधनस्योपायनं समृध्यै यजमानस्य पश्वादिभिः समर्द्धनाय अभिवृद्धौ सम्पद्यते ॥ २१ ॥

अथ तिस्रो वाच इत्यस्मिन् त्रैष्टुभेऽन्तिमे तृचे एकं साम विदधाति।

अङ्गिरसां संक्रोशो भवति ॥ २२ ॥

अङ्गिरसां संक्रोश इति साम्नः संज्ञा तदस्मिन् तृचे गेय-मित्यर्थः ॥ २२ ॥

एतां संज्ञामर्थान्निर्ब्रुवन् अस्य स्वर्गप्राप्तिसाधनतामाह।

एतेन वा अङ्गिरसः संक्रोशमानाः स्वर्गं लोकमा-यन् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः स्तोमः ॥ २३ ॥

अङ्गिरसो नाम केचिदृषयः पुरा एतेन खलु साम्ना साध-नेन संक्रोशमानाः संहत्य शब्दं परस्पराह्वानरूपं प्रियवाक्यं

वदन्तः स्वर्गं लोकमायन् अपि च तुष्टुवानः स्तुतवानपि स्वर्गात् लोकान्न च्यवते न प्रच्युतो भवति स्तोमस्य पूर्व्वोक्तः सप्तदश एव विहितेषु सामसु क्रियमाणेषु सम्पद्यत इत्यर्थः ॥ २३ ॥

इति ताण्ड्यमहाब्राह्मणे द्वादशाध्यायस्य
तृतीयः खण्डः ।

---

अथ चतुर्थः खण्डः ।

अथ होतुः पृष्ठस्य स्तोत्रीयं तृचं विधत्ते ।

**यद्याव इन्द्र ते शतमिति शतवत्यो भवन्ति ॥१॥**

यद्यप्येष प्रगाथस्तथापि प्रग्रथनेन तृचत्वात् शतवत्यः शतशब्दयुक्ता भवन्तीति बहुवचनं ॥ १ ॥

किं तत इत्याह ।

**शतवद्वै पशूनाꣳ रूपꣳ सहस्रवत्पशूनामेवैताभीरूपमवरुन्धे ॥ २ ॥**

पशूनां गवादीनां रूपं स्वरूपं शतवत् शतसंख्यायुक्तं तथा सहस्रवत् सहस्रसंख्यायुक्तञ्च हि भवति पशूनान्नानारूपत्वात् एताभिः शतवतीभि ऋग्भिः पशूनामेव तदपरिमितं रूपमवरुन्धे लभते ॥ २ ॥

अथ ब्राह्मणः पृष्ठस्य स्तोत्रीयं तृचं विदधाति ।

**वयद्घत्वा सुतावन्त इति सतो बृहत्यो वर्षीयश्छन्द आक्रमतेऽनपभ्रंशाय ॥ ३ ॥**

वयं घत्वेत्येतास्तिस्रः सतो बृहत्यः स्तोत्रीया भवन्ति यद्यप्येतास्तिस्रो बृहत्यस्तृतीयपादस्य द्वादशाक्षरत्वात् अतो बृहत्यास्तु प्रथमतृतीयौ द्वादशाक्षरौ अष्टतौ जगताविति हि तल्लक्षणं तथाप्येतासां सतो बृहतीत्वं तथा सति बृहत्याः सकाशात् वर्षीयो वृद्धतरं सतो बृहत्यात्मकं छन्द आक्रमते अवष्टभ्नोति किमर्थमनपभ्रंशाय न्यूनस्य छन्दस आक्रमणं अपभ्रंशः सामावयवस्य भ्रंशोऽपगमः स्यात् तदभावार्थं ॥ ३ ॥

अथाच्छावाकपृष्ठस्य स्तोत्रीयं तृचं दर्शयन् तस्य प्रतिष्ठाहेतुतामाह ।

**तरणिरित्सिषासति वाजं पुरन्ध्या युजाव इन्द्रं पुरुहूतन्न मे गिरेत्यावदक्षरमुद्धतमिव वै तृतीयमहर्य्यदेतदावदक्षरं भवत्यहरेवैतेन प्रतिष्ठापयति ॥४॥**

तरणिरित्सिषासतीति प्रगाथस्तृचीकृतोऽच्छावाकपृष्ठस्य स्तोत्रीयस्तत्र च आव इन्द्रं पुरुहूतन्न मे गिरेत्याम्नायते यद्यपि आव इति उपसर्गो युष्मदादेशश्च पदद्वयं तथापि सादृश्यात् आवदक्षरं अवति धातुनिष्पन्नं आव इत्येकं पदं बुद्धौ सन्नि-

धीयते तृतीयमहरस्य उद्धतं उद्धतवातमिवाप्रतिष्ठितं यदेतत् गूर्व्वोक्तमावदचरं भवति एतेनाहरेव प्रतिष्ठापयति अवतेर्हि रच्चणमर्थः तेन च तत्कार्य्यस्थापनं लच्यते अतोऽनेन प्रतिष्ठा-प्रतिपादनमुपपन्नं ॥ ४ ॥

अथ प्रथमपृष्ठस्तोत्रनिवर्त्तकं सामाहर्दर्शयति।

**पञ्चनिधनं वैरूपं पृष्ठं भवति दिशां धृत्यै ॥ ५ ॥**

दिशं विशं हस् इत्यादीनि पञ्चनिधनानि यस्य तत्पञ्च-निधनं वैरूपं यद्याव इति तृचे क्रियमाणं प्रथमं पृष्ठस्तोत्रं भवति दिशं विशं हस् अश्वाशिशुमतीति देवतावाचकं वाक्य-द्वयं स्वाध्यायपाठे वैरूपं स्वयोनेरुपरिष्ठादाम्नातं प्रयोगसमये उत्तरार्द्धर्च्चस्य प्रथमपादात् पूर्वं दिशं विशमिति प्रयोक्तव्यं अश्वा शिशुमतीति द्वितीयपादात् पूर्वं एतत्पादद्वयं देवता-वाक्यद्वयं मिलित्वा चत्वारिनिधनानि इट् इडेति पञ्चमं तदुक्तं सूत्रकृता देवतापदं देवतापदमिति वैरूपे निधनानि इति तानि पञ्चनिधनान्यस्मिन् साम्नि प्रयुज्यमानानि दिशां प्राच्यादीनां अध्यदिक्सहितानां पञ्चानां धृत्यै धारणाय सम्पद्यते ॥ ५ ॥

अपि चान्नाद्यहेतुश्चैतत्सामेत्याह।

**पञ्चपदा पङ्क्तिः पाङ्क्तमन्नमन्नाद्यस्यावरुध्यै ॥ ६**

पञ्चपदा पङ्क्तिः पाङ्क्तं अन्नं पङ्क्तिसम्बद्धं पञ्चसङ्ख्योपेतं आम्नं

पेयं खाद्यं लेह्यञ्चोष्यमित्यादिभेदेन एवं परम्परया पञ्चसंख्याद्वारेण एतत्साम अन्नाद्यस्यावरुध्यै अवरोधनाय प्राप्तये भवति ॥६॥

प्रकारान्तरेणैतत् स्तौति।

दिशां वा एतत्साम यद्वैरूपं दिशो ह्येवैतेनाभिवदति ॥ ७ ॥

दिशां सम्बन्धि ह्येतत् साम यद्वैरूपाख्यं तस्मादेतेन साम्ना दिश एवाभिवदति दिशां विशमिति तत्र श्रवणात् ॥ ७ ॥

एवं साम दिक्सम्बन्धेन प्रशस्य ऋतुसम्बन्धेनापि प्रशंसति।

अथ यत्पञ्चनिधनं तेनर्तूनां पञ्च ह्यृतवः ॥ ८ ॥

अथशब्दः प्रकारान्तरद्योतनार्थः यद्यस्मात्पञ्चनिधनं पञ्चभिर्निधनैरुपेतं वैरूपं तेन कारणेन ऋतूनां सम्बन्धि तद्भवति ननु वसन्ताद्याः षडृतवः कथं पञ्चसंख्याया ऋतुसम्बन्ध इति तत्राह पञ्चेति हेमन्तशिशिरौ समासेनेति ॥ ८ ॥

श्रुतेः फलं दर्शयति।

ऋतुभिश्च वा इमे लोकादिग्भिश्चावृतास्तेष्वेवोभयेषु यजमानं प्रतिष्ठापयति यजमानं वा अनु प्रतितिष्ठन्तमुद्गाता प्रतितिष्ठति य एवं विद्वान् वैरूपेणोद्गायति ॥ ९ ॥

प्राच्यादिभिर्दिग्भिरिमे लोका आवृता आवेष्टिताः अत ऋतवो दिशश्च प्राप्तव्याः तेष्वेवोभयेषु ऋतुषु दिक्षु च यजमानं प्रतिष्ठापयति उद्गाता तेन साम्ना प्रतिष्ठितं करोति प्रतिष्ठितं यजमानमनु पश्चादुद्गाता स्वयमपि प्रतितिष्ठति यउद्गाता एवं विद्वान् उक्तप्रकारं ब्राह्मणार्थञ्जानन् वैरूपेणोद्गायति उद्गानं करोति ॥ ९ ॥

दिक्शब्दवत्त्वमनूद्य स्तौति।

दिग्वद्भवति भ्रातृव्यस्यापनुत्त्यै ॥ १० ॥

दिग्वत् दिक्शब्दयुक्तमेतत्साम भवति भ्रातृव्यस्य शत्रोरपनुत्त्यै दिग्भ्यः सकाशादपनोदार्थं ॥ १० ॥

अथास्य प्रथमन्निधनमनुवदन् प्राक् प्रदर्शितं दिग्धारणमनेन लभ्यमित्याह।

दिशं विश्वमिति निधनमुपर्यन्ति दिशां धृत्यै ॥११॥

दिशां विश्वमिति प्रथमं निधनमुपयन्ति गच्छन्त्युद्गातारः दिक्शब्देन सन्निधापितानां सर्वासां दिशां धृत्यै धारणायैतन्निधनं सम्पद्यत इत्यर्थः ॥ ११ ॥

अथ निधनान्तरं दर्शयति।

इमित्युपरिष्टाद्दिशान्निधनमुपयन्ति तेन बार्हतं

॥ १२ ॥

दिशामुपरिष्टाद्दिशं विश्वमित्यस्मादूर्ध्वं हस् इति निधनमुपयन्ति तेनैतत्साम बार्हतं बृहतः सम्बन्धि भवति हसितिह्नि तस्य निधनं रथन्तरादुत्पत्तेर्वैरूपस्य प्राग्दर्शितत्वात् राथन्तरश्च भवति ॥ १२ ॥

किमतस्तदाह ।

**राथन्तरो वा अयं लोको बार्हतोऽसावुभे एव तद्बृहद्रथन्तरयो रूपेणापराभ्नोति ॥ १३ ॥**

अयं भूर्लोको राथन्तरो वै रथन्तरसम्बन्धी असौ द्युलोको बार्हतो बृहतः सम्बन्धी तत्तथा सति बृहद्रथन्तरयोः सम्बन्धिना रूपेणास्मिन् साम्नि दृश्यमानेन उभे एव द्यावापृथिव्यौ अपराभ्नोति जयत्ययं वीत्यस्यार्थे व्यपराभ्नोति लोकद्वये ससन्दिग्धः समृद्धो भवति ॥ १३ ॥

रूपद्वयकरणस्य प्रयोजनान्तरमाह ।

**अनड्वाहौ वा एतौ देवयानौ यजमानस्य यद् बृहद्रथन्तरे तावेव तद्युनक्ति स्वर्गस्य लोकस्य समष्ट्यै ॥ १४ ॥**

अनड्वाहौ अनड्वाहाविव एतौ वाहनभूतौ यजमानस्य देवयानौ देवलोकप्राप्तिसाधनौ यत् ये बृहद्रथन्तरे तत्तथा सति बृहद्रथन्तरयोः सम्बन्धिना रूपेण वैरूपगतेन तावेव देव-

यानौ वाहौ युनक्ति योजयति किमर्थं स्वर्गस्य लोकस्य समष्ट्यै सम्प्राप्त्यै ॥ १४ ॥

अथ निधनान्तरमनूद्य स्तौति।

**अश्ववद्भवति प्रजात्यै ॥ १५ ॥**

अश्वा शिशुमतीत्यश्वशब्दयुक्तन्निधनं भवति प्रजात्यै प्रजातिरुत्पत्तिः पुत्रादीनामुत्पत्त्यर्थं अश्वा शिशुमतीति शिशुभिर्बालैरश्वैरुपेता वडवा प्रतीयते अतः प्रजातिहेतुता युक्तेत्यर्थः ॥१५

नन्वेतस्मिन् साम्नि बहूनान्निधनानां प्रयोगे नीरसत्वं स्यादित्याशङ्क्याह।

**यथा मण्डूक आट् करोत्येवन्निधनमुपयन्त्ययातयामतायै ॥ १६ ॥**

यथा खलु मण्डूको लोके वृष्ट्यनन्तरमाट् करोति आट् इत्येवं शब्दं स्वरभेदेन विलक्षणमेव करोति एवन्निधनमप्येते विभिन्नस्वरमेवोपयन्ति उपगच्छेयुः किमर्थं अयातयामतायै नीरसत्वाभावाय रसातिशयजननार्थमित्यर्थः ॥ १६ ॥

अथैतत्साम संवत्सरे प्रतिष्ठासाधनमित्याह।

**द्वादश वैरूपाणि भवन्ति द्वादश मासाः संवत्सरः संवत्सर एव प्रतितिष्ठति ॥ १७ ॥**

यद्वाव इत्यस्यामृच्येव तद्वैरूपमुत्पन्नं तत्र च ऋगक्षर-व्यतिरिक्तानि द्वादशसंख्यानि वैरूपाणि वैरूप्यापादकानि रूपाणि भवन्ति तानि च तु वा हि हे इत्यादीनि द्रष्टव्यानि द्वादशसंख्याका मासाः संहताः संवत्सरो भवति द्वादशमासात्मकः संवत्सर इत्यर्थः अतोऽस्मिन् साम्नि द्वादशसंख्यायोगात् द्वादशमासात्मकसंवत्सर एव प्रतितिष्ठति यजमानः प्रतिष्ठितो भवति ॥ १७ ॥

अथानेन संवत्सरस्याभिद्वारेणान्नाद्यहेतुरप्येतत् सामेत्याह।

विरूपः संवत्सरो विरूपमन्नमन्नाद्यस्यावरुध्यै ॥१८

उक्तप्रकारान्तरेण संवत्सरो विविधरूपः अन्नमपि विरूपं व्रीहियवादिभेदेन विविधाकारं अतः संवत्सरान्नयोः सादृश्यात् संवत्सरे प्रतिष्ठानेनाद्यस्य अत्तुं योग्यस्यान्नस्यावरुध्यै अवरोधाय भवति ॥ १८ ॥

अथ वयं भवेति तृचे गातव्यं साम दर्शयति।

महावैष्टम्भं ब्रह्मसाम भवत्यन्नाद्यस्यावरुध्यै ॥१९

महावैष्टम्भाख्यं साम ब्रह्मणः पृष्ठस्तोत्रत्वेन कर्त्तव्यं तच्चान्नाद्यस्यावरोधार्थं भवति ॥ १९ ॥

तत्कथमन्नाद्यस्यावरोधकमित्याह।

यदा वै पुरुषोऽन्नमत्यथान्तरतो विष्टब्धः ॥ २०॥

यदा वै यस्मिन् काले हि पुरुषो देही अन्नमत्ति भक्षयति अथानन्तरमेव वैष्टम्भस्य साम्नो विष्टम्भहेतुभूतस्यान्नस्यावरोधकत्वं ॥ २० ॥

अथास्य निधनं प्रदर्शयन् तस्य प्रयोजनमाह।

**दिश इति निधनमुपयन्ति दिशां धृत्यै ॥ २१ ॥**

दिश इति निधनद्वारा दिशां वैष्टम्भसम्बन्धात्तासां धृतिर्धारणं निश्चल्येनावस्थानं वैष्टम्भेन कृतं भवतीति ॥ २१ ॥

तथास्य साम्न आधारभूतानामृचां छन्दोद्वारेण स्तौति।

**सतो बृहतीषु स्तुवन्ति पूर्वयोरह्नोः प्रत्युद्यमाय ॥२२**

सतोबृहतीषु ऋक्षु स्तुवन्ति यस्याः प्रथमतृतीयौ पादौ द्वादशाक्षरौ द्वावष्टाक्षरौ सा सतोबृहती स्तवनं पूर्वयोः प्रथमतृतीययोरह्नोः प्रत्युद्यमाय प्रतिरूपत्वेनोद्यमनाय उच्छ्रयणाय भवति तत्र हि बृहतीषु ब्रह्मसाम भवति अस्मिन्नहनि तु सतो बृहतीष्विति अधिकारत्वात् ताभ्यामहोभ्यामेतदहरुच्छ्रितं भवति ॥ २२ ॥

अथ तरणिरित्सिषासतीति तृचे गातव्यं साम विधत्ते।

**रौरवमच्छावाकसाम भवति ॥ २३ ॥**

रौरवाख्यं साम अच्छावाकपृष्ठस्तोत्रत्वेन तरणिरित्सिषासतीति तृचे कार्यं ॥ २३ ॥

अनेन साम्ना स्तवनस्य पश्वभिक्रमणहेतुत्वं विवक्षुस्तदर्थं रौरवेणाग्नेः सम्बन्धमाह।

**अग्निर्वै क्रूरो रुद्रोऽग्निः॥ २४॥**

एतेन खलु साम्ना पुरा क्रूरोत्यत्यर्थं शब्दायमानो रुद्रस्तीक्ष्णो रुद्रात्मको वा अग्निः पशुलक्षणं वीर्य्यं प्राप्नोत् अतएवास्य रौरवमिति संज्ञा अग्नेः पश्वाधिपत्यञ्च जात॥ २४॥

एतच्च तद्देवा पशो व्यभजन्त तस्याग्नी रौरवं प्राबृहतेत्यादिना प्रागाम्नातं किमतो भवति तदाह।

**अग्निर्वा एतस्य पशूनपक्रमयति यस्य पशवोऽपक्रामन्त्यग्निरेतस्य पशूनभिक्रमयति यस्य पशवोऽभिक्रामन्ति॥ २५॥**

यस्मादुक्तप्रकारेण रुद्रात्मकोऽग्निरनेन साम्ना पशून् प्रापत् तस्मादग्निरेव एतस्य पशूनपक्रमयत्यपगमयति यस्य यजमानस्य पशवोऽपक्रामन्त्यपगच्छन्ति यस्य च पशवोऽभिक्रामन्ति अभिमुखं प्राप्नुवन्ति तस्य यजमानस्याग्निरेव पशूनभिक्रमयति अपक्रमणाभिक्रमणयोरग्निरेव कारयिता इत्यर्थः॥ २५॥

इत्थमग्नेः पशुस्वामित्वं जानतो रौरवेण स्तुवतः फलमाह।

**अभ्यभ्येवास्य पशवः क्रामन्ति य एवं विद्वान् रौरवेण स्तुते॥ २६॥**

यो रौरवेण स्तौति अस्य पशवोऽभ्यभ्येव क्रामन्ति सर्वदा-ऽभिमुखमेव प्राप्नुवन्ति ॥ २६ ॥

अस्मिन् साम्नि विद्यमानमिडाविशेषं प्रदर्श्य तृतीयेऽहनि तस्यानुरूप्यमाह ।

## परिष्टुब्भेडं तथा ह्येतस्याह्नो रूपं स्तोमः ॥२७॥

परिष्टुब्भा परितः स्तोभयुक्ता इडा औ २३ हो वा हो ५ इडा इत्येवं रूपा यस्य तत्परिष्टुब्भेडं इदं रौरवं तृतीयस्याह्नो रूपं एतेषु पृष्ठस्तोत्रेषु स्तोमः पूर्वोक्त एव सप्तदशः कार्य्यः ॥२७॥

इति ताण्ड्यमहाब्राह्मणे द्वादशाध्यायस्य
चतुर्थः खण्डः ।

---

अथ पञ्चमः खण्डः ।

अथास्मिंस्तृतीयेऽहन्यार्भवपवमानस्याद्यस्तोत्रीयं तृचं दर्श-यित्वा तस्य तत्रानुपूर्व्यमाह ।

## तिस्रो वाच उदीरत इति तृतीयस्याह्नोरूपं तेन तृतीयमहरारभन्ते ॥ १ ॥

तिस्रो वाच इत्ययमाद्यस्तृच आर्भवपवमानस्य एतच्च उच्छ-

इतिशब्दयोगात् तृतीयस्याह्नो रूपं तेन तार्तीयरूपयुक्तेन तृचेन तृतीयमहरारभन्ते गच्छन्ति ॥ १ ॥

एतदेवोपपाद्यते।

**उद्वद्वा एतत् त्रिवदहर्य्यत् तृतीयं तदेव तदभिवदति ॥ २ ॥**

एतदह उद्वहै उत्शब्दयुक्तमेव तथा त्रिवत् त्रिशब्दयुक्तं च उद्घन्त्रिवह्निवदित्यादिना तृतीयस्याह्नो रूपं तथा परिसंख्यानात् तदेवाह तृतीयाहःसम्बद्धं रूपं तन्मन्त्रवाक्यमभिवदति प्रकाशयति ॥ २ ॥

अथापरां स्तोत्रीयामृचं विदधाति।

**आसोता परिषिञ्चतेति परिवत्यो भवन्ति ॥ ३ ॥**

आसोतेत्याद्यास्तिस्र ऋचः परिवत्यः परिशब्दयुक्ता भवन्ति स्तोमातिरेकपरिहाराय तास्वेकस्यामेव यथाभ्यस्यमानं वाचः साम गातव्यं अन्ये तु विकल्पिते इत्यर्थः ॥ ३ ॥

तदेव प्रशंसति।

**अन्तो वै तृतीयमहस्तस्यैताः पर्य्याप्त्यै ॥ ४ ॥**

इदं तृतीयमहरन्तो वै अनेनैकस्य त्रिरात्रस्य परिसमापनात्तस्याह्न एताः परिवत्य ऋचः परिसमाप्तिसूचकत्वात् पर्य्याप्त्यै परिसमाप्त्यै भवन्ति ॥ ४ ॥

अथापरां स्तोत्रीयां विदधाति।

**सखाय आनिषीदतेत्युद्गतमिव वै तृतीयमहर्यद्दाह निषीदतेत्यहरेवैतेन प्रतिष्ठापयति ॥ ५ ॥**

सखाय आनिषीदतेत्येका स्तोत्रीया सा च निषीदतेति निषदनलिङ्गात् अह्नः प्रतिष्ठाहेतुरित्याहोद्गतमित्यादिना उद्गतमिव वा उत्खातमिव वै खल्वेतत् तृतीयमहर्निषीदत निषण्णा भवतेति यदुद्गातार वदति एतेनाहरेव प्रतिष्ठापयति यथास्थानं प्रतिष्ठितं करोति ॥ ५ ॥

अथापरां स्तोत्रीयां विधत्ते।

**सुतासो मधुमत्तमा इत्यनुष्टुभः सत्यो जगत्यो रूपेण जागतꣳ ह्येतदहः ॥ ६ ॥**

सुतासो मधुमत्तमा इति तिस्र ऋचः कार्याः अनुष्टुभः सत्योऽपि रूपेण जगत्यो भवन्ति तथा हि मधुमत्तमा अतिशयेन मधुरत्वं प्रतिपाद्यते तच्च तृतीयसवनस्य रूपं आशिरावनयेन रसातिशयस्य कारणात् तृतीयसवनञ्च जगत्याः स्थानं अतः परम्परया अतिशयेन माधुर्य्यं जगत्या रूपमिति तद्वाचको मधुमत्तमशब्दोऽपि जागतं रूपं भवति तद्युक्तत्वात् स्वभावतोऽनुष्टुभोऽपि जगत्यो भवन्ति एतत्तृतीयमहस्त्र जागतं अत आसामस्मिन्नहनि सङ्गतिः ॥ ६ ॥

अथ तृचान्तरं विधत्ते।

**पविलन्ते विततं ब्रह्मणस्पत इति॥ ७॥**

स्पष्टोऽर्थः॥ ७॥

विततशब्दसूचितां तृतीयस्य तृतीयेऽहनि सङ्गतिमाह।

**विततमिव वा इदमन्तरिक्षमन्तरेमे अन्तरिक्ष-देवत्यमेतदहर्यत्तृतीयं तदेव तदभिवदति॥ ८॥**

इमे द्यावापृथिव्यावन्तरा द्यावापृथिव्योर्मध्ये इदं दृश्यमानमन्तरिक्षं विततं विस्तृतमिव वै अतोऽनेन विततशब्देनान्तरिक्षमेव सूचितं भवति शिष्टं स्पष्टं॥ ८॥

तिस्रो वाच इति प्रथमे तृचे गातव्यं साम विधाय प्राग्वद्ब्राह्मणञ्चातिदिशति।

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणं॥ ९॥**

सिद्धमेतत्॥ ९॥

अथ तस्मिन्नेव तृचे पुनरावृत्ते सामान्तरं विधत्ते।

**पाष्ठौहं भवति॥ १०॥**

पष्ठौहा ऋषिणा दृष्टं पाष्ठौहं सामेत्यण्प्रत्यये भसंज्ञायां वाह ऊठ् इत्युठ्भावे एत्येधत्यूठ्स्विति वृद्धिः॥ १०॥

अथैतस्य साम्नः निधनद्वारेण चतुर्थस्याह्नः सम्बन्धहेतुरिति दर्शयंस्तस्योक्तमेव निर्वचनमभिप्रेत्य पष्ठवाहसम्बन्धमाह ।

पष्ठवाड्वा एतेनाङ्गिरसश्चतुर्थस्याह्नो वाचं वदन्तीमुपाशृणोत्स होवागिति निधनमुपैत्तदस्याभ्युदितं तदहरवसत् ॥ ११ ॥

पष्ठवाह नामाङ्गिरसः पुरा एतेन साम्नो निधनेन चतुर्थस्य वक्ष्यमाणस्याह्नः सम्बन्धिनीं वाचं स्तुतशस्त्रात्मिकां वदन्तीं शब्दायमानां तृतीयेऽहनि स्थित्वा उपाशृणोत् श्रुतवान् तदनन्तरं स ऋषिः होवागिति तां वाचं सम्बोध्य तदेव शब्दरूपं अस्य साम्नो निधनमुपैत् उपागच्छत् अस्य च पाष्ठौहस्य अवसाने पुरा पष्ठवाह एतन्निधनमेव हाऊ वा औ वा २३४५ इति व्यासेन अन्त्यवर्णलोपेन चाधीयते तन्निधनं अस्य तृतीयस्याह्नः सम्बन्धि अभ्युदितं चतुर्थस्याह्नो वाचमभिलक्ष्योदितं उच्चारितं तच्चतुर्थमहरवसत् आवसयत् ॥ ११ ॥

आसोता परीत्यस्यां गातव्यं साम विधत्ते ।

वाचः साम भवति ॥ १२ ॥

वाचो वाग्देवतायाः सम्बन्धितया दृष्टं साम वाचःसाम तदस्यां गेयं भवति ॥ १२ ॥

यच्चूरसम्बन्धिहेतुनामाह ।

**वाग्वै द्वादशाहो वाच्येव तद्वाचा स्तुवते यज्ञस्य प्रभूत्यै ॥ १३ ॥**

द्वादशाहस्य वागात्मकत्वं प्रागुक्तं तत्तथा सति वाचि वागात्मक एव द्वादशाहे वा दृष्टत्वात् सामापि वाक् वागात्मकेन साम्ना स्तुवते स्तुवन्ति किमर्थं यज्ञस्यास्य प्रभूत्यै प्रभूतिः समृद्धिः तदर्थाय ॥ १३ ॥

वाचः साम्नस्य उक्तमेव सम्बन्धं प्रदर्शयन् आख्यायिकामुखेनास्य साम्नो हेतुतामाह ।

**निष्किरीयाः सत्रमासत ते तृतीयमहर्न प्राजानꣳस्तानेतत्साम गायमाना वागुपाप्लवत् तेन तृतीयमहः प्राजानꣳस्तेऽब्रुवन्नियं वाव नस्तृतीयमहरदीदृशदिति तृतीयस्यैवैषाह्नो दृष्टिः ॥ १४ ॥**

निष्किरीयाः निष्करो नाम शाखाविशेषो गोत्रविशेषो वा तत्सम्बन्धिनो यजमानाः पुरा सत्रं द्वादशाख्यं आसतान्वतिष्ठन् ते तत्रत्यं तृतीयमिदमहर्न प्राजानन् तान् तथाविधान् यजमानानेतत्साम गायमानान् गाणं कुर्वन्तः वाक् उपाप्लवत् उपागच्छत् प्लु गतौ भौवादिकः तेन वाचा गीयमानेन साम्ना तृतीयमिदमह स्ते प्राजानन् प्रकर्षेणानुष्ठानक्रममबुध्यन्त ज्ञात्वा च तैः पुनरब्रुवन् इयं खलु वाक् नोऽस्मान् तृतीयमहरदीदृशत्

दर्शितवती दृशोर्ण्यन्तात् लुङि चङिति ऋकारादेशस्य विकल्पे प्राप्ते नित्यं छन्दसीति नित्यमृकारादेशे क्रते च द्विर्वचनादिके कार्य्ये रूपमेतददीदृशदिति यस्मादेवमब्रूवन् तस्मात्तृतीयस्याह्न एषा दृष्टि दर्शनसाधनं चक्षुरिन्द्रियं ॥ १४ ॥

अथ सखाय आनिषोदतेत्यस्यां गातव्यं साम विधत्ते ।

**शौक्तं भवति ॥ १५ ॥**

शुक्तिना दृष्टं साम शौक्तं ॥ १५ ॥

इदमेव सम्बन्धं प्रदर्शयन् अस्य साम्न आर्ज्जवेन स्वर्गप्राप्तिहेतुत्वं दर्शयति ।

**शुक्ति र्वा एतेनाङ्गिरसोऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः ॥ १६ ॥**

शुक्तिर्नामाङ्गिरस ऋषिरेतेन साम्ना अञ्जसा ऋजुगामिना मार्गेण स्वर्गं लोकमपश्यत् अजानात् दृष्ट्वा च तं लोकं प्राप्य चिरकालमतिष्ठदित्यर्थः शिष्टं स्पष्टं ॥ १६ ॥

सुतासो मधुमत्तमा इति तृचे एकं साम विधाय पूर्वमाम्नातं तत्स्तावकं ब्राह्मणञ्चातिदिशति ।

**गौरीवितं भवति यदेव गौरीवितस्य ब्राह्मणं ॥१७**

एतदपि सिद्धं प्राक् ॥ १७ ॥

अथास्मिन्नेवावृत्ते तृचे सामान्तरं विधीयते ।

**त्वाष्ट्री साम भवति ॥ १८ ॥**

त्वष्टुर्दुहितरस्त्वाष्ट्र्यः ताभिर्दृष्टं साम त्वाष्ट्री साम तत् सुतासो मधुमत्तमा इति तृचे गातव्यं ॥ १८ ॥

अस्य साम्नस्त्वाष्ट्रीसम्बन्धं प्रतिपादयन् कामप्राप्तिहेतुतां विवक्षुराह :

**इन्द्रं वा अक्ष्यामयिणं भूतानि नास्वापयꣳस्तमेतेन त्वाष्ट्र्योऽस्वापयꣳस्तद्वाव तास्तर्ह्यकामयन्त ॥१९॥**

अक्ष्यामयिणं अक्ष्णोरामयो व्याधिरस्यास्तीत्यक्ष्यामयी तथाविधमिन्द्रं खलु पुरा अन्यानि भूतजातानि नास्वापयन् स्वापयितुन्नाशक्नुवन् एवं स्थिते त्वाष्ट्र्यः त्वष्टुर्दुहितर एतेन साम्ना अस्वापयन् यथा खलु लोके गानविशेषैः अक्षिरोगादिनिमित्तं स्वापरहितान्बालान् स्वापयन्ति एवमेव तयेण तत्सामगानेन अक्ष्यामयं विस्मार्य स्वापमकारयन्नित्यर्थः तस्मिन्नस्मिन् काले तद्वाव तदेव खलु स्वापनन्तास्त्वाष्ट्र्यः अकामयन्त अकामितञ्च तत् एतेन साम्ना निष्पन्नं ॥ १९ ॥

किन्तत इत्याह ।

**कामसनि साम त्वाष्ट्री साम काममेवैतेनावरुन्धे ॥ २० ॥**

यदिदं त्वाष्ट्री साम एतत्कामसनि यद्यत्कामयेत तस्य सर्व्वस्य सनि दातृ सकलकाम्यमानफलप्रदं साम तस्मादेतेन साम्ना कामं काम्यमानमभिलषितं सर्व्वमेव फलजातं अवरुन्धे लभते ॥ २० ॥

तथेदं सामोत्कृष्टवस्तुजन्महेतुरिति विवक्षयाह।

**इन्द्रो वृत्राद्बिभ्यद्गां प्राविशत्तं त्वाष्ट्रोऽब्रूवञ्जनयामेति तमेतैः सामभिरजनयञ्जायामहा इति वै सत्रमासते जायन्त एव ॥ २१ ॥**

इन्द्रः खलु पुरा वृत्रादसुराद्बिभ्यत् भीतः सन् गां प्रविष्टवान् तस्मिन् समये त्वाष्ट्रः त्वष्टुर्दुहितरोऽब्रूवन् तमिन्द्रं जनयाम प्रादुर्भूतं वृत्रस्य पुरस्तात् अवस्थाय योद्धुं शक्तं करवामेति तमिन्द्रमेतैस्त्वाष्ट्रीसामभिरजनयन् इदमेकं त्वाष्ट्रीसाम अन्यान्यपि विद्यन्ते तदभिप्रायेण बहुवचनं जायामहै उत्कृष्टरूपेण जाताः प्रादुर्भूताः प्रशस्ताभवामेति खल्वभिप्रायेण सत्रमासते सत्रयागं कुर्व्वन्ति अतोऽनेन साम्ना प्रयुक्तेन जायन्त एव उक्तप्रकारविशिष्टरूपा भवन्त्येव ॥ २१ ॥

अथ पवित्रं त इत्यान्यत्र्चे गातव्यं साम विधत्ते।

**अरिष्टं भवति ॥ २२ ॥**

स्पष्टं ॥ २२ ॥

एतस्य साम्नः करणमहिंसाहेतुरिति प्रतिपिपादयिषुस्तदर्थं तावदरिष्टसंज्ञां विवक्षुराह ।

**देवाश्च वा असुराश्चास्पर्द्धन्त यं देवानामघ्नन्न स समभवद्यमसुराणाꣳ सꣳसोऽभवत्ते देवास्तपोऽतप्यन्त त एतदरिष्टमपश्यꣳस्ततोऽयं देवानामघ्नत् सꣳसोऽभवद्यमसुराणान्न ससमभवदनेन नारिषामेति तदरिष्टस्यारिष्टत्वमरिष्ट्या एवारिष्टमन्ततः क्रियते ॥ २३ ॥**

देवाश्च वा असुराश्च पुरा स्पर्द्धमानाः अयुध्यन्त तत्र देवानाम्मध्ये यमसुरा अघ्नन् आयुधैः प्राहरन् सहतः न समभवत् संभूतः पुनरुत्थितो नाभूत् तथा असुराणाम्मध्ये यं देवा अघ्नन् स पुनः समभवत् प्रहारं तिरस्कृत्य पुनरुत्थितोऽभूत् एवं स्थिते देवास्तपोऽतप्यन्त अहिंसासाधनं किमिति यत्पर्य्यालोचनं तदत्र तपःशब्दवाच्यन्तदकुर्व्वन्नित्यर्थः एवं तपस्तप्यमानास्ते देवा एतदरिष्टं साम अहिंसासाधनमपश्यन्त अपश्यन् तत एतद्दर्शनानन्तरं देवानां मध्ये यमसुरा अघ्नन् स पुनः समभवत्तथा असुराणां मध्ये यं अघ्नन् देवाः स पुन र्न समभवत् पुनरुत्पन्नो नाभूत् एतस्मिन्नन्तरे अनेन खलु दृष्टेन साम्ना च यन्नारिषामारिष्टा असुरैर्हिंसिता नभवामेत्यमन्यन्त तत्तस्मात् अरेषणसाधनत्वात् अरिष्टस्य साम्नो अरिष्टमिति नाम सम्पन्नं रिष-

हिंसायामिति धातुः एवञ्चारिष्टा एव अरिष्टिः अहिंसा तदर्थमेवारिष्टं साम अन्ततः पवमानस्यान्ते क्रियते ॥ २३ ॥

अपि चेदं साम निष्पद्यमानस्य प्रथमस्य त्रिरात्रस्य धृतिहेतुरित्याह ।

त्रीडं भवति त्रिरात्रस्य धृत्यै ॥ २४ ॥

तिस्रः इडा यस्मिंस्तत्त्रीडं तादृशमेव तत्साम भवति अस्य ह्यवसाने हो इडा हो इडा हो २३४५ ईडा इति इडाशब्दः त्रिरभ्यस्यते तच्च त्रिरात्रस्य पूर्व्वे द्वे अहनी इदमेकमिति त्रयाणामह्नां धृत्यै धारणाय भवति ॥ २४ ॥

तत्रोत्तमायामिडायां विद्यमानं किञ्चिद्धर्म्मविशेषमनूद्य तस्योत्तरेणाह्ना सन्तानहेतुतामाह ।

द्रवन्तीमिडामुत्तमामुपयन्ति चतुर्थस्याह्नः सन्तत्यै स्तोमः ॥ २५ ॥

तामुत्तमामन्त्यामिडां द्रवन्तीं द्रुतमुच्चार्य्यमाणामुपयन्ति उपगच्छन्त्युद्गातारः किमर्थं चतुर्थस्य वक्ष्यमाणस्याह्नः सन्तत्यै सन्तानाय सम्बन्धार्थं स्तोमः पूर्व्वोक्तः सप्तदश एवैतत्सामसु क्रियमाणेषु निष्पद्यत इत्यर्थः ॥ २५ ॥

इति ताण्ड्यमहाब्राह्मणे द्वादशाध्यायस्य
पञ्चमः खण्डः ।

अथ षष्ठः खण्डः ।

अथ प्राकृतमेवाग्निष्टोमसाम तत्र न किञ्चिद्वक्तव्यमस्तीत्यभिप्रायेण त्रयाणामुक्थानां स्तोत्रीया तृचः प्रदर्श्यन्ते तत्र प्रथमस्योक्थस्तोत्रस्य स्तोत्रीयां तृचमाह ।

**प्रम॑ꣳहिष्ठाय गायतेति ॥ १ ॥**

स्पष्टोऽर्थः ॥ १ ॥

तदेतद्रूपं प्रशंसति ।

**यद्गायतेति महस एव तद्रूपं क्रियते ॥ २ ॥**

यद्गायतेति गातॄणां बहुत्वं तन्महसस्तेजस एव रूपं क्रियते लोके हि तेजस्विनामेव राज्ञां बहवो गायका भवन्तीति ॥ २ ॥

अथ द्वितीयस्योक्थस्तोत्रीयं तृचं प्रदर्श्य तृतीयसवनयोग्यतां दर्शयति ।

**तं ते मदङ्गृणीमसीति मदवद्वै रसवत्तृतीयसवनं मदमेव तद्रसं दधाति ॥ ३ ॥**

व्याख्यातमेतत् ॥ ३ ॥

अथ तृतीयस्योक्थस्य स्तोत्रीयं तृचं दर्शयति ।

**सुभीहवं तिरश्च्या इति स्तुत्या एव ॥ ४ ॥**

श्रु श्रवणे इत्यस्मान्निष्पन्नस्य श्रुधीशब्दस्य कीर्त्तनात् अयं तृचः श्रुत्यै श्रवणायैव बाधिर्य्याभावाय सम्पद्यते ॥ ४ ॥

अथ प्रथमे उक्थे यो विहितस्तृचस्तस्मिन गेयं साम दर्शयति।

**प्रमꣳहिष्ठीयं भवति ॥ ५ ॥**

प्रमंहिष्ठाय गायतेति योनावुत्पन्नं साम प्रमंहिष्ठशब्द-योगात् प्रमंहिष्ठीयं तदत्र प्रमंहिष्ठेति तृचे कर्त्तव्यं ॥ ५ ॥

तदेतत् स्तौति ।

**प्रमꣳहिष्ठीयेन वा इन्द्रो वृत्राय वज्रं प्रावर्त्तय-त्तमस्तृणुत भ्रातृव्यवान् प्रमꣳहिष्ठीयेनोक्थानि प्रण-येत स्तृणुते भ्रातृव्यं वसीयाꣳ आत्मना भवति ॥ ६ ॥**

प्रमंहिष्ठीयेनानेन साम्ना खलु पुरा इन्द्रो वृत्राय हन्तु वज्रं प्रावर्त्तयत्तस्यायमभिप्रायः अहोरात्रव्यतिरिक्तकालोऽपि नास्ति आर्द्रशुष्कविलक्षणं साधनमपि नास्ति तस्मिन् काले तेन साधनेन मां हन्यादिति एतच्च तैत्तिरीयकेऽतिस्पष्टमाम्नातं इन्द्रो वृत्रं हत्वा असुरान् नमुचिमसुरन्नालभत तं शच्या-ऽग्रह्णात् तौ समलभेतां सोऽस्मादभिभूनतरोऽभवत् सोऽब्रवीत् सन्धानं सन्दधावहै यत् वाचः सच्यामि नमा शुष्केण नार्द्रेण हनन्न दिवा न नक्तमित्यादिना एवं सन्धानानन्तर-मिन्द्रः व्युष्टायामुषसि जातायां आदित्ये चानुदिते उदयमप्राप्ते योऽन्तरालः कालः तस्मिन् तस्य नमुचेः शिर अपां विकारेण

फेनेन वज्रीकृतेनाच्छिनत् द्वैधीकृतवान् अवधीदित्यर्थः एवं कृते पूर्वकृतस्य सन्धानस्याविहतिरुच्यते एतद्वा इत्यादिना एतद्वै एतत् खलु न नक्तं न रात्रिं न दिवा यद्व्युष्टायामुषसि जातायामादित्ये चानुदिते तच्च नार्द्रो न शुष्कः यदपां फेनः एवं पूर्वकृतसन्धानाविरोधेन नमुचौ हते एतमिन्द्रमुपश्रुते तन्नमुचिहननं पापीयं निकृष्टां वाचं वदत् अकथयत् अवर्त्तयत् कासौ पापी वाक् उच्यते हे वीरहन् वीरस्य मित्रभूतस्य नमुचेर्हन्तः अद्रुहो द्रुह इति वीप्सायां द्विवचनं द्रोहं कृतवानसि इति एवमाक्रुश्यमाण इन्द्रः तद्वचनं ऋगात्मकेन मन्त्रेण हन्तुं नाशक्नोत् यत्साच्चिपत् तदनन्तरं तं हत्वमश्णुहि हंसीत् स्तृञ् हिंसायां इति धातुः अत इदानीमपि भ्रातृव्यवान् विद्यमानान् शत्रून् यजमानः प्रसंहिष्ठीयेनानेन साम्ना उक्थानि प्रणयेत सामान्याभिप्रायं बहुवचनं प्रथममुक्थस्तोत्रं स्तुवीत ततो भ्रातृव्यं शत्रुं प्रयुक्तेनानेन साम्ना स्तृणुते छिनत्ति अपि च वसीयान् वसुमत्तमः श्रेष्ठस्यात्मना स्वयमेव भवति * ॥ ६ ॥

अथ तं ते मदं गृणीमसीति विहिते तृचे गातव्यं साम दर्शयति ।

## हारिवर्णम्भवति ॥ ७ ॥

हरिवर्णेन ऋषिणा दृष्टं साम हारिवर्णं ॥ ७ ॥

---

* षष्ठमन्त्रस्य टीकायां सन्देहो जातः अष्टममन्त्रस्य टीका लिपिकर प्रमादादागता इति ।

अथास्य साम्नो निधनं शोकापहतिहेतुरिति विवक्षुस्तदर्थमाख्यायिकामाह।

इन्द्रश्च वै नमुचिश्चासुरः समदधातान्न नौ नक्तन्न दिवा हनन्नार्द्रेण न शुष्केणेति तस्य व्युष्टायामनुदित आदित्येऽपां फेनेन शिरोऽच्छिनदेतद्वै न नक्तन्नदिवा यत् व्युष्टायामनुदित आदित्य एतन्नार्द्रन्नशुष्कं यदपां फेनस्तदेनं पापीयं वाचं वदन्नन्ववर्त्तत वीरहन्नद्रुहो द्रुह इति तन्नर्चा न साम्नापहन्तुमशक्नोत्॥ ८॥

इन्द्रश्च नमुचिर्नामासुरश्च पुरा समदधातां सन्धानमकुर्व्वातां नावावयोरन्यतरोऽपि नक्तं रात्रौ न हनत् न हन्तव्यः दिवा अहन्यपि माहन्तुं तथार्द्रेण च न हन्तुं नापि शुष्केण च नीरसेन वज्रादिनेति एतत् उक्तं भवति इन्द्रः सर्व्वानसुराञ्जित्वा सर्व्वेभ्योऽसुरेभ्योऽधिकन्नमुचाख्यमसुरं बलात् जग्राह सचासुरः इन्द्रादधिकबलः सन् तमेव जग्राह गृहीत्वा च त्वां विसृजामि यदि त्वं मां अहोरात्रयोः आर्द्रेण शुष्केण न हन्यादिति एवमात्मकं सन्धायकं वाक्यमिन्द्रं प्रत्युक्तवानिति तमिन्द्रो ऋचा तथा साम्ना गानविशिष्टेन मन्त्रेण अपहन्तुं विनाशयितुन्नाशक्नोत्॥ ८॥

तर्हि केनापहतवानिति तदाह।

तद्धारिवर्णस्यैव निधनेनापाहत ॥ ९ ॥

हरिश्रियां इत्येवं रूपेण हारिवर्णस्यैव निधनेनैव तत्पापीयसीं वाचं प्रकटयन्नमुचिहननं अपाहत सतेजस्वी श्रीमानभूत् ॥ ९ ॥

अतोऽद्याप्यनेन निधनेन एतत् फलम्भवतीत्याह।

अपशुचꣳहते हारिवर्णस्य निधनेन श्रियञ्च हरश्चोपैति तुष्टुवानः ॥ १० ॥

अथ तेनापि तुष्टुवानः स्तुवन् हारिवर्णस्य निधनेन हरिश्रियामित्यनेन प्रयुज्यमानेन शुचं शोकमपहते हरिश्रियामिति पदद्वयेनोपस्थापितं श्रियं सम्पदञ्च हरस्तेजश्चेत्येतत् द्वयं उपैति उपगच्छति प्राप्नोति ॥ १० ॥

अथ तृतीये तृचे गेयं साम दर्शयति।

तैरश्चम्भवति ॥ ११ ॥

स्पष्टोऽर्थः ॥ ११ ॥

आख्यायिकया अस्य साम्नः संज्ञां निर्ब्रुवन् पापापहति-हेतुतामाह।

अङ्गिरसः स्वर्गं लोकं यन्तो रक्षाꣳस्यन्वसचन्त तान्येतेन तिरश्चाङ्गिरसस्तिर्य्यंङर्य्यवैद्यात्तिर्य्यंङर्यवैत्त-

**स्मात्तैरश्चं पाप्मा वावस तानसचत तन्तैरश्चेनापाघ्नतापपाप्मानꣳहते तैरश्चेन तुष्टुवानः ॥ १२ ॥**

पुरा कृतयागानुष्ठानात् स्वर्गं लोकं यन्तो गच्छन्तोऽङ्गिरसो रक्षांसि राक्षसा अन्वसचन्त अन्वगच्छन् समवेताः संसृष्टा अभूवन् षच समवाय इति धातुः तानि रक्षांसि आङ्गिरसस्तिर्य्यँङ् तिरोऽञ्चन् एतत्संज्ञः ऋषिः तिरसा तिरोऽञ्चता तिर्य्यक् वर्त्तमानेनैतेन साम्ना पर्य्यैत् परितोऽगच्छत् यत् यस्मादनेन साम्ना पर्य्यैत् परितोऽवगच्छत् तस्मात्तैरश्चं तिरश्चसम्बन्धादस्य साम्नः तैरश्चमिति नाम सम्पन्नं अस्तु प्रकृते किमायातं उच्यते पाप्मा वावस पापमवसः पूर्व्वोक्तरक्षोरूपेण वर्त्तमानः तानाङ्गिरसोऽसचत समवेतः सङ्गतोऽभूत् पाप्मानं तैरश्चेन साम्ना अपाघ्नत अपहतवन्तः तस्मादद्यतनोऽपि तैरश्चेन तुष्टुवानः पाप्मानमपहते ॥ १२ ॥

अथैतेषु त्रिष्टुप्ककुप्स्तोत्रेषु स्तोमक्लृप्तिं प्रदर्श्य विशिष्टफलहेतुतामाह ।

**सप्तदश एव स्तोमो भवति प्रतिष्ठायै प्रजात्यै ॥१३**

तथार्थमेततं ॥ १३ ॥

इति ताण्ड्यमहाब्राह्मणे द्वादशाध्यायस्य

षष्ठः खण्डः ।

अथ सप्तमः खण्डः ।

अथ दशरात्रस्य चतुर्थेऽहनि सर्व्वेष्वपि स्तोत्रेषु एकविंशएव स्तोमः तत्र वहिष्पवमानस्य एकविंशतिसंख्या स्तोत्रीयाऋचः तस्याद्यं स्तोत्रीयं दर्शयति ।

**प्रत आश्विनीः पवमानधेनव इति चतुर्थस्याह्नः प्रतिपद्भवति ॥ १ ॥**

प्रत आश्विनीरिति ऋचः चतुर्थस्य दाशरात्रिकस्याह्नः प्रतिपद्भवति प्रथमस्तृचो भवति बहिष्पवमानस्याद्यास्तृच इत्यर्थः ॥ १ ॥

अस्मिन् चतुर्थेऽहनि तस्य तृचस्य सङ्गतिमाह ।

**आप्ते त्रिरात्रे गायत्र्या रूपेण प्रयन्ति प्रेति वै गायत्र्या रूपं ॥ २ ॥**

दशरात्रे दशममहर्व्विहाय तयस्त्रिरात्राः पूर्वं विभज्य स्तुताः तत्र प्रथमे त्रिरात्रे गायत्रीत्रिष्टुब्जगतिभिरेव अह्नां क्लृप्तत्वात् अत्रापि पूर्व्ववत् क्रमेणाह्नां कल्पयितव्यत्वात् विहितस्य तृचस्य जागतत्वात् तत्र मुख्यगायत्र्यसम्भवासम्भवात्तत्सद्भावो भाक्त इत्यभिप्रायेणाह गायत्र्या रूपेणेति गायत्र्या गायत्री-छन्दसा रूपेण द्वितीयं त्रिरात्रं प्रयन्ति प्रक्रमन्ते किं तद्गा-यत्र्या रूपं यद्भावादस्य तृचस्य गायत्रत्वं स्यादिति तदुच्यते

प्र इत्ययमुपसर्गः खलु गायत्र्या रूपं एति प्रेत्येत्यादिना गायत्र्यासुर्मदित्यादिस्तद्रूपस्याभिहितत्वात् ॥ २ ॥

नन्वेवं मुख्यो गायतस्तृचः प्रथमं विधेयाः किमनया प्रबन्धप्रयासकल्पनयेत्यत आह ।

**जगती प्रतिपद्भवति आगतमेतदहर्य्यत्तृतीयञ्जगत्या एव तज्जगतीमभिसंक्रामन्ति ॥ ३ ॥**

उक्ता जगतीछन्दस्कैव प्रतिपद्भवति किमर्थं आगतं जगतीछन्दस्कमेतदहर्य्यत्तृतीयमनुष्ठितमहः तत्तथा सति जगत्यां एव पूर्वस्मिन्नहनि प्रयुक्ताज्जागतान् छन्दस एव जगतीं आगतमेव छन्दोभिः संक्रामन्ति यथा वृक्षमानूढ़ः पुरुषः कस्याश्चिच्छाखायामवस्थितः उन्नतत्वेन सदृशीं शाखां अभिक्रामति नाधस्तनीं नोपरितनीं एवमेव जगत्याः सकाशाज्जगतीमेवाभिक्रामन्ति ॥ ३

एतदेव व्यतिरेकमुखेन दृढ़यति ।

**यदतोऽन्या प्रतिपत् स्यात् प्रतिकूलं वानुकूलं वा स्यात् ॥ ४ ॥**

अतोऽन्या जगत्या अन्यछन्दस्का गायत्र्यादिका यत् यत्प्रतिपत्स्यात् तर्हि प्रतिकूलं वानुकूलं वा स्यात् छन्दोऽन्तरसंक्रमणपक्षे प्रातिकूल्यं भवेत् आनुकूल्यमपि पाक्षिकं यथोन्नतायां वृक्षस्याग्रशाखायां अवस्थितः पुमान् अवस्थां दूरे वर्त्तमानां

शाखां पादेनानुष्टब्धवान् पादविक्षेपात्कदाचिदधः पतति कदाचित्तत्रैव तिष्ठति तद्वत्तस्माज्जगत्यैवास्याह्नः प्रतिपदा भवितव्यमित्यर्थः ॥ ४ ॥

अथानुरूपाख्यं बहिष्पवमानस्य द्वितीयं तृचं दर्शयति।

पवमानो अजीजनदित्यनुरूपो भवति ॥ ५ ॥

अयं तृचोऽनुरूपाख्यो द्वितीय इत्यर्थः नन्वयं गायत्रस्तृचः स्तोत्रीयस्तु जागतः कथं तेनास्यानुरूप्यं देवताद्वारेति ब्रूमः अतएवोत्तरत्राम्नास्यते पूर्वमुक्तैव तद्रूपमिति ननु पूर्वयोरह्नोः स्तोत्रीयानुरूपाणां छन्दसामपि सारूप्यं दृष्टं तद्वदत्रापि भवितव्यं सत्यं भवितव्यं यस्य समूढद्वादशाहोऽभिहितः स्यात् अस्मिंस्तु ब्राह्मणे व्यूढ एव द्वादशाहो विहितः अतस्तदीयस्यैव दशरात्रस्य स्तोमक्लृप्तिरत्र विधीयते तत्र द्वितीये त्रिरात्रे जागतं प्रातःसवनं गायत्रं माध्यन्दिनं त्रैष्टुभं तृतीयसवनं गायत्रमध्ये द्वितीय इति हि प्रागाम्नातं तस्मादवश्यं जगत्या भाव्यमित्यभिप्रायेण पूर्वं जागतस्तृचो विहितः एवं द्वितीयस्य तृचस्य प्रथमेन छन्दसा सारूप्यासम्भवात् देवताद्वारैवानुरूप्यमित्यभिप्रायेण अजीजनदिति जनिधातुयोगात् ॥ ५ ॥

अयं तृचश्चतुर्थेऽहनि सङ्गत इत्याह।

जनद्वद्वा एतदहर्यच्चतुर्थमन्नाद्यञ्जनयति विराजञ्जनयत्येकविंशᳫं स्तोमञ्जनयति ॥ ६ ॥

यच्चतुर्थमहरेतत् जनद्वद्वै जनिधातुनिष्पन्नशब्दयुक्तमेव खलु राजन्वज्जनद्वत्सूर्य्यवद्विराडनुतोदवदित्यादिना चतुर्थस्याह्नो रूपत्वेन तस्योपरि गतत्वात् यद्यपि इक् तिपौ धातुनिर्द्देशे इति स्मरणात् जनिमदित्येव वक्तव्यं तथापि पवमानो अजीजनदिति मन्त्रे दर्शनात्तदनुकरणात् जनद्वदिति निर्द्देशस्तस्मादस्मिंश्चतुर्थेऽहनि तल्लिङ्गयुक्तस्तृचः सङ्गत इत्यर्थः किञ्च जननेन जनिधातुयुक्तेन तृचेन अन्नाद्यमन्नयोग्यञ्च चरुपुरोडाशादिकं यागपर्याप्तिं जनयति तथा एकविंशं एकविंशस्तोत्रीयात्मकं स्तोमं जनयति तथा विराजं विराट्छन्दसं अस्मिन्नहनि पृष्ठस्तोत्रे चिकीर्षितं जनयति अयमर्थः पवमानः पूयमानः सोमो अजीजनत् अजनयदिति दृश्यते तच्च जननमपेक्षितं अन्नाद्यादीनामेवेति अर्थादध्यवसीयत इति तत्प्रागवादिष्म देवतासारूप्यात् अस्य स्तोत्रस्य तृचस्य स्तोत्रीयेणानुरूपमिति ॥ ६ ॥

तत्प्रदर्शयन् अस्यानुरूपसंज्ञां निर्व्वक्ति।

**पूर्व्वमु चैव तद्रूपमपरेण रूपेणानुवदति यत्पूर्व्वंꣳ रूपमपरेण रूपेणानुवदति तदनुरूपस्यानुरूपत्वमनुरूप एनं पुत्रो जायते यएवं वेद ॥ ७ ॥**

एतदपि सिद्धं ॥ ७ ॥

अन्तिमौ तृचौ संयुज्य स्तौति।

स्तोत्रीयानुरूपौ तृचौ भवतः प्राणापानानामवरुध्यै ॥ ८ ॥

गतमेतत् ॥ ८ ॥

अथ प्रयद्भावः आयुरर्षेति षडृचद्वयं विदधाति ।

षडृचौ भवत ऋतूनां धृत्यै ॥ ९ ॥

पूर्वोक्ततृचद्वयानन्तरं एतौ द्वौ षडृचौ भवतः षडृचो यस्मिन् स तथोक्तः ऋक्पूरब्धः पथामानक्षे त इत्यच्समासान्तः तत इतरेतरसम्बन्धयोगे द्वन्द्वः एतच्च द्वितयं षट्संख्यायोगात् ऋतूनां वसन्तादीनां षसां धृत्यै धारणाय कल्पते एवं बहिष्पवमानस्याष्टादशस्तोत्रीया गता ॥ ९ ॥

अथान्त्यं तृचं विधत्ते ।

तृच उत्तमो भवति येनैव प्राणेन प्रयन्ति तमभ्युद्यन्त्येकविंश एव स्तोमो भवति प्रतिष्ठायै प्रतितिष्ठति ॥ १० ॥

हिन्वन्ति सूरमिति तृचस्तिस्र ऋचो यस्मिन् स तथोक्तः ऋचि त्रेरुत्तरपदादिलोपश्छन्दसीति त्रिशब्दस्य सम्प्रसारणं समूह एकविंशस्तोमेऽविधिपञ्चदशाध्यर्द्धमिति एकविंशतिशब्दाड्डे प्रत्येति विंशतेर्डितीति तिशब्दलोपः एवं स पवमानस्य

स्तोमो भवति किमर्थं प्रतिष्ठायै प्रतिष्ठार्थं अतएकविंशस्तोमो भवति अतो यजमानः प्रतितिष्ठति ॥ १० ॥

इति ताण्ड्यमहाब्राह्मणे द्वादशाध्यायस्य
सप्तमः खण्डः ।

---

अथ अष्टमः खण्डः ।

अथ तस्मिन्नेव चतुर्थेऽहनि चत्वार्य्याज्यस्तोत्राणि तत्र प्रथमस्याज्यस्तोत्रीयं तृचं विदधाति ।

**जनस्य गोपा अजनिष्ट जागृविरित्याग्नेयमाज्यं भवति ॥ १ ॥**

जनस्य गोपा इति तृचे आग्नेयमग्निदैवत्यं आज्यं प्रथममाज्यस्तोत्रं भवति ॥ १ ॥

अजनिष्टेति जनिधातुयोगाच्चतुर्थेऽहनि जनद्वल्लिङ्गात् अयं तृचः सङ्गत इति प्रतिपादयंस्तस्य विशिष्टफलजननहेतुतामाह ।

**जनद्वा एतदहर्य्यच्चतुर्थमन्नाद्यञ्जनयति विराजञ्जनयत्येकविꣳशꣳ स्तोमञ्जनयति ॥ २ ॥**

पूर्ववद्व्याख्येयं ॥ २ ॥

अथ द्वितीयमाज्यस्तोत्रं दर्शयति।

**अयं वाम्मित्रावरुणेति बार्हतम्मैत्रावरुणं ॥ ३ ॥**

अयं वां मित्रा वरुणेति तृचे बार्हतं बृहत्सामसम्बन्धि मैत्रावरुणं मैत्रावरुणदेवताकं हि तृतीयमाज्यस्तोत्रं भवति यदा ज्योतिष्टोमे पृष्ठस्तोत्रे बृहत्साम क्रियते तदेवास्य तृचस्य प्रातःसवनप्रयोगात् बार्हतत्वं ॥ ३ ॥

नन्वेवमत्र वैराजं साम पृष्ठस्तोत्रं कथमस्य तृचस्य तेन सङ्गतिरिति तत्राह।

**बृहदेतत्परोक्षं यद्वैरूपं बार्हतमेव तद्रूपं निर्द्योतयति ॥ ४ ॥**

यद्वैराजं साम एतत्परोक्षं पारोक्ष्येण रूपान्तरेण स्थितं बृहत्सामैव तथा तैत्तिरीयके बृहच्च वा इदमग्ने रथन्तरञ्च स्तामेति प्रक्रम्यते द्वे भूत्वा रथन्तरञ्च वैरूपञ्च बृहदन्यमन्येतां तद्बृहद्गर्भमाधत्ते तद्वैराजमतिसृजतेति बृहतः सकाशाद्वैराजस्योत्पत्तिः श्रूयते तत्तस्माद्वैराजस्य बार्हतत्वाद्बार्हतं बृहत्सम्बन्ध्येव रूपन्निर्द्योतयति प्रकाशयति ॥ ४ ॥

अथ तृतीयस्याज्यस्तोत्रीयं तृचं विधत्ते।

**इन्द्रो दधीचो अस्थभिरिति दाधीचस्तृचो भवति ॥ ५ ॥**

इन्द्रो दधीच इति दाधीचो दधीचः सम्बन्धो तृचः ऐन्द्री तृतीय आज्यस्तोत्रीयः कार्य्यः दध्यङ् शब्दात्तस्येदमित्यर्थे अणि भसंज्ञायां अच इत्यकारलोपे चाविति दीर्घत्वं ॥ ५ ॥

अत्रेन्द्रो दधीच इति शब्दसूचकं साध्यं फलमाह।

**दध्यङ्वा आङ्गिरसो देवानां पुरोधानीय आसी-दन्नं वै ब्रह्मणः पुरोधान्नाद्यस्यावरुध्यै ॥ ६ ॥**

दध्यङ्नाम आङ्गिवसाङ्गिरो गोत्र ऋषिर्देवानामग्न्यादीनां पुरोधानीयः पुरस्ताद्धारणीय आसीत् अभवत् सचात्र दधीच इति षष्ठ्यन्तेन पदेन मन्त्रे प्रकाशितब्रह्मणो ब्राह्मणजातेः अन्नं वै अन्नमेव पुरोधा पुरोधारणीयः तस्माद्दाधीच इत्यनेन पुरोधाच स्मरणात् ब्राह्मणानां पुरस्ताद्धारणीयस्य अन्नाद्य-स्यात्तुं योग्यस्यान्नस्यावरुध्यै अवरोधनाय प्राप्त्यर्थं एतत्तृचकरणं भवति ॥ ६ ॥

अथ चतुर्थमाज्यस्तोत्रं दर्शयति।

**इयं वामस्य मन्मन इत्यैन्द्राग्नं ॥ ७ ॥**

इयं वामस्येति ऋचः ऐन्द्राग्नं इन्द्रदेवताकं चतुर्थमाज्य-स्तोत्रं भवति ॥ ७ ॥

तत्रत्यं किञ्चिल्लिङ्गं मन्त्रमनूद्य चतुर्थेऽहनि सङ्गतिं प्रदर्शयन् अन्नाद्यफलमेतदिति स्तौति।

इन्द्राग्नी पूर्व्यस्तुतिरभ्राद्वृष्टिरिवाजनीत्यानुष्टुभी वै वृष्टिरानुष्टुभमेतदहर्य्यच्चतुर्थं समीच्यौ विराजौ दधात्यन्नाद्याय स्तोमः ॥ ८ ॥

अस्मिन् तृचे अभ्राद्वृष्टिरिवाजनीति वृष्टिशब्दः श्रूयते सा च वृष्टिरानुष्टुभी वागनुष्टुबिति श्रुतेरनुष्टुब्वाग्रूपा मध्यमभिसन्ध्याया वाचः सम्बन्धित्वात् वृष्टेरानुष्टुभत्वव्यपदेशः एतदानुष्टुभमनुष्टुप्छन्दस्कं चतुर्थसंख्यापूरकं दाशरात्रिकं तुरीयमहः अतो वृष्टिद्वारा तृचस्यानुष्टुप्सम्बन्धात्तत्र सङ्गत इत्यर्थः अभ्राद्वृष्टिरित्यस्योपलक्षणार्थैवैन्द्राग्नी पूर्व्यस्तुतिरित्यादेरनुवादः गायत्रीत्रिष्टुब्जगतीत्येतानि त्रीण्येव छन्दांसि पुरा आसन् तानि षट्संख्यानि पृष्ठान्यहानि प्राप्तुमसमर्थान्यभवन् ततो व्याप्त्युपायमालोच्य पुनरन्यानि त्रीणि छन्दांसि अजनयन् गायत्र्याः सकाशादनुष्टुभः त्रिष्टुभः पङ्क्तिजगत्या अतिछन्दः एवं गायत्र्याद्याः षट्संख्या भूत्वा पृष्ठानि षडहानि क्रमेण व्याप्नुवन् अतश्चतुर्थस्याह्न आनुष्टुभत्वं ब्राह्मणञ्च भवति गायत्रं वै प्रथममहस्त्रैष्टुभं द्वितीयं जागतं तृतीयमानुष्टुभं चतुर्थमिति छन्दसामुत्पत्तिस्तैत्तिरीयके समाम्नायते सा गायत्री गर्भमधत्त सानुष्टुभमसृजत त्रिष्टब्गर्भमधत्त पङ्क्तिमसृजत जगती गर्भमधत्त सातिछन्दमसृजतेति अतएवं चतुर्थस्याह्न आनुष्टुभत्वं अत्र वृष्टिसम्बन्धितया अह्नः सम्बन्धितया च अनुष्टुप् द्वयं प्रतीयते अनुष्टुप्वत् द्वात्रिंशदक्षरा तत्रान्तिमे द्वे द्वे अक्षरे अहोरात्रस्थानीये तत्र

त्रिंशदक्षराधैव त्रियते विराट् त्रिंशदक्षरा तथा सति अनुष्टुप्द्वयसंयोजनेन द्वौ विराजाविव समीच्यौ सङ्गते दधाति अन्नाद्यं यद्यप्यत्र अनुष्टुभो विभागिनं विराट्त्वन्नोक्तं तथाप्यन्यत्र शाखान्तरे द्वात्रिंशद्देवता स्तोत्रीयास्त्रिंशत्त्रिंशदक्षराविराडित्यादौ विभागः श्रूयते तत्सामान्यात् अत्राप्येवं विभज्य विराट्त्वं द्रष्टव्यं एवमुक्तेषु चतुर्ष्वाज्यस्तोत्रेषु प्रयुक्तस्त्रिवृत्-विंश एव स्तोमो भवति साम तु प्राकृतमेव गायत्रं नान्यत् ॥ ८

इति ताण्ड्यमहाब्राह्मणे द्वादशाध्यायस्य

अष्टमः खण्डः ।

---

अथ नवमः खण्डः ।

अथास्मिन्नेवाहनि माध्यन्दिनपवमानस्य प्रथमं तृचं दर्शयति ।

**पवस्व दक्षसाधन इति गायत्री भवति सिध्यै ॥१॥**

गायत्रछन्दस्का प्रतिपद्भवतीति सच दक्षसाधन इति सिधिधातुनिष्पन्न इति श्रवणात् सिध्यै फलप्राप्त्यै सम्पद्यते ॥ १ ॥

अस्त्वेवं कासावस्याह्नः सङ्गतिरिति तत्राह ।

**यत् पवस्वेति तद्बृहतो रूपम् वार्हतं ह्येतदहः ॥ २ ॥**

पवस्व वाचो अग्रिय इति द्वितीयस्याङ्कः प्रतिपद्भवतीति वार्हतेऽहनि दृष्टत्वात् पवस्व दक्षसाधन इत्यत्र यत् पवस्वेति पदन्तद्वृहतो रूपं एतच्चतुर्थमहस्य बार्हतं बृहत एव वैराजाल-नावस्थानात् अतोऽस्मिन्नहनि तृचस्य सङ्गतिः ॥ २ ॥

अथान्यतृचं विधत्ते ।

**तवाहꣳ सोमरारण सख्य इन्दो दिवे दिवे पुरूणि बभ्रो निचरन्ति मामव परिधीꣳरतिताꣳ इहीति ॥ ३ ॥**

तवाहमित्यादिकस्तृचोऽन्यस्तोत्रीयः अतितां इहीति लिङ्ग-प्रदर्शनार्थं सर्वानुवादः ॥ ३ ॥

तस्य च लिङ्गस्य तात्पर्यं लिङ्गान्तरञ्च प्रदर्शयन् प्रयोजन-माह ।

**अति ह्यायञ्छकुना इव पप्तिमेत्यति ह्यपतत् ॥४॥**

हि यस्मादस्मिन् चतुर्थेऽहनि त्रिरात्रमत्यायन् अत्यक्रामन् तस्मादतिहीति अति पूर्वो गत्यर्थ इति धातुः यस्मिंस्तृचे स्तोत-सङ्गत इत्यर्थः तथा तस्मिंस्तृचे शकुना इव पप्तिमेति दृश्यते शकुनाः पक्षिण इव पप्तिमवयवमुत्पतनं कृतवन्तः स्म इति तस्यार्थः अस्मिंश्चाहनि वर्त्तमानः यजमानः अत्यपतद्धि त्रिरात्रमतिक्रम्य इदमहरगच्छत् तस्मादयनेमाह्नास्य तृचः सङ्गच्छेदित्यर्थः ॥ ४ ॥

तृचान्तरं विधत्ते ।

पुनानो अक्रमीदभीति ॥ ५ ॥

स्पष्टोऽर्थः ॥ ५ ॥

ननु प्रकृतौ माध्यन्दिनपवमानस्यान्त्यस्तृचस्त्रैष्टुभस्तस्य स्थाने कथमसौ गायत्रस्तृचः समगच्छत इति तत्राह ।

गायत्र्यः सत्यस्त्रिष्टुभो रूपेण तस्मात्त्रिष्टुभा लोके क्रियन्ते ॥ ६ ॥

पुनानो अक्रमीदित्याद्याः गायत्र्यः सत्योऽपि त्रैष्टुभेन रूपेण योगात् त्रिष्टुभो भवन्ति किञ्च त्रैष्टुभरूपं विश्वानधो विचर्षणिरिति विश्वाशब्दः गमदिन्द्रो वृषासुत इति वृषशब्दस्य वृषवद्वत्तद्वद्रयिमद्विश्ववदिति हि वाक् त्रिष्टुभो रूपं परिगणितं तस्मात्त्रिष्टुभा तृचा लोके स्थाने क्रियन्ते ॥ ६ ॥

अथ प्रथमविहिते तृचे पूर्ववद्गायत्रं साम विधाय तदितिकर्त्तव्यताबोधकं ब्राह्मणञ्चातिदिशति ।

गायत्रं भवति यदेव गायत्रस्य ब्राह्मणं ॥ ७ ॥

सिद्धमेतत् ॥ ७ ॥

अथ पुनरावृत्ते तस्मिंस्तृचे सामान्तरं विधत्ते ।

चतुर्णिधनमाथर्वणं भवति चतूरात्रस्य धृत्यै ॥८॥

चत्वारि निधनानि आवत् स्वः ज्योतिः ई २३४५ इत्येव-मात्मकानि यस्य तच्चतुर्णिधनमाथर्वणा दृष्टं साम पवस्व दक्ष-साधन इति अस्मिन्नेव तृचे गेयं तच्चतुःसंख्यायोगाच्चतूरात्रस्य अनेनाह्ना सहितस्य प्रायणादीनामह्नां चतुष्कस्य धृत्यै धार-णाय भवति ॥ ८ ॥

अथ चतुःसंख्यायोगादेव चतुर्थेऽहनि सङ्गतमेतदित्याह।

चतुष्पदानुष्टुबानुष्टुभमेतदहर्यच्चतुर्थं ॥ ९ ॥

निधनगतचतुष्टयेन चतुष्पदाश्चतुष्टयोपेता अनुष्टुप् स्मार्यते एतच्चतुर्थमहश्चानुष्टुभं अनुष्टुप्छन्दस्कमिति प्रागुपपादितं अतो-ऽस्मिन्नहनि चतुर्णिधनं योग्यं ॥ ९ ॥

एवं छन्दोद्वारेण प्रशस्य ऋषिद्वारापि प्रशंसति।

भेषजं वा आथर्वणानि भेषजमेव तत्करोति ॥१०

आथर्वणान्यथर्वसम्बन्धीनि कर्माणि मन्त्रजातानि च भेषजं वै भैषज्यसाधनानि खलु तत्तस्मादथर्वसम्बन्धिना साम्ना भेषजं रोगाद्युपशमनं भैषज्यमेव करोति ॥ १० ॥

अथास्मिन्नेव तृचे सामान्तरं विधत्ते।

निधनकामम्भवति ॥ ११ ॥

स्पष्टोऽर्थः ॥ ११ ॥

एतत्सर्वकामावाप्तिहेतुरिति स्तौति ।

एकं वा अन्येन निरुक्तेन निधनेन कामꣳ सनो-
त्यथैतन्निधनकामꣳ सर्वेषाङ्कामानामवरुध्यै ॥१२॥

निरुक्तेन निःशेषं सामसूक्तेनान्येन निधनेन वागिडेत्यादिना एकमेव कामं सनोति सम्भजते अथशब्दस्तुशब्दार्थः एतत्काम निधनकामं काम्यमाननिधनं अतएवास्यैषा संज्ञा तस्मात्काम्यमाननिधनत्वात् पुरुषोऽयं कामं कामयते सर्वेषां कामानां काम्यमानानां फलानामवरुध्यै प्राप्त्यै भवति ॥ १२ ॥

तवाहं सोमेति विहिते तृचे गातव्यं साम दर्शयति ।

आष्टादꣳष्ट्रं भवति ॥ १३ ॥

अष्टादंष्ट्रेण ऋषिणा दृष्टं सामाष्टादंष्ट्रं तच्च द्वयमस्ति तत्तोत्तरं तवाहं सोममित्यस्मिं स्तृचे गातव्यं ॥ १३ ॥

अस्य साम्नस्तावकं यद्ब्राह्मणमाम्नातं स्तुत्यर्थं तदेतत्प्रतिदिशति ।

यदेवाष्टादꣳष्ट्रस्य ब्राह्मणं ॥ १४ ॥

इन्द्रो वृत्रमहन्नेयादीयोवेति त्र्यष्टाहादित्यादिकं यद्ब्राह्म-

यमाष्टादंष्ट्रस्य ब्राह्मणमाम्नातं व्याख्यातञ्च तदत्रापि द्रष्टव्य-मित्यर्थः॥ १४॥

अथाहन्येऽस्मिं स्तृचे सामान्तरं विधत्ते।

**आभीशवं भवत्यह्नो धृत्यै॥ १५॥**

द्वयोराभीशवयोर्मध्ये यदुत्तरमाभीशवन्तदस्मिन् तृचे गेयं तच्चाह्नो धृत्यै धारणाय भवति॥ १५॥

एतदेव लोकप्रदर्शनेनोपपादयति।

**यद्वा अधृतमभीशुना तद्दाधार॥ १६॥**

यत् खलु लोके अधृतं अदृढं शिथिलं भवति तदभीशुना शंकुना दाधार पुरुषो धारयति एवमत्रापि अभीशुना साम्ना अह्नः सम्बन्धि यदधृतमधारितं तद्धारयति॥ १६॥

अथास्मिन् साम्नि दृश्यमानं गीतिविशेषमनुवदन्नस्मिन्नहनि सङ्गतिमाह।

**अनुतुन्नङ्गायति तथा ह्येतस्याह्नो रूपं॥ १७॥**

अनुतुन्नमनुतोदयुक्तं अनुतोदोनामाभ्यासः सकृत्प्रयुक्तस्यैव ऋगवयवस्य पुनः पुनरुत्पादनं सख्य इन्द्रो २ दा इवे १ दिवा इत्यादि तद्युक्तं गायति तथा खल्वेतस्याह्नो रूपशब्दोऽनुतो-दवदिति हि चतुर्थस्याह्नो रूपं प्रागदर्शितं॥ १७॥

अथास्मिन्नेव तृचे पुनरावृत्ते स्वःपृष्ठाख्यं साम विधत्ते।

**चतुर्णिधनमाङ्गिरसं भवति चतूरात्रस्य धृत्यै ॥१८**

आ २ वा २ ३ ४ औ हो वा ऊ २ ३४ पा ऊ २ ३ ४ पा ई २३४ ही इति चत्वारि निधनानि यस्य चतुर्णिधनमाङ्गिरसं अङ्गिरसा दृष्टं साम स्वःपृष्ठाख्यं तवाहमित्यस्मिंस्तृचे गातव्यं तच्च चतुःसंख्यायोगात् चतूरात्रस्य एतदस्याहश्चतुष्टयस्य धृत्यै धारणाय भवति ॥ १८ ॥

अस्मिन्सान्नि विद्यमानं किञ्चिल्लिङ्गमनूद्याङ्गा सङ्गतिमाह

**स्वःपृष्ठं तथा ह्येतस्याह्नोरूपं ॥ १९ ॥**

अस्मिन् सान्नि उपाद्वयं दृश्यते तयोः स्थाने उपास्थानेष्व न्यानि निधनानीति प्रकृत्य स्वःपृष्ठेच पूर्वं उत्तर इति गौतमधान ञ्जप्यावित्यन्यतरस्योपास्थाने स्वरिति अयमादेशो भवति अन्यतरस्य स्थाने त्विडेति सूत्रकारेणोक्तं तत्र हि इडानादेशे स्वःकारौ इति उभयमनुवर्त्तते तस्मादेतत्साम स्वःपृष्ठं पृष्ठशब्दो मध्यवचन स्वरिति पृष्ठे मध्ये यस्य तत् स्वःपृष्ठं स्वरशब्दस्य ज्योतिर्मयः स्व र्गवाची इदमहश्च विराडात्मकेन छन्दसा ज्योतिषा सम्बद्ध तस्मादस्यैतल्लिङ्गं एतदेवाह तथाह्येतस्याह्नो रूपमिति ॥ १९

अथ पुनानो अक्रमीदित्यन्तिमे तृचे गेयं साम विधत्ते।

**सत्रासाहीयं भवति ॥ २० ॥**

स्पष्टोऽर्थः ॥ २० ॥

अस्य साम्नो भ्रातृव्याभिभवसाधनत्वं विवक्षुस्तदर्थमाख्यायिकया सत्रासाहीयसंज्ञां निर्वक्ति ।

यद्वा असुराणामसोढ़मासीत्तद्देवाः सत्रासाहीयेनासहन्त सत्रैनानसह्महीति तत्सत्रासाहीयस्य सत्रासाहीयत्वं ॥ २१ ॥

यद्वै यत् खलु असुराणां सम्बन्धि असोढं परैरनभिभूतं आसीत् पुरा तद्देवाः सत्रासाहीयेन साम्ना साधनेनासहन्त अभ्यभवन् षह अभिभवे सोढमित्यस्मादेव धातोर्निष्ठायां तीषु सह लुभेत्यादिनास्य विकल्पिते ह्नात् यस्य विभाषे तीट् सहि वहोरोदवर्णस्येत्यकस्योकारः तदनन्तरं देवानामसुरान् सत्रा सह युगपदेव सर्वान् असह्महि अभ्यभूमेत्यमन्यन्त तत्तस्मात् सत्रासाहीयस्यास्य साम्नः सत्रासाहीयत्वं सत्रासाहीयमिति संज्ञा संजाता ॥ २१ ॥

यस्मादेवं तस्मादद्यतनोऽपि स्तोता अनेन भ्रातृव्यमभिभवतीत्याह ।

सत्रा भ्रातृव्यᳪ सहते सत्रासाहीयेन तुष्टुवानः ॥ २२ ॥

स्तुतवान् यजमानः सत्रा साकं सत्रा समं सहेति निदानं

दुःसहं युगपदेव यत्नेनैव भ्रातृव्यं सोढुं सहते अभिभवति ॥२२॥

अथाधारभूतानामृचां छन्दो द्वारेण स्तौति।

**गायत्रीषु स्तुवन्ति प्रतिष्ठायै ब्रह्मवर्चसाय येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति॥ २३ ॥**

पुनानो अक्रमीदित्याद्यासु गायत्रीषु सत्रासाहीयेन स्तुवन्त्युद्गातारः त्रिपदाश्च गायत्र्यः लोके च त्रिपदाः पश्वादयः प्रतिष्ठिता दृष्टाः अथैतत् स्तवनं प्रतिष्ठायै यजमानस्य प्रतिष्ठानाय सम्पद्यते ब्रह्मवर्चसाय च तेजोविशेषो हि ब्रह्मरूपं गायत्री तु तेजोरूपेणाग्निना सह प्रजापतिमुखादुत्पन्ना तस्मात्तेजोरूपेति ब्रह्मवर्चसहेतुरित्यर्थः अपि च प्राणापानव्यानरूपेण वृत्तित्रयरूपः प्राणापानवायुरेव त्रिपदा गायत्री अत्र चाद्यन्तयोस्तृचयोर्गायत्रत्वात् येन प्राणेन गायत्रीरूपेण प्रयन्ति स्तोत्रं प्रारभन्ते तमेवाभिलक्ष्योद्यन्ति समापयन्ति एवं सत्युपक्रमोपसंहारयोरैकरूप्यं जायत इत्यर्थः ॥ २३ ॥

यदुक्तं प्राक् स्तोत्रीयाविधानसमये गायत्र्यः सत्यस्त्रिष्टुभोरूपेण तस्माल्लोके क्रियन्त इति तदत्र विवृणोति।

**वृषण्वत्यो गायत्र्यो भवन्ति तदु त्रैष्टुभाद्रूपान्नयन्ति स्तोमः॥ २४ ॥**

गमदिन्द्रो वृषासुतमिति वृषण्वच्छब्दयुक्ता गायत्र्यो भवन्ति

तदु तस्मादेव कारणात्त्रैष्टुभान्नयन्ति नापगच्छन्ति पवस्व दक्ष-साधनस्त्वाहं सोमेत्यनयोस्तृचात्मकयोः प्रत्येकं सामत्रयं विहितं तत्रैकैकस्य साम्नस्तिस्रस्तिस्रः स्तोत्रीया इत्यष्टादश सम्पद्यन्ते अन्तिमस्य सत्रासाहीयस्य तिस्र इत्येकविंश एव स्तोमो भवति ॥ २४ ॥

इति ताण्ड्यमहाब्राह्मणे द्वादशाध्यायस्य

नवमः खण्डः।

———

अथ दशमः खण्डः।

अथ पृष्ठानामाद्यस्य स्तोत्रस्य स्तोत्रीयं तृचं दर्शयति।

'पिबा सोममिन्द्रमन्दतु त्वायन्ते सुषावहर्य्यश्वाद्रिः सोतुर्बाहुभ्याꣳ सुयतोनार्वैत्यायतमिव वै चतुर्थमह-स्तस्यैव यत्यै ॥ १॥

प्रथमपृष्ठस्तोत्रस्य पिबा सोममिन्द्रेति वैराजस्तृचः स्तोत्रीयः तत्र च सुयतो नार्वेति सुष्ठु यमनं प्रतीयते चतुर्थमहश्चायतमिव वै अनियतमसम्बद्धमिव खलु प्रथमस्य त्रिरात्रस्य समाप्तत्वात् तेन सह सम्बन्धानुपपत्तेः आगामिनश्चाह्नोयत्यै नियमनाय भवति ॥ १ ॥

प्राकृतमेव द्वितीयं पृष्ठमिति मन्वानो ब्राह्मणः पृष्ठस्य स्तोत्रीयं तृचं दर्शयति।

**विश्वाः पृतना अभिभूतरन्नर इत्यतिजगती वर्षीयश्छन्द आक्रमतेऽनपभ्रंशाय॥ २॥**

विश्वाः पृतना इत्यतिजगती द्विपञ्चाशदक्षरा अतिजगतस्तृचो ब्रह्मसामाधारतया कार्य्य इत्यर्थः एवं वर्षीयो वृद्धतरं छन्दश्चतुर्थमहराक्रमते अवलम्बते किमर्थं अनपभ्रंशाय अपभ्रंशो अधःपतनं भ्रंश अधःपतन इति धातुः॥ २॥

अनधःपाताय एतदेव विवृणोति।

**अपभ्रंश इव वा एष यज्ज्यायसश्छन्दसः कनीयश्छन्द उपैति यदेषा चतुर्थेऽहन्यतिजगती क्रियतेऽनपभ्रंशाय॥ ३॥**

तृतीयमहर्ज्जागतं इदं चतुर्थमहरानुष्टुभं जगती षाष्टाचत्वारिंशदक्षरत्वात् ज्यायसी तथा सति ज्यायसो वृद्धतराच्छन्दसः तृतीयेऽहनि नियुक्तात् कनीयोऽल्पीयोन्यूनतरमानुष्टुभं छन्दश्चतुर्थेऽहन्युपैत्युपगच्छति एषोऽपभ्रंश इव वै अधःपात इव खलु यथा खलून्नतात् ध्वजाग्रात् अधोदेशे पतति तद्वत् एवं सति चतुर्थेऽहनि अतिजगती अगत्या अपि चतुर्भिर-

चरैरधिकं छन्दः क्रियत इति यत् तदनपभ्रंशाय अपभ्रंशाभावार्थं ॥ ३ ॥

अथ चतुर्थस्य पृष्ठस्तोत्रस्य स्तोत्रीयं तृचं दर्शयति ।

**यो राजा चर्षणीनामिति ॥ ४ ॥**

स्पष्टोऽर्थः ॥ ४ ॥

अत्र राजशब्देन सूचितं फलमाह ।

**राज्यꣳ ह्येतर्हि वाचोऽगच्छन् राज्यमेवैतया यजमानं गमयन्ति ॥ ५ ॥**

एतर्हि एतस्मिंश्चतुर्थस्याह्नोऽनुष्ठानसमये राज्ये जनपदे खलु वाचः एतैर्द्वादशाहोऽनुमीयत इति एवं रूपाणि वाक्यान्यगच्छन् एतया राजशब्दयुक्तया स्तोत्रीयया तद्राज्यमेव यजमानं गमयन्ति स्तोतारः ॥ ५ ॥

अथ खे राजं विधित्सुस्तस्य निधनं द्युलोके सूर्य्यस्य दृढावस्थितिहेतुरिति स्तौति ।

**छन्दोभिर्वै देवा आदित्यꣳ स्वर्गं लोकमहरन् सनाध्रियत तं वै राजस्य निधनेनादृꣳहꣳस्तस्मात् पराङ् चार्वाङ् चादित्यस्तपति पराङ् च ह्यर्वाङ्चेकारः ॥ ६ ॥**

छन्दोभिर्गायत्र्यादिभिः खलु पुरा देवाः आदित्यं सूर्य्यं स्वर्गं लोकमहरन् प्रापयन् अस्थापयन् स आदित्यस्तत्र नाध्रियते नावतिष्ठते ष्ठञ् अवस्थान इति धातुः एवमधृतं तमादित्यं वैराजस्य साम्नो निधनेन इडित्येवं रूपेण अदृंहन् दृढ़ीकृतवन्तः दृढं स्थापितवन्त इत्यर्थः हि यस्मादयमीकारःपराङ् चार्वाङ् च भवति अकारवत् कण्ठस्थानोऽपि न भवति उकारवन्नोष्ठ्योऽपि भवति उभयोरन्तयोर्लब्धत्वादुभयोरन्तरां लब्धः सन् उभयनिर्द्देशं लभत इति पराङ्त्वमर्व्वाङ्त्वं वेकारस्य तस्मादेव कारणादादित्योऽपि पराङ्च पराङ्मुखः स्वर्गादुपरितनानपि लोकान् अर्व्वाङ्च अवाङ्मुखः सन् अधस्तनानपि लोकान् तपति प्रकाशयति ॥ ६ ॥

अथ तस्मिन् साम्नि प्रस्तावानन्तरं मत्स्वा हाऊ इत्यादिका ये दशविष्टम्भास्ताननूद्य स्तौति।

**प्रस्तावं प्रस्तुत्य विष्टम्भान्विष्टभ्नोति मुखएव तदन्नाद्यं धत्ते मुखꣳ हि साम्नः प्रस्तावः ॥ ७ ॥**

होइ या होइ या होइ या २४२ पिब इति प्रस्तावभागः तं प्रस्तुत्य उच्चार्य्य मत्स्वा इत्यादिकान् विष्टभ्नोति विष्टम्भसंज्ञकानेतान् ब्रूयात् तत्तथा सति मुखतो मुखप्रदेशे आस्य एव अन्नाद्यं धत्ते धारयति प्रस्तावभागः खलु साम्नोमुखं तत्र विष्टम्भानां धारणात् ॥ ७ ॥

एतदेव विष्टणोति ।

**दशकृत्वोविष्टभ्नोति दशाक्षरा विराड् वैराज-मन्नमन्नाद्यस्यावरुध्यै ॥ ८ ॥**

मत्वा ह्यावोजो ह्याऊ स द्योह्याऊ बलं ह्यावित्यादिभिर्दश-कृत्वोदशवारं विष्टभ्नोति एतदादिकान् दशसंख्यान् विष्टम्भान् कुर्यात् विराड्दशाक्षरा दशेन्द्रियता किं तेन दशविधत्वादन्नञ्च वैराजं विराट्सम्बन्धि एवं संख्याद्वारेण दशकृत्वोऽवष्टम्भन-मन्नाद्यस्यावरुध्यै अवरोधनाय भवति ॥ ८ ॥

एवमुत्तरयोरपि पादयोः प्रारम्भे एते बिष्टम्भाः कार्य्याः इत्यभिप्रायेणाह ।

**त्रिंशत्कृत्वोविष्टभ्नोति भूयसोऽन्नाद्यस्यावरुध्यै ॥९॥**

विराजो हि दशाक्षरास्त्रयः पादास्तत्र प्रतिपादं दशकृत्वो-विष्टम्भने सति त्रिंशत्कृत्वः त्रिंशद्वारं विष्टभ्नोति विष्टम्भः कृत-वान् भवति तच्च भूयसो बहुतरस्यान्नाद्यस्यावरुध्यै भवति ॥९॥

एवं गुणविशिष्टं साम पिबा सोममिति तृचे विधाय समु-च्चित्य स्तौति ।

**वैराजꣳ साम भवति विराट्षु स्तुवन्ति वैराजा विष्टम्भाः समीचीर्विराजो दधात्यन्नाद्याय ॥ १० ॥**

वैराजाख्यं साम पिबासोममित्यस्मिन् तृचे पृष्ठस्तोत्रीया कार्य्या अतः सामैका विराट् तथा विराट्सु विराट्छन्दस्का-स्वृचु स्तुवन्ति विष्टम्भास्तु विराजाः दशसंख्यायोगादयमप्यन्या-विराट् अतएता विराजः समीचीः सङ्गताः समूहीकृताः दधाति विदधाति अन्नाद्यार्थं ॥ १० ॥

अथास्मिन् साम्नि दृश्यमानं गानविशेषं प्रदर्श्य स्तौति ।

आनुतुन्नङ्गायति रेतोधेयायानुतुन्नाद्धि रेतो धी-यते ॥ ११ ॥

अनुत्वा अनुत्वेत्यादिकोऽभ्यासोऽनुतोदस्तद्युक्तङ्गायति किमर्थं रेतोधेयाय रेतसः अपत्यहेतोर्वीर्य्यस्य आधानाय निषेकार्थं कथमनुतोदाद्रेतस आधानमित्याशङ्क्य लोकप्रसिद्धिमेव तत्र प्रमाणयति अनुतुन्नाद्धीति अनुतुन्नात् योन्यां रेतसः प्रक्षेपण-प्रतिक्षेपणरूपादनुतोदनात् पुनः पुनरभ्यासात् खलु लोके रेतो धीयते आधीयते निष्पद्यते अतोऽत्रापि क्रियमाणोऽनुतोदोरे-तोधेयाय भवतीति ॥ ११ ॥

अथ वैराजस्तोत्राङ्गमग्निमन्थनं विधत्ते ।

दक्षिण ऊरावुद्गातुरग्निम्मन्थन्ति दक्षिणतो हि रेतः सिच्यते ॥ १२ ॥

उद्गातुः दक्षिणे ऊरौ अधरारणिं तिरश्चीं स्थापयित्वा

तत उत्तरारण्या अग्निंमन्थन्ति दक्षिणतः शरीरस्य दक्षिणाद्धी-द्वैरेतः सिच्यते तस्माद्वीर्य्यवतो दक्षिणे ऊरुदेशे अग्निर्म्मन्थ-नीयः ॥ १२ ॥

तस्य कालं विधत्ते ।

**उपाकृते हिङ्कृते मन्थन्ति जातमभिहिङ्करोति ॥१३**

उपाकृते अध्वर्य्युणा स्तोत्रोपाकरणे कृते अहिंकृते हिङ्कारे चाकृते मन्थन्ति जातमग्निरभिलक्ष्य हिङ्करोति एतस्याग्नेरुपरि हिङ्कारं कुर्य्यात् वैराजस्य स्तोत्र उपाकृते पर्यन्नुरुशकलन्निधाय तृणे च तस्योपरि तिरश्चीमरणिन्निधायाध्यात्मप्रजननं कृत्वा त्रिः प्रदक्षिणमभिमन्थेदित्यादिकं सूत्रमत्रानुसन्धेयं ॥ १३ ॥

अस्तु जातस्य तस्योपरि हिङ्कारः किन्तत इत्याह ।

**तस्माज्जातं पुत्रं पशवोऽभिहिङ्कुर्वन्ति ॥ १४ ॥**

यस्मादेवमुद्गाता जातमभिहिङ्कृतवान् तस्मादेव जातमुत्पन्नं पुत्रमभिहिङ्कुर्व्वन्ति पशवः ॥ १४ ॥

जातस्याग्नेः कस्मिन्नग्नौ प्रहरणमिति ब्रह्मवादिभिः कृतां मीमांसामाह ।

**तस्मै जातायामीमाꣳसन्त गार्हपत्ये प्रहरामा ३ आग्नीध्रा ३ आहवनीया३ इति ॥ १५ ॥**

तस्मै जातायाग्नये तदर्थं ब्रह्मवादिनोऽमीमांसन्त पूजितविचारवचनो मीमांसाशब्दः विचारितवन्त इत्यर्थः कथमिति किमेतमग्निं गार्हपत्ये प्रहराम स हि सर्वेषामग्नीनां योनिः किं वा आग्नीध्रे आग्नीध्रीयधिष्ण्यगतेऽग्नौ प्रहराम प्रक्षिपाम सोमे ह्याग्नीध्रीयोमुख्यः आहवनीय उद्वाने तत एवोद्धारात् सूयते हि यदाहवनीय उद्वायेदाग्नीध्रादुद्धरेदिति अथवा आहवनीये प्रहराम सहि सर्वासामाहुतीनामाधारतया प्रधानभूत इत्येवं ब्रह्मवादिनः संशयापन्नास्त्रासन् त्रिष्वपि वाक्येष्वविचार्य्यमाणानामिति स्तुतिः ॥ १५ ॥

एवं विदुषां संशयं दर्शयित्वा तत्र कर्त्तव्यं पक्षमाह।

**आहवनीये प्रहरन्त्येतदायतनो वै यजमानो यदाहवनीयः स्वमेव तदायतनञ्ज्योतिष्मत्करोति ॥१६॥**

तमग्निमाहवनीये प्रहरन्ति प्रक्षिपेयुः आहवनीयोऽग्निरिति यत् एतदायतनो वै एतदायनं स्थानं यस्य तथाविधः खलु यजमानः तत्तथा सति स्वं स्वकीयमेवायतनं प्रक्षीयमाणेनाग्निना ज्योतिष्मत् करोति अतिशयेन ज्योतिर्युक्तं विदधाति ॥१६॥

एतद्वेदनं फलवदित्याह।

**ज्योतिष्मान् ब्रह्मवर्चसी भवति य एवं वेद ॥१७॥**

स्पष्टोऽर्थः ॥ १७ ॥

प्रकृतस्याग्नेरुपरि आज्येन होमं विधत्ते।

अभिजुहोति शान्त्या आज्येनाभिजुहोति तेजो वा आज्यन्तेज एव तदात्मन्धत्ते ॥ १८ ॥

प्रकृतमग्निमभि आज्येन जुहोति तृतीया च होश्छन्दसीति जुहोतेः कर्म्मणि तृतीया आज्यं जुहुयादित्यर्थः अग्नेस्तेजसो वृद्धिहेतुत्वादाज्यं तेज एव तथा च यदा आज्येन जुहोति तत्तेन तेज एवात्मन्धत्ते ॥ १८ ॥

तस्मिन् होमे मन्त्रं विधाय तस्य विशिष्टफलहेतुतां दर्शयति।

प्रेद्धो अग्ने दीदिहि पुरो न इति विराजाभिजुहोत्यन्नं विराडन्नाद्यस्यावरुध्यै ॥ १९ ॥

प्रेद्धो अग्न इति विराजा विराट्छन्दसा ऋचा अभिजुहोति गतमन्यत् ॥ १९ ॥

अथ तृतीयस्य पृष्ठस्तोत्रस्य विष्ठाः पृतना इति यस्यृचो विहितस्तत्र गातव्यं साम विधत्ते।

त्रैशोकं ब्रह्मसाम भवति ॥ २० ॥

त्रिशोकेन दृष्टं साम त्रैशोकं तद्ब्रह्मसाम ब्राह्मणः स्तोत्रं पृष्ठत्वेन कार्य्यं ॥ २० ॥

अथास्याधारभूतानामृचां छन्दोद्वारेण स्तौति ।

**अतिजगतीषु स्तुवन्त्यह्न उत्क्रान्त्या उद्वा एतेनाह्ना क्रामन्ति ॥ २१ ॥**

अतिजगतीषु द्वापञ्चाशदक्षरासु जगतीमतीत्य वर्त्तमानासु ऋक्षु विश्वाः पृतना इत्यादिषु स्तुवन्ति किमर्थं अह्नोऽस्य चतुर्थस्य उत्क्रान्त्यै उत्क्रान्तिरूर्द्धगतिः स्वर्गस्य प्राप्तिरिति यावत् उत्क्रान्तिसाधनतया इत्यर्थः जगत्या अप्यूर्द्धगतेन छन्दसा योगादनेन चतुर्थेनाह्ना उत्क्रामन्ति वै ऊर्द्धङ्गच्छन्ति स्वर्गप्राप्त्यर्थं ॥ २१ ॥

अथैतन्निधनद्वारा पापक्षयहेतुरिति स्तौति ।

**दिवेति निधनमुपयन्ति पाप्मनोऽपहत्या अप पाप्मानꣳ हते त्वैशोकेन तुष्टुवानः ॥ २२ ॥**

औ इदी २३४ वा इति ह्यस्य निधनमुपयन्ति उपगच्छन्त्युद्गातारः पाप्मनः पापस्यापहत्यै अपक्षयार्थं तद्युक्तशब्दस्य दीप्तिवचनत्वात्तमोविदारकत्वं पापं तेन विनाश्यत इत्यर्थः यस्मादेवं तस्मादनेन त्वैशोकेन साम्ना तुष्टुवानः स्तुवन् पाप्मानमपहते अपहन्ति विनाशयति ॥ २२ ॥

अथ चतुर्थस्य पृष्ठस्तोत्रस्य साम विधत्ते ।

**भरद्वाजस्य पृश्निरक्षावाकसाम भवति ॥ २३ ॥**

भरद्वाजस्य पृश्नीति पदद्वयसमुदायात्मिका सा साम्नः संज्ञा तत्संज्ञं साम अच्छावाकसाम अच्छावाकस्य पृष्ठस्तोत्रेण यो राजा चर्षणीनामिति तृचे कार्य्यं ॥ २३ ॥

अथैनं स्तौति।

**अन्नं वै देवाः पृश्नीति वदन्त्यन्नाद्यस्यावरुध्यै ॥ २४ ॥**

नानावर्णमन्नमेव देवाः पृश्नीति प्राप्तवर्णत्वात् पृश्निशब्दाभिधेयमिति वदन्ति अत एतत् पृश्नि क्रीयमाणं साम अन्नाद्यस्य प्राप्त्यै भवति ॥ २४ ॥

अस्य साम्नोऽह्ना सङ्गतिमाह।

**इडाभिरैडन्तथा ह्येतस्याह्नोरूपꣳ स्तोमः ॥२५॥**

इडा २३ भा ३४३ औ २३४५ इडा इत्यनेन युक्तमिडाभिरैडं तथा हि तादृशमेव खल्वेतस्य चतुर्थस्याह्नो रूपमिडाभिरैडञ्चतुर्थस्येति एतेषु पृष्ठस्तोत्रेषु पूर्वोक्त एव एकविंशः स्तोमः कार्य्यः ॥ २५ ॥

इति ताण्ड्यमहाब्राह्मणे द्वादशाध्यायस्य

दशमः खण्डः।

———

अथ एकादशः खण्डः ।

अथार्भवपवमानस्य प्रथमं तृचं दर्शयति ।

**परिप्रियादिवः कविरिति परिवत्यो भवन्त्यन्तो वै तदर्थमहस्तस्यैताः पर्याप्त्यै ॥ १ ॥**

परिप्रियादिवः कविरित्याद्यास्तिस्रः स्तोतीयाः परिवत्यः परिशब्दयुक्ता भवन्ति चतुर्थमहस्त्वान्तो वै चतूरात्रापेक्षायामन्त एव अतस्तस्यान्त्यस्याह्नः पर्य्याप्त्यै परिसमाप्त्यै एताः परिवत्योऽनुगुण इत्यर्थः ॥ १ ॥

अथ द्वितीयं तृचं दर्शयन् अनेनाह्ना सङ्गतिमप्याह ।

**त्वꣳ ह्यङ्ग दैव्येति त्वमिति बृहतो रूपं बार्हतꣳ ह्येतदहः ॥ २ ॥**

त्वं ह्यङ्गेत्ययमार्भवस्य द्वितीयस्तृचः कथमस्याह्ना सङ्गतिरित्युच्यते तत्र त्वमिति युष्मच्छब्दो दृश्यते तद्बृहतो बृहत्साम्नो रूपं तद्योन्यां त्वामिद्धि हवामहे इति युष्मच्छब्ददर्शनेन तद्रूपत्वावगतेः एतच्चतुर्थमहरपि बार्हतं बृहत्प्रभवेन वैराजेन साम्ना युक्तत्वात् तमिति बृहतो रूपेण युक्तस्तृचश्चतुर्थेऽहनि सङ्गत इत्यर्थः ॥ २ ॥

अथ तृचान्तरं विधत्ते ।

सोमः पुनान ऊर्मिणा व्यवारं विधावत्यग्रे वाचः पवमानः कनिक्रददिति ॥ ३ ॥

सोमः पुनान ऊर्म्मिणेत्ययमार्भवस्य तृतीयस्तृचः ॥ ३ ॥

अग्रे वाच इति पदद्वयसूचितमर्थमुपादाय स्तौति ।

अग्रꣳ ह्येतर्हि वाचो गच्छन्नग्रमेवैतया यजमानङ्गमयन्ति ॥ ४ ॥

एतर्हि एतस्मिन् काले चतुर्थस्याह्नोऽनुष्ठानसमये अग्रं प्रशस्तं वाचो गच्छन् अत एतया स्तोत्रीयया यजमानमेवाग्रं श्रैष्ठ्यं गमयन्ति प्रापयन्ति ॥ ४ ॥

अथान्यं तृचं विधत्ते ।

पुरोजितीवो अन्धसइति विराजौ वैराजꣳ ह्येतदहः ॥ ५ ॥

पुरोजितीवो अन्धस इत्यार्भवस्य चतुर्थस्तृचः तस्मिन् तृचे द्वे वैराजौ भवतः पद्याचाचय्या चेति उत्तरत्र प्रदर्शयिष्यते एतदहश्च वैराजं विराट्सम्बद्धं अतोऽस्मिन्नहनि अयं तृचः सङ्गत इत्यर्थः ॥ ५ ॥

अथानन्तरं तृचं विधत्ते ।

**सोमः पवते जनितामतीनामिति प्रातःसवने षोडशिनं गृहीतं तं तृतीयसवने प्रजनयन्ति ॥ ६ ॥**

सोमः पवते जनितेति जनिधातुयुक्तस्तृचः पञ्चमः प्रातःसवने धाराग्रहाणामुत्तमः षोडशी ग्रहो गृह्यते गृहीतं षोडशिनं तृतीयसवने प्रजनयन्ति होमयोग्यं जनिधातुयुक्तेनानेन तृचेनोत्पादयन्ति सहि षोडशी तृतीयसवने हूयते तस्माद्धोमायोत्पादयन्तीत्यर्थः ॥ ६ ॥

ननु जागतं तृतीयसवनं अयञ्च त्रैष्टुभस्तृचः कथमसौ तत्र सङ्गच्छत इत्यत आह।

**त्रिष्टुभः सत्यो जगत्योरूपेण तस्माज्जगतीनां लोके क्रियन्ते ॥ ७ ॥**

सोमः पवत इत्याद्यास्त्रिष्टुभः सत्योऽपि जागतेन रूपेण योगाज्जगत्यः तस्माज्जगतीनां स्थाने प्रयुज्यन्ते किन्तज्जातरूपमित्युच्यते आतिष्ठति वृषभो गोषु जानन्निति गोशब्दवत्त्वं तथाहनि पूर्वं परिगणितं दिग्वद्धोमद्वृषभवत्तृतीयस्याह्नो रूपमित्यादिना * ॥ ७ ॥

---

* अत्र सूर्य्यवत्त्वं अनुतोदवत्त्वं जनिधातुयोगश्च तथाहि पूर्वं परिगणितं राजन्वज्जनद्वत्सूर्य्यवद्विराडनुतोदवच्चतुर्थस्याह्नोरूपमित्यादिना अस्मिंस्तृचे सूर्य्यस्य जनियोगः स्पष्टएव अत्र क्रियमाणे वात्सप्रे साम्नि सत्यादिपदानामनुतोदः प्रकटएव आतिष्ठतेत्यादि पाठः प्रामादिक एव।

अथ परिप्रियेति प्रथमे तृचे पूर्ववद्गायत्रं साम विधाय तत्स्तावकं ब्राह्मणमप्यतिदिशति।

गायत्रं भवति यदेव गायत्रस्य ब्राह्मणं ॥ ८ ॥

सिद्धमेतत् ॥ ८ ॥

अथाऽस्मिन्नेव तस्मिंस्तृचे सामान्तरं विधत्ते।

और्णायवं भवति ॥ ९ ॥

ऊर्णायुना दृष्टं साम और्णायवं तदस्मिन् परिप्रियेति तृचे गातव्यं ॥ ९ ॥

इदं साम स्वर्गप्राप्तिसाधनमिति प्रतिपिपादयिषुस्तदर्थ-माख्यायिकामाह।

अङ्गिरसो वै सत्रमासत तेषामाप्तः स्तृतः स्वर्गो-लोक आसीत्पन्थानन्तु देवयानन्न प्राजानꣳस्तेषाङ्क-ल्याण आङ्गिरसोऽध्यायमुदव्रजन् स ऊर्णायुङ्गन्धर्वम-प्सरसाम्मध्ये प्रेङ्खयमाणमुपैत्स ईयामिति यां यामभ्य-दिध्यत्तैनमकामयत तमभ्यवदत्कल्याणा ३ इत्याप्तो वै वः स्तृतः स्वर्गोलोकः पन्थानन्तु देवयानन्न प्रजा-नीथेदꣳ साम स्वर्ग्यं तेन स्तुत्वा स्वर्गं लोकमेष्यथ मा तु वोचोऽहमदर्शमिति ॥ १० ॥

अङ्गिरसः खलु पुरा ऋषयः सत्रयागमन्वतिष्ठन् तेषामङ्गिरसान्तद्यागफलभूतः स्वर्गाख्यो लोकः प्राप्तः पर्य्याप्तः स्मृतः प्रियहेतुश्चासीत् सुप्रीतिचकारीरिति देवयामं देवा यान्त्यनेनेति स देवयानः देवयानन्तु पन्थानः स्वर्गस्य मार्गन्न प्राजानन् न चाबुध्यन्त एवमजानतां मध्ये कल्याणनामाङ्गिरसः ध्यायन् ध्यैचिन्तायामिति अस्मात् लसुट् प्रत्ययः ध्यात्वा ध्यात्वा कोऽसौ देवयानः पन्था इति विचार्य्य विचार्य्य उदव्रजदूर्द्ध्वमगच्छत् स कल्याण आङ्गिरसः कियन्तं देशं गत्वा अन्तरिक्षलोके ऊर्णायुं एतत्संज्ञं गन्धर्व्वं अप्सरसां मध्ये प्रेङ्खयमाणं दोलया विहरन्तं उपैत् उपागच्छत् स गन्धर्व्व इयां प्राप्नुयामिति यां यां स्त्रियमभ्यदिध्यत् अभ्यध्यायत् सा सा एनं गन्धर्व्वमकामयत एवमप्सरोभिः सह क्रीडन् गन्धर्व्वस्तं कल्याणमाङ्गिरसमभिलक्ष्य अवददब्रवीत् कल्याणा ३ इति हे कल्याण इति सम्बोध्य दूराद्धूते चेति प्लुतः एवं सम्बोध्येदमब्रवीत् वो युष्माकं यज्ञफलभूतः स्वर्गो लोक आप्तो वै प्राप्तः स्मृतः प्रीतिकरश्चाभूत् देवयानन्तु पन्थानं यूयं न प्रजानीथ ततेदं साम स्वर्ग्यं स्वर्गाय हितं स्वर्गप्राप्तिसाधनं तेन साम्ना स्तुत्वा स्वर्गं लोकमेष्यथ प्राप्स्यथ यदि त्वां कश्चिदप्राचीत् तस्मै अहमेवादर्शमिति अदर्शं अज्ञासिषमिति मा त्ववोचः अपि तु ऊर्णायुः गन्धर्व्वः प्रावोचदिति ब्रूहीति ॥ १० ॥

एवं गन्धर्व्वेणोक्तः किं कृतवानिति तदाह।

**सऐत्कल्याणः सोऽब्रवीदाप्तो वै नः स्तृतः स्वर्गो-लोकः पन्थानन्तु देवयानन्न प्रजानीम इदꣳ साम स्वर्ग्यं तेन स्तुत्वा स्वर्गं लोकमेष्याम इति कस्तेऽवोच-दित्यहमेवादर्शमिति तेन स्तुत्वा स्वर्गं लोकमायन्न-हीयत कल्याणोऽनृतꣳ ह्रि सोऽवदत्तस्य एषः श्वित्रः ॥११॥**

एवं गन्धर्वैरुक्तः स कल्याणः ऐत् पुनरङ्गिरसः समीपमा-गच्छत् आगत्य च सोऽब्रवीत् नो अस्माकं स्वर्गोलोक आप्तः स्तृतश्च किल देवयानं पन्थानं न प्रजानीमो वयं इदमौर्णायवं साम स्वर्ग्यं स्वर्गसाधनं देवयानस्य पथोलम्भकं तेन स्तुत्वा वयं स्वर्गं लोकमेष्यामो गमिष्याम इति एवं कल्याणेनोक्ता आङ्गिरसः अपृच्छन् ते तव कः पुरुषोऽवोचदुक्तवानिति न कश्चिदवोचत् अहमेवैतत् साम स्वर्गसाधनत्वेनादर्शमद्राक्षिषमिति कल्याणः प्रत्यब्रवीत् ततस्तेनौर्णायवेन स्तुत्वा स्वर्गलोकमायन्नङ्गिरसो-ऽगच्छन् कल्याणस्त्वाङ्गिरसोऽहीयत हीनो भूमावेव परिलक्षोऽ-भूत् हि यस्मात् सोऽनृतं वितथमवदत् तस्मादहीयन स एषोऽ-सत्यवादी श्वित्रः श्वेतकुष्ठी दृश्यते ॥ ११ ॥

तस्मादेतेन साम्ना स्तवनं स्वर्गसाधनमित्युपसंहरति ।

**स्वर्ग्यं वा एतत्साम स्वर्गलोकः पुण्यलोको भव-त्यौर्णायवेन तुष्टुवानः ॥ १२ ॥**

स्वर्गलोकः स्वर्गो लोको यस्य स तथोक्तः पुण्यः पुण्यात्मक उत्तमः स्वर्गादन्योऽपि लोको यस्य स पुण्यलोकः और्णायवेन तुष्टुवानः स्तुवन्नुभयविधो भवति गतमन्यत् ॥ १२ ॥

त्वं ह्यङ्ग दैव्येति पूर्वविहिते तृचे गातव्यं साम विधत्ते।

बृहत्कम्भवति ॥ १३ ॥

बृहत्को नाम ऋषिः तत्सम्बन्धि साम बृहत्कं तदस्मिंस्तृचे गातव्यं ॥ १३ ॥

तदेतत् स्तौति।

सामार्षेयेण प्रशस्तं त्वं हीत्यन्नाद्यस्यावरुध्यै हीति वा अन्नं प्रदीयते षोडशिनमु चैवैतेनोद्यच्छति ॥ १४ ॥

आर्षेयेण ऋषिसम्बन्धेन युक्तं साम प्रशस्तमुत्कृष्टं यस्य च स्तोत्रीयासु त्वं हीति शब्दः श्रूयमाणः अन्नाद्यस्यावरुध्यै अवरोधनाय भवति कथं लोके हीति हि इत्यनेन शब्देन खलु अन्नं प्रदीयते बालानां भोजयितारः अन्नस्य विदारणार्थं हीति शब्दमुच्चारयित्वा अन्नमादयन्ति तत्सामान्यादत्रापि हिशब्देनान्नाद्यस्यावरोधो भवति अपि च षोडशिनमेव ग्रहमेतेनोद्यच्छति होमार्थमुद्गमयति त्वं ह्यङ्ग दैव्येत्याभिमुख्यकरणात् पूर्वयोः सवनयोः शयानं अत्र होमायोद्बोधयतीत्यर्थः ॥ १४ ॥

अथ सोमः पुनान ऊर्म्मिणेति तृचे गातव्यं साम विधत्ते।

**आतीषादीयं भवति ॥ १५ ॥**

आतीषादीयाख्यं सामास्मिंस्तृचे गेयं ॥ १५ ॥

अथैतदायुर्हेतुरिति स्तौति।

**आयुर्वा आतीषादीयमायुषोऽवरुध्यै ॥ १५ ॥**

तदेतदातीषादीयाख्यं साम तदायुर्वै आयुषोऽभिवृद्धिहेतुत्वादायुरेव अतएतत्साम आयुषोऽवरोधनार्थमत्र कार्य्यं ॥ १६ ॥

यावति काले श्वासनिरोधः कर्त्तुं शक्यते तावन्तं कालं अस्य साम्नो निधनमावर्त्तनीयमिति विधाय स्तौति।

**आतमितोर्निधनमुपयन्त्यायुरेव सर्वमाप्नुवन्ति ॥ १७ ॥**

आतमितोः आतमनात् श्वासे निरुध्यमाने यावता कालेन ग्लानिर्भवति तमुग्लान इति धातुः तावत्कालपर्य्यन्तं आतीषादीयस्य निधनं ऋदुरे इत्येवं रूपं पुनः पुनः उपयन्त्युपगच्छन्ति तथा च सर्वं सम्पूर्णमेव आयुः प्राप्नुवन्ति ॥ १७ ॥

अथ पुरोजिती इति तृचे गातव्यं साम विधत्ते।

**नानदं भवति ॥ १८ ॥**

नानदाख्यं सामास्मिंस्तृचे कार्यं ॥ १८ ॥

अथैतदहःसन्ततिहेतुरित्याह ।

**ज्यायोऽभ्यारम्भमतिहाय पञ्चममहः षष्ठस्याह्न आरम्भस्तेन षष्ठमहरारभन्ते सन्तत्यै ॥ १९ ॥**

अस्य साम्न आधारभूते तृचे प्रथममानुष्टुबुत्तरे गायत्र्यौ च गानसमये पूर्वमानुष्टुभं पादमारभ्य अनुष्टुभौ कार्य्ये एवमेव षष्ठेऽहनि पादमात्रस्यारम्भः पञ्चमेऽहनि जगत्या दृढ्वतरं पादात्मकं शक्कर्य्याख्यं छन्दोऽभ्यारभ्यते एतदभिप्रेत्यात्र स्तुतिः क्रियते ज्यायोऽभ्यारम्भं चतुर्थेऽह्नि प्रयुज्यमानो विराट् छन्दसो ज्यायः अभिव्यक्तं शक्कर्य्याख्यं छन्दोऽभ्यारभ्यते गानार्थमुपादीयते यस्मिंस्तादृशं पञ्चममहः परिहाय अतिक्रम्य षष्ठस्याह्नः पारमात्राभ्यासयुक्तस्य आरम्भोपक्रमो भवति तेन आनुष्टुभः प्रत्यये करणेन षष्ठाहरेवारभन्ते सन्तत्यै सन्तानायाय अविच्छेदार्थं ॥ १९

अथास्य साम्नः प्रस्तावभागस्य परिमाणविशेषं विधाय स्तौति ।

**षोड़शाक्षरेण प्रस्तौति षोड़शिनमु चैवैतेनोद्यच्छति ॥ २० ॥**

प्रथमतः षोडशभिरक्षरैः प्रस्तोता प्रस्तावभागं ब्रूयात् एतेन प्रस्तावेन षोडशिनमेव ग्रहं होमायोद्यच्छति ॥ २० ॥

अथास्मिंस्तृचे सामान्तरं विधत्ते।

आन्धीगवं भवति॥ २१॥

स्पष्टोऽर्थः॥ २१॥

अस्मिंस्तृचे विराट् सम्पादयन् अन्नाद्यहेतुरेतत्सामेति स्तौति।

पद्या वा अन्या विराडक्षर्य्यान्यास्माल्लोकात्पद्यया विराजान्नाद्यमवरुन्धेऽमुष्मादक्षर्य्ययोभयोरनयोर्ल्लोकयोरन्नाद्यमवरुन्ध आन्धीगवेन तुष्टुवानः॥ २२॥

अत्र पुरोजिती इत्याद्यानुष्टुबुत्तरे गायत्र्यौ अतो दशपदा भवतीति तैर्न्निष्पद्यमाना पद्या अन्या विराट् एतासु विद्यमानाक्षरपरिगणनायामशीतिसङ्ख्यान्यक्षराणि भवन्ति तत्र दशसंख्यायाविभागे अन्ततो दशाक्षराण्येव तिष्ठन्ति तैरक्षरैर्न्निष्पद्यमाना अन्या विराट् ततः पद्यया विराजा अस्माद्भूर्लोकादेव अन्नाद्यमवरुन्धे लभते अमुष्मात् स्वर्गाल्लोकादक्षर्य्यया विराजा अन्नाद्यमवरुन्धे तस्मादान्धीगवेन तुष्टुवानः स्तुतवान् अनयोरुभयोर्द्यावापृथिव्योर्लोकयोरन्नाद्यं अदनीयं प्रशस्तमन्नमवरुन्धे लभते॥ २२॥

अथ सोमः पवते इति तृचे गेयं साम दर्शयति।

**वात्सप्रम्भवति ॥ २३ ॥**

वत्सप्रेण दृष्टं साम वात्सप्रन्तत् सोमः पवत इति तृचे कार्य्यं ॥ २३ ॥

वैराजस्य साम्नस्तृचे अस्याप्यनुतोदवत्त्वात् साम्येनास्मिन् वैराजं प्रतिष्ठितमित्यभिप्रेत्य स्तौति ।

**एतस्मिन्वै वैराजं प्रतिष्ठितं प्रतितिष्ठति वात्सप्रेण तुष्टुवानः ॥ २४ ॥**

अयमभिप्रायः अनुतोदो नामाभ्यासः सच त्रित्वविशिष्टो वैराजस्य त्रिष्टुप्पदान्तेऽप्यधीयते वात्सप्रेऽपि तथाधीयते उभयत्र चतुष्कृत्वोऽभ्यासः सूत्रकृता विकल्पेनोक्तः तस्य पदान्तां-श्चतुरभ्यस्येयुस्तथा चातुर्थिकस्य वात्सप्रस्येति तस्येति प्राकृतं वैराजं परामृश्यते अत्र च निदानकारेण व्यवस्था दर्शिता तेन वात्सप्रं सामादध्याद्यदि वैराजं अनुतोदं वात्सप्रमपि अनुतो-दं यदि चतुरनुतोदं वात्सप्रमपि चतुरनुतोदमिति सूत्रकृता-प्युक्तं समाधिं त्रिति वैराजवात्सप्रयोः समाधिं साम्यं कुर्या-दिति तस्यार्थः एतदेवाभिप्रेत्य एतस्मिन् खलु वात्सप्रे वैराजं साम प्रतिष्ठितमिति कथनं यस्मादेवं तस्माद्वात्सप्रेणानेन स्तुवन् प्रतितिष्ठति ॥ २४ ॥

अथास्य साम्नः ऋषिसम्बन्धप्रदर्शनपुरस्सरं अन्नाद्यफलं स्तौति ।

अथास्मिंस्तृचे सामान्तरं विधत्ते।

**आन्धीगवं भवति ॥ २१ ॥**

स्पष्टोऽर्थः ॥ २१ ॥

अस्मिंस्तृचे विराट् सम्पादयन् अन्नाद्यहेतुरेतत्सामेति स्तौति।

**पद्या वा अन्या विराडक्षर्य्यान्यास्माल्लोकात्पद्यया विराजान्नाद्यमवरुन्धेऽमुष्मादक्षर्य्ययोभयोरनयोर्लोक-योरन्नाद्यमवरुध्य आन्धीगवेन तुष्टुवानः ॥ २२ ॥**

अत्र पुरोजिती इत्याद्यानुष्टुबुत्तरे गायत्र्यौ अतो दशपदा भवतीति तैर्निष्पद्यमाना पद्या अन्या विराट् एतासु विद्यमाना-क्षरपरिगणनायामशीतिसङ्ख्यान्यक्षराणि भवन्ति तत्र दशसंख्या-याविभागे अन्ततो दशाक्षराण्येव तिष्ठन्ति तैरक्षरैर्निष्पद्य-माना अन्या विराट् ततः पद्यया विराजा अस्माद्भूर्लोकादेव अन्नाद्यमवरुन्धे लभते अमुष्मात् स्वर्गाल्लोकादक्षर्य्यया विराजा अन्नाद्यमवरुन्धे तस्मादान्धीगवेन तुष्टुवानः स्तुतवान् अनयो-रुभयोर्द्यावापृथिव्योर्लोकयोरन्नाद्यं अदनीयं प्रशस्यमन्नमव रुन्धे लभते ॥ २२ ॥

अथ सोमः पवते इति तृचे गेयं साम दर्शयति।

**वात्सप्रम्भवति ॥ २३ ॥**

वत्सप्रेण दृष्टं साम वात्सप्रन्तत् सोमः पवत इति तृचे कार्य्यं ॥ २३ ॥

वैराजस्य साम्नस्तृचे अस्याप्यनुतोदवत्त्वात् साम्येनास्मिन् वैराजं प्रतिष्ठितमित्यभिप्रेत्य स्तौति ।

**एतस्मिन्वै वैराजं प्रतिष्ठितं प्रतितिष्ठति वात्सप्रेण तुष्टुवानः ॥ २४ ॥**

अयमभिप्रायः अनुतोदो नामाभ्यासः सच त्रित्वविशिष्टो वैराजस्य त्रिष्टुप्पदान्तेऽप्यधीयते वात्सप्रेऽपि तथाधीयते उभयत्र चतुष्कृत्वोऽभ्यासः सूत्रकृता विकल्पेनोक्तः तस्य पदान्तां-श्चतुरभ्यस्येयुस्तथा चातुर्थिकस्य वात्सप्रस्येति तस्येति प्राकृतं वैराजं परामृश्यते अत्र च निदानकारेण व्यवस्था दर्शिता तेन वात्सप्रं सामादद्याद्यदि वैराजं अनुतोदं वात्सप्रमपि अनुतो-दं यदि चतुरनुतोदं वात्सप्रमपि चतुरनुतोदमिति सूत्रकृता-प्युक्तं समाधिं त्विति वैराजवात्सप्रयोः समाधिं साम्यं कुर्या-दिति तस्यार्थः एतदेवाभिप्रेत्य एतस्मिन् खलु वात्सप्रे वैराजं साम प्रतिष्ठितमिति कथनं यस्मादेवं तस्माद्वात्सप्रेणानेन स्तुवन् प्रतितिष्ठति ॥ २४ ॥

अथास्य साम्नः ऋषिसम्बन्धप्रदर्शनपुरस्सरं यज्ञाफलं स्तौति ।

वत्सप्रीर्भालन्दनःश्रद्धान्नाविन्दत सतपोऽतप्यत स एतद्वात्सप्रमपश्यत्स श्रद्धामविन्दत श्रद्धां विन्दामहा इति वै सत्रमासते विन्दते श्रद्धां ॥ २५ ॥

वत्सप्रीर्भालन्दनपुत्रः ऋषिः श्रद्धां नाविन्दत अविन्दत् ततः तपस्तप्तवान् तेनच तपसा सऋषिरेतद्वात्सप्रं सामापश्यत् तेन साम्ना साधनेन श्रद्धामप्यविन्दत श्रद्धां विन्दामहै लभामहा इति खलु सत्रमासते द्वादशाहाख्यं यज्ञं कुर्व्वन्ति ते चैतद्वात्सप्रं युञ्जानाःश्रद्धामभिरुचिं ऋचं सर्ववस्तुगोचरां विन्दते लभते ॥ २५

अथैतदीयस्य निधनस्य अह्ना सङ्गतिं दर्शयन् प्रशंसति ।

ईनिधनं तथा ह्येतस्याह्नोरूपन्निधनान्ताः पवमाना भवन्त्यह्नो धृत्यै स्तोत्रः ॥ २६ ॥

ईइति निधनं यस्य तत्तथोक्तं वात्सप्रमपि ईकारनिधनं तथाहि तथैव खल्वेतस्याह्नोरूपं पुराभिहितादिनिधनं तृतीयस्येनिधनं चतुर्थस्येति किञ्च पवमानाः पवमानस्तोत्राणि निधनान्ताः निधनं ऋगक्षरव्यतिरिक्तं इडावाक् ईइत्यादिकं अन्ते येषां ते निधनान्ताः तादृशानि भवन्त्यह्नो धृत्यै पवमानस्तोत्रस्यैतस्याह्नोधारणार्थं स्तोत्रं हि पुरस्तात् क्रियमाणेन हिङ्कारेण ऋगक्षरव्यतिरिक्तेनावसानप्रयुक्तेन निधनेन उभयतः परिगृहीत्वाहृतं भवति तद्द्वारा अहरपि अन्यथापिधानस्थानेन निधनेन वियोगात् ह्रतमपि स्तोत्रं प्रशिथिलं स्यादित्यह्नोऽपि-

शैथिल्यं भवेत् एवं सप्तसु सामसु तृचेषु क्रियमाणेषु एकविंशतिः स्तोत्रीया निष्पद्यन्ते तथापि एकविंशएवास्य स्तोत्रस्य स्तोमो भवति ॥ २६ ॥

इति ताण्ड्यमहाब्राह्मणे द्वादशाध्यायस्य

एकादशः खण्डः।

---

अथ द्वादशः खण्डः।

अथोक्तानां प्रथमस्य स्तोत्रस्य तृचं दर्शयति।

अग्निं वो वृधन्तमिति ॥ १ ॥

अयं तृचः प्रथमस्य मैत्रावरुणस्योक्थस्य स्तोत्रीय इत्यर्थः ॥१

अस्मिंस्तृचे वृधन्तमिति वृधि धातुः श्रूयते तत्सूचितमर्थमाह।

अवर्द्धन्त ह्येतर्हि यजमानमेवतया वर्द्धयन्ति॥२

एतर्हि एतस्मिन् काले तृतीयसवनावसाने अवर्द्धन्त हि यस्माद्देवास्चरुपुरोडाशादिभिर्वृद्धाः समृद्धाः अभूवन् यस्मादेतया वृधिधातुयुक्तयर्चा यजमानमेव वर्द्धयन्त्युद्गातारः ॥ २ ॥

अथ द्वितीयस्य ब्रह्मण उक्थस्य स्तोत्रीयं तृचं दर्शयति।

वयमु त्वामपूर्व्येत्यपूर्व्या ह्येतर्हि प्रजापतेस्तनू-
मगच्छन्न पूर्वमेवैतया यजमानं गमयन्ति ॥ ३ ॥

वयमुत्वामिति तृचे द्वितीयस्योक्थस्य स्तोत्रियः कार्य्यः तत्सम्बन्धिना अपूर्वशब्देन सूचितोऽर्थः प्रतिपाद्यते एतर्ह्येतस्मिन् काले अदृष्टपूर्व्वां अपूर्वां खलु प्रजापतेः सर्वकारणभूतस्य विधातुस्तनुं शरीरं अगच्छन् आप्नुवन् देवास्तस्मादपूर्वशब्दयुक्तयैतया स्तोत्रीयया अपूर्वं अद्भुतं दिव्यं फलमेव यजमानं गमयन्ति प्रापयन्ति ॥ ३ ॥

अथ तृतीयमच्छावाकोक्थस्य स्तोत्रीयातृचं विधत्ते ।

इममिन्द्र सुतम्पिव ज्येष्ठममर्त्यम्मदमिति ज्यै-
ष्ठ्यꣳ ह्येतर्हि वाचोगच्छन्ज्यैष्ठ्यमेवैतया यजमानं
गमयन्ति ॥ ४ ॥

इममिन्द्र सुतं पिवेति तृतीयस्योक्थस्य स्तोत्रीयस्तृचः कार्य्यः एतर्ह्येतस्मिन् अन्तरे ज्यैष्ठमतिशयितं प्राशस्त्यं वाचो गच्छन् सुतशस्त्ररूपाणां सर्वासां वाचां प्रयुक्तत्वादस्यै ज्यैष्ठ्यै लिङ्गयुक्तया स्तोत्रीयया यजमानं ज्यैष्ठ्यमतिशयितं प्राशस्त्यमेव गमयन्ति ॥ ४ ॥

अथाग्निं व इति प्रथमस्योक्थस्य विहिते तृचे गेयं सामदर्शयति ।

सैन्धुक्षितं भवति ॥ ५ ॥

सिन्धुक्षिता दृष्टं सैन्धुक्षितं तन्नाम तस्मिंस्तृचे कार्य्यं ॥५॥

अथोक्तमर्थसम्बन्धं दर्शयन् विशिष्टफलहेतुतयैतत् स्तौति ।

सिन्धुक्षिद्वै राजन्यर्षिर्ज्योगपरुद्धश्चरन् स एतत् सैन्धुक्षितमपश्यत् सोऽवागच्छत् प्रत्यतिष्ठदवगच्छति प्रतितिष्ठति सैन्धुक्षितेन तुष्टुवानः ॥ ६ ॥

सिन्धुक्षिन्नाम राजन्यो राजपुत्र ऋषिः ज्योक् चिरकालं अपरुद्ध अज्ञानेनावृतश्चरन् सञ्चरणशीलश्चासीत् स ऋषिरेतत् सैन्धुक्षितं सामापश्यत् तपसोबलात् दृष्टवान् तदनन्तरं अनेन साम्ना साधनेन अवागच्छत् सर्वमजानत् तथा प्रत्यतिष्ठत् प्रतिष्ठातत्परोऽभवद्राज्ये अतो अद्यतनोऽपि सैन्धुक्षितेन स्तुवन्नवगच्छति प्रतितिष्ठति च ॥ ६ ॥

वयमु त्वामपूर्व्येति द्वितीयस्योक्थस्य विहिते तृचे गेयं साम दर्शयति ।

सौभरं भवति बृहतस्तेजः ॥ ७ ॥

बृहती वा इन्द्रो वृत्राय वज्रं प्राहरत्तस्य तेजः परापतत् तत् सौभरमभवदिति ब्राह्मणात् सौभरं साम बृहत्साम्नस्तेजः एतस्मिन्नयमुक्थाभिति तृचे कार्य्यं ॥ ७ ॥

अथैतत् स्तौति।

**पन्नमिव वै चतुर्थमहस्तदेतेन बृहतस्तेजसोत्त-भ्नोति सौभरेण॥ ८॥**

पन्नं अधस्तात् पतितमिव खल्वेतत् चतुर्थमहरतीतेष्व-हःसु बृहतीष्वेव पृष्ठस्तोत्रं क्रियते बृहती च षट्त्रिंशदक्षरा अस्मिन् अहनि ततोऽन्यूनासु षट्त्रिंशदक्षरासु प्रथमं पृष्ठस्तोत्रं विहितं तस्मादधःपतितमिव वै तदहः एतेन सौभरेण बृहत-स्तेजसा तच्चतुर्थमहः उत्तभ्नोति उत्तब्धं उपर्य्यवस्थापितं करो-त्युद्गाता॥ ८॥

अथ तृतीयस्योक्थस्य विहिते इममिन्द्रमिति तृचे गेयं साम दर्शयति।

**वसिष्ठस्य प्रियं भवति॥ ९॥**

वसिष्ठस्य प्रियमिति समुदायः साम्नः संज्ञा तस्मिंस्तृचे गातव्यं॥ ९॥

अथैतां संज्ञां निर्ब्रुवन् स्तुवतः फलमाह।

**एतेन वै वसिष्ठ इन्द्रस्य प्रेमाणमगच्छत् प्रेमा-णन्देवतानाङ्गच्छति वासिष्ठेन तुष्टुवानः स्तोमः॥ १०॥**

एतेन खलु साम्ना पुरा वसिष्ठ ऋषि इन्द्रस्य प्रेमाणं प्रियत्वं अगच्छत् प्राप्नोत् प्रियशब्दादिमचमिति प्रियस्थिरस्फिरोरुब-हुलेत्यादिना प्रीश्रादेश: तस्मादस्य साम्नो वसिष्ठस्य प्रियमिति नाम सम्पन्नं तस्मादद्यतनोऽपि वासिष्ठेनानेन स्तुवन् यजमानो देवानां प्रेमाणं प्रियत्वं गच्छति एषु च त्रिषु स्तोत्रेषु पूर्व्वोक्त एवैकविंशस्तोमः कार्य्यः ॥ १० ॥

इति ताण्ड्यमहाब्राह्मणे द्वादशाध्यायस्य

द्वादशः खण्डः।

---

अथ त्रयोदशः खण्डः।

इत्थं पञ्चदशस्तोत्राणि गतानि अथैतस्य चतुर्थस्याह्नः षोड-शिमत्वात् तत्र षोडशस्य स्तोत्रे बृहत्साम्ना द्विपदासु स्तोतव्येति विधित्सुराह।

**इन्द्रश्च बृहच्च समभवतां तमिन्द्रं बृहदेकया तन्वात्यरिच्यत तस्या अविभेदनया माभिभविष्यतीति सोऽब्रवीत् षोडशी तेऽयं यज्ञक्रतुरस्त्विति स षोडश्य-भवत्तदस्य जन्म ॥ १ ॥**

देवानां मध्ये इन्द्रश्च बृहत्साम च समभवतां प्रजापतेरुरसो बाहुभ्याञ्च संभूतौ सहोत्पन्नावभूतां एवं सहोत्पन्नं तमिन्द्रं

बृहत्साम एकया तन्वा एकेन शरीरेणानेनात्यरिच्यत अतिरिक्तमभूत् ततः स इन्द्रः तस्या बृहतस्तन्वा अतिरिक्तया अबिभेत् भीतवान् अनयातिरिक्तया तन्वा माबृहत्सामाभिभविष्यदिति पराभविष्यति एवं भीतस्सन् इन्द्रोऽब्रवीत् हे बृहत् ते तव येयमतिरिक्ता तनूः विष्टितानां पञ्चदशानां स्तोत्राणां यत् षोडशसङ्ख्यापूरकं स्तोत्रं तदात्मना जातेत्यर्थ अयं षोडशीनाम यज्ञक्रतुरस्तीति षोडशस्तोत्राणि षोडशशस्त्राणि यस्यासौ षोडशी षोडशाख्यः सोमयागो भवत्वित्यर्थः एवमिन्द्रोक्ते तदनन्तरं सषोडश्यभवत् उक्तः स्तोत्रपञ्चदशकापेक्षया अतिरिक्ताया बृहतस्ततः स षोडशी षोडशस्तोत्रवान् यज्ञक्रतुरभवत् अस्य षोडशिनस्तदेव जन्मोत्पत्तिर्बृहतः सम्बन्धिन्यतिरिक्ता तनूः विष्टितानां पञ्चदशानां स्तोत्राणां यत् पञ्चदशानां षोडशसंख्यापूरकं स्तोत्रं तदात्मना जातेत्यर्थः ॥ १ ॥

तस्माद्बृहत्साम षोडशितया कार्य्यमित्याह।

**अतिश्रिया भ्रातृव्यꣳ रिच्यते यो गायत्रीषु द्विपदासु बृहता षोडशिना स्तुते ॥ २ ॥**

यत्शब्दश्रवणात्तच्छब्दाध्याहारः सोऽयं श्रिया सम्पदा भ्रातृव्यं शत्रुमतिरिच्यते अधिको भवति योगायत्रीषु द्विपदासु बृहता षोडशिना षोडशिसाम्ना स्तुते स्तावयतीत्यर्थः ॥ २ ॥

काः पुन स्ताः द्विपदा इत्यत आह।

**उप नो हरिभिः सुतमित्येता वै गायत्र्यो द्विपदा एतासु स्तोतव्यं ॥ ३ ॥**

उपनोहरिभिः सुतमित्याद्याः उत्तराग्रन्थे समाम्नाताः एता एव गायत्र्यो द्विपदाः यद्यपि तास्त्रिपदा गायत्र्यः तथाप्युपनोहरिभिः सुतमिति प्रथमं पाद एतत्तृतीयपादात्मना पुनः पुनरभ्यस्यते इति तासां द्विपदात्वं एतासु द्विपदासु बृहता साम्ना स्तोतव्यमित्येकः पक्षः ॥ ३ ॥

अथ पक्षान्तरं विधित्सुः सामान्तरस्योत्पत्तिमाह ।

**इन्द्रः प्रजापतिमुपाधावद्वृत्रꣳ हनानीति तस्मा एतामनुष्टुभमपहरसं प्रायच्छत्तया नास्तृणुत यद-स्तृतोव्यनदत्तन्नानदस्य नानदत्वं ॥ ४ ॥**

इन्द्रः पुरा वृत्रं असुरं हन्तुं स्वयं अपराद्धः सन् प्रजापतिं स्रष्टारं स्वपितरमुपाधावदुपागच्छत् किं कुर्व्वन् वृत्रमसुरमहं हनानि हननसमर्थो भवामि यथाऽहं हन्तुं शक्ष्यामि तथा मां कुर्व्विति ब्रुवन् तस्मा उपगतायेन्द्राय अपहरसं अपगतहरसं तेजःप्रतिपादकेन हरःशब्देन विधुरामेतां प्रत्यक्षा इत्यादिकं अनुष्टुभमृचं प्रायच्छत् प्रादात् अनया वृत्रं जहीति तत इन्द्रस्तां तस्मिन् वृत्रे प्राक्षिपत् तथा स नास्तृणुत नाहिंस्यत स्तृहिंसायामिति धातुः सचास्तृतो अहिंसतः सन् यत् व्यनदत्

विशेषशब्दमकरोत् तन्नानदं सामाभवत् यस्मादेवं नदना-ज्जातं तत्तस्मान्नानदस्य साम्नो नानदत्वं नानदमिति नाम सम्पन्नं ॥ ४ ॥

इत्थं पद्मान्तरेऽप्युक्तं साम प्रदर्श्य अथ तस्याधारभूता स्तोतीया ऋचो विवक्षुराह ।

तं पुनरुपाधावत्तस्मै सप्तानाᳬ होत्राणाᳬ हरो निर्म्मीय प्रायच्छत् ॥ ५ ॥

तं प्रजापतिमिन्द्रः पुनरुपाधावत् उपागच्छत् तथानुष्टुभा नासौ वृत्रोहत इति ब्रुवन् ततस्तस्मै इन्द्राय प्रजापतिः सप्तानां होत्राणां होतृमैत्रावरुणादयः सप्त वक्तारः तेषामार्त्विज्यानि होत्राशब्देनोच्यन्ते सप्तसंख्यानां होतृमैत्रावरुणादिसम्बन्धानां कर्म्मणां हरस्तेजः निर्म्मीयोत्पाद्य एकीकृत्य प्रायच्छत् ततस्तेन हरसा तं वृत्रमस्तृणुत तमवधीत् ॥ ५ ॥

एतद्वेदनफलमाह ।

तमस्तृणुत स्तृणुते तं यन्तुस्तूर्षते यएवं वेद ॥६॥

यं शत्रुं तुस्तूर्षते तनुं हिंसितुमिच्छति तं स्तृणुते हिनस्ति स पुरुषः यएवं पूर्वोक्तमर्थं वेद जानाति ॥ ६ ॥

किन्तत इत्याह ।

तस्माद्धरिवतीषु स्तुवन्ति हरिवतीः शᳬसन्ति

**हरिवतीषु ग्रहो गृह्यते हरोह्यस्मै निर्म्माय प्रायच्छत्॥ ७॥**

यस्मादिन्द्रो हरसा प्रजापतिदत्तेन वृत्रमवधीत् तस्मात् कारणात् हरिवतीषु हरिशब्दयुक्तासु एकदेशविकृतमनन्यवद्भवतीति न्यायेन हरिशब्देन हरःशब्दः प्रत्यभिज्ञायते अत एवासु हरिवतीषु असावि सोम इन्द्र त इत्याद्यासु नानदेन षोडशिसाम्ना स्तुवन्ति एतत्प्रचान्तरं तथा हरिवती हरिशब्दयुक्ता एव ये होतारः शंसन्ति तथा हरिवतीश्चतुराद्यिशतुहननमित्याद्यास्वृचु पठ्यमानासु अध्वर्य्युणा ग्रहः षोडशाख्यो गृह्यते तस्मादिन्द्राय हरोहरिशब्दवाच्यं खलु तेजो निर्म्माय पुरा प्रजापतिः प्रायच्छत् दत्तवान् सप्तानां होतॄणां हरोनिर्म्माय प्रायच्छदिति यदुक्तं तस्योपपादकं लिङ्गं॥ ७॥

अस्मिन् षोडशिस्तोत्रं दर्शयति।

**एकविंशायतनो वा एष यत् षोडशी सप्त हि प्रातःसवने होत्रा वषट् कुर्व्वन्ति सप्त माध्यन्दिने सवने सप्त तृतीयसवने॥ ८॥**

यत् यः षोडशी एषः एकविंशायतनो वा एकविंशस्तोमस्यायतनभूत आश्रयभूतः तत् कुतो हेतोः प्रातःसवने सप्तसंख्याकाः होत्राः होतृमैत्रावरुणादयः ऋत्विजो वषट् कुर्व्वन्ति प्रस्थितयाज्याद्याभिर्वषट्कृत्य यजन्ते तथोत्तरयोः सवनयोरपी-

त्येकविंशतिसंख्या स्तोता भवन्ति हि यस्मादेवं तस्मात् षोडशिन एकविंशायतनत्वं द्रुत्यं बृहन्नानदाख्यं सामद्वयं विकल्पेन षोडशिसाम कर्त्तव्यमित्युक्तं ॥ ८ ॥

अथ स्वाभिमतं पक्षान्तरं दर्शयति ।

गौरीवितं भवति ॥ ६ ॥

गौरीवितं साम इन्द्रं जुषस्व प्रवहेति तृचे षोडशि साम कार्य्यं ॥ ६ ॥

अथास्य साम्नः ऋषिसम्बन्धप्रदर्शनपुरःसरमुत्पत्तिं दर्शयन् स्तौति ।

गौरीवितिर्वा एतच्छाक्त्यो ब्रह्मणोऽतिरिक्तमपश्यत्तद्गौरीवितमभवदतिरिक्तं वा एतदतिरिक्तेन स्तुवन्ति यद्गौरीवितेन षोडशिनꣳ श्वस्तनवान् भवत्यपि प्रजाया उपक्लृप्तः ॥ १० ॥

तदतिरिक्तं वा एतदित्यन्तं पूर्ववद्व्याख्येयं यद्गौरीवितेन साम्ना षोडशिनं षोडशिस्तोत्रं प्रणयति अतिरिक्तेनाधिकेनैव तेन स्तुवन्ति तस्मादाधिक्यवता साम्ना स्तवनात् श्वस्तनवान् श्वःदिवसे भवं श्वस्तनं तद्वान् प्रजायाः पुनः पुत्रपौत्ररूपायाः उपक्लृप्तः उपकल्पितः उपभोग्यश्च भवति पूर्वन्नानदं साम षोडशिस्तोत्रतया कार्य्यमभिहितं पश्चात्पक्षान्तरत्वेन गौरीवितमपि ॥ १० ॥

एवं सत्यसतोः षट् त्वादह्नां विकल्पः स्यादिति मन्वानः एकस्मिन्नेव प्रयोगे देशभेदेनैते सामनी व्यवस्थापयितुमाह।

**विशालं लिबुजया भूत्याभ्यधादिति होवाचोपो-दिति गौपालेयोऽनुष्टुभि नानदमकर्गौरीवितेन षोड-शिनमस्तोष्टाञ्जसा श्रियमुपागान्न श्रिया अवपद्य इति ॥ ११ ॥**

लिबुजया लिप उपदेहे उपदेह उपचयः लेपेन उपचयेन जाता लिबुजया सम्पूर्णया विभूत्या सम्पदा विशालं विस्तृतं यथा भवति तथा अभ्यधात् अभिहितवानुक्तवानिति खलु गौपा-लेयो गौपालपुत्र उपोदितिर्नाम ऋषिरुवाच पुरा प्रोक्तवान् अभिधानप्रकार उच्यते अनुष्टुभि चतुर्थेऽहनि आर्भवपवमाने पुरोजितीति योऽयं अनुष्टुभस्तृचस्तस्मिन्नानदं साम अकः कृत-वान् गौरीवितेन तचा साम्ना षोडशिनमस्तोष्ट षोडशिस्तोत्रं कृतवान् एवं सामद्वयं व्यवस्थया कृत्वा अञ्जसा आर्जवेन श्रियं सम्पदं उपागात् उपागच्छत् उपगतया च तया श्रिया नावपद्यते न कदाचिद्धीयत इति ॥ ११ ॥

कोऽसावभिदध्यादिति तमाह।

**एष वै विशालं लिबुजया भूत्याभिदधाति योऽनु-ष्टुभि नानदं कृत्वा गौरीवितेन षोडशिना स्तुतेऽञ्जसा श्रियमुपैति न श्रिया अवपद्यते ॥ १२ ॥**

एष वै एष खलु विशालं विस्तृतं त्रिवृजया उपचितया भूत्वा ऐश्वर्य्येण अभिदधाति यो यजमानः अनुष्टुभि आनुष्टुभे तृचे नानदं साम कृत्वा गौरीवितेन षोडशिना षोडशिसाम्ना स्तुते तदनन्तरमञ्जसार्जवेन श्रियमुपगच्छति न च तया श्रिया वियुज्यते॥ १२॥

इत्थं साम व्यवस्थाप्य षोडशिसाम्ना स्तोत्रीयाः कामना भेदेन विभिन्नाः प्रदर्शयन्नेकं पक्षमाह।

**शक्करीषु षोडशिना स्तुवीत यः कामयेत वज्री स्यामिति॥ १३॥**

षट्पञ्चाशदक्षरा ऋचः शब्दस्य शक्करीषु षोडशिना षोडशिसाम्ना स्तुवीत यो यजमानः वज्री स्यात् वज्रवान् वीर्य्यवान् भवेयमिति स शक्करीषु षोडशिना स्तुवीत॥ १२॥

तदेतदुपपादयति।

**वज्रो वै षोडशी वज्रः शक्कर्य्यो वज्रेणैवास्मै वज्रं स्तृणोति वज्रीभवति॥ १४॥**

षोडशिनः शक्करीणाञ्च वज्रवद्दहननसाधनत्वाद्वज्रत्वं अत च शक्करीषु षोडशिसाम्ना स्तवनात् वज्रेण वज्रात्मकेनैव षोडशिना शक्कर्य्याख्यं वज्रं अस्मै यजमानाय स्तृणोति

बलवति संयोजयति तर्पयति वा स्पृप्रीतिबलनयोरिति धातुः स च यजमानो वज्री वज्रवान् भवति ॥ १४ ॥

अथ फलान्तराय स्तोत्रीयां विधत्ते।

अनुष्टुप्सु षोडशिना स्तुवीत यः कामयेत नमा वागतिवदेदिति ॥ १५ ॥

अनुष्टुप्सु अनुष्टुप्छन्दस्कास्वृचु षोडशिसाम्ना स्तुवीत नमा वाक् परैः प्रयुज्यमानं वाक्यं नातिवदेदतिक्रम्य न ब्रूयादिति यो यजमानः कामयेत सोऽनुष्टुप्सु स्तुवीत ॥ १५ ॥

अथैतदुपपादयति।

वज्रो वै षोडशी वागनुष्टुब्वज्रेणैवास्मै वाचं स्पृणोति नैनं वागतिवदति ॥ १६ ॥

अस्मै यजमानाय वज्रेणैव वाचं स्पृणोति प्रीणयति अत एनं वाङ्नातिवदति सिष्टं सिद्धं ॥ १६ ॥

काः पुन स्ता अनुष्टुभ इति तत्राह।

असावि सोम इन्द्र त इत्येतासु स्तोतव्यं ॥ १७ ॥

असावि सोम इत्याख्यायास्तिस्रोऽनुष्टुभः एतासु गौरीवितेन षोडशिसाम्ना स्तोतव्यं ॥ १७ ॥

अथान्नाद्यकामस्य षोडशिस्तोत्रीयां दर्शयति।

**विराट्स्वन्नाद्यकामः षोडशिना स्तुवीत वज्रो वै षोड़शी वैराजमन्नं वज्रेणैवास्मा अन्नꣳ स्पृणोत्यन्नादो भवति॥ १८॥**

विराट् छन्दस्कासृचं अन्नाद्यकाम अन्नञ्च तदाद्यं अन्नाद्यकामो यजमानः षोडशिसाम्ना स्तुवीत वज्ररूप एव षोडशी अन्नञ्च वैराजञ्च विराट् सम्बद्धं अस्मै यजमानाय वज्रेणैव अन्नं स्पृणोति तदनन्तरञ्च यजमानोऽन्नादो भवति॥ १८॥

काः पुनर्विराज इत्यत आह।

**प्रवो महे महे वृधे भरध्वमित्येतासु स्तोतव्यं॥१९**

प्रवोमह इत्याद्यास्तिस्रो विराज इत्येतासु गौरोवितेन स्तोतव्यं॥ १९॥

एतासु विद्यमानान्यक्षराणि विभज्य स्तौति।

**त्रयस्त्रिꣳशदक्षरा वा एताविराजो यदेकविंशति प्रतिष्ठा सा यद्द्वादशप्रजातिः सा॥ २०॥**

एताः प्रवोमह इत्याद्या विराजः त्रयस्त्रिंशदक्षरा वै त्रयस्त्रिंशदक्षराः खलु प्रतिपादमेकादशाक्षरत्वात् तत्र एकविंशतिसङ्ख्यान्यक्षराणीति यत् सा प्रतिष्ठा स्तोमानां मध्ये एक-

विंशति प्रतिष्ठाहेतुः तस्मादेतस्यास्ततोऽवशिष्टानि यत् द्वादशा-क्षराणि सा प्रजातिः प्रजानामुत्पत्तिः गर्भाधानादूर्द्धं द्वादश-मासात्मके संवत्सरे पूर्व्वं हि प्रजाः प्रजायन्ते ॥ २० ॥

एतद्वेदनफलमाह ॥

## प्रतिष्ठाय प्रजायते नो चान्तस्थायाञ्जीयते य एवं वेद ॥ २१ ॥

प्रतिष्ठाय उत्कृष्टे स्थाने प्रतिष्ठितो भूत्वा ततः प्रजायते पुत्रा-दिरूपेणोत्पद्यते नो नैव च अन्तस्थायां अन्तर्मध्ये अवस्थितायां प्रजायां जीयते अपजीयते ज्यावयोहानाविति धातुः य एव-मासुविराट्सु उक्तां प्रतिष्ठां प्रजातिञ्च वेद एवं कामनाभेदेन स्तोत्रीयाणां विकल्पा उक्ताः ॥ २१ ॥

अथ नित्यप्रयोगे इन्द्रं जुषस्वेत्याद्यास्तिस्र ऋचो गौरीवि-तस्य षोडशिसाम्ना स्तोत्रीयाः कार्य्या इत्यभिप्रेत्य तत्रत्यानु-पसर्गान्विदधाति ।

## अथ वा एता एकपदास्त्र्यक्षरा विष्णोश्छन्दो भुरिजः शक्कर्य्यः ॥ २२ ॥

इन्द्रं जुषस्वेत्याद्यास्तिस्र ऋचः पञ्चपदाश्च पञ्चाक्षराः तत्र प्रथमायामृचि प्रथमपादात् ऊर्द्धं प्रवाइति त्रीण्यक्षराण्याम्ना-तानि द्वितीयपादात्परमिति हरिरिति अक्षरत्रयमाम्नातं तथा

तृतीयपादात्परमिति मतिते नेत्यक्षरत्रितयं अवशिष्टौ पञ्चाक्षरौ द्वौ पादौ आदितः पञ्चाक्षरास्त्रयः पादा इति पञ्चाक्षरायाः पञ्चपादाः प्रथमाः तत्राद्येषु त्रिषु पादेषु प्रवाहाद्यास्त्र्यक्षराः शक्वर्य्य इति च उपसर्गा इति चाख्यायन्ते एवमुत्तरयोरपि तथाच प्रत्यृचं त्रयस्त्रय उपसर्गा इति त्वचेन भवतीति तैर्विरहिता इन्द्रं जुषस्वेत्याद्याः पञ्चविंशत्यक्षरा गायत्र्यो भवन्ति ते तैः सहिताश्चतुर्विंशदक्षरानुष्टुभो भवन्ति अत्र निदानकारः तस्यैता ऋचः पञ्चविंशत्यक्षरापञ्चपदाः पञ्चाक्षरपदाः नवोपसर्गाणि आदितस्त्रयाणां पादानां त्रीणि त्रीण्युपसर्गाक्षराणि विष्णोः पादान्ते तु भवन्ति तेऽष्टाक्षराः सम्पद्यन्ते पञ्चाक्षरावुत्तरौ दशाक्षरावेकः ताश्चतुस्त्रिंशदक्षराः सम्पद्यन्त इत्यादिना इममर्थं बहुधा प्रपञ्चितवान् तत्र तत्र ताः प्रवाहाद्या उपसर्गास्ते प्रदर्श्यन्ते अथवा इत्यादिना अथेति पचान्तरमापरिग्रहे इन्द्रं जुषस्वेत्यादीनां तिसृणां आदितस्त्रिभ्यः पञ्चाक्षरपादेभ्य ऊर्द्धं यानि प्रवहेत्यादीनि त्रीण्यक्षराणि एतास्त्र्यक्षरा एकपदा विष्णोश्छन्दसः विष्णुसम्बन्धिना छन्दसा भुरिजः शक्वर्य्यः भूरिकनामिकः शक्वरीविशेषः ॥ २२ ॥

एतासां शीघ्रफलत्वमाह ।

## एताभिर्वा इन्द्रो वृत्रमहन् क्षिप्रं वा एताभिः पाप्मानꣳ हन्ति क्षिप्रं वसीयान् भवति ॥ २३ ॥

एताभिः शक्करीभिः खलु पुरा इन्द्रो वृत्रमसुरं हतवान् आभिर्वृत्रमशकद्धन्तुं तच्छक्करीणां शक्करीत्वमिति विज्ञायत इति निरुक्तं यस्मादेवं तस्मादेकपदाभिर्भूरिकशक्करीभिः क्षिप्रं पाप्मानं हन्ति विनाशयति क्षिप्रं शीघ्रं वसीयान् वसुमत्तरः श्रेष्ठश्च भवति ॥ २३ ॥

अथैता एकपदाः इन्द्रं जुषस्वेत्याद्यास्त्र संयुज्य स्तौति।

चतुस्त्रिꣳशदक्षराः सꣳस्तुतो भवति त्रयस्त्रिꣳशद्देवताः प्रजापतिश्चतुस्त्रिꣳशो देवतानां प्रजापतिमेवोपयन्त्यरिष्ट्यै ॥ २४ ॥

प्रत्यृचं प्रवहाद्यास्तिस्रस्तिस्र एकपदाः तास्त्र संस्तुताः प्रत्यृचन्नवनवाक्षराणि सम्पद्यन्ते पञ्चाक्षरैः पञ्चभिः पञ्चभिः पादैः पञ्चविंशत्यक्षराणि सम्पद्यन्ते ता उभयोर्मिलित्वा प्रत्यृचं चतुस्त्रिंशदक्षराः संस्तुतः सह स्तुतः त्रिचतुस्त्रिंशदक्षरात्मकः समुदायो भवति त्रयस्त्रिंशद्धि त्रयस्त्रिंशत्संख्याका देवताः प्राप्नोति अष्टौ वसव एकादश रुद्रा द्वादशादित्या इन्द्रश्च वषट्कारश्चेति त्रयस्त्रिंशदेतासां देवतानां प्रजापतिश्चतुस्त्रिंशत् संख्यापूरको भवति चतुस्त्रिंशेनाक्षरेण चतुस्त्रिंशं प्रजापतिमेवोपयन्ति उपगच्छन्ति अरिष्ट्यै अहिंसायै ॥ २४ ॥

अथोद्गातॄणां षोड़शिस्तोत्रसमये हिरण्यधारणं विधत्ते।

हिरण्यꣳ सम्प्रदायꣳ षोड़शिना स्तुवते ज्योतिष्मानस्य षोडशी भवति ॥ २५ ॥

हिरण्यं सुवर्णं सम्प्रदायं अन्योन्यस्मै प्रदाय प्रदाय उद्गातारः षोड़शिसाम्ना स्तुवते तस्य साम्नः यां यां विभक्तिं यो यो ब्रूते स स हिरण्यं धृत्वा तया भक्त्या स्तुवीतेत्यर्थः तदुक्तं सूत्रकृता यो यः सामाङ्गं ब्रूयात् स स हिरण्यं धारयेदिति अत सम्प्रदायमिति णमुल प्रत्ययान्तत्वेन एकमेव हिरण्यं एकैकस्मै दानसमये गातव्यमिति गम्यते षोड़शिसाम्ना स्तोष्यमाण इत्यादिना षोड़शिस्तोत्राङ्गत्वेन यदुक्तं सूत्रकारेण तत्सर्वमतानुसन्धेयं स्वस्वभक्तिगानसमये उद्गातृभिर्हिरण्यस्य धारणादस्य यजमानस्य षोड़शी ज्योतिष्मान् तेजस्वी भवति ॥ २५ ॥

अथैतस्मिन् षोड़शिस्तुतिकाले अश्वस्य स्थापनं विधत्ते।

अश्वः कृष्ण उपतिष्ठति साम्येच्याय भ्रातृव्यलोकमेव सविधमꣳस्तिष्ठति ॥ २६ ॥

कृष्णः कृष्णवर्णोऽश्वः सदसः पूर्वस्मिन् परस्मिन्वा द्वारे प्रत्यङ्मुखः प्राङ्मुखो वा उपतिष्ठति यथा उपस्थितो भवति तथा कुर्यादित्यर्थः तदुक्तं सूत्रकारेण अश्वः कृष्णः पूर्वस्यां सदसोद्वारि प्रत्यङ्मुखस्तिष्ठेदिति शाण्डिल्योऽपरस्यां प्राङ्मुख इति धानञ्जय्य इति किमर्थमस्योपस्थानं साम्येच्याय साम्यमीक्षणं

साम्येच्छं साम्यदर्शनायेत्यर्थः अपि च स उपस्थितोऽश्वः भ्रातृव्य-लोकं शत्रुनिवासस्थानमेव विविधमुखवायुना अपगमयंस्तिष्ठति अथ द्विप्रकारोऽयं षोड़शी विहृतोऽविहृतश्च तत्र विहृत इन्द्र जुषस्वेत्याद्यास्तोत्रीया विहिताः अविहृते त्वसावि सोम इन्द्र इत्याद्यास्तिस्रोऽनुष्टुभः स्तोत्रीयाः ॥ २६ ॥

अथैतासु अनुष्टुप्त्वं स्तोतुमाह ।

एकाक्षरं वै देवानामवमं छन्द आसीत्सप्ताक्षरं परमन्नवाक्षरमसुराणामवमं छन्द आसीत् पञ्चद-शाक्षरं परमं देवाश्च वा असुराश्चास्पर्द्धन्त तान् प्रजा-पतिरानुष्टुभो भूत्वान्तरातिष्ठत्तं देवासुरा व्यह्वयन्त सदेवानुपावर्त्तत ततो देवा अभवन् परासुराः ॥२७॥

देवानामवमं न्यूनतमञ्छन्द एकाक्षरं एकमेवाक्षरं यस्य तथा-विधमासीत् परमेकं छन्दः सप्ताक्षरमासीत् असुराणामवमन्न-वाक्षरमासीत् परमं पञ्चदशाक्षरं एवं सप्तभिः सप्तछन्दोभिः सहिता देवताश्चासुराश्चास्पर्द्धन्त तान् स्पर्द्धमानानुभयविधान-न्तरा तेषाम्मध्ये प्रजापतिस्तेषां पिता अनुष्टुभः पादो भूत्वा अति-ष्ठत् स्थितवान् सप्ताक्षरादि देवानां परमं छन्दः असुराणान्नवा-क्षरन्यूनं सप्ताक्षरं उभयसाधारण्येन मध्येऽवस्थितं अनुष्टुभः पाद-स्याक्षर इति तद्रूपो भूत्वा प्रजापतिर्मध्यस्थोऽभवदित्यर्थः तन्मध्ये स्थितं प्रजापतिं देवा असुराः देवाश्चासुराश्च व्यह्वयन्त विविध-

माह्वयन् स च देवैरसुरैश्चाह्वयमानः प्रजापतिः देवाननुपावर्त्त- तोपागच्छत् नासुरान् ततोऽनन्तरं देवा अभवन् समृद्धा अभ- वन् असुराः पराभवन् पराभूताः पराजिताः आसन् आनुष्टुभेन प्रजापतिना सहायेन देवानामभिवृद्धिर्जातेति अनुष्टुप्समृद्धि- हेतुः ततोऽनुष्टुभस्तोत्रीयाः समृद्धिहेतव इत्यर्थः ॥ २७ ॥

एतद्वेदनं प्रशंसति।

**भवत्यात्मना परास्य भ्रातृव्यो भवति य एवं वेद ॥ २८ ॥**

गतमेतत् ॥ २८ ॥

अथ देवैः केन छन्दसा आसुरं किं छन्दोऽपहृतमिति उभयं विविच्य दर्शयति।

**ते देवा असुराणामेकाक्षरेणैव पञ्चदशाक्षर- मवृञ्जत द्व्यक्षरेण चतुर्दशाक्षरं त्र्यक्षरेण त्रयोदशा- क्षरञ्चतुरक्षरेण द्वादशाक्षरं पञ्चाक्षरेणैकादशा- क्षरꣳ षडक्षरेण दशाक्षरꣳ सप्ताक्षरेण नवाक्षर- मष्टाभिरेवाष्टावृञ्जत ॥ २९ ॥**

प्रजापतिसहायेन समृद्धा देवाः समृद्धेनैकादशाक्षरेणैव छन्दसा असुराणां पञ्चदशाक्षरं यत्परमं छन्दस्तदवृञ्जत अव-

र्द्धयन् षळचरेणाध्नीयेन छन्दसा आसुरं चतुर्दशाचरं छन्दो-ऽवृञ्जत एवमुत्तरत्रापि योऽयं अष्टाचरस्य छन्दसान्तरालवर्त्ति-त्वेनोभयसाधारणत्वात् अष्टाभिरेवाचरैः आसुराण्यष्टाचराण्य-वृञ्जत ॥ २९ ॥

एतद्वेदनफलमाह ।

**एवमेव भ्रातृव्याद्वृतिं वृङ्क्ते य एवं वेद ॥ ३० ॥**

यथा देवाः स्वकीयैश्छन्दोभिः असुराणाञ्छन्दसः क्रमेणा-वर्ज्जयन एवमेव भ्रातृव्यात्स्वतो भूतिमैश्वर्य्यं वृङ्क्ते वर्जयति य एवमुक्तं ब्राह्मणार्थञ्जानाति ॥ ३० ॥

अथ प्रकारान्तरेण तद्वेदनस्य फलमाह ।

**अपरुद्ध यज्ञइव वा एष यत् षोडशी कनीयस्विन-इव वै तर्हि देवा आसन् भूयस्विनोऽसुराः कनीय-स्वी भूयस्विनं भ्रातृव्यं वृङ्क्ते य एवं वेद ॥ ३१ ॥**

यत् योऽयं षोडशी नाम यज्ञक्रतुः एषः स अपरुद्ध इव वै इवेत्यवधारणे शत्रुभिरवरुद्धमानेन आक्रम्यमाणेन यक्रियमाणे-र्यज्ञोपरुद्ध यज्ञः तादृश इव खलु तत्कस्य हेतोः तस्मिन् काले असुरैः सह युद्धसमये कनीयस्विनः कनीयांसि एकाचरादीनि सप्ताचरान्तानि छन्दसां आसुरेभ्यश्छन्दोभ्यो न्यूनाचरत्वात् अल्पीयांसि तद्वन्तो देवाः अल्पा एवासन् नवाचरादीनि पञ्च-

इत्याक्षरान्तानि छन्दांसि बह्वक्षरत्वात् भूयांसि तद्वन्तो असुरा महान्त आसन् एवं सति अधिकबलैस्तैरपरुध्यमानादेवाः षोड़शिनमाहृत्य तत्स्थेनानुष्टुभेन प्रजापतिना तानधिकानसुरानभ्यभवत् तस्मादेष षोडशो उपचयपक्ष इति यएवं वेद जानाति स वेदिता कनीयस्वी अल्पीयानपि भूयस्विनं अधिकं भ्रातृव्यं शत्रुं इतं वर्णयति ॥ २१ ॥

अथ यदुक्तं सूत्रकारेण हविर्द्धानं गत्वा षोड़शिग्रहमवेक्षेतोद्गाता अक्षमवेक्षेत इति अवेक्षेतोद्गाता यस्मादन्य इतीति तन्मन्त्रविशिष्टमवेक्षणं विधत्ते।

यस्मादन्योन परो अस्ति जातो य आवभूव भुवनानि विश्वाः प्रजापतिः प्रजया सम्विदानस्त्रीणि ज्योतीᳪषि सचते स षोडशीत्युद्गाता ग्रहमवेक्षते ॥ २२ ॥

यस्मात्प्रजापतेः सर्वकारणभूतादन्यो व्यतिरिक्तः परो जात उत्कृष्टो नास्ति यश्च विश्वानि सर्व्वाणि भुवनानि भूतजातानि आबभूव कारणात्मना व्याप्तोऽभूत् भूप्राप्ताविति धातुः स प्रजापतिः प्रजानामीश्वरो देवः प्रजया आत्मीयया सामान्याभिप्रायमेकवचनं स्वात्मना सृष्ट्येन सर्व्वेण कार्य्यजातेन सम्विदानः एकमत्यं गच्छन् त्रीणि ज्योतींषि चन्द्रसूर्य्याग्निरूपाणि अथवा गार्हपत्यदक्षिणाग्न्याहवनीयात्मकानि तेजांसि सचते

मेवते प्राप्नोति सच प्रजापतिः षोडशी षोड़शमहात्मना कार्य्य-रूपेण वर्त्तत इति मन्त्रार्थः अनेन मन्त्रेण उद्गाता एतत् आसादितं षोडशिग्रहमवेक्षते ॥ ३२ ॥

एतद्वेदनं प्रशंसति ।

ज्योतिष्मानस्य षोडशी भवति य एवं वेद ॥३३॥

स्पष्टमेतत् ॥ ३३ ॥

अथ पूर्ववदेतस्मिन् स्तोत्रे स्तोमक्लृप्तिं विधाय स्तौति ।

एकविंश एव स्तोमो भवति प्रतिष्ठायै प्रतितिष्ठति ॥ ३४ ॥

पूर्वेषु स्तोत्रेषु यः स्तोमो विहितः स एकविंशस्यापि स्तोत्रस्य स्तोमो भवति प्रतिष्ठायै प्रतिष्ठानार्थं अतएतेनैकविंशस्तोमेन स्तुतेन यजमानः प्रतितिष्ठति ।

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ३४ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे द्वादशाध्यायस्य त्रयोदशः खण्डः ।

द्वादशाध्यायः समाप्तिमगमत् ।

---

